# प्रमालक्षणम्.

## ॐ नमः सर्वज्ञाय ॥

उत्पादस्थितिनाशधर्मकलितो भावः प्रमागोचरस्तस्यांशो नयगोचरस्तु कुनयस्यारोपितं वस्त्विति ।
गीर्वाचामरपावनीशनिकरव्याकीर्णमन्मंमदे, यस्तं वीरजिनं प्रणम्य विदधे किञ्चित्प्रमालक्षणम् ॥ १ ॥
सङ्घः किं नदिदास्ति यत्र विधिना धत्ते समाराधितः, सर्वेष्यापि मनोनुकूलमखिलं तेन स्तुवे तं मुहुः ।
तत्पादप्रणतिप्रसाधितशुभः कुर्यांप्रमालक्षणम्, यत्तद्यातु महीपसंसदि सदा ख्यातिं परामादरम् ॥ २ ॥
त्वामन्वा श्रुतदेवि पूतमनसः कुर्वन्ति ये वाङ्मयम्, विश्वव्यापियशोनिधानमखिलश्रीणां पदन्ते ध्रुवम् ।
स्युः कोटिं परमां प्रयाति तदलं क्षोणीभुजां वेश्मसु, तत् त्वां नौमि भवन्तु मेपि सुधियां वाचः पटुं चेतसः ॥३॥
यत्पादद्वयसेवनादविकलं शास्त्राण्यधीत्यादरात्, सञ्जातः परमोपकारकरणे भव्याङ्गिवर्गे पटुः ।
तान्नत्वा गुणशालिनो निजगुरून् पूज्यानशेषानपि, श्लोकैर्वार्त्तिकमात्मसूरिसुकृतौ टीकां च तत्रारभे ॥ ४ ॥
वैयावृत्यं दधति सततं ये जिनेन्द्रालयेषु, सान्निध्यं ते दधतु विदधे यावदेकान्तहारि ।
प्रत्यक्षादेः प्रगुणगुणतो लक्षिताशेषलक्ष्म, शास्त्रं शास्त्रप्रथितमनसां चेतसः प्रीतिकारि ॥ ५ ॥
सम्यक्ज्ञानमितस्ततोपि चरणं कर्मक्षयोस्मादतो, निर्वाणं परमां तदेव सुधियामिष्टार्थतामागतम् ।
तेनास्माकमिह प्रवृत्तिरखिलप्राणिप्रियाधायिनी, वर्त्तन्तां सुधियस्तदत्र सततं लोकैकसच्चक्षुषि ॥ ६ ॥
नयप्रमाणतो यस्मात्सूत्रार्थपरिचिन्तनम् । वर्णितव्यमतोप्यत्र तज्जिज्ञासुजनेन तु ॥ ७ ॥

**प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम् । प्रत्यक्षं च परोक्षं च द्विधा मेयविनिश्चयात् ॥ १ ॥**

प्रमीयते स्वान्यात्मकोर्थोऽनेनेति करणसाधनं प्रमाणं तच्चाव्यवधानेन प्रमितौ साधकतमत्वात् ज्ञानमेव कर्त्तृकर्मणोर्हि अन्वयव्यतिरेकानुविधानेपि नाव्यवधानेन प्रमितावुपयोगः चक्षुषा पश्यतीति च दृश्यर्थः क्रिया दर्शनं तच्च ज्ञानमेव दर्शनमुपलम्भो ज्ञानमित्यनर्थान्तरत्वात् । नचार्थपरिच्छेदस्तदेव, भ्रान्तस्यापि ज्ञानस्य भावात्ततोस्ति किञ्चित्प्रकुर्वज्ज्ञानं प्रमाणं स्यात् तत्र प्रमितौ चक्षुषः करणता, यत्तु " लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं मतम् ।" तदपि रूढेनार्थाविनाभावात् । न च सामग्री समग्रेभ्यो भिन्ना, समग्राणां तत्रानुपयोगेनानर्थकत्वात् । समवायस्य सदैव भावाद्वैकल्येपि सामग्रीप्रसङ्गः । अभेदे समग्रा एव तेषां चान्यदापि भावादुपलब्धिप्रसूतिप्रसङ्गः । कर्त्तृकर्मणोरपि समग्रत्वात्तयोः करणत्वेनाकर्त्तृकमकर्मकं वा करणं स्यादनाश्रितत्वादविषयत्वाच्चेति न सामग्री प्रमाणमिति । नाप्यर्थोपलब्धिहेतुरिन्द्रियार्थसन्निकर्षलक्षणः । प्रमितावव्यवधानेनानुपयोगात् ॥ किञ्च वितनुत्वादीशस्य चक्षुषोभावादसन्निकर्षजत्वेन तज्ज्ञानस्यमानप्रसज्येत शाखाचन्द्रमसोर्युगपद्ग्रहणप्रसङ्गाच्चापरेषामिति । न चाशुवृत्तेर्भ्रान्तिरियमनिविप्रकर्षादिति नार्थोपलब्धिहेतुः प्रमाणमिति लक्षणम् ॥ ज्ञानग्रहणमेवमतिरिच्यते चेन्न तत्फलस्याभिधास्यमानत्वात् । कीदृशमित्याह स्वपराभासि स्वपरयोराभासनशीलं । तेन बोधः प्रमाणमित्यलक्षणम्, निर्विशेषणबोधस्य भ्रान्तज्ञानेपि भावात् । चक्षुरादिव्यवच्छेदस्य प्रमाणग्रहणादेव सिद्धत्वात्, अर्थसहभाव्येकसामग्र्यधीनस्तत्रार्थे प्रमाणमिति सविशेषणोपि बोधो न मानं सहभुवोः करणकर्म्मताहानेः । न चासंविदितं सिद्ध्यति न चासिद्धं प्रमाणं प्रमितिमाधत्ते व्यञ्जकत्वादस्य न च ज्ञानान्तराधिगमेनानवस्था न चार्थापत्तिरपि अज्ञानरूपा, जडतया प्रामाण्यहानेः । न च तस्य स्वतोधिगमे पूर्वज्ञानविरोधो न्यायस्य तुल्यत्वात् ॥ किञ्चार्थप्रतिभासनात् ज्ञानाधिगमे भ्रान्तज्ञानमनधिगतमिति न भ्रान्तज्ञानव्यवहारस्तथाच, " तत्रापूर्वार्थविज्ञानं, निश्चितं बाधवर्जितम् । अदुष्टकारणारब्धं,

प्रमाणं लोकसम्मतम्, ” इत्यसङ्गतम् व्यवच्छेद्याभावादिति ॥ न चैकत्र प्रकाश्यप्रकाशकभावो न दृष्टो दीपे इव न च दृष्टेनुपपन्ननेति स्वाभासिज्ञानं प्रमाणं, कथमन्यथा सुखादयोनुभूयेरन् न च सुखाद्या बाह्या, स्पष्टमन्तः संवेदनात् । न खलु ज्वरादयो बहिष्करणसंवेद्या लौकिकैरपि प्रतीयन्ते तद्व्यवहारार्थं च प्रमाणं पारत्रिकविधेरपि लोकव्यवहारानतिक्रमेण प्रवृत्तेरिति । तथा पराभासनशीलं च तदिति तर्हि यदि साकारं नाहेतुको नीलाद्याकारो देशकालस्वभावनियतो युक्त इतरथा यमाद्यभावेपि स्वर्गापवर्गप्राप्तिप्रसङ्गो विशेषाभावात् प्रामाण्याभावेपि चार्थप्राप्तिप्रसङ्गः ॥ ननु च भ्रान्तिज्ञाने न बहिरर्थः प्रतिभाति तज्ज्ञानस्य भ्रान्तिताहानेस्तत्कथं नियताकारं, न, अभिप्रायापरिज्ञानात् अत्यन्तादृष्टस्य तत्र प्रतिभानेऽतिप्रसङ्गतो नायं हेतुराकार इत्यभिसन्धेः, कथं तर्हि साकारज्ञानदर्शिनो नियता प्रवृत्तिर्यथा भवतोऽनाकारवादिनः, चक्षुरादिभिर्नियमितत्वाद्वित्वात्सेति चेत्, इतरत्रापि समानम् । ननु साकारवादिनोर्थस्यात्यन्तपरोक्षत्वाद्दर्थेनाकारस्याविनाभावः कुतः अत एव नाकारानुमितोप्यर्थः सिद्ध्यति । उक्तमत्र अहेतोः सर्वत्र सर्वदा सर्वाकारेण भावाविरोधान्नाहेतुकोयं नियताकारः स चार्थ इति ॥ नन्वर्थाकारत्वे तस्य प्रमाणप्रमेययोरभेदः स्यात् तथा च साधकतमत्वाभावादप्रमाणतेति, नैवमन्तर्बहिः प्रकाशमानतया तयोर्भेदेन प्रतीतेः, नहि बहिरिवाकारः प्रतिपत्तुर्न्नाभाति बहिरर्थाभावे वा प्रणेयप्रणेतृविधेयानामविभागाच्छास्त्रप्रणयनमनवसरमासज्येत । ननु परमाणूनामिन्द्रियज्ञानेऽप्रतिभासनाद्भासने वा स्थूरैकात्वभासाभावप्रसङ्गात् अवयविनोप्यनेकावयववृत्तेर्विरोधेनाऽसम्भवात् ज्ञानग्राह्यं किमस्तु. उच्यते एकस्यानेकत्र वृत्तिविकल्पस्येवानेकाक्षरेषु न दुष्टा ततोऽवयवि द्रव्यं ग्राह्यमस्त्विति पराभासीति. निराकारस्तु बोधो न ज्ञानं तस्य दर्शनमिति रूढेः, अत एव ज्ञानग्रहणम् । यदाह । “साकारः प्रत्ययः सर्वो, विमुक्तः संशयादिना । साकारार्थपरिच्छेदात्, प्रमाणं तन्मनीषिणाम्.” इति ॥ साकारस्यैव विशेषहेतुतया ज्ञानत्वात्प्रमाणत्वाच्च निराकारस्य दर्शनत्वात्तस्य च सामान्यालम्बनत्वा-

त्सामान्यं चानियतदेशादीति नार्थप्रवृत्तिविषयः। विशेषा ह्यनवधारितविशेषाः सामान्यमिति तत्र प्रवृत्तिरनियतेति तदुपदर्शकमनाकारं न प्रवर्त्तकं तत् कुतः प्रमाणम्। न च नीलाकारोयं नियतदेशादिराभाति कथमन्यथा स बहिर्देशसम्बन्धोर्थः प्रतिभासते इति वचः। अत एव विशेषग्राहि ज्ञानं न खलु सर्वथाऽनाकारं दर्शनमिष्यते, किन्त्वनियतदेशाद्यवभासं नीलाकारं साकारमिति। सर्व्वथा त्वनाकारं नाध्यक्षतोऽवसीयते इन्द्रियधिया ज्ञानान्तराप्रतिपत्तेः स्वसंवित्त्या तु स्वप्नेप्यनाकारं नानुभूयते नहि तत्र बहिरर्थोऽस्ति स्मृतिसम्प्रमोषस्त्वन्यत्राप्याशङ्कामावहति। संवादाच्च तदभावनिश्चये परतः प्रामाण्यमिति, नाप्यनुमानात्तद्गतिः, अध्यक्षपूर्वकत्वात् तस्य, तदप्रवृत्तावप्रवृत्तेः, अर्थप्रतिभासान्यथानुपपत्त्येति चेत्, नाध्यक्षाव्यक्तिकस्य व्यक्तेरयोगात्कथं तत्प्रतिभासः। न चार्थप्रतिभासस्यानाकारज्ञानाविनाभावग्राहि प्रमाणमस्ति, भावे वा तत्तद्दर्शकदृष्टान्तसम्भवादनुमानं तत्, तच्चोक्तम्। नन्वर्थावभासकाले न साकारेतरज्ञानानुभवः पुरोऽर्थस्यैव प्रतिभासनात्। न चादृष्टेन सहाविनाभूतलिङ्गसम्भव इति कुतोनुमानं तदिति। अत्रोच्यते। तत्र चोक्तमिति वदता मयाऽनुमानाभावो दर्शितः त्वयापि स एवोक्त इति यत्किञ्चिदेतत्। किञ्च अर्थप्रतिभासस्य अर्थज्ञानपर्यायत्वात जडस्य प्रतिभासायोगात् ज्ञानस्याद्दृष्टत्वमसिद्धमिति। ननु ज्ञानाकारत्वे दूरासन्नभेदो न युक्तः ज्ञानस्य सदैव सन्निहितत्वात्, तदर्थाभावे किमाभातीति वाच्यम् अर्थाभासे हि भ्रान्तज्ञानाभावात् स्मृतिसम्प्रमोषो भातीत्यर्थाभावेपि कुतो भ्रान्तज्ञानाभाव इति चेत्, उक्तमत्र यथा चान्तः संवेदनेऽपि बहिरुल्लेखः कुतोपि निमित्तात्तत एव दूरासन्नभेदाभासोपीति न दोषः, अतो ज्ञानग्रहणं साकारज्ञानप्रमाणार्थमिति। अथवा स्वपराभासीत्यन्यथाभिधीयते स्वतः परस्याश्चाभासनशीलं स्वपराभासि स्पर्शनरसनघ्राणश्रोत्रज्ञानान्यभ्यासावस्थायां चक्षुर्ज्ञानं च स्वतोऽपरप्रमाणाभावेनाभासन इति स्वाभासि स्वतो निश्चितप्रामाण्यमेतत् ज्ञानमित्यर्थः। न खलु सर्वथा संवादाधीनः प्रामाण्यनिश्चयः, अनिश्चितप्रामाणस्याप्रवर्त्तकत्वेन संवादस्यैवाभावात्। अनिश्चितप्रामाण्यात्प्रवृत्तौ प्रमाणप्रणयनवैयर्थ्यम्। अत एवार्थक्रियानि-

र्भासिनोपि स्वत एव प्रामाण्यनिश्चयो नहि संवादप्रत्ययः संवादमपेक्षते अनवस्थाप्रसक्तेः । अत एव न कारणगुणपरिज्ञानाधीनोप्येषां प्रामाण्यनिश्चयः कारणगुणज्ञानेपि तदपेक्षानवस्थाप्राप्तेः, अनुमानस्यापि तदुत्थापकलिङ्गस्य साध्याविनाभावनिश्चय एव प्रामाण्यनिश्चयो न निमित्तान्तरापेक्ष इति स्वतः । अनभ्यासावस्थायां तु रूपनिर्भासिनः कारणगुणशुद्ध्यधीनः संवादाधीनो वा प्रामाण्यनिश्चयः अभ्यासावस्थायां प्रवर्त्तकज्ञानासिद्धेर्न चक्रकम् ॥ तदन्यनपेक्षितप्रमाणेतरभावं प्रवर्त्तयत्येव । संवादात्प्रामाण्यनिश्चये अनभ्यासदशायां नानवस्था संवादस्य स्वतः प्रामाण्यनिश्चयात् । यच्चोच्यते प्रमाणशक्तेरसत्याः करणासम्भव इति चेत् स्वतोऽसत्याः करणं विपरीतार्थपरिच्छेदशक्तेरपि समानम्, प्रमाणाभिमते बाधकप्रवृत्तावेकत्र तत्समानज्ञानान्तरे प्रमाणान्तराद्बाधकाभावमन्विच्छतः कथं न परतस्तन्निश्चयः ॥ न चौत्सर्गिकमप्रमाणं संवादाधीनं प्रमाणमिति न वक्तुं शक्यं न खलु दोषाश्रयमिन्द्रियं नातीन्द्रियं यथाकथञ्चिदेकदा कारणगुणशुद्धिपरिज्ञाने तदुत्थमन्यदतोनिश्चितप्रामाण्यमस्तु यथा च लोकः सदोषमिदानीमिन्द्रियमित्याह तथा समासादितगुणमित्यप्याह ॥ वचनस्य तु प्रणेत्रधीनमेव प्रामाण्यमिति अप्रणेतृकवचनसद्भावसाधकप्रमाणाभावात् नहि वेदे प्रणेतुरभावः प्रत्यक्षप्रत्याय्यः तस्य विधिसाधकत्वात् । अन्यथा भावव्यवहारोच्छेदापत्तेः । निवर्त्तमानं तत्सद्भावग्राहकं चेत् न, स्वाध्यक्षनिवृत्तेरपरचेतोवृत्तिविशेषैरनैकान्तात् सर्व्वप्रमातृसम्बन्धप्रत्यक्षनिवृत्तेरर्व्वाग्दृशोऽसिद्धत्वात् । प्रत्यक्षानवसितलिङ्गसम्बन्धस्यानुमानस्याप्यप्रवृत्तेर्न ततोऽपि तदभावः । अनुमानेन लिङ्गलिङ्गिसम्बन्धग्रहणे यदि तेनैवान्योन्याश्रयस्तदन्तरेणानवस्था न च तत्साधकं लिङ्गमप्यस्ति नाध्ययनवाच्यत्वं कुमारसम्भवादिषु नास्ति, न च वेदेपि कर्तृस्मृतिर्न बाधिका, न खलु साम्प्रतकालः कुमारसम्भवः कर्तृवियुक्तो न प्रतीयते, न चाविशेषेण वर्णनित्यत्वविभुत्वसाधनं वेदवत् सर्वत्रापौरुषेयत्वं साधयति । नित्यस्यापि वचनस्य सङ्केतानित्यत्वे तदवस्थो दोषो द्वयोरपि नित्यत्वे विकल्प्य व्याख्यानक्रिया न युक्ता व्याख्यानवैयर्थ्यं वा, स्वभावतः

प्रकाशभावत्वे किं तेन स्वतः सिद्धेरन्यथात्वेपि किं तेन, ततोऽपि तदसिद्धेः, स्वभावस्यान्यथाकर्तुमशक्तेः, करणे वा वेदस्यापि तत्क्रियापत्तेः, अत एव नित्यस्याभिव्यक्तिरयुक्ता, आकाशात्मकश्रोत्रस्य वर्णानां च नित्यतया संस्कारोपि पूर्वस्वभावापरित्यागे न युज्यते त्यागे चानित्यत्वं ततः साधूक्तं उच्यत इति वचनं कथमकर्तृकमिति, अत एव न पुरुषमात्रप्रणेतृकं शाब्दम्, किन्तु तद्विशेषप्रणेतृकं ततः प्रामाण्यापवादकदोषाणां प्रणेतृगुणैरपकृष्टत्वान्न तत्राप्रामाण्याशङ्केति अतः साधूक्तं स्वपराभासीति ॥ ज्ञानमिति चाभिहितं पुरस्तात्रैव प्रक्रमायातत्वाद्, इह च ज्ञानस्य स्वपराभासित्वं स्वरूपमेव तदन्तरेण तत्सत्तायोगात् तथान्यतो व्यवच्छेदकं स्वपराभासित्वं भ्रान्तिज्ञानेपि तत्सम्भवादतो बाधविवर्जितमित्याह, एतावतैवान्यतो व्यवच्छेदसिद्धेर्लक्षणान्तरमसङ्गतमिति, तथाहि, अनधिगतार्थाधिगन्तृत्वं प्रामाण्यमित्यसम्भवात् अनर्थकत्वाच्चायुक्तम्, न सामान्यतोऽनधिगताधिगमो लक्षणमसम्भवात्, सर्वज्ञज्ञानेनाधिगतस्यैव सर्वस्याधिगमात्, यथा चासावस्ति तथाभिधास्यते । स्वज्ञानापेक्षं विशेषणमिति चेत्तत्रापि किं सामान्येन, अथ जिज्ञासितविशेषे वा धर्मिणि, नाद्यः पक्षः सकृद् दृष्टेतरज्ज्ञानाप्रामाण्यप्रसङ्गात्, नापि द्वितीयो यतः किमेकविषयप्रवृत्तज्ञानानधिगताधिगमोभिप्रेतः उत विषयान्तरप्रवृत्तज्ञानानधिगताधिगमः, नाद्यः पूर्वं पूर्वं प्रमाणमुत्तरमुत्तरं प्रमाणफलमिति वचोव्याहतिप्रसक्तेः, नापि द्वितीयः उपदर्शकज्ञानाधिगतेऽर्थे अर्थक्रियाधिगतिज्ञानस्याप्रामाण्यप्रसक्तेस्तन्नैतल्लक्षणं सम्भवति । किञ्च यथावस्थितविषयाधिगम एव प्रमाणव्यापारो न चाधिगते प्रवृत्तौ तस्य क्षतिस्तदपरिच्छेदे हि तत्क्षतिरिति ततोऽनर्थकमेतल्लक्षणम्, व्यवच्छेद्यासिद्धेः । अपिच ॥ "तत्रापूर्वार्थविज्ञानम्, निश्चितं बाधवर्जितम् । अदुष्टकारणारब्धम्, प्रमाणं लोकसम्मतम्." इत्येतदपि न सूक्तं यतस्तत्रापूर्वार्थविज्ञानमित्यत्रोक्तम्, यत्तु निश्चितमिति विशेषणम् तदसङ्गतं परोक्षज्ञानवादिनो मतेन तदसम्भवादत्रोक्ता युक्तिः पुरस्तात्, यदप्यदुष्टकारणारब्धमिति विशेषणं तदपि गुणवत्कारणपूर्वत्वमावेदयति । अदुष्टत्वं हि

कारणदोषाभावोऽभिधीयते अभावश्च न प्रसज्यप्रतिषेधात्मा भवदभिप्रेतो यदुक्तम्। "तेनानुवृत्तव्यावृत्त,-बुद्धिग्राह्यो यतस्त्वयम्। तस्माद्घटादिवद्वस्तु, प्रमेयत्वाच्च गम्यताम् ॥ १ ॥" पर्युदासप्रतिषेधश्च तत्सदृशापरविधिरूपस्ततो दोषाभावः पर्युदासवृत्त्या कारणगुणात्मक एवावतिष्ठते, ततः कारणगुणाधीनम् प्रामाण्यमासक्तमिति परपक्षोक्तानवस्था तवापीति तस्मातो लक्षणाद्-धिकापरलक्षणान्तरेण प्रयोजनमिति। नन्वविसंवादमन्तरेण बाधाभावो न विज्ञातुं शक्यते सति चास्मिन् किं तेनेति, तदसम्यक्, चक्रकदोषापत्तेः संवादात्मकप्रामाण्यात् प्रवृत्तिः अन्यथा प्रमाणवैयर्थ्ये तस्यां चार्थक्रियावाप्तिस्तस्यामविसंवाद इति। अथ न ज्ञानं जनयदर्थं प्रापयति, अपि तु पुरुषार्थे प्रवर्त्तयत् प्रापयत्यर्थमिति, तथापीतरेतराश्रयो दुर्व्वारः। प्रमाणं सत्प्रवर्त्तकं प्रवर्त्तकं सत्प्रमाणमिति। अथ प्रवृत्तिरपि प्रवृत्तिविषयोपदर्शकत्वमेव, नहि ज्ञानं हठात्पुरुषं प्रवर्त्तयति, किन्तु प्रवृत्तिविषयोपदर्शकत्वेन, उपदर्शिते चार्थे प्रवर्तितः पुरुषः प्रापितश्चार्थः समाप्तः प्रमाणव्यापार इति सत्यम्, किन्तु दृष्टतया ज्ञातः प्रत्यक्षेण प्रवृत्तिविषयः कृतः दृष्टता चेह प्रत्यक्षव्यापारानुकारिविकल्पविषयता सा च द्विचन्द्रादिग्राहिज्ञानेऽप्यस्ति तत्रा-प्यविसंवादः स्यान्न चैवम् ॥ किञ्च निर्विषयत्वाद्विकल्पस्य स्वलक्षणविषयत्वाच्च प्रत्यक्षस्य कथं तद्विषयानुकार इत्यसम्भवि लक्षणम्, प्रतिपत्रध्यवसायात्तद्विषयता न साक्षादिति चेत्, तर्हि न वास्तवमविसंवादित्वं लक्षणं प्रवृत्तिविषयोपदर्शकत्वरूप-त्वात्तस्य तच्च विकल्पेन स्वविषयानुकरणं तच्च भिन्नगोचरत्वे न सम्भवति प्रतिपत्त्रा भ्रान्त्या कल्पने नाभ्रान्तं तदिति, व्यभिचारदर्शनाच्च अन्यथा कथमुक्तं य एव च तेन प्रदर्शितः स एव तेन प्रापणीय इति तन्नेदमपि लक्षणम्, ननु प्रवृत्तबा-धकबाधा नानुमाने परोक्षत्वात्, भावि बाधाशङ्कायां नार्वाग्दृशो निमित्तमस्ति, तदभावनिश्चयेन बाधकबाधयोः रूपापरि-ज्ञाने भवता प्रेरणात् किमत्राज्ञातं तद्विपरीतविषयोपस्थापकप्रमाणान्तरबाधकं प्रमाणविषयाभावो बाधेति, उच्यते समाधिः निश्चितस्वसाध्याविनाभूतलिङ्गप्रभवानुमाने नैवम्विधं बाधकं बाधा वा सम्भवति युगपद्विरुद्धधर्माध्यासितधर्मिणोऽभावात्साध्या

भावे चाविनाभावस्यैवाभावात्, अनविनाभूतस्य च लिङ्गत्वेनानिष्टेः कुतो व्यभिचारः, गुणवद्वक्तृधीनवचनस्याप्येवमेव व्यभिचारे वक्तुर्गुणितत्वाभावात्, प्रत्यक्षेप्यभ्यासावस्थाभाविनि स्वतो निश्चितप्रामाण्यात्र बाधकप्रवृत्तिरनभ्यासे च प्रमाणान्तरात्संवादादेस्तदभावावगतेर्नायं दोषः। यदि प्रमाणविषये बाधा न सम्भवति तद्वर्जितविशेषणं किमिति चेत्, उच्यते तदाभासस्य प्रमाणतानिषेधार्थम्, अन्यथा हि ज्ञानं प्रमाणमेतावत्युक्तेऽविशेषेण ज्ञानं प्रमाणं स्यात् अतस्तद्व्यवच्छिद्यते समारोपविषये अस्यादुष्टत्वादतो युक्तमेतल्लक्षणमिति ॥ तत्र प्रमाणमिति अनूद्य पदं प्रमाणशब्दवाच्यस्य सर्व्वप्रवादिनां सिद्धत्वादविप्रतिपत्तिविषयता तेनैव सूत्रेपि तदादौ प्रोक्तं लक्षणे तु प्रदर्शितन्यायाद्विप्रतिपत्तिरतस्तद्विधेयम्। न चागृहीतविशेषणा विशेष्ये न बुद्धिरिति वाच्यम्, असिद्धेः, विशेष्ये विशेषणस्याविषयतया सम्भवादित्येके प्रतिपक्षायुक्तश्चायं पक्षोऽस्माकमाभाति। अन्ये तु वदन्ति ज्ञानं बाधवर्जितमित्यनूद्य प्रमाणमिति च विधेयम्, यतो बाधावर्जितादिलक्षणयुक्तेपि ज्ञानेनुमानादौ चार्व्वाकः शाब्दे च बौद्धोऽप्रमाणतामाह, ततो बाधावर्जितस्य सिद्धत्वेपि प्रामाण्यमसिद्धं विधीयते इति। ननु यः प्रामाण्य नेच्छेत् स तल्लक्षणमपि तत्र नेच्छेदिति कुतस्तल्लक्षणयुक्तेपि तद्विज्ञानप्रामाण्यमिति, सत्यं, चार्वाकस्यानुमानादौ बाधवर्जितत्वं बलात्स्थापनीयं बौद्धस्यापि शाब्द इति ॥ सामान्यतः प्रमाणलक्षणमभिधाय विशेषलक्षणमभिधातुकामस्तन्निबन्धनं व्यक्तिभेदमाह प्रत्यक्षं च इत्यादि। न ह्यप्रदर्शिते व्यक्तिभेदे प्रतिव्यक्ति नियतं लक्षणमाख्यातुं शक्यते इति भावः। न क्षीयते इत्यक्षो जीवस्तं प्रति वर्त्तते इति प्रत्यक्षम्, न खलु असति जीवे पारत्रिकानुष्ठानं युज्येत नहि वर्त्तमानः क्षणः स्वकृतफलभोक्ता क्षणिकस्य तदसम्भवात्, तावदुत्पन्नः क्षणे तदुत्तरं कर्त्ता तदुत्तरं भोक्ता फलस्य कारणोत्पत्त्युत्तरकालभावित्वात्, नापि प्राक् सन्निधिमात्रेण हेतुभावः, सर्वसन्ततिक्षणानामन्योन्यं हेतुफलभावापत्तेः, न च निरन्वयेषूपादानकृतो विशेषः सर्वेषां पूर्वभावित्वेनोपादानत्वादशेषाणामुत्तरभावितयोपादेयत्वात्। यत्तु अनवगततत्त्वा एकत्वाद्यध्यवसायतः फलार्थितया क्रियां

मारभन्त इति तदपि न सम्यग्, एकत्वाध्यवसायस्याप्येकस्यानेकक्षणयोगिताहानेः । न चानेकाक्षरोल्लेखितया विकल्पोप्येकक्षणस्थायी युक्तः न चानेकक्षणावस्थायी त्वन्मतेन एकः न चानेक एकत्र प्रवर्तको निर्विकल्पकत्वेन मूकत्वात् तत्र सत्कायदृष्टिः सन्तानाश्रयः कर्तृभोगभावाददोष इति । न च वर्तमानक्षणारब्धा सन्ततिरेकक्षणेषु, तदयोगात्, न च बहवः पूर्वोत्तरीभूताः सन्ति यैः सन्ततिरारभ्येत न चावस्तुभूतया कर्तृभोगभावो युक्तस्तस्य पारमार्थिकत्वात्, आरोपितत्वे चास्यापि न तदर्थं विदुषां प्रवृत्तिः, कृतनाशादकृतापत्तेः । हेतूनां फलेषु नियमं बुद्ध्वा प्रारभन्ते शुभाः क्रिया विद्वांस इति चेत्, नैतदस्ति, बुद्ध्वा इति कोर्थो, निश्चित्येति चेन्न निश्चयस्य विकल्पात्मकत्वात् तस्य च क्षणेऽसम्भवादित्युक्तम् ॥ तथा ज्ञातरि व्यवस्थिते प्रत्यभिज्ञाऽस्तु भिन्नेपि विषये न तु ज्ञातृभेदे न कदाचिद्यज्ञदत्तदृष्टे देवदत्तस्य प्रत्यभिज्ञा दृष्टा दृष्टानुसारिण्यश्च कल्पना युक्ताः । अतीतानागतक्षणयोस्तु विनष्टानुत्पन्नत्वेनासत्त्वान्नातोऽर्थक्रिया तत्त्वे चासत्त्वायोगाच्चल्लक्षणत्वात् तस्य त्वन्मतेन, यदपि चेतनास्तरवः सर्वत्वगपहरणे मरणादित्यत्रोक्तमन्यतरासिद्धो हेतुः प्रतिवाद्यसिद्धो वेति तदपि हेतुलक्षणाविदुषो वचनं नहि सत्त्वं यादृशं भवतः सिद्धं तादृशं वैशेषिकादेः सिद्धमतस्तं प्रत्यसिद्धो वा स्यात् सत्त्वलक्षणो हेतुः । न चोत्पत्तिमत्त्वं यादृशं तव तादृशं साङ्ख्यस्य यथात्र गमकत्वमेवमन्यत्रापीति, स्वाभिमतसत्त्वादिसाधने च परं प्रति प्रमेयान्तरगमनं परस्यापि स्वाभिमतसत्त्वादिसाधने साधनसद्भावात् । तथा चेतनास्तरवः स्वापादित्यत्रोक्तं यदपि भवता पक्षैकदेशासिद्धो हेतुः तदपि परमतानभिज्ञस्य वचनम्, यद्यत्स्वपिति तत्तत्सचेतनं यथा मनुजादयः स्वपन्ति च चिञ्चिन्यादयः एवं चैतन्ये सिद्धे यो यः सङ्कुलस्तरुः स सचेतनः यथा चिञ्चिन्यादिकः साङ्कुलतरवश्च वटोदुम्बरादय इति स्वभावहेतुः । यथा सत्त्वहेतोः सर्वोपसंहारेण क्षणिकत्वसाधने नान्वयदृष्टान्तोस्ति विपर्ययव्यावृत्त्या तु सत्त्वं क्षणिकत्वं साधयति । तथा प्राणादिमत्त्वमन्वयाभावेपि विपक्षाद्घटादेर्व्यावृत्तेर्जीवच्छरीरे सात्मकत्वं किन्न साधयति, नहि परस्य सात्मका घटादयः,

निरात्मकाः सर्वे भावा इति प्रतिज्ञाक्षतेर्जीवच्छरीरे नैरात्म्यमचेतनेषु च घटादिषु सात्मकत्वमिच्छन्नुन्मत्त एव स्यात् लोकप्रतीतिविरोधात् तदर्थं च प्रमाणान्वेषणं प्रमाणव्यवहारेणेति च वचः कथम्, न चाचेतनाच्चेतनोत्पत्तिः, मृतशरीरेपि शोफहेतोर्वायोः क्लेदहेतोस्तेजसः सत्त्वाच्चैतन्योत्पत्तिप्रसङ्गाच्चतोपि परिस्पन्दादिभावापत्तेः। प्रकृतेर्बुद्धेर्भाव इति चेन्मा त्वर, क्रममात्रावभिधास्यमानत्वात्। यदि नित्यानि भूतानि सदैव वैकल्यायोगो योगे वा साकल्यायोग इति सदैव चैतन्यं स्यान्नवा कदापीति तन्न भूतहेतुकं चैतन्यम्, न चाध्यक्षैकप्रमाणः परं स्वप्रतीतमर्थं प्रतिपादयितुमीशो मूकत्वादध्यक्षस्य, न च प्रतिज्ञामात्रं वादिनो निग्रहस्थानम्, न च पराभ्युपगतो भवतो हेतुः प्रमाणम्, न चाप्रमाणिका प्रतिज्ञा सिद्ध्यति परव्यामोहमात्रं तु स्यादपीति न चैष सतां न्यायः। न च जातिस्मरणपात्रावतारादि नोपलभ्यते न चानिमित्तं जगद्वैचित्र्यं न च भूतमात्रहेतुकं कारणाभेदे कार्यभेददर्शनात् न च रजकवस्त्रस्फोटनपाषाणस्यासातानुभवो भवतः प्रतीतश्चेतनाधर्मत्वात्तस्य देवताबिम्बपाषाणस्य सुखानुभवस्तत्वादेव। सातासातानुभवश्च पुण्यपापनिबन्धनोऽभ्युपगम्यत इति कुतो व्यभिचारः। नापि पुण्यानुभवयुक्तदेवानां चन्द्रार्कग्रहोडुप्रभृतीनां नोपलभ्यन्ते विमानानि अतोऽस्त्यक्षो जीव इति स्थितम्। तं प्रति चन्द्रमसश्चन्द्रिकावन्मेघाद्यावरणापगम इव ज्ञानावरणापगमे तदभिन्नस्वभावतया वर्त्तत इति प्रत्यक्षं द्विधेत्यनेन सम्बन्धः, प्रत्यक्षं च द्विधा नैश्चयिकव्यावहारिकभेदात्, परोक्षं चेति परैरिन्द्रियलिङ्गशब्दैरुक्षा सम्बन्धोऽस्येति परोक्षम्, चकार उक्तसमुच्चये, परोक्षं च द्विधा मतिश्रुतभेदात्, अथवा द्विधा परोक्षं च चकारात्संविदितत्वाद् ज्ञानस्य प्रत्यक्षं तदेव मतिश्रुतसमुत्थं ज्ञानमिति बाह्यविषयापेक्षया तस्य परोक्षत्वेनाभिधास्यमानत्वादिति। द्विधा इति द्विरावर्त्तनीयं तेन द्विधा प्रमेयस्य विनिश्चयात् तत्र केवलापेक्षया सर्व्वस्यापि प्रमेयराशेः प्रत्यक्षत्वात्, अवधिज्ञानापेक्षया रूपिद्रव्यं प्रत्यक्षमन्यच्च परोक्षम्, मनःपर्यायज्ञानापेक्षया मानुषोत्तरपर्वतान्तरवर्त्तिसंज्ञिमनोद्रव्यं प्रत्यक्षं शेषं परोक्षम्, श्रुतमतिद्वयापेक्षया परोक्षमशेषमिति निश्चयतः, व्यवहा-

रेण पुनरिन्द्रियज्ञानं प्रत्यक्षं परोक्षं पुनरनुमानमागमश्च, इह च बाधवर्जितं ज्ञानं प्रमाणं द्विधा, द्विधा मेयविनिश्चयादिति वदता ग्रन्थकृता प्रमेयभेदाधीनः प्रमाणभेदः नापरं निमित्तान्तरमस्येत्येतत्प्रतिपादितम्, तथाच व्यापकानुपलब्ध्या प्रमाणान्तराभावमाह। नन्वनुमानस्येव उपमानादीनामपि परोक्षविषयत्वे नासत्त्वमपरस्य त्वनिष्टेर्न काचिद्बाधेति, नैतदस्ति, यतो न खल्वनुमानागमविषयव्यतिरिक्तविषयोऽस्त्युपमानादीनाम्, तथाहि पूर्व्वापरकालप्रवृत्ताध्यक्षगोचरयोर्गोगवयवस्तुनोर्न प्रत्यक्षद्वयाविषयमपरं सादृश्यमुपमानगोचरभूतमस्ति, अन्यथा तर्व्वालीदृष्टौ द्वितीयतरुदर्शने च प्रथमे आद्योयं वृक्षः प्रथमवृक्षदर्शने वा द्वितीयादिज्ञानमुपमानार्थापत्त्यविषयीकृतार्थविषयत्वात् प्रमाणान्तरमासज्येत, तथाच षट्सङ्ख्या विरुध्येत। अथापि वृक्षपङ्क्तिग्राहिणा आद्याग्रहणे पङ्क्तेरभावादाद्यत्वग्रहणे तदुत्तरं गृहीतग्रहणादप्रमाणम्, सादृश्यग्राहिणोऽपि तर्हि स्मरणरूपतास्तु, न हि श्रुतजातिदेशस्य गवयोपलम्भे सम्बन्धोऽप्रतिपन्नः प्रतीतिगोचरः, नहि गौरिव गवय इति श्रुतिकाले तदाकृतौ न शब्दो निवेशितस्तन्निर्विषयतयोत्तरकालेऽपि तत्र निवेशयितुमशक्तेः, न च दृष्टः श्रुतो वाऽर्थोऽदृष्टार्थेनानविनाभूतोऽप्यदृष्टं गमयेदतिप्रसङ्गात्, अविनाभावश्च प्रमाणनिश्चितो गमकः तच्च प्रमाणं कचिदुपदर्शनीयमित्यनुमानतैव। अभावस्तु न दृश्यानुपलब्धेरन्योऽसिद्धत्वादेः अतः प्रत्यक्षानुमानागमव्यतिरिक्तं न प्रमाणमिति। ननु यत्नादनुमितेऽप्यनुमानान्तरबाधा दृश्यते न च व्यक्त्याश्रितोऽविनाभावोऽनन्वयान्न सामान्याश्रयोऽपि तस्य सर्वगतत्वेन पक्षवदन्यत्रापि वृत्तेः, नापि साध्याभावे साधनाभावरूपो व्यतिरेको युक्तः नित्यव्यापकयोस्तदयोगात्, विपक्षे चावृत्तावव्यापकत्वं सामान्यस्य व्यापि चेष्यते अतो विरुद्धतापीति, नैतदस्ति, यतो नानुमानं प्रमाणं नैतावदिष्टसिद्धये बाधान्वितत्वादित्युक्तेऽप्यविनाभावो बाधाभावप्रामाण्ययोरुपदर्शनीयः कचिदेतच्चानुमानमेवेति स्ववचनव्याघातः प्रतिज्ञायाः। न पराभ्युपगमः प्रमाणमन्यथा विवादाभाव एव, परेण व्यामोहात्तदिष्टम्, अप्रमाणात्साध्यसिद्धिरिति जीवपरलोकयोरप्यस्तु व्यर्थमनुमाननिषेधनम्, सामान्यविशेषात्मकसाध्यसाधनयो-

नोक्तदोषप्रसङ्गः न च प्रमातृदोषः प्रमाणस्य, न च प्रत्यक्षैकप्रमाणस्य तवैहिकोपि व्यवहारः क्षुधा भोजनं तृषा जलपानं गेहाद्विवासितबहिर्यानं ततो गृहागमनं छायातपादिभजनं निखातोन्मार्गणमजीर्णभोजनादिपरिहारः श्वापदेभ्यो भयमित्यादिकोऽनुमानाभावे सिद्ध्यति, अतो नायं पक्षः, शब्दप्रामाण्याभावे सर्वज्ञाभ्युपगमो व्यर्थः न चापवर्गिकानुष्ठानस्याविनाभावोर्वाग्दृगध्यक्षेण सिद्ध्यति तत्पूर्वकत्वाच्चानुमानस्य तदभावे तत्राप्रवृत्तिरेव, कथं वा भारं वो भिक्षवो दर्शयिष्यामि भारहारं वो भिक्षवो दर्शयिष्यामि भारनिक्षेपं वो भिक्षवो दर्शयिष्यामि इत्यागमाश्रयः परस्परं विवादः तस्मादागमः प्रमाणीकर्तव्य एव निश्चयादिति च वदन्निदमाह। विनिश्चयात्मकस्यैवाभिनामर्थक्रियासमर्थे प्रवर्त्तकत्वात्प्रामाण्यं नाविकल्पकस्येति। न हि दृष्टमिति प्रवृत्तिः, सर्वत्राविशेषेण प्रवृत्तिप्रसङ्गात्, न चाविकल्पमर्थक्रियासाधकत्वेनावस्यति, तस्य मूकत्वात्, अन्यथा विकल्पसहायतानभ्युपगमापत्तिः। संग्रहश्लोक एवोक्तमर्थं श्लोकवार्त्तिककारो दर्शयितुमाह।

## अपरोपाधि विज्ञानं यदावरणसंक्षयात्। जीवस्वाभाव्यतः स्पष्टं निश्चयाध्यक्षमुच्यते ॥२॥

यद्विज्ञानमपरोपाधि न पर उपाधिर्विशेषणं विद्यते यस्य तत्तथा इन्द्रियलिङ्गशब्दविशेषणनिरपेक्षं तथापरमपि भवति तेन विज्ञानमित्युक्तम्। तदपि वाताद्युपद्रवादपि भवति तेन आवरणस्य मत्यादिज्ञानानां यदावरणं तस्य संक्षयादित्युक्तम्। तदपि कैश्चित्प्राकृतमुच्यते तेन जीवस्वाभाव्यादित्युक्तम्। तदपि सामान्यालम्बनं दर्शनमपि भवति तेन स्पष्टमुक्तं स्पष्टं विच्छिन्नार्थग्राहकम्। तदपि कैश्चिदिन्द्रियार्थसन्निकर्षोत्पन्नमिष्यते तथान्यैश्च सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म इति कथ्यते ते नातीन्द्रियजन्म प्रत्यक्षमिति प्रतिपन्नास्तन्मतव्यवच्छेदार्थमध्यक्षमुक्तम्। अर्थक्रियासमर्थेर्थे व्यवसितयदर्थिन इत्यादिना प्रत्यक्षलक्षणाभिधानात्पुनरुक्ततापरिहारार्थं निश्चयाध्यक्षमुक्तं तद्धि मतिश्रुते परोक्षे इति वचनाद्व्यवहारतः प्रत्यक्षमित्यभिधास्यते सर्वमेव च विज्ञानं स्वविषये स्पष्टसंवेदनमतः अनुमानादिविज्ञानं द्विचन्द्रादिविज्ञानं वा स्वसंवेदनापेक्षया प्रत्यक्षमेव, किन्तु न

तद्बाह्यविषयमिति । यदपरोपाधि तदपरमपि प्रत्यक्षं भवति संवेदनस्याध्यक्षत्वेनेष्टेः किन्तु बहिरर्थापेक्षयाऽध्यक्षव्यपदेशभागिदमिति तेन प्रस्तुतं प्रत्यक्षं नापरम् । अस्य बहिराश्रयेण लक्षणमुक्तमित्यतः प्रत्यक्षमेतदुच्यते इति च अत्रैव सम्बध्यते, तेनेदं प्रत्यक्षमेवोच्यते प्रत्यक्षशब्देनाभिधीयत इति अन्येषु व्यपदेशान्तरभावात् ॥ ननु बहिरर्थाश्रयेणेदं लक्षणमुच्यते इत्येतत् कुतः सूत्रे अर्थग्रहणाभावादिति चेत्, उच्यते विस्पष्टग्रहणादात्मनि हि सर्वमेव स्पष्टं नात्र व्यभिचारो न खलु संवेदनेपि भ्रान्तिः, ज्ञानव्यवहाराभावापत्तेः न खलु संवेदनान्तरेण तदभिधीयते संवेदनस्य आत्मविषयत्वात्, तदन्तरगम्यत्वे वा तत्रापि भ्रान्तिभावे तदन्तरापेक्षायामनवस्थापत्तेः अतः स्पष्टताग्रहणं स्वविषये व्यभिचाराभावादनर्थकमतो बहिरर्थापेक्षमेव तदिति ॥ ननु दर्शनव्यवच्छेदार्थं स्पष्टताग्रहणमुक्तम्, सत्यम्, अत एव ज्ञानमाकारवत् स चाकारो नीलादिरूपः स चार्थस्य तदाश्रया स्पष्टतेति । इह च प्रत्यक्षमित्यनूद्य वादिप्रतिवादिनां प्रत्यक्षशब्दवाच्यस्य कस्यचिदर्थस्य सिद्धत्वात्, लक्षण एव विप्रतिपत्तिस्तेन तदेव विधीयते इति सिद्धानुवादेनासिद्धस्य विधानमिति पण्डितप्रवादात् । छन्दोवशाच्च लक्षणपदानि पूर्वमुक्तानि इत्येके व्याचक्षते । अपरे तु न खलु लक्ष्ये असिद्धे लक्षणमाधातुं तत्र शक्यम्, तेन प्रत्यक्षमनूद्यमिति । अपरे तु लक्षणमनूद्यमाचक्षते यत एवंविधविशेषणयुक्तं ज्ञानमवश्यमभ्युपगन्तव्यमेव सर्वैरपि, न खलु ज्ञानं स्पष्टाभमपरोपाधिपरस्यापि नानुभवमारोहति, संवेदनस्य निह्नोतुमशक्तेः, किन्तु कुतोप्याग्रहान्मीमांसकैस्तत्प्रत्यक्षतया न व्यवह्रियते तेन तान् प्रति लक्षणमनूद्य प्रत्यक्षत्वं विधीयते स्पष्टाभं प्रत्यक्षमितरप्रत्यक्षवदिति ॥ तदेव भेदतो निरूपयन्नाह ।

**प्रत्यक्षं योगिविज्ञानमवधिर्मनसो गमः । केवलं च त्रिधा प्रोक्तं योगिनां त्रिविधत्वतः ॥३॥**

प्रत्यक्षमिति विधेयं ज्ञानत्रयमनूद्य प्रतिगतो अक्षो यत्र स प्रत्यक्षो घटः प्रत्यक्षा साटिका प्रत्यक्षं दधि वाच्यलिङ्गः प्रत्यक्षशब्दः। यदि तु अक्षं प्रति वर्त्तते यत्तज्ज्ञानं प्रत्यक्षमिति, नपुंसकलिङ्गः प्रत्यक्षशब्दः, इह प्रतिशब्द आवरणक्षयोपशमक्षयवाचकोऽव्यया-

नामनेकार्थत्वात्तं गतोऽक्षो जीवो यत्रेति स तथा घटादिः ॥ तत्रावधिरिति अवधिज्ञानं अवधिना मर्यादया रूपिद्रव्यलक्षणया ज्ञानमवधानं वा अवधिरुपयोगपूर्व्वकमित्यर्थः ॥ तथा मनसा गमः परिच्छेदो मनःपर्यायाणामवगम इत्यर्थः । एष च अर्धतृतीयद्वीपसमुद्रान्तर्गतसंज्ञिमनोगोचरः ॥ प्रत्यक्षमिति सम्बन्धः । केवलं परिपूर्ण्णं परिपूर्णार्थग्राहकत्वात्, कथमेतद्योगिज्ञानमित्याह । योगिनां त्रिविधत्वतः ॥ अवधिः सम्यग्दृशां देशसर्वसंयतानां च, मनःपर्यायज्ञानं संयतानामेव, केवलं तु केवलिनामेवेति ॥ इह तु न क्षीयत इत्यक्षो जीवो नित्यः, सदकारणवन्नित्यमिति लक्षणयोगादिति, न खल्वसन् जीवस्तदभावसाधकप्रमाणाभावात्प्रत्यक्षस्य विधिसाधकत्वात्ततोप्यभावसिद्धौ भावव्यहारोच्छेदप्रसङ्गात् । तन्निवृत्तिरपि न तदभावसाधिका स्याद्दृष्टेरनैकान्तिकत्वात् सर्व्वादृष्टेः सन्दिग्धासिद्धत्वात् प्रत्यक्षैकप्रमाणस्य च नापरं तदभावसाधनमिति । न चानुमानात्तदभावसिद्धिः, कार्यस्वभावहेत्वोर्विधिसाधकत्वात् यदाहात्र द्वौ विधिसाधनावेकः प्रतिषेधहेतुरिति, स चानुपलब्धिरूपः सा च चतुर्द्धा, तत्र न तावत्स्वभावानुपलब्धिस्तदभावं गमयति एकज्ञानसंसर्गिपदार्थान्तरोपलम्भरूपत्वात्तस्याः, न चासतैकज्ञानसंसर्गोस्ति कस्यचिदिति सत्त्वे च देशादिप्रतिषेध एव स चेष्यत एव । कारणव्यापकानुपलब्धी सिद्धे कार्यकारणभावे व्याप्यव्यापकभावे च स्तः स चात्यन्तासता न सम्भवति सत्त्वे च देशादिप्रतिषेध एव । विरोधोपि नात्यन्तासता सहानवस्थानलक्षणः परस्परपरिहाररूपस्य च सर्वत्र सम्भवान्नात्यन्ताभाव इति । न चापरं प्रमाणान्तरं सौगतस्य न चाप्रमाणिका सिद्धिः, अतिप्रसङ्गात् ॥ किञ्च न धर्मो भावधर्मो हेतुर्विरुद्धत्वान्नाभावधर्मः, अभावे असिद्धे तद्धर्मस्यासिद्धत्वान्नोभयधर्मोऽनैकान्तिकत्वात् ॥ न धर्मिणो निषेधः किन्तु तद्धर्मस्य नित्यत्वलक्षणस्येति चेत्, किं धर्मो धर्मिणो भिन्न उताभिन्नः, भेदे सम्बन्धानुपपत्तिस्त्वन्मतेन, अभेदे धर्मिणोपि निषेध एव तदवस्थः प्रसङ्ग इति । नाप्यात्मनः कारणमस्ति तदनुपलब्धेः, कायाकारपरिणतो भूतसङ्घातस्तत्कारणमिति चेन्न कारणात्मन्यसतः कार्यस्यानुत्पत्तेः । यदाह “ असदकरणादुपादानग्रहणात्सर्व्वसम्भवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च स-

त्कार्यम्." इति ॥ सतः करणेऽनवस्थेति चेत् न, सर्व्वथा सत्त्वानभ्युपगमात् । ननु तथापि येनांशेन सत्त्वं न तस्य करणं येन चासत्त्वं तस्य करणे सत्कार्यवादहानिरिति, नैतदस्ति, यतो यस्य न सदंशो न तस्यासदंशकरणमिति न खलु घटः पृथिव्या भिन्न उपलभ्यते अभेदोपलम्भे च भेदव्यवहारोऽनिमित्तः प्रवर्त्तेत ततो मृत्सद्भावे घटोप्यासीदिति प्रतीयतां तदभावे मृदोप्यभावापत्तेः, न चानिमित्ताद्धटमृदुत्पन्नेति युक्तम् अतिप्रसङ्गात्, न च पूर्व्वक्षणभाविनि तन्निमित्तम्, स्वसत्ताकाले तन्निमित्तत्वे मृद्द्वयोपलम्भप्रसङ्गः तदुत्तरकालनिमित्तत्वे च मृतशिखिनोपि केकायितप्रसङ्गः। प्राक्सन्निधिमात्रेण हेतुफलभाव इति चेन्न भुवनोदरासीनभावानां हेतुफलभावापत्तेः तथाच धूमवत्सर्व्वे सर्वेषां गमकाः स्युरिति । अथान्वयव्यतिरेकानुविधानाद्धेतुफलभावो व्यवह्रियते तत एव गम्यगमकभाव इति, नैतदस्ति, अन्वयव्यतिरेकयोरनित्यत्वे ग्रहीतुमशक्तेर्नानित्ये ज्ञातरि तद्भावग्रहः । अथ पूर्व्वक्षणाहितसंस्कारेभ्यः उत्तरक्षणेभ्यो घटनाप्रत्ययोत्पादान्नायं दोष इति नैवम्, घटनाप्रत्ययस्य विकल्परूपत्वात् तस्य चान्तर्जल्पोल्लेखित्वात् जल्पस्य च क्रमभाव्यनेकवर्ण्णात्मकत्वात् तेषां च क्षणिकैकज्ञानेन परामर्षायोगात् न चानेकत्वे तस्य घटना युक्तेति तन्न किञ्चिदेतत् तथाच सती भूतेषु चेतनेति तथाचैकेन्द्रियजीवासिद्धिरवार्येति ॥ ये तु अहं च पृथवी पार्थेत्यादि प्रतिपन्नास्ते पृथिव्यादीनां चैतन्याभ्युपगमाददोषवन्तः किन्त्वनेकजीवाश्रितत्वेनैष्टव्यास्तैरित्युपादिश्यत इति। न च कूटस्थनित्यतया नित्यत्वं युक्तम्, बालकुमारयुवापरिणतवृद्धादिभेददर्शनात् नारकतिर्यङ्नरामरभेददर्शनाच्च, अस्य च जीवस्य ज्ञस्वभावत्वात् यदाह चैतन्यं पुरुषस्य स्वरूपमिति, नह्यचेतनश्चेतनायोगाच्चेतयते घटादेरपि तथाप्रसक्तेः । न तेषां चेतनायोग इति चेत् आत्मन्यप्यचेतने तथास्तु, विशेषाभावात् ॥ ज्ञस्वभावस्य चास्यानादिमान् प्रवाहतो मिथ्यात्वादिनिमित्तोऽष्टविधकर्मबन्धस्तानि चामूनि कर्म्माणि ज्ञानावरणदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तरायनामानि तान्यप्यनेकधा भिद्यन्ते, स्वस्थाने विपाकप्रदेशानुभवस्थितिक्षयनिबन्धनस्तत्क्षयः सर्व्वजनीनः, किन्त्वपरबन्धात्संसार इति विशिष्टज्ञानध्या-

नाभ्यामपूर्व्वबन्धविरहितो निःशेषक्षयादपवर्गात् घातिक्षयात् केवलमिति । यदि च भवकाल क्षयः कथमुक्तं हृस्वमुलमकतावी-दच्छेदने जप्यमकृक्षतमित्यादि । क्षयोपशमोपि च भवप्रत्ययो गुणप्रत्ययोऽवधेरावरणस्य, मनःपर्यायज्ञानस्य गुणप्रत्यय एवेति ॥ अत्र युक्तिमाह ॥

**क्षयोपशम एकत्र दृष्टोऽन्यत्रापि किं न सः । क्षये ज्ञानावृतीनां च केवलं तत्र तन्न सः ॥४॥**

क्षयोपशमो नाम उदयप्राप्तस्य क्षयोऽनुदीर्णस्य विष्कंभितोदयः स एकत्र दृष्टः क्रोधादौ कर्मणां वह्न्यादौ बाह्येषु अन्यत्रापि अवधिमनःपर्यायज्ञानावृतौ किं न सः क्षयोपशम इति । तर्हि केवलेपि सः स्यादित्याह । क्षये ज्ञानावृतीनां च केवलं तत्र तन्न सः । अशेषक्षये ज्ञानावरणादीनां केवलं यस्मादिष्यते तस्मात्तत्र केवलज्ञाने स क्षयोपशमो नेति ।

**क्षीणोपशान्तरूपाणां क्षयोप्यात्यन्तिको मतः । वह्न्यादेरिव कुत्रापि नायं सार्वत्रिको मतः॥५॥**

क्षीणोपशान्तं रूपं येषां ते तथा तेषां क्षयोपि नाशोपि आत्यन्तिकोऽपुनर्बन्धभावतया वह्न्यादेरिव चित्रभानोरिव कुत्रापि प्रदेशादौ । अथवा कुत्रापि क्षयोपशमभाक्षु सर्व्वाणि च कर्माणि क्षयोपशमभाञ्जि, यद्यपि केवलावरणं न क्षयोपशमभाक् तथापि ज्ञानावरणचतुष्टयस्य क्षयोपशमभाक्त्वेन तत्क्षये तत्सहचरतया केवलावरणक्षयाच्च पक्षैकदेशासिद्धता शङ्कनीयेति, प्रयोगस्तु यद्यत् क्षयोपशमभाक्तत्सदात्यन्तिकक्षयभागपि दृष्टं यथा क्वापि प्रदेशादौ वह्न्यादिः क्षयोपशमभाक् च ज्ञानावरणादीति । न चायमसिद्धो हेतुः, विद्यापात्रेषु तारतम्यस्य सर्व्वेषामविगानेन सिद्धत्वात्, नहि तदावरणक्षयोपशममन्तरेण ज्ञाने तरतमभावे निमित्तान्तरमस्ति अध्ययनादिप्रयत्नोपि न तदावरणसमुल्लासे कथञ्चन । नापि विरुद्धः, सपक्षे भावात् । नापि अनैकान्तिकः यतो यदि क्षयोपशमेपि नात्यन्तिकः क्षयो भवेत्तदा योयमपवर्गार्थोऽभ्युद्यमः स सर्व्वोपि विफलतां विभृयादिति

न त्वैकान्तिकता हेतोः क्षयोपशमेऽप्यभव्यानामात्यन्तिकक्षयाभावादित्याह, नायं सार्वत्रिको मत इति अयमात्यन्तिकक्षयो न सार्वत्रिकः सर्वेषु क्षयोपशमयुक्तेषु मतोऽभीष्टः, किन्तु, तथाभव्यत्वात् क्षिप्तासन्नभव्य (व?)स्य निरुद्धाश्रवद्वारस्य विशिष्टक्रियावत एवेति ॥ क्रमवर्त्तित्वात् ज्ञानस्य रूपादिषु सर्वज्ञता न प्राप्नोतीत्याह ।

**क्षीणावरणतः पुंसः ज्ञस्वभावस्य युगपत्। तस्याशेषार्थसंवित्तिं कः सकर्ण्णो निवारयेत् ॥६॥**

क्षीणज्ञानावरणस्य पुंसो जीवस्य ज्ञस्वभावस्य विज्ञानस्वभावस्य पक्षद्वयेऽप्युक्तमत्र साधनं युगपदेकहेलया तस्यैवंविषस्य जीवस्य अशेषार्थसंवित्तिं सकलार्थवेदनं को न कोपीति भावः। सकर्ण्णको विद्वान्वारयेत् प्रतिषेधयेदिति ॥ एवं च किमित्याह ।

**दशहस्तान्तरं व्योमेत्याद्यनवसरं ततः। इन्द्रियार्थोपभोगस्तु नानक्षेणाप्यदृष्टितः ॥ ७ ॥**

न खल्वस्माभिर्भावनावशात् सर्वज्ञोऽभ्युपगतो येनैतत् दूषणमासज्जेत। किं तदित्याह। "दशहस्तान्तरं व्योम यो नामोत्प्लुत्य गच्छति। स योजनशतं गन्तुं शक्तोऽभ्यासशतैरपि" इति इत्यादि। तत्किमित्याह। अनवसरमप्रस्तुतमसम्बद्धं परमतानभिज्ञस्येति भावः। अनिष्टरसास्वादानुषञ्जनं प्रत्याह। इन्द्रियाणामर्थो विषयो रूपादिः तस्य उपभोग आस्वादनं नेति सम्बन्धः अनक्षेण सम्भवतीति शेषः। किमित्याह। अदृष्टितो, दृष्टानुसारिण्यो हि कल्पना युक्ता न चातीन्द्रियज्ञानेनेन्द्रियार्थोपभोगो दृष्ट इति ॥ कथं न दृष्ट इत्याह ।

**पित्रोर्मोहनभावस्तु स्वोत्पत्तेः सुविनिश्चितः। तद्वन्नाह्लादसंवित्तिर्मातृभोगप्रसङ्गतः ॥ ८ ॥**

पित्रोः जनकयोः मोहनभावो निधुवनप्रवृत्तिः स्वोत्पत्तेरात्मनः सुतत्वेनोत्पादाद्विनिश्चितः तद्वत् पित्रोरिव नाह्लादसं-

वित्तिः नैव ह्लादसुखासिकासंवेदनमित्यर्थः । किमित्याह । मातृभोगप्रसङ्गतः, जनन्या सह निधुवनासेवाप्रसङ्गात्प्रासेरिति ॥ स्थानान्तरस्याधियाह ।

**नूनं स चक्षुषेत्यादिवचनमज्ञत्वसूचकम् । सर्व्ववित्त्वं न बुद्धादेस्तद्वचो बाधसङ्गतेः ॥ ९ ॥**

नूनं स चक्षुषा सर्वान्रसादीन् प्रपश्यत इत्यादि यदुक्तं तदज्ञत्वसूचकं परमतं प्रतीति शेषः । नह्यस्माभिरिन्द्रियाश्रितज्ञानेन सर्वज्ञोऽभ्युपगम्यते, किन्त्वतीन्द्रियज्ञानेन तन्नायं दोषः ततः परमतानभिज्ञेनेदमुक्तं भवतेति । यदुक्तम्, "कपिलो यदि सर्व्वज्ञो बुद्धो नेति च का प्रमा," इत्यादि तत्राह । सर्व्ववित्त्वं न बुद्धादेस्तद्वचो बाधसङ्गतेः । जिनेश्वरादतोऽन्यस्यासर्व्ववित्त्वमित्थमवसेयम् तदुक्ततत्त्वेषु बाधदर्शनात्साक्षाद्विमतेरपि प्रतीतिगोचरापन्नत्वात् ॥ कथमेतदित्याह ।

**स्वकृताभोगो विश्वस्य कर्तृत्वं क्षणनाशिता । तदुक्तं बाध्यते यस्मात्प्रत्यक्षादिभिराभवम् ॥१०॥**

स्वकृतस्य कर्मणो यत्फलं तस्याभोगः "प्रकृतिः कर्त्री पुरुषो भोक्ता" इति वचनात्तेन कपिलादिनोक्तं बाध्यते प्रत्यक्षादिति तस्मान्नासौ सर्वज्ञ इति ॥ कथमेतदित्याह ।

**अचेतनत्वान्नित्यत्वात्प्रकृतेरकृतागमात् । जापहोमादिवैयर्थ्यान्नाभोगः स्वकृतस्य हि ॥११॥**

अचेतनत्वात्प्रकृतेः पुरुषानुकूल्यं न जानीयात्तथाच यदुक्तं पुरुषाभिलाषानुसारेण सुखदुःखादिकं प्रकृतिः प्रयच्छतीति तन्न युक्तम्, अचेतनायाः पराभिलाषावेदनात् । बुद्धिमत्त्वान्नायं दोषश्चेन्न, बुद्धिमत्त्वे पुरुषत्वप्राप्तेः तस्या अपि बुद्धेश्चैतन्यपर्यायत्वात्, सा च प्रकृतेरभिन्नेष्टा ततश्चैतन्यरूपा प्रकृतिः स एव च पुमानिति न पञ्चविंशतिस्तत्त्वानां स्यादिति, नित्या चासौ तस्याश्चैकरूपत्वान्नानाफलदायित्वं न युक्तं स्यात् प्रकृतेरिति पदद्वयेन सम्बन्धः । तथा अकृताभ्यागमः कृतनाश-

आपद्यते स्वकृताभोगः प्रकृत्या कृतं तस्यास्तत्फलनाशः पुरुषेण न कृतं तस्य फलोपभोगे अकृताभ्यागमः । जापहोमादिवैय-र्थ्यम् यद्यकृतमाप्तिः किं जापहोमादिना तथा यदि कृतस्यापि नाशस्तथापि किं जापहोमादिना न चैवं तस्मात्स्वकृतस्यैव भोगो युक्त इति कपिलोक्ते बाधेति ॥

## नित्यत्वादतनुत्वाच्च निष्फलत्वादहेतुतः । जगत्स्थितेरवस्थानान्नेशो विश्वकृदस्ति वः ॥१२॥

ईश ईश्वरो न विश्वकृत्कर्तास्ति वो युष्माकमस्ति सम्भवतीति यावत् अर्थक्रियाकर्तृत्वं हि सत्त्वमुच्यते सत्तासमवाया-देर्निरस्तत्वेन येषामस्ति सदैव स्याभोवा कदाचित्ततोऽर्थक्रियैव सत्त्वलक्षणं यत्स्वालम्बनज्ञानेप्यशक्तं कथं तत्र सत्त्वव्यवस्थाऽति-प्रसङ्गात्, सा च क्रमाक्रमाभ्यां व्याप्ता प्रकारान्तराभावादेतयोरन्योन्यव्यवच्छेदेनावस्थानात्तत एकविधानस्यापरव्यवच्छेद-रूपत्वाच्च द्वयोर्विधिस्तथा परव्यवच्छेदस्यापरविधिनान्तरीयकत्वाच्च द्वयनिषेधरूपप्रकारासम्भवः। नित्यत्वाच्च न क्रमेण कार्य-सम्भवः । अविकलहेतुसन्निधौ तन्निबन्धनस्य सकृदेवोत्पादप्रसङ्गान्नो चेत्सदैवानुत्पाद एव । सहकारिणोपि तन्निमित्ता एव तत्सद्भावे तेषामपि भावान्न विलम्बस्तन्निमित्तो, न च यत्सद्भावेपि यन्न भवति तत्तस्य कारणम् न भवति चेत् तत्सद्भावेपि युगपत्कार्यमतो न तन्निमित्तं युगपदुत्पादे च सकृदशेषतन्निर्वर्त्यकार्योत्पत्तेः क्षणान्तरे कारकत्वाभावादसत्त्वमिति। अतनुत्वाच्च नेशः कर्ता इह यो वितनुर्न स कर्ता यथा वन्ध्यापुत्रः वितनुश्चेश्वरो धर्माधर्माभावात् । न चायमसिद्धो हेतुर्धर्माधर्मविवेक-स्य तस्य परैरेवेष्टत्वात् तदभावे तनुरहितत्वस्यापि तैरिष्टत्वात् । नापि विरुद्धः, सपक्षे भावात् । ननु वान्ध्येयस्य यथा तनु-र्नास्ति तथा सत्तापि नास्ति विसदृशमुदाहरणं नहि भगवतोपि सत्ता नेष्यते । नैतदस्ति, स्वरूपेण तस्यापि सत्त्वात्पररूपेण विश्वस्याप्यभावाच्च विशेष इति । नाप्यनैकान्तिको वितनोः कर्तृत्वेनादृष्टेः । यदाह । " तस्मात्माकार्यनिष्पत्तेर्व्यापारो यस्य दृश्यते । तदेव कारणं तस्य न त्वानन्तर्यमात्रकं ॥ " प्राक्तनविधिमात्रेण हेतुभावे पुरस्तादुक्तं न च वितनोर्व्यापारस्तन्निमि-

त्ततया तस्यादृष्टेः । तथापि निष्फलत्वान्न विश्वकर्त्तेति सम्बन्धः । नहि कश्चिदर्थस्तस्यासिद्धः सिद्ध्यति कृतकृत्यत्वात्तस्य । जिनदेशनेव लोकोपकाराय इति चेन्न, जिनस्य हि स्वकर्मनिर्ज्जरणाय देशना प्रयासो न पुनरीशस्य तदिष्यते इष्टौ वा नाप-वर्ग्गप्राप्तिः पुण्यपापक्षयान्मुक्तिरिति वचनात् न च दुःखितसत्त्वसर्जने सुखितप्रलये लोकोपकाराय प्रवृत्तिरिति शक्यं श्रद्धा-तुं । क्रीडेयं भगवत इति चेन्न क्रीडायापरत्यधीनत्वादनीश एवेशोऽस्तौ नासिद्धो हेतुः ॥ प्रयोगस्तु न निष्फलमारभेत स्वतन्त्रो मनीषी कण्टकशाखामर्दनवत् निष्फलारम्भश्च पराभ्युपगत ईश इति प्रसङ्गसाधनत्वान्नाश्रयासिद्धता । अहेतुत्वान्न कर्त्तेति सम्बन्धः तथाहि यः परकार्ये न भवति स नापरस्य कर्त्ता यथा धान्ध्येयो न भवति च नित्यत्वादीशः कस्यापि कार्यमिति व्यापकानुपलब्धिः । सपक्षे भावान्न विरुद्धः । जीवोपि संसारी कथञ्चिदुत्पद्यमानत्वात् कुशलाकुशलानुष्ठानकर्त्तेति न व्य-भिचार इति ॥ जगत्स्थितेरवस्थामादेव न विश्वकृदिति सम्बन्धः । यदाह न कदाचिदनीदृशं जगदिति । ततस्तु, "सर्वकर्तृत्व-सिद्धौ च सर्वज्ञत्वमयत्नतः । सिद्धमस्य यतः कर्त्ता कार्यरूपादिवेदकः ॥" इत्यनेनापि प्रकारेण सर्वज्ञो न भवतीश इति ॥

**सत्त्वमर्थक्रिया नाशेऽनपेक्षा चिदगोचरा । परलोको विना जीवं सर्वज्ञो न वचः प्रमा ॥१३॥**

**इत्थमावेदयन् बुद्धो युक्तिबाधितमञ्जसा । न सर्वज्ञो न चान्येपि परैरिष्टा जिनोस्तु सः ॥१४॥**

इह कीर्त्तिना क्षणभङ्गसाधनाय सत्त्वम् अर्थक्रिया क्रियाविरोधा विपर्यये बाधकमुक्तम्, अर्थक्रिया च नित्या-त्क्रमाक्रमाभ्यां निवर्त्तत इत्यनित्य एवार्थक्रियाकारी कीर्त्तिनापि सुगतप्रणीतागमानुसारिणोक्तम्, तेन सुगतस्येदं दूषणमिति । यतो दीपान्त्यक्षणेन व्यभिचारान्नार्थक्रियासत्त्वम्, न चान्धकारक्षणारम्भाद्योगिज्ञानारम्भाद्वा न दोष इति वाच्यम्, नहि स्वो-पादेयक्षणानारम्भे भिन्नसन्तानक्षणारम्भे च सत्त्वे परलोकः सिद्ध्यति तं विना व्यर्था मोक्षार्थिनां क्रियेति ॥ दिग्नागेन

क्षणभङ्गसिद्ध्यर्थं पराभ्युपगतकृतकानित्यानां हेत्वन्तरानपेक्षा प्रमाणमुक्तम्, न चाहेतुकविनाशे हिंसा, कथं तन्निवृत्त्यर्थं व्रतमिति, न चाहिंसका अपक्रियया युज्यन्तेऽतिप्रसङ्गात्ततः पञ्चभिरापद्यते हिंसेति व्याहतम्। न च कपालक्षणजनक एव घटहिंसकः, अन्त्यशिष्यमुग्धताधायकस्यापि हिंसकतापत्तेस्तन्नैष पक्ष इति। तथा शान्तिरक्षितादिभिर्बहिरर्थाभावादालम्बनशून्यं ज्ञानमुक्त-मेतदपि सुगतमतेनोक्तम्, तच्चायुक्तम्, यतो बहिरर्थाभावाद्वा सत्यप्यर्थे ज्ञाने अप्रतिभासनाद्वा सहोपलम्भाद्वा संविदगोचरेति, न तावदाद्यो विकल्पः, तदभावसाधकप्रमाणाभावात्, प्रत्यक्षस्य कार्यस्वभावहेत्वोश्च विधिसाधकत्वात्। चतुर्विधानुपलम्भ-स्याभावसाधकत्वेपि देशादिनिषेध एव स्यान्न सर्वथाऽभाव इति। अथ ज्ञानात्पृथगनुपलम्भात्संविदनालम्बनेति जडस्य प्रकाशयोगात्तदयुक्तम्, एवं हि प्रमाणमविसंवादिज्ञानं तथा प्रत्यक्षं कल्पनापोढमभ्रान्तं तथा कार्यस्वभावो विधिसाधकः सारूप्यमस्य प्रमाणमित्यादि सौत्रान्तिकाणामेव न्यायोपपन्नं भवतां किं प्रमाणादिलक्षणमिति वक्तव्यम्॥ किञ्च चित्रपटीवि-ज्ञानस्य विकल्पस्य चानेकरूपसङ्गतेरनेकतायां भ्रान्तोप्ययं व्यवहारो न स्यात्, तथाहि पूर्वक्षणाहितसंस्कारतयोत्तरज्ञानस्य पूर्वदृष्टस्मरणरूपता प्रत्यभिज्ञाभिलापादि स्यादिति। विकल्पस्य चानेकत्वे घटनाविरहात् शून्यमेव प्राप्तं, स्वसंवेदनस्यापि निर्विकल्पस्य गच्छत्तृणस्पर्शेष्विव व्यवहारायोग्यत्वात् माध्यमिकमतमेवाश्रितं स्यान्न योगाचारमतमिति तन्नायं पक्षः। न च सहोपलम्भनियमः सिद्धः, सौत्रान्तिकस्यात्यन्तपरोक्षत्वात् ज्ञानाकारानुमेयत्वादर्थस्य। मीमांसकानामिवार्थस्यैव प्रकाशनात् यदाहुः "सबहिर्देशसम्बन्धोऽर्थः प्रतिभासते" इति, ज्ञानस्य चार्थापत्तिगम्यत्वादिति। किञ्च सहशब्दो भेद एव दृष्टः पुत्रेण सहागत इत्यादिष्विति। अथ सहोपलम्भादिति कोर्थः एकोपलम्भादित्यर्थः। असिद्धमेतत्, ज्ञानं ह्यन्तरुल्लेखितयानुभूयते नीलाद्याकारस्तु बहिरुल्लेखितयेति। न चान्यथा प्रतीयमानस्याप्यन्यथा व्यवस्था युक्ता, संवेदनस्याप्यनुपलम्भप्रसङ्गात्॥ वदन्ति च मीमांसकाः। "ज्ञानमप्रत्यक्षमर्थः प्रत्यक्ष" इति तन्न किञ्चिदेतेन। तथा परलोको विना जीवमिति व्यापिनः क्षणभङ्गस्य

साधनात् क्षणसन्ततिमात्रमेवात्मव्यपदेशभागिति, न चैतदुचितम्, सन्ततेः सन्तानिभ्यो भिन्नाभिन्नोभयरूपतया निर्देष्टुमशक्यत्वान्न वास्तवी सा काचन, न च क्षणैर्व्यवहारः प्रवर्त्तते, तथाचाकृताभ्यागमकृतनाशौ स्वयं निहितोन्मार्गणपूर्वदृष्टस्मरणावनुभूतेष्वभिलापप्रत्यभिज्ञादीनि कार्याणि निरन्वयनाशे कथं सम्भवतीति चिन्त्यम् ॥ अथ पूर्वाहितसंस्कारेभ्य उत्तरोत्तरावासविशेषेभ्यः प्रत्यभिज्ञादिकार्याणि स्वकृतफलभोगादि न विरुद्धानीति, तन्न, कृतनाशाकृतप्रासेर्निरन्वयक्षणापेक्षयावश्यम्भावित्वात् सन्ततेश्चावस्तुत्वात् स्मरणादयस्तु विकल्परूपास्तस्य च शब्दोल्लेखितयानेकक्षणपरामर्षित्वात्सर्वोपसंहारेण च क्षणिकत्वस्येग्रत्वादिति नैतदपि न्याय्यं वचः ॥ तथा सर्वज्ञोऽस्ति तद्वचनमप्रमाणमित्येतदपि न युक्तम्, सर्वज्ञसाधनवैयर्थ्यप्रसङ्गात् सर्वज्ञो ह्यवितथोपदेशस्तदुपदेशादैहिकामुष्मिकफलाविसंवादो यथा स्यादिति तत्कल्पनं स्यात् तदभावे किं तेन। कथं च परस्परविमतिपत्तावुक्तं भारं वो भिक्षवो दर्शयिष्यामो भारवाहं वो भिक्षवो दर्शयिष्यामो भारनिक्षेपं वो भिक्षवो दर्शयिष्याम इत्यादि तदुक्तसंवादेन परस्पराभिमतसमर्थनमिति तन्नैषोऽपि पक्षो ज्यायानिति। अत इत्यावेदयन्ननन्तरोपन्यस्तमावेदयन्बुद्धः सुगतो युक्तिबाधितं प्रमाणव्याहतं अञ्जसा प्रगुणगुणतः न सर्वज्ञो न सर्वार्थवित् न चान्येपि परैरिष्टा जिनोऽस्तु सः जिनोऽर्हन् अस्तु भवतु स सर्वज्ञ इति, ततो "वीरो यदि सर्वज्ञो बुद्धो नेति का प्रमा" तद्दर्शितम् तेनान्येषामसर्वज्ञत्वे मतभेदो युक्त एवेति ॥ दोषान्तरपरिहारायाह ।

**आश्रयासिद्धतादेर्वा प्रत्यक्षादेरसाधनात्। नास्ति सर्वविदित्युक्तं परतन्त्रानवबोधनात् ॥१५॥**

सर्वज्ञास्तित्वसाधने सर्वोऽपि हेतुराश्रयासिद्धः स्यात्तत्त्वाश्रयस्य सर्वज्ञस्याप्रसिद्धत्वात् तथा यदि भावधर्मो हेतुः सोऽसिद्धः सर्वज्ञरूपभावस्यासिद्धत्वात् सिद्धौ वा हेतुवैयर्थ्यमिति । अथाभावधर्मो हेतुः तदा विरुद्धो हेतुः तस्याभा-

चाव्यभिचारित्वात् । अथोभयधर्मो हेतुः तस्योभयव्यभिचारित्वात् अनैकान्तिको हेतुरिति न साधनमस्ति तत्र स इत्यादि यदुक्तं तत्परतन्त्राऽनवबोधतः परतन्त्रानभिज्ञतयेति, यत आवरणक्षयक्षयोपशमौ साधयितुमिष्टौ पुरुष इति नास्यावकाश इति तस्य ज्ञानं प्रत्यक्षं निश्चयतः तथा ज्ञानग्रहणात् दर्शनं सामान्यग्राहकमविशदमिति न तत्प्रत्यक्षमित्युक्तं भवति तेन प्रत्यक्षं विशदो बोध इत्युक्तं स्यात् ॥ गोचरस्तु पदव्युत्पत्तौ दर्शित इति, केवलं चेति चकारात्स्वसंविदनपरिग्रहः । परोक्षत्वे ज्ञानस्यासिद्धिप्रसङ्गादर्थापत्तेरपि ज्ञानरूपत्वात्तस्यास्तदनन्तरेण ग्रहणेऽनवस्थाप्रसङ्गात् न परोक्षं ज्ञानम् ॥ नन्वर्थस्यात्यन्तपरोक्षत्वादाकारानुमितार्थप्रतिपत्तौ जिनोऽनुमाता स्यान्न साक्षाद्दर्शीति अत्राह ।

**ग्राहिका शक्तिराकारो नानुमाता ततो जिनः । अतीतानागतावस्था नासत्योऽविषयः कथम् ॥१६॥**

न खल्वर्थाकारतयोत्पत्तिर्ज्ञानस्य साकारता, यत्तु साकारं ज्ञानं निराकारं च दर्शनं तन्न, अयमाकारो यदुत ग्राहिका शक्तिः अर्थपरिच्छेदनशक्तिः अर्थस्तु स्फुटाकारतया नियतदेशकालावच्छिन्नः स्वदेशस्थः प्रतिभाति अन्यथा ज्ञानस्य सदैवासन्नत्वेन तद्व्यतिरिक्तार्थाकारस्याप्यासन्नत्वेनैव प्रतिभासः स्यात्, तथा च देशकालापेक्षया भ्रान्तं भगवतोपि ज्ञानं स्याद्देशादिविप्रकर्षस्याप्रतिभासनात्, भासने वा ज्ञानादन्यः स इति । न चाशेषक्षीणावरणस्य भगवतोप्यविद्यावासनादासन्नविप्रकर्षभेद इति, कथमन्यथा सर्वज्ञोऽसाविति साधितश्च स इति । ननु तथापि भ्रान्तज्ञानवानसाविति, अतीतानागतकालयोरर्थस्य विनष्टानुत्पन्नत्वेन तद्ग्राहिज्ञानस्यासद्विषयतया भ्रान्ततापत्तेः तत्रोत्तरार्धेनाह अतीतानागतावस्था नासत्यो, न खलु तत्कालेपि तासामसत्त्वं वर्त्तमानस्याप्यसत्त्वप्रसङ्गात् । इष्टसिद्धिर्योगाचारमाध्यमिकयोरिति चेत् उक्तं पुरस्तादत्र ॥ ननु सर्वज्ञः क्रमेणार्थान् पश्यति उत युगपदिति, किञ्चातः, उभयथापि दोषः तथाहि क्रमज्ञाने न सर्वज्ञो युगपद्ग्रहणे च विरुद्धार्थग्रहणशक्तेरेकत्वविरोधात् तत्राह ।

चित्रास्तरणरूपादौ क्रमेण न च भासनम् । विरुद्धधर्मसङ्गेऽपि भवतामिव न क्षतिः ॥१७॥

चित्रं चित्रकर्म आस्तरणं हस्त्यादीनां कर्बुरमेवादिशब्दादौचव्यादिवस्त्राणां ग्रहणं नहि चित्ररेखादौ क्रमेणोपलब्धौ परिपूर्णतज्जयोषिदादेर्ग्रहणं तदभावापत्तेः एकावभासकाले शेषाणामभासनादिति । न च दर्शनाहितोत्तरस्मरणसहायोत्तरदर्शनादेकत्वप्रतीतेरदोष इति वाच्यं स्मरणस्यानेकत्वे घटनाकरणासामर्थ्यादित्युक्तं माध्यमिकदर्शनापत्तिरित्यत्राप्युक्तम् । क्षणिका हि सा न कालान्तरमवतिष्ठत इति विभस्यापि समानं तत्र किञ्चिदेतेन । अथ युगपद्ग्रहणे विरुद्धधर्माध्यासादनेकत्वमिति चेदित्याह विरुद्धधर्मसङ्गेऽपि भवतामिव न क्षतिः ॥ सौत्रान्तिकैरप्यत्र किञ्चिद्वक्तव्यं तदेवास्माकमुत्तरम्, योगाचारमतेऽप्येकस्यानेकप्रतिभासो न सम्भवति येषां त्वाकाराणामलीकत्वं तेषां संवेदनं न सम्भवति विज्ञानस्यापि तदव्यतिरेकादसत्त्वमस्तु । तत्र न वादिमनिवादिनोः सम्भवस्तत्कल्पना निग्रहस्थानमावहति प्रतिज्ञाक्षतेरिति ॥ नन्वसमीक्षितवक्तुरुन्मत्ततापत्तिः समीक्ष्य भणने विकल्पज्ञानसम्भवाद्भ्रान्ततापत्तिरित्यत्राह ।

सातत्येनोपयोगेऽस्य न विकल्पस्य सम्भवः । छाद्मस्थिकानां धर्माणां न चात्रायोजनं मतम् ॥१८॥

न भगवतो विकल्पज्ञानमिष्यते तस्य सततोपयोगसद्भावात् न चोन्मत्तता, नह्येकत्र दृष्टो धर्मोऽविशेषेणान्यत्रायोजनीयः शुद्दृष्टधर्मागामप्रजातिष्वप्यायोजनमसङ्गादिति । छादयति ज्ञानं तच्छद्म तत्र तिष्ठन्तीति छद्मस्थास्तेषु दृष्टो धर्मो विकल्पार्थनिश्चयनं न सोऽन्यत्राप्यायोजनीय उक्त प्रसक्तेरिति ॥ यत्राप्यवध्यादौ विकल्पादर्थग्रहणं तत्रापि न दोष इति दर्शयन्नाह

विकल्पोऽप्यर्थसम्भूतेर्न भ्रान्तोऽकल्पज्ञानवत् । तस्यापि भ्रान्ततायोगे न प्रमाणव्यवस्थितिः ॥१९॥

अर्थादुत्पत्तेरुक्तक्रमेणाभिधास्यमानत्वाच्च विकल्पो न भ्रान्तः निर्विकल्पकज्ञानवत् परप्रसिद्ध्या दृष्टान्तः ॥ तस्यापि

भ्रान्ततायोगे न किञ्चित् प्रमाणं स्यात् ॥ निश्चयाध्यक्षमभिधाय व्यवहारापेक्षमभिधातुमाह ।

**अर्थक्रियासमर्थेऽर्थे वृत्तिकृद्यत्तदर्थिनः । विशदज्ञानमध्यक्षमक्षजं व्यवहारतः ॥२०॥**

ज्ञानमित्यनूद्यमध्यक्षमिति विधेयम् । किं भूतं ज्ञानमित्याह अर्थक्रियासमर्थेऽर्थे वृत्तिकृत्, वृत्तिर्वर्त्तनं तां करोतीति वृत्तिकृत् । केत्याह अर्थक्रियासमर्थेऽर्थे अर्थ्यते याच्यते स्नानपानाद्यर्थिभिरित्यर्थस्तस्य साध्या स्नानादिरूपा (या क्रिया) साऽर्थक्रिया तस्यां समर्थे निष्पादके अर्थे जलादिके बाह्ये वृत्तिर्हानोपादानलक्षणा तत्कर्तृ ज्ञानमिति सम्बन्धः, यज्ज्ञानम् । कस्य वृत्तिकृदित्याह तदर्थिनोऽर्थक्रियार्थिनः । अनुमानमप्येवंविधमस्तीति चेदाह विशदं स्पष्टाभम्, न चानुमानमेवम्, तस्य पूर्वदृष्टार्थावभासरूपत्वात् ॥ ननु विशदज्ञानमध्यक्षं पूर्वमुक्तं किं पुनरभिधानमित्याह अक्षजम् अक्षाणि इन्द्रियाणि तेभ्यो जातमिति ॥ ननु मतिज्ञानमेतत्तच्च परोक्षमुक्तं यदाह "मतिश्रुते परोक्षे" इति अत्राह व्यवहारतो व्यवहारमाश्रित्येत्यर्थो न चैतदनार्षम् । यदाह । से पच्चक्खे दुविहे पन्नत्ते । तं जहा । इंदियपच्चक्खे नोइंदियपच्चक्खे इत्यादिनोक्तत्वादियं तावदक्षरघटना, साम्प्रतमवयवार्थोऽभिधीयते । अर्थक्रियासमर्थ इति वदन्नेकान्तमतमपाकरोति । अर्थक्रिया हि क्रमाक्रमाभ्यां व्याप्ता प्रकारान्तराभावात् । क्रमाक्रमौ हि परस्परपरिहारस्थितिलक्षणौ नैकत्र एकदा भवतः, एकविधानस्यापरनिषेधनान्तरीयकत्वात्, नाप्येकत्रैकदा द्वयोर्निषेधः, एकनिषेधस्यापरविधिनान्तरीयकत्वान्न प्रकारान्तरसम्भवः । सा चार्थक्रिया ताभ्यां व्याप्ता तौ चैकान्तनित्यादनित्याच्च निवर्त्तमानौ स्वव्याप्यामर्थक्रियामादाय निवर्त्तेते । तथाहि नैकान्तनित्योऽर्थक्रियां क्रमेण करोति क्रमो हि परिपाटीरभिधीयते प्रथमार्थक्रियाकरणकाले च किमुत्तरक्रियाकरणे तस्य सामर्थ्यमस्ति न वा, यद्यस्ति प्रथमक्रियाकाल एवोत्तरक्रियाणामापत्तिः, शक्तस्याप्यकरणे सदैवाकरणमस्तु सहकारिणो नाऽनुपकारिणोऽतिप्रसङ्गात् । उपकारोपि

नातो भिन्नः सम्बन्धाभावेन सर्वसाधारणतापत्तेः। न संयोगलक्षणोऽत्र स सम्भवति, द्रव्ययोरेव संयोग इति वचनादुपकारस्य च गुणत्वात् । न समवाय आधाराधेययोरेवास्य भावान्न चासावनुपकार्योपकारकभावे, न चोपकारो भिन्न आधारेणाधेयस्य क्रियते, सम्बन्धाभावेन सर्वत्राप्युपकारस्यापत्तेः । समवायोपकल्पने च तत्राप्याधाराधेयभावोऽभ्युपगन्तव्यः पुनः सम्बन्धकल्पनं समवाय इत्यनवस्था तन्न भिन्नः । नाप्यभिन्नः तत्करणे नित्य एव कृतः स्यात्तथाचानित्यत्वं तन्न सहकार्यपेक्षाऽप्यस्येति स्थितम् । स्वभावो यद्यस्यैकरूपस्तदवस्थः प्रसङ्गः तन्न क्रमेणेति, नापि युगपत्करोतीति वाच्यं नहि कुलालोऽप्येकदैव घटशरावोदञ्चनादीनि जनयन्दृष्टो दृष्टानुसारिण्यश्च कल्पना युक्ताः । किञ्च क्षणान्तरे नासौ प्रवृत्तिविषयः स्यादर्थक्रियाशून्यत्वात् सकृदेव तासामुत्पादनात्पुनस्तत्करणे स एव क्रमस्तत्र चोक्तमिति न नित्योऽर्थिनां प्रवृत्तिविषय इति । नाप्येकान्तानित्योऽर्थक्रियासमर्थस्ततोपि क्रमाक्रमयोरर्थक्रियाव्यापकयोर्निवृत्तेः । नहि क्षणिकोऽर्थः परिपाटीकालमास्ते, क्षणिकताहानेः । न चासहायकार्यकरणमेव क्रमकरणं त्वन्मतेन, तस्यासम्भवात् विश्वक्षणानां पूर्वोत्तरावस्थितानां हेतुफलभावाभ्युपगमात् । न चान्वयव्यतिरेकानुविधानाद्धेतुफलभाव इति वाच्यम्, क्षणेन तत्प्रतिपत्तेरभावात् न चाप्रतिपन्नो व्यवहाराङ्गमिति, न च सहभुवां हेतुफलभावोऽन्योन्यं तद्भावापत्तेः । न च विनष्टस्य क्रिया, अतिप्रसङ्गात् । स्वक्षणे तदनष्टमिति चेन्न तदानीं कार्याकरणात्तन्नाशे चाहेतुकतापत्तेः कार्यस्य, अत एव नासत्पूर्वक्षणेपीति कार्यक्रियाया एव क्षणिकस्यासम्भवान्न युगपदपीति । न च संततिर्वस्त्विति, क्षणिकताहानेः न चावस्तुनोप्यर्थक्रियोत्पत्तिरतिप्रसङ्गात् तस्मात्परिणाम्येवार्थक्रियासमर्थ इति । ननु किं पूर्वावस्थात्यागेनोत्तरावस्थागमनम् उतात्यागेन, यद्याद्यः, क्षणिक[illegible]त्तिः अवस्थातद्वतोरभेदात् भेदे वा द्वितयोपलम्भप्रसङ्गो न चानुपलभ्यमानस्याप्यङ्गीकरणे नातिप्रसङ्ग इति । अत्यागेन चेत् तन्न अवस्थाद्वयोपलब्धिप्रसङ्गाद् अवस्थातुश्च नैतदस्ति, न खल्ववस्था द्रव्याद्भिन्ना किन्तु तदेव द्रव्यमन्यथान्यथा परिणमतीति, न

ब्रह्मङ्गुलीद्रव्ये युगपदृजुतावक्रते उपलभ्येते। न च वक्रताविनाशेऽङ्गुलीद्रव्यं नोपलभ्यते न चोपलभ्यमानस्याप्यभावोऽति-
प्रसङ्गात्। न चापरमङ्गुलीद्रव्यमृजुतयोत्पन्नमिदमुपलभ्यते न पूर्वमिति वाच्यम्, अहेतुकस्योत्पत्त्यावातिप्रसङ्गात् न च विनष्टं
हेतुः, अतिप्रसङ्गादेव, न चाविनष्टादुत्पन्नम्, द्वयोपलम्भप्रसङ्गात्। न च प्राक्सन्निधिमात्रेण हेतुफलभाव इति प्रतिसम-
र्थितम्, कथञ्चोक्तं मृदो हि मद्रूपो घटो जायते कुलालाच्च संस्थानविशेषश्चीवराच्च श्लक्ष्णतारूपः सूत्राच्चक्राविभक्त इति, न
चैते कार्यभेदाः पृथग्भूताः, पृथगुपलब्धिप्रसङ्गात्, तथा भेदे मृदं विनापि कुलालात्सन्तानोत्पत्तिप्रसङ्गः, एवं चीवरसूत्रा-
भ्यामपि पृथक्श्लक्ष्णता चक्रविभागयोरुत्पत्तिप्रसङ्गात् न च पूर्वपूर्वविनाशेनोत्तरोत्तराः कार्यविशेषा एवं दर्शिता इति वाच्य-
मिति। इह हि पृथक्कारणशक्तिः कार्यविशेषेषु दर्शिता सा चैव नोपदर्शिता भवति, सामग्री हि कार्यजनिका सा च समग्रां-
शेन न कार्यं संदर्शयति तेन नैकतस्तथाभूतकार्योत्पत्तिरिति न निष्फलाः शेषा इति सकृदपि न एते कार्यविशेषा इत्य-
नेकांशे वस्तुनि परिणामो न बाध्यते इति। ततः परिणामि वस्त्वर्थक्रियासमर्थमिति स्थितम्। अर्थे नीलादौ बाह्ये। नन्वर्थक्रियास-
मर्थ इत्युक्ते गतत्वाच्च किञ्चिदर्थ इत्यनेन नैवम्, यतो ज्ञानवादी प्रतिपादयति उपदर्शकज्ञानात्प्रवृत्तिज्ञानं ततोऽप्यर्थक्रियाज्ञानमतोऽ-
ध्यवसायनिबन्धनः खल्वयं व्यवहार इति तत्क्षेपायार्थ इत्युक्तम्, नहि नित्यज्ञानविवर्तरूपे घटादिवस्तुनि वर्णधर्मो युक्तोऽजातिस्व-
पाकयोरविशेषात्। होमजापयागदानादेः प्रतिभासरूपतया फलाभावापत्तेः। न च नित्ये विवर्तो युक्तो नित्यता हानेर्विव-
र्तस्योत्पादविनाशधर्मकत्वात्, शब्दरूपत्वे च किं शब्दार्थरूप उतार्थोऽभिधानरूप इति वाच्यम्, यद्याद्यः, तदा सुखमङ्गप्रस-
ङ्गो दाहस्फोटादिप्रसङ्गो वेति, अथार्थ एवाभिधानरूपस्तदा ब्रह्महत्यागोहत्यादिशब्दयोगे ब्रह्महत्याद्यापत्तिर्वाराणसीं व्रज।
योगाचाराणेक्षयापि किमर्थस्य उत ज्ञानाकारस्यासत्त्वम् उत चिद्रूपतायाः, यद्याद्यः स न युक्तः कारणं विना कार्यस्य भवतो
नियताकारताहानेः वासनायास्तु अन्धकूपरूपत्वात् नापि द्वितीयः स्वग्राह्याकारस्य संवेदनात् संवेद्यमानस्याप्यसत्त्वे शून्य-

वादापत्तेः । नापि चिद्रूपतया अवस्थस्य आकारस्य बहिरर्थापत्तेः पुनः पुरुषार्थित्वं चैवादिति । अर्थक्रियार्थिन इति, एतेन कर्तृकर्मणोरभेदो दर्शितः ॥ न खलु नैरन्तर्योत्पत्तिरेव प्रवृत्तिः न हि सा पूर्वक्षणाधीना पर्वतादेरपि देशान्तरप्राप्तेः । न च ग्रामान्तरं गच्छतो देवदत्तादेः पूर्वक्षणादतिरिक्तं निमित्तमुपलभ्यते न चेच्छादयो ज्ञानात् भिन्ना न च ज्ञानं प्राकृतमिति-त्यम्, यदाह । "स्थितः शीतांशुवज्जीवः प्रकृत्या भावशुद्धया । चन्द्रिकावच्च विज्ञानं तदावरणमभ्रवत्" इति ॥ अथ प्राकृतं ज्ञानं प्रकृतेरपि बुद्धिमत्त्वे चैतन्यापत्तिः यदाह । "बुद्धिरध्यवसायो हि संवित् संवेदनं तथा । संवित्तिश्चेतना चेति सर्वं चैतन्यवाचकम् ॥" तथाच "पुरुषप्रकृत्योरभेद एव स्यात्र पंचविंशतितत्त्वसम्भवः ॥" ततो देवदत्तक्षणादविशेषादेशान्तरोत्पत्तावुत्तरक्षणस्य न कस्यापि स्थितिसम्भव इति, अतोऽवस्थितस्य देवदत्तादेः साध्यत्वेनापराप्तिरिति तां कारयति देवदत्तमिति प्रविकृत् अत एव तदर्थिन इत्युक्तम् । तदर्थी अर्थक्रियार्थी, एतेन नैकान्तेन गुणा गुणिनोऽभिन्ना गुणानामुत्पादव्यये गुणिनोऽपि तदापत्तेः तथाच दानहोमादेर्वैफल्यप्रसङ्गेन, स्मरणप्रत्यभिज्ञानादीनां जातिस्मरणादीनां वाऽभावापत्तिः । नाप्येकान्तेन भिन्नाः सम्बन्धाभावे सर्वत्रापत्तेः । समवायसम्बन्धकल्पनायामभिहितत्वात् न चापरः सम्बन्धोऽत्र सम्भवति द्रव्ययोरेव संयोग इति वचनात् अद्रव्यभूतस्य ज्ञानस्य सः, न भेदे तादात्म्यम्, न जन्यजनकत्वनिमित्तम्, एवं सदैवैकाकारतयोत्पत्तिप्रसङ्गात् न चापरं सम्बन्धान्तरं कल्पितमन्यैरपीति ॥ तदर्थिन इति प्रयोजनाभावे प्रवृत्त्यावतिप्रसङ्गमाह । एतेन प्रवृत्तिकृदित्यभिधानादप्रावस्य प्रामाण्यमाह । न खलु दृष्टमित्येव प्रवृत्तिः सर्वत्र तत्प्रसङ्गात् किन्तु वाञ्छितार्थसाधकत्वेन निश्चित्य, निश्चयस्तु विकल्परूप एव छद्मस्थानामिति तेन प्रत्यक्षं कल्पनापोढमभ्रान्तमित्यसङ्गतं विकल्पस्य प्रामाण्याभावे कथमुक्तं दृष्टतया ज्ञातः प्रत्यक्षेण प्रवृत्तिविषयः कृत इति । अथ यत्रैवार्थे विधिप्रतिषेधविकल्पौ जनयति तत्रैवार्थे प्रत्यक्षस्य प्रामाण्यमिति, नैतदस्ति यदि हि प्रत्यक्षं प्रमाणं विकल्पः कोपयोगीति वाच्यम्, अर्थे विनिश्चये चेत् तर्हि कथमप्रमाणम्, गृही-

तग्रहणादितिचेत् न तन्मतेन पूर्वज्ञानविषयस्याग्राहकत्वात् तस्य प्रतिबन्धाध्यवसायाविरहकम् । परमार्थवस्तु निर्विषयो वि-
कल्प इत्यप्रमाणमिति चेत् नाविषयादप्यर्थे प्रवृत्ताव भ्रान्तग्रहणमपार्थकं स्यात् । आद्यमेव प्रवर्तकं किन्तु पश्चार्थे विकल्पं जन-
यति तत्रैवेति, नैतदस्ति, प्रवृत्तौ निरुपकारिणोऽप्यपेक्षायां वान्ध्येयस्याप्यपेक्षणीयत्वमस्तु तथाच तस्य सदैवासन्निधानाच्च क-
चित्प्रवृत्तिरिति, एतेन, अस्ति ह्यालोचना ज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशमित्येतेनापि न किञ्चित्प्रवृत्तौ
साधकतमत्वाभावादिति । यच्चोक्तमभ्रान्तग्रहणेनैवानुमाने निरस्ते निर्विकल्पकग्रहणं विमतिपत्तिनिरासार्थमिति कथमनुमानं
भ्रान्तमिति । स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तेरिति चेत् यद्येवमविकल्पस्यापि स्वप्रतिभासापेक्षं प्रामाण्यं कथम्, न हि
तत्राप्यर्थः प्रतिभाति यथाह सारूप्यमस्य प्रमाणमिति, न तत्रावसाय इति चेत्तर्हि कथं सारूप्यम्, स्वसंवेदनादिति चेत्तर्हि
किं विकल्पसहायतया नहि विकल्पाधीनः सारूप्यनिश्चयः किन्तु संवेदनादिति, यतो विकल्पोऽप्यात्मनि निर्विकल्प एव,
नहि संवेदनमपरेण निश्चीयते, ज्ञानस्य परोक्षतापत्तेः तत्र चोक्तं युष्माकं चानिष्टेरिति । अर्थाकारता ज्ञानान्तरगम्या न चि-
द्रूपतेति चेन्न, यद्यसौ ज्ञानान्तरगम्या न चिद्रूपता तदा सार्थस्यैव स्यात् तथाच सबहिर्वृक्षसम्बन्धोऽर्थः प्रतिभासत इति कौ-
मारिलं मतमाश्रितं स्यात् तथाच न भ्रान्तज्ञानसम्भवः स्मृतेः सम्प्रमोषाशङ्काया अन्यत्रापि निषेधयितुमशक्तेः संवादापेक्षायां
चक्रकमित्युक्तम्, यत्तु निर्विकल्पकत्वेनैवानुमाने निरस्ते यदभ्रान्तग्रहणं तद्विमतिपत्तिनिरासार्थमिति तदपि न, नहि निर्वि-
कल्पस्य प्रामाण्यं युक्तं प्रवृत्तौ साधकतमत्वाभावात् दृष्टतया ज्ञातः प्रवृत्तिविषयः कृत इति वचनात्, विकल्पजननाच्च दोषश्चे-
त्किं पूर्वेण तस्यैवार्थग्राहकत्वात् । न विकल्पस्येति चेत्कथं विकल्पः प्रवर्तकः । तद्विषयानुकरणादिति चेन्न विकल्पस्य तन्म-
त्या स्वलक्षणानुप्रवेशाभावात्तद्भावे वा तस्यापि प्रामाण्यमस्तु । आद्यस्यैव प्रतिप्रसूतत्वादिति चेत् नैवं निशीथिनीनाथद्वयग्राहिवि-
ज्ञानादस्याविशेषात्प्रार्थे प्रवर्तकत्वम्, पारम्पर्येणार्थेनाविनाभूतत्वादस्य संवादकत्वं नेतरस्येति चेत्तर्हि प्रत्यक्षमनुमानमेवासक्तम्,

को दोष इति चेत्सम्बन्धग्राहकं प्रमाणान्तरमेष्टव्यम्, तत एव चेदन्योन्याश्रयः तदन्तराच्चेदनवस्था। यत्तु तिमिराशुभ्रमणनौया-
नसंक्षोभाद्यनाहितविभ्रमं प्रत्यक्षमित्यभ्रान्तग्रहणमाख्यातं तदपि न युक्तम्, तैमिरकज्ञानं हि न तदपेक्षया भ्रान्तं सदैव तस्य
तथाप्रतिपत्तेः। तत्स्वस्थैकचन्द्रग्राहिज्ञानापेक्षया भ्रान्तमिति चेत् नैकचन्द्रग्राहिण एव कथं न भ्रान्तत्वम्। अन्येप्येकमेव च-
न्द्रमसं पश्यन्तीति चेत्किं वातो नहि बहवो भ्रान्ता न भवन्ति। लोकव्यवहाराय प्रमाणप्रणयनं न च लोके द्विचन्द्रव्यवहार
इति चेत्तर्हि निर्हेतुको नाशो निरात्मानो भावाः क्षणध्वंसिनो निरालम्बनं ज्ञानं तदपि न वस्तुत इत्याद्यपि न लोकव्यवहार-
पथानुयायि। यच्चाशुभ्रमणं भ्रान्तिकारणं तदकल्पके न सम्भवति, न खलु क्षणावस्थाय्यविकल्पकं देशाद्देशान्तरं गच्छदला-
तमवैति क्षणिकताहानेः विकल्पस्तु घटनं करोति स च त्वन्मतेन भ्रान्त एव एवं नौ यानेपि वाच्यमिति। न च संक्षो-
भज्ञानस्तैमिरिकज्ञानस्य विशेषः तदपि हि तदपेक्षया संवाद्येव एतावांस्तु विशेषश्चन्द्रगोचरे तन्निश्चयनमेव संवादस्तदुत्तरकालं
तदर्थिनः प्रवृत्तेस्तत्राभावात् संक्षोभज्ञाने तु प्रापलक्षणोपि संवाद इति, नहि प्राप्तेपि पीतसङ्खे सोन्यथा मन्यत इति अतो न
किञ्चिदभ्रान्तग्रहणेन, यत्तु तस्य विषयः स्वलक्षणं तदसम्भावि, नहि पूर्वापरविवेको निर्विकल्पकेन ग्रहीतुं शक्यः पूर्वोत्तर-
विभागस्य विकल्पसाध्यत्वात् नाकल्पकात्तन्निश्चयो मूकत्वात्तस्येति। अथ वस्तु निर्भासादयम्, वस्तु च निरंशमतस्तद्ग्रहणे
पूर्वापरविभागो गृहीत एवेति, निरंशं वस्तु कुतः प्रतीतम्, वस्तुप्रतिभासादिति चेत्, नान्योन्याश्रयतापत्तेः पूर्वापरत्रुटित-
ग्रहणे वस्तुनो निरंशता तस्यां च पूर्वापरत्रुटितग्रहणमिति व्यक्तमन्योन्याश्रयः। ननु सामान्यं समानेभ्यो भिन्नमभिन्नं वा, न
भिन्नं सम्बन्धाभावापत्तेः, परमतानुप्रवेशाच्च, अभेदे समाना एव तदभ्युपगमे अस्मन्मतप्रवेशः समानानां वाऽभावस्तेषां
तत्रानुप्रवेशात् न च ततो दाहाद्यर्थक्रियेति, उच्यते, सर्वेपि भावाः समानेतररूपा एव कथमन्यथा घट इत्युक्ते अन्यव्यावृत्त्या
पटादीनिव घटादीन् व्यवच्छिनत्ति। एकतो हि घटव्यक्तिभेदादन्यं सर्वं व्यवच्छेद्यं प्राप्नोति सजातीयेतरव्यवहारो न स्यात्,

यत्तु तदभेदे सामान्यमात्रमेव समानमात्रमेव वा स्यादिति तदपि तत्क्रमभाव्यनेकवर्णोल्लेखिविकल्पज्ञानं नाभिन्नं वर्णानेकत्वेपि नानेकत्वमनुभवति प्रवर्त्तकताहानेरकल्पकत्वमाप्ताविति, न चान्यत्प्रवर्त्तकं मन्ता च मूकबधिरमिव जगदक्रियमासज्जेत न च विज्ञानैकत्वेपि तद्गताक्षराणामेकत्वमनुभूयते तद्वत्सामान्यविशेषयोरपि भेदाभेदाविति । भेदानां हि किञ्चिद्रूपमस्ति यन्नावृत्तिः न विषयी करोति तदेव चाविकल्पकस्य विषय इति विभागस्य विकल्पसाध्यत्वात्, न खलु निर्विषयादर्थप्रवृत्तिः, अतिप्रसङ्गात् । अर्थप्रतिबन्धोपि न मरीचिकाज्ञानस्येव, अविकल्पं हि सामान्ये प्रतिबद्धं ततस्तज्जो विकल्पोपि तत्रैव प्रतिबन्धमनुभवतु न च तत्र प्रवृत्तिरर्थक्रियार्थिनां व्यक्तेस्तन्निबन्धनत्वादिति । एतेन विषयोपि दर्शितोऽविकल्पस्य व्यक्तिविषयत्वादितरस्य सामान्यविषयत्वात् अनुमानविकल्पे चाक्षव्यापारविरहात्सामान्यालम्बनतेति ततो नैतल्लक्षणम्, यदपि सत्संप्रयोग इत्याद्यभिहितं तदपि न साधु, सता सम्प्रयोगः सत्सम्प्रयोगः सत्त्वं च कुतः सिद्धमिति वाच्यम्, तत एवेति चेदितरेतराश्रयदोषः । तद्व्यापारानुकारिविकल्पाच्चेन्न, यदुक्तं "ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया । बुद्ध्यावसीयते सापि प्रत्यक्षत्वे न सम्मता" इति । विकल्पस्य पूर्वसिद्धे वस्तुनि जात्यादिविशेषग्राहकत्वात् इति । किञ्चैतदतीन्द्रियज्ञानस्य प्रत्यक्षताभावप्रतिपादनायोपन्यस्तं सा च तत्र साधितेति व्यर्थं तद्ग्रहणम् । एतेन इन्द्रियार्थसन्निकर्षोप्यसम्भवी प्रतिपादितः, तुल्यन्यायात् शाखाचन्द्रमसोर्युगपद्ग्रहणप्रसङ्गाच्च ॥ एवं योगिज्ञानसंवेदनमक्षजमप्रत्यक्षमभिहितं तत्प्रतिपादयता च व्युत्पत्तिं कुर्वता परपक्षनिरासं वा कुर्वता विषयोपि दर्शितः फलं तु आद्यस्यावायजननमेव अवायस्य अर्थक्रियार्थिनः प्रवृत्तिः न चासौ हठात्प्रवर्त्तयति किन्तु प्रवृत्तिविषयनिश्चयनमेवेत्यस्ति किञ्चित्प्रमाणस्य यत् कुर्वत्प्रमातुः प्रवृत्तौ करणं स्यात् तच्च प्रमितिरेव ॥ समासाध्यक्षवक्तव्यतेति ॥

अधुना परोक्षं मतिभेदमनुमानरूपमुपदर्शयितुमाह ।

**स्वसाध्येनाविनाभावनिश्चये क्वापि निश्चितः। हेतुः परोक्षसंवित्तेरनुमानार्थमिष्यते ॥ २१ ॥**



स्वस्य साध्यं स्वसाध्यं यत्तत्साधनमुपादीयते तस्य यत्साध्यत्वेनाभिमतमित्यर्थः । एतेन साध्यसमतादोषोऽपास्तः । यत्साधनत्वेनोपादाय साध्यत्वेनोपस्थाप्यते तत्रायं दोषः न विनाभावोऽविनाभावः तस्य प्रमाणेन निश्चये सति, नहि प्रमाणमन्तरेण निश्चयः सम्भवति । एतेन विरुद्धानैकान्तिकयोर्निरासः । विपक्षवृत्तिरेव विरुद्धः स च स्वसाध्याविनाभूतः कथं निश्चितः । अथवा स्वसाध्येनाविनाभूत इत्यनेन विपक्षेणाविनाभूतनिषेधाद्विरुद्धः परिहृतः, सावधारणशब्दाद्वाक्यप्रयोगस्य स्वसाध्यशून्यवृत्त्यनैकान्तिकनिरासः । निश्चयग्रहणेन सन्दिग्धान्वयसन्दिग्धव्यतिरेकस्य च निरासः । तथा निश्चयग्रहणात्तन्निश्चायकप्रमाणोपन्यासो द्रष्टव्यः, तथा तद्विषयभूतदृष्टान्तद्वयोपन्यासो वेदितव्यः, तथा साध्यसाधनोभयविकलतादयो दोषा निरस्ता द्रष्टव्या इति । क्वापि ग्रहणादाश्रयासिद्धः परिहृतः । अन्यथा न बुध्यमाने प्रतिज्ञापदमप्युपादेयमिति दर्शितम् । यदाह "कत्थइ पंचावयवं दसहा वा सव्वहा न दुट्ठं त्ति"। निश्चित इत्यनेन वादिप्रतिवाद्युभयासिद्धः परिहृत इति, हेतुरिति शाब्दनिरासः नहि तत्र स्वसाध्याविनाभावनिश्चायकप्रमाणसम्भवः सर्वज्ञप्रणीतत्वमेव तन्निश्चायकमिति। परोक्षसंवित्तेरनेन तु प्रत्यक्षविषये तस्याभावमाह, गृहीतग्रहणात् तत्र च साधकतमत्वाभावादिति । अर्थग्रहणं तु यत्नकृतमभावस्याप्यनुमानाविषयतामुपदर्शयितुं नाभावाख्यप्रमाणादभावनिश्चय इत्यर्थः ॥ अनुमेत्यनूद्यपदम्, केचित्तु लक्षणपदान्यनूद्यानि अनुमानं विधेयः ॥ परोक्षसंविचेरिति । परोक्षस्य संवित्तिर्न तु परोक्षा चासौ संवित्तिश्चेत्यसंभवात् । उक्तं चात्र परोक्षसंवित्तेर्हेतुरनेन कारणे कार्योपचारमादर्शयति स्वपराभासिज्ञानरूपत्वात् प्रमाणस्य । स्वार्थमिति स्वस्मै इदम् परार्थानुमानस्याभिधास्यमानत्वात्, इष्यत इति तत्त्वविद्भिरिति शेषः ॥ ननु साध्यसाधनयोरविनाभावसम्बन्धः किं परपरिकल्पितस्वलक्षणापेक्ष उत व्यक्त्य-

पेक्षः सामान्याश्रयो वा, किञ्चातः न स्वलक्षणे अन्वयव्यतिरेकसमधिगम्याविनाभावग्रहणसम्भवः तस्य क्षणिकत्वात् तत्र च तयोर्ग्रहीतुमशक्तेः, नापि व्यक्तिगोचरः, तत्रान्वयव्यतिरेकग्रहणसद्भावेपि व्यवहारकालाननुयायित्वात् व्यवहारार्थत्वाच्च प्रयासस्य। अथ सामान्याश्रयः सम्बन्धः, सोप्यनुचितः सामान्येन सह सर्वेषामन्वयसिद्धेः सर्वगतत्वात्तस्य, व्यतिरेकस्य चासम्भवान्नित्यत्वात्सर्वगतत्वाच्च। अथातद्रूपव्यावृत्तरूपनिबन्धनः स्वलक्षणाश्रयोप्यविनाभावो न दुष्यतीति। तत्राह पर एव

**अयःशलाकाकल्पा हि भेदा एव हि केवलाः। अतद्रूपपरावृत्तिस्तुच्छा याप्यभिधीयते ॥२२॥**

अयो लोहः तस्य शलाकाः परस्परसंश्लेषवर्जिताः तत्कल्पाः तत्सदृशा भेदा एव स्वलक्षणान्येव केवलाः अन्योन्यावृत्तिरहिताः। कथमित्याह। अतद्रूपपरावृत्तिस्तुच्छा यापि त्वया परिकल्प्याभिधीयते इति ॥ ननु तुच्छयापि सहाविनाभावो ग्रहीष्यते इत्याह।

**नाविनाभावसम्बन्धः सोऽन्वयव्यतिरेकतः। न चानुयायिनो भेदा नानुमानमतोस्ति वः ॥२३॥**

नाविनाभावसम्बन्धस्तुच्छया सहेति भावः। किमित्याह सोऽन्वयव्यतिरेकतः, सोऽविनाभावो अन्वयव्यतिरेकाभ्यामवसीयते न च तुच्छया सह तयोः सम्भवः। तर्हि भेदा एव सम्बन्धाश्रया नहि व्यावृत्तिव्यावृत्तेभ्योऽन्ये इत्याह नानुयायिनो भेदाः कथमन्वयसिद्धिः सिद्धेपि च सम्बन्धे न व्यवहारकालानुयायिनो भेदाः स्वलक्षणानीति, ततः किमित्याह नानुमानमतोस्ति वः वो युष्माकमतः अनेन कारणेन नास्ति न सम्भव्यनुमानमिति ॥ अत्र पर एव परमतेनाशङ्कते।

**एकत्वाध्यवसायस्य हेतवः केचिदेव हि। इन्द्रियादीव भेदेपि स्वभावात्तन्न सङ्गतम् ॥२४॥**

एकत्वाध्यवसायस्य साध्यभेदगतस्य साधनभेदगतस्य च हेतवः कारणानि केचिदेव इष्यन्ते तेन नातिप्रसङ्गः।

कि दृष्टोयं व्यवहारः, इन्द्रियादीव नहि रूपालोकमनस्कारेन्द्रियाणामेका जातिरस्ति तत्रापीति, अथ च भिन्नस्वभावा अप्येकं रूपज्ञानं जनयन्ति, तेषां तत्स्वभावत्वाद् अन्येषां वा तत्स्वभावत्वादिति। पर आह तन्न सङ्गतम् वक्ष्यमाणयुक्तेरिति॥

**सर्वेषां स स्वभावोस्ति तेषामेकत्वमागतम्। स्वभावभेदो भेदस्य निमित्तं तत्र नास्ति सः॥२५॥**

यदि तेषां सर्वेषां य एकस्य स्वभावः सोऽन्यस्याप्यभ्युपगम्यते तदा सर्वेषामेकत्वमागतमेकरूपता प्राप्ता। कथमेतदित्याह। स्वभावभेदो भेदस्य निमित्तम्, न खलु स्वभावाभेदेपि भेदो युक्तो निर्निमित्तत्वापत्तेः तत्र च भेदेषु नास्ति सः स्वभावभेद एकस्वभावताभ्युपगमादिति॥ न तुच्छा व्यावृत्तिरिष्यत इति चेदाह।

**वस्तुरूपा च भिन्ना च नित्या व्यापितया स्थिता। नाविनाभावसम्बन्धो युक्तोऽत्राव्यतिरेकतः॥२६॥**

वस्तुभूता परमार्थसती भिन्ना च, अभेदे भेदानामेकतापत्तेः। नित्या एकव्यक्तिनाशेपि व्यक्त्यन्तरे अवस्थानात् व्यापितया सकलव्यक्तिव्यापकत्वेन स्थिता निष्क्रिया तथापि नाविनाभावसम्बन्धो ग्रहीतुं शक्यः। कुत इत्याह। अव्यतिरेकतः, नित्यत्वान्न कालकृतो व्यतिरेको विभुत्वान्न देशकृत इति॥ दूषणान्तरमाह।

**व्यक्तिजन्मन्यजाता चेदागता नाश्रयान्तरात्। प्रागासीन्न च तद्देशे सा तया सङ्गता कथम्॥२७॥**

व्यक्तिः खुरककुदलाङ्गूलसास्नासमुदायाद्याधारा गवादिरूपा तस्याः जन्मनि व्यक्तिजन्मनि अजाता जातेर्नित्यत्वाद्यदि आगता नाश्रयान्तरात्, व्यक्त्यन्तरान्निष्क्रियत्वात्सर्वगतत्वाच्च, प्रागासीन्न च तद्देशे, प्राक् पूर्वमासीन्न च नैव तद्देशे तस्या व्यक्तेर्देशे निराश्रयायास्तस्याः अनभ्युपगमात्। सा जातिः तया व्यक्त्या सङ्गता सम्बद्धा कथं न कथञ्चिदित्यर्थः॥ पुनराह।

**व्यक्तिनाशे न चेन्नष्टा गता देशान्तरं न च। तच्छून्ये न स्थिता देशे साजातिः क्वेति कथ्यताम् ॥२८॥**

व्यक्तेः, पूर्वोक्तस्वरूपाया, नाशे, न चेन्नष्टा नित्यत्वात्, गता देशान्तरे न च, निष्क्रियत्वात्, तच्छून्ये न स्थिता देशे, तया व्यक्त्या शून्ये देशे न स्थिता निराधाराया अनिष्टेः, सा जातिः क नैव कापीत्यर्थः कथ्यतामभिधीयतामिति ॥ स एवाह ।

**उभानुभयपक्षस्तु विरोधादेव वारितः। कस्य केनाविनाभावो नानुमानमतस्तव ॥२९॥**

उभयपक्षो नाम भेदेभ्यो भिन्ना चाभिन्ना च जातिरिति अनुभयपक्षस्तु न भिन्ना नाप्यभिन्ना द्विप्रकारोप्ययं पक्षो न युक्तो विरोधादेव हेतोर्वारितो निषिद्ध इति । स्वपक्षमुपसंहरन्नाह । कस्य हेतोः केन साध्येन अविनाभावो न कस्यापि केनचिदिति, तथाच नानुमानमत उक्तकारणात्तव हे वादिन्निति ॥ सूरिराह ।

**द्विःस्वभावास्ततो भेदाः समानेतररूपिणः। अन्वयो व्यतिरेको वा तन्निमित्तो न दुष्यति ॥३०॥**

यत्तावदुक्तं केवलभेदपक्षे तदनभ्युपगमादेव परिहृतं न तत्र प्रतिविधातव्यमस्ति । यदपि केवलजातिपक्षाश्रयेणाभिहितं तदप्यनभ्युपगमादेव वारितम्, अनुभयपक्षोप्यसम्मत एव, कथञ्चिद्भेदपक्षे त्विदमुच्यते द्विःस्वभावा उपलक्षणमेतत् अनन्तधर्माणो भावा इत्यर्थः । कथमित्याह समानेतररूपिणः इत्थं चैतदङ्गीकर्त्तव्यं यदि हि एको घटो घटान्तरसदृशरूपो न भवति तदास्य पटादिवत् घटादयोऽसमानरूपिण एव स्युः, तथाच तद्रूपव्यावृत्तिरपि पटादिवद्घटादीन् व्यवच्छिन्द्यादिति, तथाच भेदेपि केचिदित्यादि व्याहतमासज्यते, यतो यद्येकस्मात् घटादन्यो भिन्नस्वभावः सर्वथा तदा अघटस्वभावा एवान्ये एक एव घटः स्यात् तथाच न तत्रान्वयव्यतिरेकचिन्ता व्यतिरेकाविनाभावित्वादन्वयस्येति । यदा च तदेकत्र घटे घटान्तरसदृशं रूपं तेनान्वयो व्यतिरेको वा न दुष्यति न्यायोपपन्नत्वादिति ॥ अथ

पूर्वनाशेऽपरोत्पादे सादृश्याद् भ्रान्तचेतसः । एकत्वमभिमन्यन्ते क्षणिकत्वेपि वस्तुषु ॥ ३१ ॥

अथ मन्यसे नैवं युक्तं सामग्र्यन्तराभावे स्वरसतः पूर्वस्य निवृत्तौ तत्सदृशस्य चापरस्य पूर्वसामग्रीत उत्पत्तेर्नाशोत्पादयोश्च युगपदेव भावाद् भ्रान्तचेतसः सादृश्याद्विप्रलब्धमनस एकत्वं तदेवेदं घटादि वस्तु इति मन्यन्ते। तथापि यदेतदभिधीयते तत्सादृश्याङ्गीकरणमभ्युपगमयति बलादेव भवन्तमिति ॥ न खलु सादृश्यमस्ति सदृशा एवेति चेदाह ।

कपालघटयोरैक्यं भ्रान्त्या मन्येत किं न वः । सारूप्यमस्य मानं तु वचनं व्याहतं न किम् ॥ ३२ ॥

यदि सदृशाकारा भावा न स्युः तदा घटकपालयोरपि भ्रान्त्या हेतुभूतया ऐक्यं मन्येत किं केन कारणेन न नैव वो युष्माकं मतेनेति शेषः । दोषान्तरमाह । सारूप्यं सादृश्यम् अस्य ज्ञानस्य मानं प्रमाणमिति वचनम् ते तव व्याहतं न किम्, अपि तु व्याहतमेवासज्येत ॥ स्यादेतत्सर्वोपसंहारेण व्याप्तिः कथमवसीयते अर्वाग्दृशा न चेतरस्यानुमानेन प्रयोजनमित्याह ।

तादृशस्याविनाभावं तादृशेनापि कुत्रचित् । अन्वयव्यतिरेकाभ्यां प्रत्यक्षानुपलम्भतः ॥ ३३ ॥

निश्चित्य सर्वदैवायमस्याभावे न जातुचित् । कुत्रापि सम्भवत्येवं किं न जायेत निश्चयः ॥ ३४ ॥

तादृशस्येत्यनेनाऽल्पबहुत्वाभ्यां धूमस्याल्पबहुत्वकारिणः सुरभिदुरभिगन्धयुक्तेन्धनदाहे धूमस्यापि तद्गन्धकारिणस्तादृशेन तद्धर्मानुविधायिना अविनाभावं निश्चित्य कुत्रचिद्रगन्धनकादौ । कथं निश्चित्येत्याह अन्वयव्यतिरेकाभ्याम् कथमन्वयव्यतिरेकनिश्चय इत्याह प्रत्यक्षानुपलम्भतः, क्वचित्प्रत्यक्षपूर्वकादनुपलम्भादनुपलम्भपूर्वाद्ध्यक्षादिति । पूर्वमविद्यमाने धूमसद्भावे कटकुट्यादिसन्निधानेपि अग्निसद्भावे च जायमानस्तस्याविनाभूतो धूम इति निश्चीयते, तथा मन्दबहलतमे धूमे

अपनीतेष्वप्यपरेषु तद्देशवर्तिषु भण्डकादिषु अनपगच्छन् अग्निविरहे विगच्छन्नवसीयते अयं धूमो वह्निनाविनाभूत इति । स च यथैकस्तथा देशकालान्तरेष्वपि तत्स्वाभाव्यादिति अतः सर्वदैवायमस्याभावे न भवति जातुचित्कदापि कुत्रापि क्षेत्र इति न सम्भवत्येव ईदृशः किं न जायेत निश्चयो जायत एवेत्यर्थः ॥ एतदेवातिदिशन्नाह ।

**एष एव क्रमो ज्ञेयः सर्वेष्वपि च हेतुषु । विपर्ययेषु बाधापि कुत्रचित्सम्प्रदर्श्यते ॥ ३५ ॥**

एष एव प्रत्यक्षानुपलम्भाभ्यामन्वयव्यतिरेकनिश्चयादविनाभावनियमो द्रष्टव्य इति, सर्वेष्वपि हेतुषु, किञ्च विपर्यये बाधापि कुत्रचित्सम्यक् प्रदर्श्यते एतेनान्वयदृष्टान्तोपि महानसादिर्दर्शितः ॥ पर आह ।

**कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमोऽदर्शनान्न न दर्शनात् ॥ ३६ ॥**

इति प्रत्यक्षानुपलम्भसिद्धान्वयव्यतिरेकाभ्यामेवाग्निधूमयोः कार्यकारणभावे सिद्धेऽविनाभावोऽवसीयते न तु तं विना, अतिप्रसङ्गात् स्वभावाद्वा वृक्षशिंशपयोरिव क्वचिद्विपर्यये बाधकवशात् क्षणिकत्वसत्त्वयोरिव त्वया तु तादात्म्यतदुत्पत्तिसम्बन्धं विरहय्य अविनाभावोऽभ्युपगतः स न युक्तः ॥ कुतोऽतिप्रसङ्गादित्याह ।

**अन्वयव्यतिरेकाभ्यां चेद्धेतुफलताममः । तत एवाविनाभावनिश्चयोपि तथास्तु वः ॥ ३७ ॥**

अन्वयव्यतिरेकाभ्यां पूर्वोक्तस्वरूपाभ्यां चेद्यदि मन्यसे त्वमपि तत एवान्वयव्यतिरेकनिश्चयादविनाभावनिश्चयोपि तथा तेनैव प्रकारेणास्तु भवतु वो युष्माकं किमपरेणान्तर्गडुना हेतुफलभावेनाभ्युपगतेनेति ॥ स्वभावहेतावाह ।

**वृक्षाम्रयोस्तु तादात्म्यमन्वयव्यतिरेकतः । विपर्ययेऽथ बाधातोऽविनाभावस्तथा न किम् ॥ ३८ ॥**

वृक्षाम्रयोस्तादात्म्यमन्वयव्यतिरेकाभ्यां यथोक्ताभ्यां विपर्ययेऽथ बाधातः क्षणिकत्वसत्त्वयोस्तथाविनाभावोपि न

किमिति वाच्यम् ॥ अत्र दोषमाह ।

**पक्षैकदेशता हेतोर्वैफल्यं साधनस्य वा । व्यावृत्तेर्वस्तुधर्मत्वे सा सत्यथ न साधनम् ॥ ३९ ॥**

साध्यस्वभावे साधने पक्षः प्रतिज्ञाभिधीयते तस्यैकदेशता साधनस्य साध्यवत्साधनासिद्धिरिति यावत्, अथ साधनं सिद्धमिष्यते तदाऽव्यतिरेकात्साध्यस्यापि सिद्धत्वाद्धेतुवैफल्यम्, व्यावृत्तिकृतं भेदमङ्गीकृत्य साध्यसाधनभावो न दुष्यतीति चेदाह । व्यावृत्तेर्वस्तुधर्मत्वे सा सती सा व्यावृत्तिः सती स्यात् । तथा च सा ततो भिन्ना अभिन्ना वा यद्याद्यः पक्षः सम्बन्धासिद्धिः तथा कथं वस्त्वन्तरमन्यत्र साधनमतिप्रसङ्गात् । अथाऽभिन्ना तथाच साध्यसाधनयोरभेदस्तादात्म्यं तत्र प्रतिज्ञार्थता हेतोः । अथासती न साधनं न साधनाङ्गं नीरूपत्वात्तस्याः ॥

**किञ्चैकज्ञानसंसर्गश्चक्षुषोऽन्यत्र नास्ति सः । कारणानुपलम्भादेर्व्यपदेशो न वार्यते ॥ ४० ॥**

किञ्चेत्यभ्युच्चयमाह एकज्ञानसंसर्गो भवतानुपलम्भहेतुत्वेन योऽभिहितः एकज्ञानसंसर्गिवस्त्वन्तरोपलम्भ एवानुपलम्भ इति सोपि चक्षुषोऽन्यत्र न नैव सम्भवति वो युष्माकमित्यर्थः । यदा हि सर्वशब्दाभावः साधयितुमिष्टः तदा कस्योपलम्भात्तत्साधयतीति वाच्यमिति एवं शेषेष्वपि वाच्यमिति । व्यपदेशस्य स्वेच्छानिमित्तत्वात्कारणानुपलम्भादीनां नासौ निवार्यते । गमकत्वे तु अविनाभाव एव निमित्तं तस्य च प्रत्यक्षानुपलम्भाविति ॥

**कार्यहेतोर्विरुद्धोपि न भिन्नस्तव कुत्रचित् । निषेधोपि विधिश्चैव वृथा भेदेन शासनम् ॥ ४१ ॥**

योयं विरुद्धविधिः स कार्यहेतोर्न भिन्नस्तव मतेन विनाशको हि सामग्र्यन्तःपातेनापचीयमानक्षणजन्यतया न बाधकस्तेन कार्यहेत्वभिधानादेवासावभिहितः । निषेधोऽपि विधिश्चैव, शुद्धभूतलवाह्निलक्षणयोः साधकत्वादुत्तरवद्वेः किं भे-

देनाभिधानामिति ॥ संयोगनिबन्धनोऽविनाभाव इत्यप्यसङ्गतामिति दर्शयति ।

**संयोगस्याविशेषेण वह्निर्धूमं हि साधयेत् । समवायनिमित्तोपि नानवस्थाप्रसङ्गतः ॥ ४२ ॥**

न संयोगनिबन्धनोऽविनाभावः किमित्याह संयोगस्याविशेषेण हेतुना संयोगो घटनामात्रमेवोच्यते स च वह्निधूमयोर्द्वयोरप्यविशिष्टो नहि कार्यहेताविव नियम्यनियामकभावोत्र लभ्यते ततो (यथा) धूमाद्वह्निरनुमीयते तथा वह्नेरपि धूमोनुमीयेत न चैवमतो व्यभिचार इति । नापि समवायादविनाभावावगतिः किमित्याह । समवायनिमित्तोपि नानवस्थाप्रसङ्गतः । समवायो ह्याधाराधेयभूतानामुपवर्ण्यते अयुतसिद्धानामाधाराधेयभूतानामित्यादि वचनात्, स चाधाराधेयभाव उपकार्योपकारकभावे सति स्यात् स चोपकार आधारेण आधेयस्य भिन्नो अभिन्नो वा क्रियेत, नाभिन्न आधारेणाधेय एव कृतः स्यान्न चाधेयानुत्पत्तावाधारता न चोत्पन्नस्य करणं क्रियाविरामानु–(पप) पत्तेः, नापि भिन्नः भेदे आधेयस्यानुपकृतत्वापत्तेः, नह्यन्योत्पादे अन्य उपकृतो नाम घटकरणे जगत उपकृतिप्रसङ्गात् सम्बन्धेनोत्पादादुपकारस्य नातिप्रसङ्गश्चेन्नैतदस्ति द्रव्ययोरेव संयोग इति वचनात्, नोपकारे स घटते तस्य गुणरूपत्वात् न समवायस्तस्यैकत्वात्तस्य च पूर्वमेव नियुक्तत्वात् । किञ्च तत्राप्याधाराधेयकल्पना पुनरुपकारकल्पना पुनर्भेदाभेदवक्तव्यता पुनस्तदेवानुवर्त्तत इत्यनवस्था तन्न समवायमितिनिमित्तोप्यविनाभावसम्भव इति ॥ किञ्च भवन्तु नाम कार्यादयस्तथाप्यविनाभाव एव तत्रापि गमकत्वे निबन्धनमित्यादर्शयन्नाह ।

**अविनाभाव एवैकः प्रमाणेन विनिश्चितः । निमित्तमनुमानस्य न हेतुफलतादयः ॥४३॥**

अविनाभावः पूर्वोक्तस्वभाव एवेति निमित्तान्तराभावं दर्शयति एको हेतुफलभावनिरपेक्षः किं भूतः प्रमाणेन विशेषेण ऊहसहायेन निश्चितस्तात्पर्येण स्थापितः, किमित्याह । निमित्तं कारणम् अनुमानस्य लिङ्गदर्शनसाध्यसाधनसम्बन्ध-

स्मरणादनु पश्चात् परोक्षार्थग्राहकं मानं प्रमाणमनुमानं तस्य न हेतुफलतादयो भुष्यन्यताः कार्यकारणभावस्वभावानुपलम्भसंयोगसमवाया इत्यर्थः। तदलक्षेभिर्व्यभिचारस्यापि सम्भवादिति॥ भवन्तु वा एतानि नाममात्रेण इति दर्शयति।

**कार्यकारणयोर्भावः स्वभावानुपलम्भनम्। संयोगी समवायी च नामकर्म न वार्यते ॥४४॥**

यत्र धूमस्तत्राग्निर्यथा महानस इत्यत्र कार्यहेतुनामकरणं न वार्यत अस्माभिः। वृक्षोयं शिंशपात्वादित्यत्र स्वभावहेतुरयमिति नामकरणम्। नेह घटो दृश्यानुपलब्धेरित्यत्र यथोक्तानुपलम्भनामकरणम्, अग्निरत्र धूमादित्यत्र संयोगीति नामकरणम्, अनित्यो घटः कृतकत्वाद् इत्यत्र समवायीति नामकरणं न वार्यते। यदि तवेत्थमपि सन्तोषो भवति भवत्विति॥ कथमित्याह।

**स्वसाध्येनाविनाभूतो न स्यात्साध्यं विना भवन्। वृक्षाभावे ततो नाम्रो न धूमोपि विनाग्निना ॥४५॥**

स्वसाध्येन तेनाविनाभूतो, योऽर्थः स एव हेतुरुच्यते न स्यात् कथम्, साध्यं विना भवन् जायमानः तस्मादविनाभावे साध्येन वृक्षाभावे नाम्रस्तद्विशेष इति सिद्धम्, तथा न धूमो विनाग्निना अविनाभावादेव। प्रयोगश्च। नेहाम्रो वृक्षाभावात् तथा नेह धूमो वह्न्यभावादिति सिद्धम्, व्यापकानुपलब्धिः कारणानुपलब्धिरिति नामकरणं न वार्यते॥ तथा।

**यः स्वभावविशेषो हि विद्यमानः स्वचेतसः। निमित्तं तदसंवित्तेर्नास्त्यसाविति निश्चयः ॥४६॥**

यः सत्स्वन्येषूपलम्भहेतुषु विद्यमानः प्रत्यक्ष एव भवति स्वभावविशेषः स विद्यमानो निमित्तं भवति स्वचेतसः स्वालम्बनज्ञानस्य कारणं स्यात् तस्यासंवित्तेः तदसंवित्तेः तस्य स्वभावविशेषस्य ग्राहकासंवित्तेस्तज्ज्ञानस्यानुभवादिति ना-

स्यसौ घटादिको भाव इति। ननु तदसंवित्तेः संवित्तिनिवृत्तिरूपत्वादविज्ञानात्मकत्वेनासिद्धत्वाद्धेतुरसिद्धः स्यात्तन्न, तदसंवित्तेरात्मस्वरूपसंवेदनरूपत्वादिति न दोष इति ॥ प्रयोगानुपदर्श्य परप्रसिद्धप्रमाणं निराकर्तुमाह ।

**साध्यसाधनसम्बन्धं न क्षणः प्रतिपद्यते। प्रत्यक्षानुपलम्भाभ्यां तद्गतेस्तत्र नास्ति सः॥४७॥**

साध्यमनित्यत्वादि साधनं कृतकत्वादि तयोः सम्बन्धमविनाभावं नेति प्रतिषेधे क्षणः पूर्वापरत्रुटितवर्त्तमानमात्रं सः साध्यसाधनसम्बन्धं न प्रतिपद्यते, कुत इत्याह। प्रत्यक्षपूर्वकोऽनुपलम्भोऽनुपलम्भपूर्वकं प्रत्यक्षं ताभ्याम्, करणे तृतीया, तस्य साध्यसाधनसम्बन्धस्य गतिः परिच्छेदस्तस्मात् तत्रैवंविधसम्बन्धग्रहणकाले नास्ति उदयानन्तरापवर्गित्वात्तस्य स क्षण इति। एतेनानुमानान्न क्षणिकतानिश्चय इति प्रतिपादितम् ॥

**सामान्यविषयत्वेन निर्विकल्पान्न तद्गतिः। न चापरं परैरिष्टं क्षणभङ्गोऽप्रमाणकः॥ ४८ ॥**

यथानुमानेनाध्यक्षेणापि न तद्गतिः तथाहि सामान्यविषयमविकल्पकमभिहितमेव। किञ्च यदि वर्त्तमानमात्रग्राहितया क्षणिकग्राहकमध्यक्षं किमत्र प्रमाणम्, तदेवाध्यक्षमिति चेद्विवादः कथम्, सदृशापरदर्शनात् भ्रान्तेरिति चेत्, भ्रान्तिनिमित्तं कथमध्यक्षं प्रमाणम्, अविसंवादादिति चेन्न चक्रकदोषापत्तेः प्रमाणं सत्प्रवर्त्तकमन्यथा तल्लक्षणप्रणयनावैयर्थ्यात् प्रवृत्तौ च संवादः संवादे च प्रमाणमिति। प्रवर्त्तकत्वमेव प्रमाणत्वं (प्रापकत्वं) चेदन्योन्याश्रयः प्रमाणं सत्प्रवर्त्तकं ततश्च प्रमाणमिति। उपदर्शकत्वमेव प्रवर्त्तकत्वं चेन्न उपदर्शकस्यात्र भ्रान्तत्वादिति तवाभिप्रायात्, तन्न प्रमाणद्वयात्तन्निश्चयः न च नैव अपरं प्रमाणान्तरं परैः सौगतैः इष्टमभिमेतं तस्मात् क्षणभङ्गः क्षणिकत्वम् अप्रमाणः तत्साधकाभावादिति ॥ नित्यपक्षे आह ।

**सिद्धत्वे हेतुवैफल्यं नित्यत्वादेकरूपतः। असिद्धत्वेपि वैफल्यं न नित्यं साध्यतामियात् ॥४९॥**

अप्रच्युतानुत्पन्नस्थिरैकरूपं हि नित्यं तद्यदि सिद्धं तदा हेतोर्वैफल्यं तस्मान्न नित्यः साध्यतां साधनगोचरताम् इयाद्यायादिति, न खलु स्वरूपेणासिद्धः स्वभावे नित्ये तद्रूपापरित्यागे सिद्धस्वभावता। स्वभावभेदाद्वस्तुभेदोऽभ्युपगन्तव्य एवैकान्तवादिना अन्यथास्मद्दर्शनापत्तिरिति। वस्तुभेदे च नित्यताहानेः नायमपि हेतुसाध्य इति ॥ एकान्तवादिनामनुमानाभावमाह।

**सम्बन्धनिश्चयाभावे नानुमानं प्रमेयवत्। जातिस्वलक्षणादीनां नास्त्यसाविति नानुमा ॥५०॥**

साध्यसाधनयोः सम्बन्धोऽविनाभावः तस्य निश्चयः। तस्याभावे किमित्याह नानुमानं किंवत् प्रमेयवल्लुप्तभावमत्ययोऽत्र निर्दिष्टस्तेन प्रमेयत्ववदिति। कस्मात इत्याह जातिस्वलक्षणादीनाम् आदिशब्दादन्यापोहव्यक्त्यादीनां संग्रहः नास्त्यसौ सम्बन्धनिश्चयः प्रत्यक्षानुपलम्भसाधनत्वात्तस्य इतिहेतौ, ततः किमित्याह। नानुमा तद्वादिनामिति तथाहि जातेः पूर्वं निषिद्धत्वात्सर्वगतत्वेन व्यतिरेकाभावात् अर्थक्रियाया अक्षतत्वात् न साध्यता, साधनजातेरपि सर्वत्र सम्भवान्नाश्रयासिद्धत्वादिदोषसम्भवः तत्र जातिवादिनामनुमानसम्भवः। नापि क्षणवादिनाम्, स्वलक्षणस्यान्वयव्यतिरेकाभ्यामविनाभावग्रहणकालानवस्थानादिति। तदाहितसंस्कारात्तन्निश्चय इति प्रतिविहितमेव, नाप्यन्यापोहवादिनामनुमानसम्भवः, तथाहि अपोहो व्यावृत्तिरुच्यते सा च किमेकस्मात्स्वलक्षणाद्येन्ये तेभ्यो व्यावृत्तिः उत कियद्भ्य इति, न कियद्भ्यो विशेषाभावात्। विजातीयेभ्यो व्यावृत्तिरिति चेन्न सजातीयेतरविभागनिबन्धनाभावात्। स्वभाव एवेति चेन्न, तस्य घटपटयोः साधारणत्वात् यथाहि घटस्य घटाद्व्यावृत्तः स्वभावः तथा पटादपि नात्र विशेष इति तस्मात् द्विस्वभावं वस्तु अभ्युपग-

न्तव्यमिति, नापि व्यक्तिः तस्या अनन्वयादिति न सम्बन्धप्रतीतिः तत्रानुमानमिति ॥

**प्रत्यक्षनिःश्रिता स्मृतिः प्रमाणमर्थनिश्चयात् । साध्यसाधनसम्बन्धग्राहिकेवानुमावतः ॥ ५१ ॥**

प्रत्यक्षनिःश्रिता प्रत्यक्षबलभाविनी स्मृतिः प्रमाणम्, कुत इत्याह अर्थनिश्चयात् किंवदित्याह साध्यसाधनसम्बन्धग्राहिकेव कस्य अनुमावतः अनुमानप्रयोक्तुरिति । अत्र प्रयोगः । प्रत्यक्षबलभाविनी स्मृतिः प्रमाणम्, अर्थनिश्चयात्साध्यसाधनसम्बन्धग्राहकस्मृतिवत् । अत्र स्मृतिरिति धर्मिनिर्देशः प्रत्यक्षबलभाविनीति धर्मिविशेषणं प्रमाणमिति साध्यनिर्देशः अर्थनिश्चयादिति हेतुः न चायमसिद्धोः हेतुः तदहर्जातबालदारकोपि हि तावत्स एवायमिति न प्रत्यवमृषति न तावदुपरतरुदितव्यापारो मुखमर्पयति स्तन इति भवदभ्युपगमात् । सम्बन्धग्राहिकेव दृष्टान्तनिर्देश इति न च साध्यविकलो दृष्टान्तः नहि पूर्वप्रवृत्तेनोत्तरप्रवृत्तेन प्रत्यक्षेणोभाभ्यां वा ताभ्यां साध्यसाधनभावोऽवसीयते स्वकालस्यैव तत्र प्रतिभासनात् तस्मात्स्मृतिस्तं साध्यसाधनसम्बन्धम्प्रतिपद्यत इति । सपक्षे भावान्न विरुद्धः तस्मात्सा प्रमाणमिति ॥ इह जैनैरुक्तं सात्मकं जीवच्छरीरं प्राणादिमत्त्वात् तत्र बौद्धैः अनन्वयत्वं सन्दिग्धव्यतिरेकत्वं दूषणमुक्तं तत्परिहारायाह ।

**नियामकं विना वृत्तिर्न दृष्टा नियता क्वचित् । व्योमवन्नियता वृत्तिः प्राणादीनां च लक्ष्यते ॥५२॥**

नियामकं नियन्तारं विना स्वतन्त्रतया वृत्तिर्वर्त्तनं न दृष्टा न प्रमाणोपलब्धा नियता देशकालस्वभावनैयत्येन क्वचित् देशे काले स्वभावे वा किंवदित्याह । व्योमवदाकाशवत् । हेतुमुपसंहरन्नाह । नियतावृत्तिरुच्छ्वासादयः प्राणास्तेषां चकारोऽव्यवहितसम्बन्धो नियता च प्राणादीनां वृत्तिरिति । प्रयोगः यन्नियामकमनासाद्य प्रवर्त्तते न तन्नियतवृत्ति यथाकाशं नियतवृत्तयः प्राणा इति व्यापकानुपलब्धिः, न चायमसिद्धो हेतुः । न खलु जीवच्छरीरादन्यत्र वृत्तिः प्राणादीनामुपलब्धा

न च देशान्तरे कालान्तरे वा ततोन्यत्र वृत्तिः प्राणादीनामुपलब्धा, न च देशान्तरे कालान्तरे वा ततोन्यत्र वृत्तिरमीषामाशङ्कनीया, यतो यो हि यत्स्वभावो न स देशान्तरे कालान्तरे वा अन्यादृशो भवति यथा चैतन्यं सर्वत्र चिद्रूपमेव जीवद्देहवृत्तिस्वभावाश्च प्राणादय इति स्वभावहेतुः नापि विरुद्धो हेतुः सपक्षे भावात्। नाप्यनैकान्तिकः यदि हि नियतवृत्तिश्च भवति तन्नियामकश्च न स्यात्तदा नैकान्तिकः स्यात् न चैतदिह सम्भवति एवं हि वृत्तिरनिमित्ता स्यात् यच्चानिमित्तं न तस्य देशादिनियमो युक्तो दानहोमादिक्रियां विनापि स्वर्गापवर्गफलस्योत्पत्तिप्रसङ्गो विशेषाभावादिति दृष्टेष्टबाधा प्राप्नोति, न च जीवच्छरीरमेव तद्वृत्तेर्निमित्तं प्राणाद्यभावे जीवच्छरीरताया एवाभावात्, नहि व्याप्यनिवृत्तौ व्यापकस्यापि निवृत्तिरिति यथा रूपादिनिवृत्तावनिवर्त्तमानो घटो न रूपादिनिमित्तः प्राणादिनिवृत्तौ निवर्त्तते जीवच्छरीरमिति, न च साधनविकलो दृष्टान्त इति वाच्यम्, यदि हि घटस्य रूपादयो निमित्तं स्युस्तैस्तिरोहितैः पटादिना घटाप्रतीतिः स्यादिति अतो यत्तज्जीवच्छरीरादतिरिक्तं निमित्तं स एव जीवोऽभिधीयत इति ॥

**उत्पादविगमौ न स्तः स्थित्यभावे खपुष्पवत्। दृश्येते तौ च भावेषु स्वभावेनेह केनचित् ॥५३ ॥**

उत्पादः प्रसूतिः विगमो विनाशस्तौ न स्यातां उत्पादविगमवतः स्थित्यभावे अवस्थानाभावे खमाकाशं तत्र तस्य वा पुष्पं तद्वत्, दृश्येते उपलभ्येते तौ च उत्पादविगमौ भावेषु पदार्थेषु सबाह्याभ्यन्तरेषु स्वभावेन पर्यायादिना केनचिदतोऽमीषु स्थित्यापि भवितव्यमिति, यत्र स्थितिर्न भवति न तत्रोत्पादविगमौ भवतः यथा तारापथःसरोजे, दृश्येते चोत्पादविगमौ भावेषु कथञ्चिदिति विरुद्धव्याप्तोपलब्धिः, न च पक्षैकदेशता हेतोः, द्रव्यपर्यायोभयरूपत्वात् व्योमकालेश्वरादेरिति, न खलु वर्त्तमानकालसम्बन्धे अतीतकालसम्बन्धोस्ति भावस्य, स्पष्टसंवेदनेन अतीतावस्थानामुपलम्भप्रसङ्गात्। एवमनागतावस्थासम्बन्धेपि द्रष्टव्यम्, तथाच सर्वज्ञतैव स्यात्। अथ नातीतावस्थासम्बन्धस्तदानीं तर्हि पर्यायाणामुत्पादवि-

गमाविष्टौ त्वयापीति, ननूत्पादविगमावेव न तद्वानपरस्तत्रोपलभ्यते तत्केषां स्थितिः, तथाहि यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तदसद्व्यवहर्त्तव्यं यथा प्रदेशविशेषे कचिद् घटो नोपलभ्यते चोपलब्धिलक्षणप्राप्तं पर्यायिद्रव्यमिति स्वभावानुपलब्धिः । न चादृश्यस्य सत्ताव्यवस्थापकं प्रत्यक्षं तत्पूर्वत्वादनुमानस्येति, अत्रोच्यते, उत्पादविगमावेव न तद्वानिति पक्षे उत्पादविगमौ क्रमभाविनौ युगपद्भाविनौ वा, यद्याद्यः पक्षः, तत्रोत्पादः पूर्वं विगमो वा यद्युत्पादस्तदा घटादिवस्तुद्वयोपलम्भप्रसङ्गः पूर्वस्याविगमात् । अथ पूर्वं विगमः तदैकक्षणः सत्ताशून्यः प्राप्नोति न धारावाहिविज्ञानं प्राप्नोति किन्तु छिन्नमुक्तावलीकल्पमिति । अथ युगपद्भाविनौ तथापि किं स्वतन्त्रौ उत स्वोत्पादकापेक्षौ, न स्वतन्त्रौ, स्वातन्त्र्ये देशकालस्वभावनियमाभावात् तथाच होमदानादिवैयर्थ्यप्रसङ्गः स्वातन्त्र्येणापि फलसिद्धेः । प्राक्तनक्षण एव निमित्तमिति चेन्न भावस्याप्यभावतापत्तेः अभावजननस्वभावादुत्पत्तेः अभावस्य वा भावरूपतापत्तिर्भावजननस्वभावादुत्पत्तेः । द्विस्वभावाद्द्वयोरुत्पत्तिरिति चेन्न एकस्य स्वभावद्वयानभ्युपगमाद् अभ्युपगमे वा परमतापत्तिः ततः पर्यायि द्रव्यमनिवारितमिति । अथ न भावादन्यो विगमस्तत् कुतोयं दोषः नैतदस्ति एवं हि पूर्वस्यावस्थानात्सत्ताद्वयोपलम्भप्रसङ्गः । अथ य एवोत्तरस्योत्पादः स एव पूर्वस्य विगमः, नैवं भावाभावयोस्तादात्म्यायोगात्, अथ भिन्नविषयत्वान्न दोषः स्वस्वभावव्यवस्थितः पररूपेणाभावो न दुष्टः, सत्यम्, किन्तु परमताश्रयणप्रसङ्गः स्वद्रव्यादिभिः सत्परद्रव्यादिभिरसद्वस्त्विति परस्याभ्युपगमात्तवाप्येषोऽभ्युपगमो यदि क्षीणो विवादः । किञ्चोत्तरस्योत्पादः सहेतुरहेतुर्वा, नाहेतुः उक्तदोषापत्तेः, सहेतुरिति चेत्, स हेतुः कः, पूर्वक्षण एवेति चेन्नैवं तस्य विगतत्वात्कथं हेतुभावोऽतिप्रसङ्गात् । स्वक्षणे तस्य भाव इति चेत्किञ्चातस्तदुत्पादकाले सत्त्वे वस्तुद्वयोपलम्भः तदा चासत्त्वे निर्हेतुरुत्पादः स एव प्रसङ्गः । न चानन्वयविनाशेऽन्वयव्यतिरेकसमधिगम्यो हेतुफलभावनिश्चयः । नापि स्मरणप्रत्यभिज्ञादयः, विकल्परूपत्वादमीषाम्, तस्य चान्तर्जल्पात्मकत्वात्तस्य च क्षणेऽसम्भवादिति, तेन यदुक्तं

हेतूनां नियमं बुद्ध्वा प्रारभन्ते शुभाः क्रियास्तदयुक्तम् उक्तन्यायादिति । तेन यदुक्तम् अनुमानबाधितधर्मनिर्देशानन्तरं प्रयुक्तत्वात्कालात्ययापदिष्टो हेतुर्विपक्षव्याप्तत्वाद्विरुद्धो वा स्यादिति तदपास्तमनेनैवेति । अतो अवस्थाभेदेऽप्यवस्थाता कश्चिदग्नी-कर्तव्योऽन्यथैहिकामुष्मिकव्यवहाराभाव इति स्थितम् ॥ ननु प्रत्यक्षबाधितेयं प्रतिज्ञा अभ्रादीनां मुत्पादविगमावेव न स्थितिः कस्यापि उपलभ्यते भ्रान्त्यापीत्याह ।

अभ्रेन्द्रधनुरादीनां विश्रसापरिणामतः । पुद्गलानां हि संयोगविभागौ न स्थितौ परम् ॥ ५४ ॥

अभ्रं जलद इन्द्रधनुराखण्डलास्त्रं लोकप्रतीतं आदिशब्दाद्विद्युदादिपरिग्रहः । विश्रसापरिणामतः समयप्रसिद्धात्पुद्गलानां तथा भूताणूनां संयोगविभागौ न स्थितौ न पुद्गला अपि क्वचिद्गतास्तेषां नित्यत्वादिति अतो न व्यभिचारस्तस्माद्युक्तमुक्तमिति । इह च तादात्म्यतदुत्पत्तिसम्बन्धानङ्गीकरणान्न क्रमेणोदाहरणानि स्वभावहेतुः कार्यहेतुरनुपलम्भश्चतुर्विध इति न क्रमेणोदाहरणानि क्रमनिमित्ताभावात् ॥ इति स्वार्थानुमानं समाप्य परार्थमाह ।

यल्लक्षणो मतो हेतुः स्वार्थसंवित्तये परम् । वाचाभिधीयमानस्तु परार्थं सानुमोच्यते ॥ ५५ ॥

यत्तु लक्षणं यस्य सोयं यल्लक्षणः । "स्वसाध्येनाविनाभावनिश्चये क्वापि निश्चितः । हेतुः परोक्षसंवित्तेरनुमा स्वार्थमिष्यते" इति लक्षणः । स्वार्थसंवित्तये स्वार्थानुमानाय वाचा वचनेन यत्र धूमस्तत्राग्निर्यथा महानसे धूमश्चात्रेत्येवं रूपया अभिधीयमानः प्रयुज्यमानः परार्थं परप्रत्ययनिमित्तं सा प्रतीतिरनुमानमुच्यतेऽभिधीयत इति ॥ हेतुप्रयोगविधिमाह ।

क्वचिद्धेतुः क्वचिज्ज्ञातं क्वचित्पक्षोपि सम्मतः । पञ्चावयवयुक्तोपि दशधा वा क्वचिन्मतः ॥ ५६ ॥

प्रक्रमायाते प्रतिज्ञापदे तत्साधनसन्देहे हेतुः सन्दर्शिताविनाभावो वाच्यो नाधिकम्, क्वचित् ज्ञातं दृष्टान्तो वाच्यो

यत्र प्रक्रमायातौ प्रतिज्ञाहेतू किन्त्वविनाभावः सन्दिह्यमानस्तत्रेति, कचित्पक्षोपि सम्मतः यत्र त्रयाणां प्रयोगः अपिशब्दाद्धेतुज्ञातग्रहः अथवा पक्षोपि साध्याविनाभूतहेतूपसंहाराय हेतुः प्रस्तुत एव ज्ञातं विनेत्यर्थः । कचित्पञ्चावयवयुक्तोपि अग्निरत्र धूमात् यत्र धूमस्तत्राग्निर्यथा महानसे धूमश्चात्र तस्मादग्निरिति । दशधा वा कचिन्मतः । प्रत्यक्षादिनिराकृतपक्षदोषपरिहारः असिद्धविरुद्धानैकान्तिकदोषपरिहारो ज्ञाते साध्यसाधनोभयविकलतादिपरिहारः दुरुपनीततापरिहारः दुर्निगमितपरिहारो वक्तव्य इति ॥ क पुनरयं विधिरित्याह ।

**वादे चैष विधिर्ज्ञेयो जल्पे च नियतो विधिः । वितण्डायां प्रयोगस्तु न पक्षप्रतिपक्षकृत् ॥५७॥**

एष अनन्तरो विधिर्वादे ज्ञेयः जल्पे च नियतो विधिः । प्रदर्शितसम्बन्धो हेतुः साध्यधर्मिण्युपसंहरणीयः पञ्चावयवो वा हेतुप्रयोगः कार्य इति । वितण्डायां प्रयोगस्तु न पक्षप्रतिपक्षकृत्, स पक्षस्थापनाहीनो वितण्डेति वचनान्न तत्र पक्षप्रतिपक्षकृत् प्रयोग इति ॥ क एते वादादय इत्याह ।

**वादो जल्पो वितण्डा च कथास्तिस्र उदाहृताः । न्यायविद्भिरथैतासां लक्षणानि निबोधत ॥५८॥**

वादो गुरुशिष्ययोस्तत्त्वचिन्तापरो विचारः, यथोक्तं न्यायभाष्ये "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । स एव छलजातिनिग्रहप्रधानो जल्पः स पक्षस्थापनाहीनो वितण्डेति" । ननु परकीयलक्षणमिदमित्याह लक्षणानि वादादीनां प्रयोच्यमानानि निबोधत जानीतेति ॥

**समानलिङ्गिनां कापि मुमुक्षूणामविद्विषां । सन्देहापोहकृद्वादो जल्पस्त्वन्यत्र सम्मतः ॥५९॥**

समानलिङ्गिनामेकदर्शनप्रतिपन्नानां शिष्याचार्यादीनां मुमुक्षूणां मोक्षाभिलाषिणामविद्विषां विद्वेषरहितानां, तत्र स-

मानलिङ्गिनोपि केचिन्मुमुक्षवः केचिन्नेति मुमुक्षूणामित्युक्तम्, मुमुक्षवोपि सरागसंयमे वर्त्तमाना अन्योन्यं विद्वेषवन्तोपि भवन्ति तेनाविद्विषाम्, एतेषामन्योन्यं सन्देहे सति क्वापि दर्शनान्तरगतेषु भावेषु तदपोहकृद्वादो भवतीति शेषः । जल्पस्त्वन्यत्र स मतो, जल्पो वक्ष्यमाणलक्षणोऽन्यत्र भिन्नलिङ्गिष्वित्यर्थः । सम्मतो विदुषामिति शेषः ॥ वादे प्रमाणविधिमाह ।

**आगमोत्थानुमानं वा वस्तुनो बलभावि वा । आगमोऽध्यक्षमप्यत्र साधनं दूषणं तथा ॥६०॥**

आगमबलेन यत्र साध्यसाधनयोः प्रतिबन्धग्रहणं तदागमोत्थमनुमानं वस्तुबलभावि यत्र साध्याविनाभावनिश्चयस्तद्वस्तुबलभावि असमासः छन्दोऽर्थमिति, वा समुच्चये आगम आप्तवचनं स चाध्यक्षमपि प्रत्यक्षम् अपिः समुच्चये प्रमाणान्तरानिष्टेः । साधनं पूर्ववादिनो दूषणमुत्तरवादिनः एतत्प्रमाणजातमिति, तत्रागमोत्थानुमानं यथा यद्यन्नन्द्यध्ययनपरिपठितश्रुतं तत्तदविगानेन प्रमाणमेष्टव्यं यथा आचारादि नन्द्यध्ययनपरिपठितश्रुतं च महानिशीथम्, न चायमसिद्धो हेतुः कालिकोत्कीर्तनावसरे उत्तरज्झयणाइं निसीहं महानिसीहमित्यादेः स्पष्टमुपलब्धेः, न विरुद्धः सपक्षे भावात् । धूर्त्तविरचितत्वाशङ्कात्वाचारादिष्वपि समाऽतो नानैकान्तिकः । शिष्यः पुनराह । यत्प्रमाणभूतशास्त्रविसंवादि तदप्रमाणं यथा वेदविहिता हिंसाप्यहिंसेति आचाराद्यभिहितार्थविरुद्धं च महानिशीथं, न चायमसिद्धो हेतुः, यतस्तत्रोक्तं संयती गोचरे प्रविशन्ती आकाशगमनाभिग्रहं गृहीत्वा प्रविष्टा प्रदीपने च धवलगृहोपरि समारूढा दह्यमाने तस्मिन्नुत्प्लुत्य ततो धवलगृहान्तरोपरि गता ततो व्रतभङ्गान्मृत्वा नरकं गता, विरुध्यते चैतत् "विराहियसव्वविरयस्स णं भंते कहिं उववाओ? गोयमा, जहंनउ भवणवईसु उक्कोसओ सोहम्मे" इत्यादिना विरोधादिति पक्षद्वयेपि साधनसद्भावे मुमुक्षवः तत्राशातनाभीरवोऽविद्विषोऽनभिनिवेशिनो भवन्ति तेनोदासीना युक्तिं चिन्तयन्ति । यथा "दुब्भासिएण एक्केण मिरिई दुक्खसागरं पत्तो" इत्याद्युक्तं न च तद्भणने

तदैवासौ चतुर्विंशतितमो जिनो जायेत किन्त्वविधिप्ररूपणाभयहेतुरिदमिति, कथमन्यथा पार्श्वनाथशिष्ययोर्दर्शनान्तरं प्ररूपयतोरपि निर्वाणमाख्यातमागमे ततो भयहेतूनि न दोषवन्त्येवंविधानि वचनानीत्येवं सन्देहापोहं कुर्व्वन्ति । वस्तुवलेन प्रवृत्तमनुमानमाश्रित्येत्थं क्रमः । यत्सत्तदनित्यं विपर्ययेऽर्थक्रियाविरोधात् । अत्र शिष्यप्रतिवचनं सूरिराह यदि सत्त्वं पक्षस्तदा नित्येऽर्थक्रियाविरोधादिति व्यधिकरणासिद्धो हेतुः, अथ तत्रापि सत्त्वमिष्यते तदा हेतुर्विरुद्धः स्यात् सत्त्वेनाव्याप्तेः, अथ सदप्यर्थक्रियाकारि क्षणिकं तथाच नार्थक्रियासत्त्वमनैकान्तिको हेतुः, अथ सत्त्वं हेतुविपर्यये त्वर्थक्रियाविरोधः सत्त्वानित्यत्वयोः सम्बन्धसाधकप्रमाणं तथाच साध्यसाधनधर्मावनाश्रितौ प्राप्नुतः न च प्रतिबद्धसाधनप्रमाणगोचरो दृष्टान्तोत्र परस्य सिद्ध इत्येवं वस्तुवलप्रवृत्तमनुमानं वादे साधनदूषणमिति वस्तुवलप्रवृत्तत्वं चेह पराभिप्रायेणेति । आगमोप्येवं साधनं दूषणं वा वाद इति, शिष्यः पृच्छति नयाः सदंशग्राहिणोऽसदंशग्राहिणो वा यदि सदंशग्राहिणः कथं मिथ्यादृष्टयः अन्यथा चक्षुरादिज्ञानानि प्रतिनियतरूपादिषु वर्त्तमानानि कथं सम्यग्दृष्टीनि, अथ तानि न स्पर्शादिप्रत्याख्यान्ति नापि जानन्ति किन्तु स्वविषयनिष्ठान्येवं तर्हि नया अप्येवम्भूता एव, परस्परं क्षिपन्तः कुनया एव ते सन्तु मिथ्यादृष्टयः अन्यथा सूत्रार्थकथनायां तेषामनवसरो नहि सम्यग्देशनायां मिथ्यावादावसरः। कथं वा "दुविहंपि नेगमओ" इत्याद्यभिधाय न प्रतिविहितमिति सूरिराह । " भद्दं मिच्छदंसणसमूहमइयस्सत्ति " इत्याद्यागमः प्रमाणं किमत्राचक्षीमहीति प्रत्यक्षं वादे साधनं दूषणं वा स्यात् । नयमताश्रयेण शिष्य आह बाह्याः सुखादयः स्रगादिसद्भावे तत्संवेदनादिति, सूरिराह न बाह्याः सुखादयः स्फुटमाह्लादादिरूपतया अन्तःसंवेदनादिति ॥ एतदेवाह ।

**साधनेऽभिहिते भ्रान्त्या साधनाभासतां वदेत् । अनुरूपानुमानाद्यैर्नोचेन्मन्येत तत्तथा ॥६१॥**

पूर्ववादिना साधनेऽभिहिते प्रतिपादिते, कथमित्याह भ्रान्त्या अजानता उत्तरवादी साधनाभासतां वदेत्, कथ-

मित्याह अनुरूपानुमानाद्यैः आदिशब्दादागमाध्यक्षग्रहः अथ न दुष्टं साधनं मन्येत तत्पूर्ववादिनोक्तं मुमुक्षवो ह्यनभिनिवेशिनो भवन्ति ॥ तेनैवाह ।

**अत एवात्र नो युक्ताः स्थेया दण्डधरादयः । छलजात्यादयो दूरं निग्रहोपि न कश्चन ॥६२॥**

येनैव कारणेन मुमुक्षूणामयं वादो अत एव अत्र वादे नो युक्ता न घटमानकाः स्थेयाः प्राश्निकाः दण्डधरो राजा आदिशब्दाज्जयपराजयव्यवस्थादयो गृह्यन्ते छलं वचनछलादि जातिः साधनधर्मविकल्पनम् । तद्यथा सौगतेनोक्ते अनित्यः शब्दः कृतकत्वात् घटवत् यदैवं प्रेरयति मीमांसको यथा घटगतं कृतकत्वं हेतुत्वेनोपन्यस्तम् उत शब्दगतं नाद्यः पक्षो घटगतस्य शब्दे असिद्धत्वात् नापि शब्दगतं तस्य दृष्टान्ते अनन्वयात् एवं चानुमानोच्छेदः प्राप्नोति ततो जात्या उत्तरं न सम्यगिति । छलं च जातिश्च ते आदी येषां विक्षेपादीनां ते तथा ते वादे दूरं दूरोत्सारिता एव निग्रहो वक्ष्यमाणः सोपि नात्र कश्चनेति । तेन वादे एव साधनमेव केवलं दृष्टान्तो वा केवलः साधनदृष्टान्तौ वा प्रतिज्ञा साधनदृष्टान्ता वा पञ्चावयवं दशावयवं वा साधनवाक्यं प्रयुज्यते नान्यत्रेति ॥ जल्पमाह ।

**वाद एव भवेज्जल्पश्छलजात्यादयः परम् । अनुषज्यन्ते यथायोगं स्थेयदण्डधरादयः ॥६३॥**

यदेव वादे लक्षणं तदेव जल्पेऽप्याऽऽह, वाद एव भवेज्जल्पः, किन्तु छलजात्यादयोऽनुषज्यन्ते जल्पे यथायोगं यथावसरं तथा स्थेयदण्डधरादयोप्यत्र सन्तीति ॥ एतदेवाह ।

**जल्पे वादौ विधातव्या व्यवस्था तु जयाजये । अभ्युपेत्य कृते पक्षेऽन्यतमस्यैकवस्तुनि ॥६४॥**

**पक्षीकृतं यदेवास्य दोषस्तत्रैव चिन्त्यते । तन्मतेनानुषङ्गस्तु परस्याज्ञानतावहः ॥ ६५ ॥**

जल्पो हि व्युत्थितेन सह भवति तत्र वादावेव विधातव्या विधेया व्यवस्था मर्यादा जयाजये, किं प्रमेयभङ्गात्

मत्र उतापशब्दाद्यपि किं वा वर्गाक्षरादिना गृहीतेन केनचित्, उत्तरवादिनोपि किं सर्वाननुवादेनाक्षराननुवादेन प्रमेयाननुवादेन वा पराजय एतत्करणे च जय इति व्यवस्था निग्रहोपि कीदृश इति, तथा जैनोपि यदि सौगतमतमाश्रित्य क्षणिकत्वमेकं साधयितुमुद्यच्छति तदा अभ्युपेत्य कृते पक्षे प्रतिज्ञायां परमतैकधर्मे अन्यतमस्य बौद्धादेरेकवस्तुनि क्षणिकत्वादौ तदा पक्षीकृतं यदेव तेन वादिना, अत्र जल्पे दोषस्तत्रैवाभ्युपगते चिन्त्यते तन्मतेन परसिद्धान्ताभिमतपक्षान्तरेण दोषानुषञ्जनम्। यदि क्षणिकत्वमिच्छसि तदा युक्तं भारं वो भिक्षवो दर्शयिष्यामो भारवाहं वो भिक्षवो दर्शयिष्याम एतन्न सङ्गच्छत इत्यादिना परस्य प्रतिवादिनो अज्ञानतावहः अज्ञानसूचक इत्यर्थः ॥ विध्यन्तरमाह ।

## परपक्षस्थितस्यास्य स्वमतेनानुषञ्जनम्। परस्याज्ञानदोषेण निग्रहस्थानमावहेत् ॥ ६६ ॥

परपक्षस्थितस्य सौगतादिमतस्थितस्य अस्य वादिनः जैनस्य स्वमतेन जैनमतेन अनुषञ्जनं प्रेरणम्, यथा क्षणिकत्वं साधयतो [illegible]नः परिणामिवादहानेर्हारितं भवता इत्यादिना परस्य प्रतिवादिनोऽज्ञानदोषेण निग्रहस्थानं पराजयस्थानमावहेत् प्राप्नुयादिति ॥

## पक्षान्तरगमोप्यत्र तथा प्रश्नोत्तरान्तरा । विक्षेपोऽननुवादश्च तथानूद्याप्यदूषणम् ॥६७॥

पक्षान्तरगमोऽप्यत्र अपिशब्दादसिद्धविरुद्धानैकान्तिकहेतुदोषाणामविद्यमानानामुद्भावने वादिनाप्येवमसमर्थने निग्रहस्थानं प्रतिवादिनः, वादिना वा एतद्दोषदुष्टे साधने प्रयुक्ते प्रतिवादिना वोद्भाविते दोषे निग्रहस्थानमिति । एवं प्रतिज्ञादृष्टान्तदोषेष्वपि वाच्यम्, तथा प्रश्नान्तरं प्रस्तुतार्थदण्डविस्मरणाय प्रतिवादिनो निग्रहस्थानं तथा विक्षेपो भाण्डादिना च सूर्यादिरूपो विकथारूपो वा, तथा अननुवादोपि निग्रहस्थानं तथा अनूद्याप्यदूषणं निग्रहस्थानमेवेति ॥

**लुब्धे द्विष्टे त्वमध्यस्थे स्थेयदण्डधरादिके । न जल्पः प्रतिपक्षे वा मारणाद्युद्यमस्थिते ॥६८॥**

लुब्धे उत्कोचारते द्विष्टे प्रत्यनीके अभव्यतया अमध्यस्थे शैवादिपक्षपातिनि स्थेयदण्डधरादिके, स्थेयाः प्राश्निकाः ते वक्तव्याः । "सभां वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम् । अब्रुवाणो ब्रुवन्वापि नरो भवति किल्बिषी ॥ ये तु सभ्याः सभां गत्वा तूष्णीं ध्यायन्त आसते । ब्रुवते न यथार्थं तु ते सर्वेऽनृतवादिनः" ॥ इत्यादि नारदोक्तं भवद्भिर्हृदि निवेशनीयमिति । दण्डधरो राजा तस्मिन्नेवंविधे न जल्पः कार्यः । प्रतिपक्षे वा प्रतिवादिनि औरस्यादिना राजसम्मतत्वेन च मारणाद्युद्यमे आदिशब्दान्निर्वासनाद्युद्यमे स्थिते आरूढ इति न जल्पः कार्य इति ॥

**प्रतिज्ञाहेतुदृष्टान्तदूषणेऽभिहिते परैः । समर्थः साधयेत्तानि दोषाभासा इति ब्रुवन् ॥६९॥**

प्रतिज्ञा पक्ष उच्यते हेतुः साधनं दृष्टान्तो ज्ञातं एषां दूषणे वक्ष्यमाणे अभिहिते परैः समर्थो वादी साधयेत्तानि, कथमित्याह दोषाभासा अमी न सम्यग्दोषा इति वदन्निति ॥

**छलादिना विपक्षस्य शक्तः कुर्यान्निराकृतिम् । इतरो वादिनः कुर्यात्स्वपक्षमुद्भावयन् ॥ ७०॥**

छलादिनेति । वचनविघातोऽर्थविकल्पोपपत्त्या छलम्, साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः, विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् । अत्रैव हेतुदृष्टान्तदूषणानामन्तर्भाव इति तेन छलादिना विपक्षस्य परवादिप्रयुक्तपक्षस्य शक्तः समर्थस्तत्र कर्मणि कुर्यान्निराकृतिं निराकरणम्, इतरोऽपि प्रतिवादी वादिन उत्तरदातुः कुर्यान्निराकृतिं कथं स्वपक्षं निजशासनमुद्भावयन् प्रकटार्थम् ॥ वितण्डामाह ।

**न स्थेयादिव्यवस्थेह वितण्डायां न निग्रहः। नावयवव्यवस्थापि छलादिस्तु न वार्यते॥ ७१॥**

न स्थेयदण्डधरजयपराजयव्यवस्थेह वितण्डायां न निग्रहः स्वपक्षपरिग्रहाभावात् तदपेक्षया चासिद्धादिदूषणं प्रमेयान्तरगमनं वा स्यादिति एतदेव च निग्रहस्थानमिति। तथा अवयवव्यवस्थापि नेह पक्षाधीनत्वात्तस्या इति। छलादिस्तु आदिशब्दाज्जातिविशेषादिग्रहः न वार्यते वितण्डायामिति योगः॥ हेत्वाभासादयो निग्रहस्थानमुक्तं तानेवोपदर्शयितुमाह।

**न येष्वस्त्यविनाभावो हेत्वाभासास्त एव हि। सम्बन्धग्रहणायोग्यं ज्ञातमज्ञातमेव हि॥७२॥**

न खल्वत्र हेत्वाभासदृष्टान्ताभासलक्षणं वक्तव्यम्, अविनाभावनिश्चयो हेतुलक्षणं यत्र स नास्ति ते हेत्वाभासाः सुज्ञेयमेव तथा अविनाभावसम्बन्धग्राहकप्रमाणरहितं ज्ञातमज्ञातमेव किमत्र लक्षणान्तरेणेति त एव दर्श्यन्त इति। सर्वं सत्त्वं क्षणध्वंसि नित्यस्यार्थक्रियाक्षतेः अर्थक्रियाविपर्यासत्वतो ? ज्ञानमनालम्बं द्विचन्द्रवत्सर्वमिति व्याप्तिमाह, क्षणध्वंसीति प्रतिज्ञा नित्यस्यार्थक्रियाक्षतेः अर्थक्रिया हि क्रमाक्रमाभ्यां व्याप्ता तौ च नित्याद्व्यावर्त्तमानौ स्वव्याप्यमर्थक्रियाकारित्वमादाय व्यावर्त्तेते अर्थक्रियाकारित्वमेव च सत्त्वमिति। यद्यद्विपर्यस्तं ज्ञानं तत्तन्निरालम्बनं दृष्टं यथा द्विचन्द्रादिगोचरं विपर्यस्तं च सर्वं वाह्याश्रयेण विज्ञानमतः सर्वमनालम्बनमिति॥ पक्षद्वयेपि हेत्वाभासतां दर्शयितुमाह।

**सत्त्वे चार्थक्रियाभावो न सिद्धोऽसिद्धता न किम्। सत्त्वं हेतुर्निराधारं साध्यं च साधनं न किम्॥ ७३॥**

इह नित्यं सदसद्वा सत्त्वे अर्थक्रियाया अभावो नाभ्युपगन्तव्य इतरथा अर्थक्रियाकारित्वं सत्त्वं न स्यादिति अतो हेतुरसिद्धः, उतासन्नित्यो व्यधिकरणासिद्धो हेतुः क्षणिका घटादयो नित्यस्यार्थक्रियाविरहात् कथं न व्यधिकरणासिद्धतेति। अथ सत्त्वं हेतुरर्थक्रियाविरोधस्तु प्रतिबन्धसाधकः तथाच निराधारं साध्यं साधनं च स्यान्निरा-

भयोप्याश्रयासिद्ध इति ॥ तथा ।

**प्रमाणलक्षणातीतं प्रमाणं भवतामदः । न साध्यसाधनं ज्ञातं न वादी न च दण्डभृत् ॥७४॥**

इह युष्मदाचार्यैः प्रमाणलक्षणमुक्तं "प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितेः" इत्यादि तथा सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिरित्यादि अतो भवतोप्येकदेशासिद्धो हेतुरिति । यदि न सर्वे पक्षीकृतं तदा सिद्धसाधनमित्यस्थाने साधनमुपन्यस्यतो निग्रहस्थानमापद्यते । अथ स्वसंविचौ लक्षणं चरितार्थं तथा न साध्यं साधनं द्वयोरपि ज्ञानमात्रत्वान्न भेदः साध्यसाधनयोः तथाच हेतुरसिद्धः, सिद्धौ वा हेतुवैयर्थ्यमिति। प्रतिबन्धग्राहिप्रमाणविषयं ज्ञातमपि नास्त्यतो हेतुरनैकान्तिकः । न वादी विवादगोचरः दण्डभृद्दण्डधरो जल्पे उपलक्षणत्वात्स्थेयादिपरिग्रह इति ॥

**प्रत्ययत्वादनालम्बःसाधनं व्यभिचार्यदः। अभासनान्न बाह्योस्ति नैकान्तो न च सिद्धिभाक् ॥७५॥**

इह यदुक्तं निरालम्बनाः सर्वे प्रत्ययाः प्रत्ययत्वात्स्वप्नप्रत्ययवत् तथा इह खलु यत्प्रतिभाति तदेव सद्व्यवहृतिपथमवतरति यथा प्रकाशमानवपूरत्नः संवेदनेन प्रतिभान्ति च बहिर्घटादय इति यथाक्रममनैकान्तिको हेतुः । साध्यविकलश्च दृष्टान्तो द्वितीये हेतुरसिद्धो मीमांसकान्प्रति साधने साध्यसमता साधनदोष इति ॥

**अविनाभावसम्बन्धग्राहि मानं कुतो गतम् । क्षणिकोप्यर्थक्रियाकारी कुतो मानाद्विनिश्चितम् ॥७६॥**

अविनाभावलक्षणसम्बन्धग्राहकं प्रमाणं कुतोऽवसितं न ह्यत्र तद्विषयो दृष्टान्तोस्ति सर्वोपसंहारेण साधनात् विपर्यये बाधकवशात् प्रतिबन्धसिद्धिरिति चेदाह क्षणिकोप्यास्तां नित्यः अर्थक्रियाकारी कुतो मानात् प्रमाणाद्विनिश्चितमेतदिति क्रमाक्रमयोस्ततोपि निवृत्तिदर्शनादिति ततोऽनैकान्तिकता हेतोरिति ॥

**हेत्वन्तरानपेक्षा च विनाशे परवादिनाम् । न सिद्धा साधने हेतुः किं न साध्यसमो भवेत् ॥७७॥**

इह कृतकान् भावाभावाननित्यानिच्छतः प्रतीदमुक्तं दिग्नागेन, यदि कृतकानामनित्यत्वमिच्छति ततः क्षणिकत्वमेष्टव्यम्, कालान्तरे भवनस्य निमित्ताभावात्, तथाहि ये यद्भावं प्रत्यनपेक्षास्ते तत्स्वभावनियता यथा अविकलकारणसामग्री स्वकार्योत्पादने, विनाशं प्रत्यनपेक्षाश्च सर्वे कृतका भावा इति व्यापकानुपलब्धिः, अत्राह सूरिः, हन्त हेत्वन्तरानपेक्षा व्यापकानुपलब्धितयोपन्यस्ता या त्वया सा परवादिनां न सिद्धा इत्यसिद्धो हेतुरिति हेत्वाभासोऽयं न हेतुरिति, अथ विनाशो मुद्गरादिना क्रियमाणः किं घटात् भिन्नो वा अभिन्नो वा क्रियत इत्यादिना साधयामि तर्हि साध्यसमं साधनं हेत्वाभास एव, कथमुक्तं यः स्वयं साध्यत्वेनेत्यादि । इह कुमारिलेनोक्तं यत्सदुपलम्भकप्रमाणविषयभावमनापन्नं न तत्सदिति व्यवहर्तव्यं यथा वान्ध्येयः सदुपलम्भकप्रमाणविषयभावमनापन्नश्च सर्वज्ञ इति व्यापकानुपलब्धिः, अत्र सदुपलम्भकमानस्य गोचरो नेह सर्ववित् तद्वादिनो न सिद्धेयमाश्रयासिद्धता, अपि च न सिद्धेयमनुपलब्धिः तदुपलम्भकप्रमाणस्याभिहितत्वान्न च भवदध्यक्षनिवृत्तिः स्वमातृविवाहादौ व्यभिचारात्तदभावसाधनं सर्वादृष्टेः सन्दिग्धासिद्धत्वान्नातस्तदभावसिद्धिः न प्रत्यक्षं विना अनुमानं स्वतन्त्रस्येतरेतराश्रयानवस्थापत्तेः । नाप्यागमात्तत्प्रणीतस्य तद्भावसाधकत्वात्पुरुषमात्रप्रणीतस्य च दृष्टेपि विसंवादादपौरुषेयस्य परं प्रत्यसिद्धत्वान्न चान्यत्प्रमाणमस्ति ततस्तवाप्यसिद्धेयमिति । आश्रयासिद्धश्च हेतुः सर्वज्ञे धर्मिणि नास्तित्वसाधनाय हेतुः प्रयुक्तः स चेदस्ति कालात्ययापदिष्टो हेतुरथ नास्ति आश्रयासिद्धो हेतुरिति हेत्वाभास इति॥ इह नैयायिकादिभिरीश्वरसाधनायोक्तं यदचेतनं तदधिष्ठातारमन्तरेण न कार्यमारभते यथा मृत्पिण्डदण्डचक्रादयः कुलालं विना अचेतनाश्च अदृष्टपरमाण्वादयः अतश्चेतनावन्तमधिष्ठातारमाश्रित्य तनुभुवनकरणादिकार्यमारभन्ते यश्चासौ चेतनावान्स एवेश्वर इति तत्राह।

**चेतनावन्तमाश्रित्य कार्यकृद्यदचेतनः। अचेतनं तथाण्वादि सन्देहासिद्ध ईदृशः ॥ ७८ ॥**

अदृष्टं हि परवादिनो नाचेतनं सिद्धं क्षीरनीरन्यायेनाविभागेनादृष्टस्य जीवेन सहावस्थानादिति । यैस्तु अविद्यारूपमदृष्टमिष्टं तेषां वाचेतनं न सिद्धं तस्या भ्रान्तज्ञानरूपत्वादिति अतोऽसिद्धो हेतुः । न चैकः परमाणुः कार्यमारभते बहवश्च नाचेतना एव पृथिव्यादीनां सचेतनत्वेनेष्टत्वादतः सान्दिग्धासिद्धो हेतुः ॥ पुनस्तानाश्रित्याह ।

**बुद्धिमत्पूर्वकं कार्यं घटादीव विनिश्चितम् । भूभूधरादिकार्यं च न सिद्धं परवादिनाम् ॥ ७९ ॥**

इह यद्यत्कार्यं तत्तद्बुद्धिमत्कारणपूर्वं यथा घटसरावोदञ्चनादयः कार्यं च भूभूधरादयः। अत्राह भूभूधरादिकं कार्यं न सिद्धं परवादिनाम्। न कदाचिदनीदृशं जगदिति वचनादिति ॥ यच्च द्वीन्द्रियग्राह्यं किमत्यधिकरणभावापन्नमित्याद्युक्तं तत्राह ।

**द्वीन्द्रियग्राह्यमग्राह्यं बुद्धिमद्धेतुपूर्वकम् । आश्रयासिद्धता हेतोः बौद्धानभि न संशयः ॥ ८० ॥**

न खलु सौगतानां द्वीन्द्रियग्राह्यं वस्तु सिद्धं निरंशवस्तुवादित्वात्तेषामतस्तानभि न सिद्धो हेतुरिति ॥ किञ्च ।

**एकान्तवादिपक्षोक्ता असिद्धाः सर्वहेतवः। विरुद्धा ज्ञातमप्येषां साध्यादिपरिवर्जितम् ॥ ८१ ॥**

इहैकान्तवादिनो नैयायिकादयः सौगताश्च तत्र नैयायिकादीनामभ्युपगतानुत्पन्नस्थिरैकस्वभावं नित्यं वस्त्विति यदि च साध्यमेकरूपं तदा तद्यदि प्रतीतरूपं किं तत्र हेतुना असिद्धसाधनाय तद्व्यापारात् । अथासिद्धरूपं तथापि किं हेतुना तस्यैकरूपतया सदैवासिद्धत्वान्न किञ्चिद्धेतुना, हेतुरप्येकरूप एव देशकालाभ्यामव्यतिरेकात्त्वविनाभावग्रहस्तत्र, परिणामिन एवान्वयव्यतिरेकाभ्यामविनाभावस्य विषयत्वात्ततो नासौ हेतुत्वेनाभ्युपगन्तव्यस्तस्य महानसादिदृष्टस्य साध्यधर्मिण्यसिद्ध-

त्वादिति । नहि पूर्वस्वभावापरित्यागेन स्वभावान्तरानुत्पादेन च महानसदृष्टस्य साध्यधर्मिणि वृत्तिरन्यथैकस्वभावताहानेरि-ति । सिद्धत्वे च परिणामिसाध्याविनाभूतत्वान्नित्यैकान्तसाधनायोक्तस्य विरुद्धता स्यादेवमेकान्तक्षणिकपक्षेऽप्यभिधातव्य-मिति । साध्यसाधनविकलानि च ज्ञातानि परिणामिन एव साध्यसाधनरूपत्वादिति ॥ पुनर्विरुद्धमाह ।

**नित्योयं कृतकत्वेन यथाकाशादिसम्मतम् । विरुद्धो हेतुराकाशे साधनं नास्ति तन्न सः ॥ ८२॥**

कृतकत्वं ह्यनित्यत्वेनाविनाभूतं नित्यत्वसाधनाय प्रयुक्तं विरुद्धसाधनाद्विरुद्ध इति । साधनविकलश्च दृष्टान्तस्तन्न स दृष्टान्त इति ॥

**बुद्धिमद्धेतुपूर्वं हि संस्थानं कुम्भगेहवत् । संस्थानं भूधरादीनां तस्मात्तद्बुद्धिपूर्वकम् ॥ ८३ ॥**

इह नैयायिकादिभिः पुनरीशसाधनाय हेतुरुक्तस्तद्यथा यो यः संस्थानविशेषः स स बुद्धिमद्धेतुपूर्वको दृष्टो यथा कुम्भगेहादिषु, संस्थानविशेषश्च भूभूधरादीनामतो बुद्धिमद्धेतुपूर्वक इति ॥

**संस्थानं यादृशं कुम्भे नास्ति तद्भूधरादिषु । भूधरादिगतं नैव तज्जन्यत्वेन निश्चितम् ॥ ८४ ॥**

**यादृशोऽभीष्यते कर्त्ता तादृक्कर्त्ता घटादिषु । न सिद्ध इष्टघाती च हेतुरेष न संशयः ॥ ८५ ॥**

यादृशं हि संस्थानं बुद्धिमत्पूर्वकत्वेन निश्चितं कुम्भे तादृशं संस्थानं भूधरादिषु न सिद्धमित्यसिद्धो हेतुः, यादृशं तु सिद्धं तद्बुद्धिमत्पूर्वकत्वेनासिद्धमित्यनन्वयो हेतुः। यादृशश्च बुद्धिमान् साधयितुमिष्यते न तादृशेनान्वयो घटादौ सिद्ध इत्य-नन्वयोऽनैकान्तिकः । यादृशेन सिद्धः तादृशः साधनः कौपीनाच्छादिताम्बरो मृत्तिकावगुण्ठितकरो भस्मावगुण्ठिततनुः काष्ठश-कलोपविष्ट ईदृशसाधने सिद्धसाधनं नित्यैकबुद्ध्युपेताचिन्त्यशक्तियुक्त ईदृशस्तु न सिद्ध्यतीति इष्टविघातकारित्वाद्विरुद्ध इति ॥

**कालात्ययापदिष्टत्वं* तथा सत्प्रतिपक्षता। साध्येन समता चैव साधनाभासमीदृशम् ॥८६॥**

इह प्रमाणबाधितकार्यानन्तरप्रयुक्तः कालात्ययापदिष्ट इति यथा नानुमानं प्रमाणं विसंवादित्वात्, अत्रानुमानप्रामाण्याभावसाधकानुमानबाधितधर्मसाधनाय विसंवादित्वादित्ययं कालात्ययापदिष्ट इति (सत्प्रतिपक्षः) प्रकरणसमः स यथा अनित्यः शब्दः नित्यधर्मानुपलब्धेर्यन्नित्यधर्मैर्नोपलभ्यते तदनित्यं यथा घटादि तथाच शब्द इति, मीमांसक आह नित्यः शब्दो अनित्यधर्मानुपलब्धेर्यदनित्यधर्मैर्नोपलभ्यते तन्नित्यं यथाकाशमिति ततः प्रकरणसमो नाम हेत्वाभासोयमिति। तथाऽनित्यः शब्दः कृतकत्वाद् घटवदिति मीमांसकेनोक्तमसिद्धं कृतकत्वं शब्दे, बौद्ध आह कृतकः शब्दः प्रत्ययभेदभेदित्वात् तेनैव चोक्तं यः स्वयं साध्यत्वेनैवेष्टो न साधनत्वेनापि सपक्ष इति एते च त्रयोपि हेत्वाभासाः। एते च कैश्चिदसिद्धेऽनैकान्तिके च पात्यन्ते न किञ्चिदनेन मुधा परिश्रमदोषेण हेत्वाभासत्वस्यैवेष्टत्वादिति ॥ अनैकान्तिकानाह।

**अतीतानागतौ कालौ स्मृतिकारविवर्जितौ। कालत्वात्तद्यथा कालो वर्त्तमानो न किं भवेत् ॥८७॥**

कालत्वादित्ययं हेतुरनैकान्तिको यत एवमपि शक्यते वक्तुम् अतीतानागतौ कालौ स्मृतिकारविवर्जिताविति ततो विपक्षेपि हेतुवृत्तेरनैकान्तिक इति, कर्तृस्मृत्या तत्रापि बाध्यते न वेद इति चेदुक्तमत्रापि स्मरन्ति हि वेदानां कर्तॄन् महामुनय आनन्दपुराणादयः ॥

**शब्दो नित्यः प्रमेयत्वादेष साधारणो मतः। श्रावणत्वादनित्योयमसाधारण ईदृशः ॥ ८८ ॥**

शब्दोऽकारप्रश्लेषाद्वा नित्योऽनित्यो वा प्रतिज्ञा हेतुः प्रमेयत्वं चोभयत्रापि साधारणमतोनैकान्तः। अनित्यः शब्दः

* " प्रकरणेन समानता " इत्यादर्शे.

प्रतिज्ञा श्रावणत्वाद्धेतुः एष चासाधारणानैकान्तिको यतः शब्दादन्यत्रास्यावृत्तेः ॥

चाक्षुषत्वादनित्योऽद्रिर्घटादिरिव निश्चितः । अनन्वयादनैकान्तो हेतुरेष न संशयः ॥ ८९ ॥

अनित्योऽद्रिः प्रतिज्ञा चाक्षुषत्वाद्धेतुः एष चानन्वयादनैकान्तः चाक्षुषत्वस्यानित्यत्वेन प्रतिबन्धग्राहकप्रमाणाभावात्॥

कृतकत्वादनित्योऽयं स्तम्भकुम्भादिवद्ध्वनिः । अदर्शितान्वयत्वेन हेतुरेष न साधकः ॥९०॥

प्रयोक्तृदोषादयं दुष्टो विद्यमानोऽप्यन्वयो न दर्शितस्ततो न साध्यसाधक इति ॥

अनित्यत्वात्कृतकोऽयं विपरीतान्वय ईदृशः । प्रवक्तृत्वादसर्वज्ञः सन्दिग्धान्वय ईदृशः ॥ ९१ ॥

विपरीतान्वयो नाम हेतुरनैकान्तिकोऽयमिति । न ज्ञायते वक्तृत्वमसर्वज्ञत्वेन व्याप्तं तत्साधकप्रमाणाभावादतः सन्दिग्धोऽन्वयोऽस्येति ॥

रागादिमानसर्वज्ञः सन्दिग्धोभय ईदृशः । प्रवक्तृत्वादसर्वज्ञः सन्दिग्धव्यतिरेकवान् ॥ ९२ ॥

रागादिमत्त्वं सर्वज्ञत्वेन सह विरोधि निश्चितं नाप्यनुगतमिति सन्दिग्धोभयहेतुः वक्ता सर्वज्ञो न भवति विरोधसाधकप्रमाणाभावात्सन्दिग्धव्यतिरेक इति दृष्टान्तोऽपि प्रतिबन्धग्राहकप्रमाणविषयोऽविनाभावे सत्यभ्युपगतः ॥ ज्ञातदोषानाह ।

यत्सत्तत् क्षणिकं ज्ञेयं यथा दीपशिखादयः । साध्येन विकलं ज्ञातं षट्क्षणस्थायिनो ह्यमी ॥ ९३ ॥

इह सत्त्वं क्षणिकत्वेन व्याप्तं दर्शयितुं दीपशिखादयो ज्ञातमुक्तं तत्र च नैयायिकादिभिः षट्क्षणस्थायितेष्यते ततः साध्यशून्यं निदर्शनमिति ॥

नित्यं नार्थक्रियाकारि वान्ध्येयादिवदिष्यताम्। हेतुशून्यमदो ज्ञातं वस्तुधर्मो हि नित्यता ॥९४॥

न नित्योर्थक्रियां करोति वन्ध्यासूनुरिव साधनशून्यं ज्ञातमदो वस्तुधर्मो यस्मान्नित्यता वान्ध्येयस्तु न वस्त्विति ॥

कृतकत्वादनित्योऽयमाकाशादिवदिष्यताम्। साध्यसाधनशून्यो हि दृष्टान्तोयमुदाहृतः ॥९५॥

आकाशे कृतकत्वानित्यत्वयोरभावादुभयशून्यं निदर्शनम् ॥

रागादिमांश्च वक्तृत्वात् यथार्यं पुरुषोऽग्रतः। साध्यं सन्दिह्यते ज्ञाते ज्ञातमेतन्न तन्मतम् ॥९६॥

रागादिमत्त्वं ह्यतीन्द्रियं परसन्ततौ सन्दिह्यते ततो नैतत् ज्ञातमिति ॥

रागादिमान्न सर्वज्ञो यथार्यं पुरुषो मतः। सन्दिग्धं साधनं साध्यं ज्ञातमेतन्न तन्मतम् ॥९७॥

रागादिमत्त्वासर्वज्ञत्वयोरतीन्द्रियत्वेन दृष्टान्तभूते पुंसि सन्दिह्यते ततो नैतज्ज्ञातमिति ॥

रागादिमान् जिनो ज्ञेयो वक्तृत्वात् गौतमादिवत्। सन्दिग्धासिद्धता हेतोर्ज्ञातं सन्दिग्धसाधनम् ॥९८॥

न ज्ञायते जिनो वक्ता न वेति सन्दिग्धासिद्धो हेतुरिति तथा गौतमस्याप्यप्रत्यक्षत्वात्सन्दिग्धं साधनं ज्ञात इति साध्यं तु सन्दिग्धमेव ॥

अविनाभावसंवित्तिः व्यतिरेकादियं मता। साध्याभावे निवर्त्तेत साधनं नियमादतः ॥९९॥

अविनाभावग्राहकं प्रमाणं कचिद्व्यतिरेकज्ञाते दर्शनीयं कथं साध्याभावे सति यद्यवश्यन्तया साधनस्याप्यभावो भवति तदाविनाभावनिश्चयो भवतीति ॥ ततः किमित्याह ।

यन्नानित्यं न तत्कृतकं घटव्योमतडिच्छटाः। विपक्षे ज्ञातमुद्दिष्टं कृतकः शब्द इहोदितः॥१००॥

घटे हि अनित्यत्वं कृतकत्वं च न निवृत्तमित्युभयशून्यं निदर्शनं व्योम्नि तु साधनं निवृत्तं न साध्यं तडिति साध्यं निवृत्तं न साधनं प्रयत्नानन्तरीयकत्वं हि ततो निवृत्तं न कृतकत्वमिति ॥

सर्वज्ञत्वादवक्तायं यथा बुद्धः शिशुर्भवः। वक्ता जिनेश्वरोभीष्टः सन्दिग्धव्यतिरेकिता ॥१०१॥

इह मीमांसको जिनेश्वरसर्वज्ञनिषेधार्थं व्यतिरेकिणः प्रयोगानुक्तवान्। जिनेश्वरोऽभीष्ट इत्यनेनाश्रयासिद्धतां परिहरति। वक्तृत्वमसर्वज्ञत्वेन व्याप्तं सर्वज्ञत्वासर्वज्ञत्वयोश्च विरोधित्वान्नोभयानुभयपक्षसम्भवः अतो बुद्धाद्वक्तृत्वं निवर्त्तमानमसर्वज्ञत्वं निवर्त्तयति। शिशुरव्यक्तो बालः तत्र च भवः शम्भुर्यथेति सम्बन्धः। इह च बुद्धात् साध्यसाधनयोर्निवृत्तिः सन्दिग्धा शिशौ तु सर्वज्ञत्वं सन्दिग्धं वक्तृत्वाभावो दृश्यः। अजे तु सर्वकर्तृत्वद्वारेण सर्वज्ञत्वं यदि स्याद् वक्तृत्वं सन्दिग्धमिति क्रमेणोभयसाध्यसाधनसन्देहभाञ्जि ज्ञातानि ॥ पक्षदोषानाह ।

प्रतिपाद्यानुरोधेन पक्षो वाच्यः स नेदृशः। शब्दो ह्यश्रावणः सत्त्वात्प्रत्यक्षेण निवारितः॥१०२॥

नैकान्तेन प्रतिज्ञा कार्या किन्तु साध्येन व्याप्तिमादर्श्य हेतुरुपसंहरणीयः तेन यदुक्तमागमः प्रतिज्ञेत्यादि तदपास्तं किन्तु परबोधनिमित्तत्वात्प्रयासस्य यो मन्यते नाकर्मकं करणमिति तदनुग्रहाय यदा वा वैशेषिकादिमते स्थित्वा साधनमाह तदा वा प्रतिज्ञा वाच्या, कथमन्यथा स्वयमिष्टो निराकृतः पक्ष इत्यादि फलवादिति स नेदृशः कार्य इति शेषः। शब्दो धर्मी अश्रावण इति साध्यं सत्त्वाद् घटादिवदित्यभ्यूह्यम्। अश्रावणत्वं च शब्दे प्रत्यक्षेण तद्ग्राहि श्रावणज्ञाने न निवार्यत इति ॥

**अनुमाननिरस्तोपि नानुमानं प्रमेति च । स्वप्रतीतिनिरस्तोपि न चन्द्रः शशलाञ्छनः ॥१०३॥**

अनुमाननिरस्तोपि पक्ष इति सम्बन्धः अपिः समुच्चये चार्वाकेणोक्तं नानुमानं प्रमाणं विसंवादित्वान्मरीचिकाज्ञानवत् चकारोस्यार्थस्य समुच्चयार्थः इह च स्वयमनुमानं कुर्वता अनुमानप्रामाण्यं दर्शितमेव नहि प्रतिज्ञामात्रं निग्रहस्थानं नावहाति ततः साधनमभिधानीयं तदेवानुमानं न च पराभ्युपगमस्तव प्रमाणमनुमानप्रामाण्यप्रसक्तेरिति । ततोऽनुमाननिराकृतोयं पक्षः स्वप्रतीतिनिराकृतः चन्द्रः शशीति चन्द्रतया स्वयमेव प्रतीतेः ॥

**लोकप्रतीतिदुष्टोपि मनुष्याऽस्थि न दुष्यति। प्राण्यङ्गत्वाद्यथा शङ्खः शुक्तिका वा त्वयेष्यते ॥१०४॥**

इह कापालिकेनोक्तं शुचि मनुष्यास्थि प्राण्यङ्गत्वात् शङ्खादिवदिह च लोकः सांव्यवहारिको ग्राह्यो न तदन्तःपातीति न च तस्य नरास्थीनि शुचीनि प्रतीतानि तेन तत्प्रतीतिबाधितोयमिति ॥

**माता वन्ध्या मदीयेति स्ववाक्येन निराकृतः। निग्रहस्थानमेतद्धि हेत्वाभासादि दर्शितम् ॥१०५॥**

स्ववचननिराकृतो माता मे वन्ध्या माता हि जननी सा च मदीयेति मम जनयित्री वन्ध्या चेत्कथं मदीयेति । जल्पाधिकारे निग्रहस्थानं प्रस्तुतं तदेवोपसंहरति निग्रहस्थानमेतद्धीति प्रकृतानुसन्ध्यर्थं हेत्वाभासाद्यनन्तरोदितमिति ॥ क्रमं दर्शयितुमाह ।

**प्रतिज्ञा ह्यग्निरत्रेति धूमाद्धेतुरुदाहृतः । यत्र धूमोस्ति तत्राग्निः क्वचिद्देशे यथा तव ॥१०६॥**

प्रतिज्ञा का अग्निरत्र इत्युपदर्शने न चैतावदाभिधाय स्थेयं निग्रहप्राप्तेरतो हेतुर्धूमादिति वाच्यम् एवमप्यप्रदर्शितान्वयतादोषस्ततोभिधीयते यत्र धूमस्तत्राग्निरिति व्याप्तिमादर्शयति । तद्ग्राहिप्रमाणविषयमाह क्वचिद्देशे रन्धनादौ यथा तवेति

उभयसम्मतो दृष्टान्त इति दर्शयति ॥ यद्यपि पूर्वं धूमादित्युक्तं व्याप्त्या सम्बन्धे पुनर्धूमः साध्यवति दर्शनीय इत्यभिप्रायवानाह ।

**धूमश्चात्रोपनयनं निगमो वह्निरित्यतः । पञ्चानां शुद्धयो वाच्याः पक्षहेत्वादिदोषहाः ॥१०७॥**

धूमश्चात्रेति उपनयनमवश्यं साध्यधर्मिणि हेतुरुपसंहरणीयः पूर्वोपात्तो हि हेतुरप्रदर्शितान्वयो न चानाश्रया व्याप्तिरुपदर्श्यते तेन पूर्वं धूमादिति वाच्यं निगमो निगमनं प्रमाणव्यापारोपसंहारः तस्माद्वह्निरिति पञ्चानां प्रतिज्ञा हेतुदृष्टान्तोपसंहारनिगमनानां शुद्धयो दोषपरिहारा वाच्या इति सम्बन्ध इति ॥ परस्यापि सम्मतमेतदित्याह ।

**पक्षोऽनिराकृतः कार्यो हेत्वाभासास्ततोऽपरे । दृष्टान्ते दूषणोक्तेश्च तच्छुद्धिः किं न कीर्तिता ॥१०८॥**

स्वयमिष्टोऽनिराकृतः पक्षस्तत्र प्रत्यक्षनिराकृत इत्याद्यभिधानात् तदकरणीयतयोपदेशः तथापि भ्रान्त्या पक्षदोष उद्भाविते तदपाकरणाय तच्छुद्धिरभिधीयते न खलु दशावयवं वाक्यमादित एव करणीयं यतो नास्माकं प्रयोगनियमो नैयायिकादीनामिवास्ति हेतोरसिद्धत्वादिदोषोद्भावने तच्छुद्धिरभिधीयते । यदि चावश्यं दशावयवं कार्यं वाक्यं तदेत्थं कार्यम्, अग्निरत्र धूमाद्यत्र धूमस्तत्राग्निर्यथा महानसे धूमश्चात्र तस्मादग्निः न चायं प्रत्यक्षनिराकृतादिदोषदुष्टः पक्षो यतो न परोक्षतयात्र प्रत्यक्षं प्रभवति तत्पूर्वकत्वात्तदभावे नानुमानमपि बाधकं नाप्यागमे पठ्यते अत्राग्निर्नास्तीति च न चापरं प्रमाणान्तरमस्ति, न च बाधकाभावमात्रादेवार्थनिश्चयो येन हेतुवैफल्यं स्यात् नापि हेतुरसिद्धः प्रत्यक्षमुपलब्धेः नाप्यनैकान्तिकः ज्ञाते साध्यसाधनोभयवैकल्यसन्देहाभावात् न चाप्रदर्शितान्वयो हेतुर्व्याप्तिपूर्वं हेतूपसंहारात् नापि दुरुपनीतं साधनम् ॥ एतदेवाह ।

**अधिकारोपसंहारः शास्त्रे यदि च सम्मतः । हेतोः कृतान्वयस्यैनं कथं नेच्छन्ति वादिनः ॥१०९॥**

सर्वेष्वपि शास्त्रेषु कवयोऽधिकारोपसंहारं कुर्वन्ति यदि हेतोः साधनस्य कृतान्वयस्य प्रदर्शितव्याप्तिकस्य किमिति नेच्छन्ति वादिनो बौद्धाद्याः ॥ पूर्वं कारणाभिधानं किमिति चेदाह ।

क्षणिकत्वे यदा साध्ये विवादोऽवयवाश्रितः । निग्रहस्थानमासक्तं प्रमेयान्तरसङ्गतेः॥११०॥

बौद्धस्य क्षणिकत्वे साध्ये यदा पञ्चावयवाद्याश्रितो विवादः स्यात्तदा दूषणाय साधनाय वा यतमानस्य प्रमेयान्तरगमान्निग्रहस्थानमापद्येत ततः पूर्वमेव व्यवस्था कार्या न साधनप्रयोगे ॥ तथाच ।

किं दुरुपनीतं नैवैतत्पक्षधर्मत्वासिद्धितः। प्रमाणफलव्याजेन निगमनं किं न वो मतम् ॥१११॥

तत्रोपनयशुद्धिरित्थं दुरुपनीतं दुष्टमुपसंहृतं नैव एतत्साधनं कथमन्यथा पक्षधर्मता स्यादिति प्रमाणफलोपदर्शनमेतदित्यभिधानान्निगमनमिष्टं वो युष्माकम् ॥

प्रतिज्ञातार्थसंसिद्धिः शुद्धिर्निगमगोचरा । दशावयवमेवं तु वाक्यमिच्छन्ति तद्विदः॥११२॥

यैव हि प्रतिज्ञातार्थस्य संसिद्धिर्निश्चयः प्राप्तिर्वा सैव निगमगोचरा विषयशुद्धिरिति । एवमुक्तक्रमेण दशावयवं दशभेदं वाक्यं साधनप्रयोगं इच्छन्ति मन्यन्ते तद्विदः वाक्यवेत्तार इति ॥

हेतुरेव क्वचिद्वाच्य इत्यादि गदितं पुरः ॥ ११३ ॥

क्वचिद्धेतुः क्वचित्पक्ष इत्यादिना अन्यथापि गदितं पुरः पूर्वम् ॥ इति परार्थानुमानं समाप्तम् ॥ शाब्दमधिकृत्याह ।

शब्दादसन्निकृष्टार्थप्रतिपत्तिः प्रमा परा । सर्वविद्वीतरागोक्तः सोपि तस्या निबन्धनम् ॥११४॥

शब्दो निसृष्टभाषावर्गणात्मकस्तस्मादसन्निकृष्टो देशकालस्वभावविप्रकृष्टो व्यवहितः तत्र प्रतिपत्तिर्निश्चयः प्रमा प्रमाणम्, अपरा तृतीया परा वा प्रधाना सर्ववित्सर्वज्ञो वीतरागो वीतरागद्वेषस्तेन उक्तो भणितः सोपि शब्दस्तस्या असन्निकृष्टार्थप्रतिपत्तेर्निबन्धनं निमित्तम् । तत्रानित्यत्वेऽस्यार्थक्रियायामसामर्थ्याच्छब्दस्यानुत्पाद एव स्यात्सामर्थ्ये वा क्रमेण तेषामनुत्पा-

दप्रसङ्गः क्रमिणश्चानुभूयन्त इति पौद्गलिकत्वदोषो नादेपि समानः तस्याप्यपौद्गलिकत्वे देशान्तरगमनाभावप्रसङ्गः ।नाप्य-प्राप्यकर्णदेशं शब्दमुपलक्षयति अभिधास्यते चैतत्स्वस्थान एव, न च शब्दः सत्तामात्रेण अर्थप्रतिपत्तिनिमित्तं किन्तु ज्ञात इति सामर्थ्यलभ्यं शब्दज्ञानादित्यर्थः । तद्गोचराऽवग्रहेहापायरूपादुत्तरकालं गृहीताविस्मृतशब्दार्थसम्बन्धस्य परोक्षेऽर्थे ज्ञानं प्रमेति तेन शब्दगोचरा अवग्रहादयो मतिज्ञानमिति, यत्तु सो मंदे उवलद्धी होइ सुयं तदपि श्रूयत इति श्रुतमिति व्युत्पत्ति-माश्रित्योक्तम् । अक्खरलंभो य सेसेसुत्ति उपचारादद्दुष्टमुपचारोऽप्यनन्योपायतार्थमिति । न च शब्दादर्थप्रतिपत्तिर्नोनुभूयते न च प्रत्यक्षानुमानगोचरत्वेन किञ्चित्, न चास्यानुमानेऽन्तर्भाव इति प्रतिपादयिष्यते। अत एवाह प्रमाऽपरा तृतीयं प्रमाण-मेतदिति अथवा परा प्रधाना प्रधानमोक्षार्थाधिगमाच्च, यदाह जम्हा न मोक्खमग्गे मोत्तूणं आगमं इह पमाणमिति ॥ न चार्थप्रतिपत्तिरप्यप्रमाणम्, अध्यक्षानुमानयोरप्यप्रमाणतापत्तेः न चेतरप्रणीतशब्दस्य विसंवादे सर्वत्राप्याशङ्का युक्ता मरी-चिकादावध्यक्षे भ्रान्तौ सर्वत्रापि भ्रान्ततापत्तेरिति प्रतिपादयिष्यते ॥ किञ्च ।

**दानादेरविनाभावः स्वर्गाद्यर्थेन केन वः । चक्षुरादिधियो वृत्तिर्नैवातीन्द्रियगोचरा ॥११५॥**

दानादेरादिशब्दाज्जापहोमव्रतादिपरिग्रहः अविनाभावः स्वर्गादिफलेनाविनाभूतत्वमित्यर्थः । केन वः केन प्रमाणेन वो युष्माकं न केनापीति भावः । यतश्चक्षुरादिधियो वृत्तिर्नैवातीन्द्रियगोचरा चक्षुरादीनां पञ्चानामिन्द्रियाणां धियो ज्ञान-स्येति नैवेन्द्रियातीतविषये वृत्तिरर्थपरिच्छेदलक्षणा । इदमुक्तम्भवति न खलु निर्निबन्धना प्रवृत्तिः प्रेक्षावतः सर्वत्र प्रवृत्ति-प्रसङ्गाच्च च न प्रवर्त्तन्ते दानादौ न च फलानपेक्षा प्रवृत्तिर्नियतगोचरा न च साध्यसाधनयोरविनाभावग्राहकप्रमाणाभावे सा युक्ता न चक्षुरादिधियोऽतीन्द्रियार्थे प्रवृत्तिः अतीन्द्रियताहानेः अतः प्रमाणान्तरमन्वेषणीयमिति ॥ अनुमानात्सम्ब-न्धप्रतिपत्तिरिति चेदाह ।

**नानुमाध्यक्षपूर्वत्वात् स्वातन्त्र्ये वा न च प्रमा। अन्योन्याश्रयोऽनवस्था तत्पूर्वा चेदसौ मता ॥११६॥**



नानुमा तद्ग्राहिकेति शेषः। कुत एतदित्याह अध्यक्षपूर्वत्वादनुमाया इति सम्बन्धः अध्यक्षानुपलम्भनिमित्तत्वाद्- विनाभावप्रतिपत्तेरध्यक्षाप्रवृत्तौ तदयोगात्। न चागृहीतसम्बन्धाल्लिङ्गादनुमातिप्रसङ्गात्, अनुमानमेव सम्बन्धग्राहकं चेदाह। अन्योन्याश्रयोऽनवस्था तत्पूर्वा चेदसौ मता, यदि तत एवोत्पादकलिङ्गस्याविनाभावग्रह इतरेतराश्रयोऽनुमानसिद्धौ सम्ब- न्धसिद्धेरिति। अनुमानान्तरेण सम्बन्धग्रहणे तदप्यनुमानान्तरं सम्बन्धग्रहणे तत्राप्यनुमानान्तरमेष्टव्यं तदपि सम्बन्धग्रह- णात्तदनुमानान्तरादित्यनवस्था तत्पूर्वा चेदसौ अनुमा तन्नानुमानादपीति ॥

**उपमादेरमानत्वान्नाभावो भावसाधकः। स्वर्गाद्यर्थं च दानादौ वृत्तिः किं स्वस्थचेतसः ॥११७॥**

उपमादेरनन्तरं निषेत्स्यमानत्वात् नाभावो नैवाभावाख्यं प्रमाणं भावसाधकं तस्याभावविषयत्वेनेष्टत्वात् ततो न प्रमाणान्तरगम्योऽप्यविनाभावग्रहः। उपसंहरन्नाह स्वर्गाद्यर्थमभ्युदयानिःश्रेयसार्थं पुनः केन वृत्तिः स्वस्थचेतसः न युक्तेति भावः ॥ ततः किमित्याह।

**तत्रागमः प्रमाणं तु नापरं तस्य गोचरम्। सर्वविद्वीतरागस्य वचनं नापरोऽप्यसौ ॥११८॥**

तत्रातीन्द्रियार्थेन सह दानादेः सम्बन्धग्रहे आगमः प्रमाणं तुरवधारणे आगम एवेति नापरं तद्गोचरं वचनमित्यनेन सम्बन्धः, तर्हि किं तद्गोचरमित्याह सर्वविद्वीतरागस्य वचनम्, अथवा आगम एव तत्र प्रमाणं नापरं प्रमाणान्तरं तद्गोचरं विधिप्रतिषेधप्रतिपादितो विधिः मुख्य इति स सर्वविद्वीतरागवचनात्। नापरोऽप्यसौ पाठान्तरेण सम्बन्धः असावागमो ना- परोऽपि कुतोऽतिप्रसङ्गात्। इदमुक्तं भवति तत्र प्रत्यक्षादेरप्रवृत्तेरागम एव प्रमाणं न चासौ सर्वज्ञवचनादन्योऽपीति असर्वज्ञवीतराग-

वचनं हि विसंवादसम्भवादप्रमाणमेवेति प्रतिपादितं भवति तन्न तेन व्यभिचारः ॥ यद्येवं कथं गौतमादीनां वचनं प्रमाणमित्याह।

**गणभृतो जिनेन्द्राणामानन्तर्येऽव्यवस्थिताः। तद्गीतवाचिमानत्वं तत्कृतं हि तथापि च ॥११९॥**

गणभृतो गणधरा गौतमादयो जिनेन्द्राणाम् अर्हतामानन्तर्यव्यवस्थिताः। तित्थयराणंतरं संघो इति वचनात्। यदि वा नयणं अणादिसेसी वियाणई एस छउमत्थो इति वचनादानन्तर्यव्यवस्थिता निर्विशेषतया स्थिताः तथापीत्युत्तरेण सम्बन्धः तथापि तद्गीतवाचि मानत्वं तत्कृतं तत्कृतमेवेति ॥ कथमेतदित्याह।

**छद्मस्थानां वचो मानं स्वातन्त्र्येण न युज्यते। अत एवादिसूत्रेषु ह्यनुवादविधिर्मतः ॥१२०॥**

छादयतीति छद्म घातिकर्माभिधीयते तत्र तिष्ठन्तीति छद्मस्थास्तेषां वचो वचनं मानं प्रमाणं स्वातन्त्र्येण सर्वज्ञानिश्रया न सम्मतं नाभिमेतमतिप्रसङ्गापत्तेरिति। कथमेतत् ज्ञायते इत्याह अत एव तेनैव कारणेन आदिसूत्रेषु आचारादिषु स्फुटम् अनुवादविधिर्मतः तेषामिति गम्यते तथाहि आचारादिसूत्रम्। सुयं मे आयुसं तेणं भगवया एवमक्खायं इत्यादि। तथा। जइणं भंते आइगरेणं तित्थगरेणं उप्पन्ननाणदंसणधरेणं भगवया पंचमस्स अंगस्स अयमट्ठे पन्नत्ते छट्ठस्स णं भंते अंगस्स के अट्ठे पन्नत्ते इत्यादि ॥ अहवा उद्देसे निद्देसे य निग्गमे इत्यादिगाथाद्वयोपदर्शितोपोद्घातद्वारेणानुवादविधिर्मत इति, यत्तु अत्थं भासइ अरिहा सुत्तं गंथंति गणहरा निउणमित्यत्र सूत्ररचनाकाले गणधराः छद्मस्था अतो न सर्ववित्प्रणीतं सूत्रं कथं प्रमाणमिति तत्सर्वमनुवादवचसा निरस्तमिति ॥ किञ्च।

**छद्मस्थानामनाभोगस्तादृशामपि सम्भवी। अत एवावधिज्ञाने गौतमः क्षमयत्यलम् ॥१२१॥**

छद्मस्थानां पूर्वोक्तरूपाणां अनाभोगोऽनुपयोगस्तादृशां गुणशालिनामपि सम्भवी केवली हि सततोपयोगी नापर

इति अत एव कारणादवधिज्ञाने विषयभूते योऽनाभोगस्तं गौतमः क्षमयति अलम् अतिशयेन भावसारमिति उपासकदशासूक्तं पौषधशालास्थितस्यानन्दनाम्न उपासकस्यानुशास्तिनिमित्तं गौतमो गतस्तेन चोक्तम्, अस्ति भगवन्नगारमावसतो गृहिणोऽवधिज्ञानमुत्पद्यते । भगवानाहास्ति यद्येवं ममापि अधउपरितिर्यक्ष एतावति क्षेत्रे उत्पन्नमिति । भगवतोक्तम्, अत्थि आणंदा अगारमावसंतस्स ओहिनाणं समुपज्जति नो णंए महालए ता तुमं एयस्स ठाणस्स आलोएहिं निंदाहिं गरिहाहिं पडिक्कमाहि पायछित्तं पडिवज्जाहि । उपासक आह, अत्थि णं भंते जिणप्पणीयाणं तव्वाणं भावाणं आलोईज्जइ ॥ सूरिराह उपासका नाह, तं नं तुमं चेव गोयमा आलोएहि इत्यादि ततो गौतमस्वामिना गत्वा भगवान् पृष्टो भगवतोक्तं गौतमानंदं क्षमयस्व ततो गत्वा क्षमयत्यलमतिप्रसङ्गेण ॥

## यस्तु तत्रानभिज्ञोपि देशनां कुरुतेऽधमः । उत्सर्गादिगता नूनं दीर्घसंसारको ह्यसौ ॥१२२॥

यः पुनस्तत्रागमेऽनभिज्ञोपि, इदमुक्तं भवति गौतमो हि चतुर्दशपूर्वकर्त्ता वेत्ता सोऽप्यनाभोगं गतो यस्तु तत्रानभिज्ञोपि उत्सर्गादिदेशनां करोति स नूनं निश्चितं दीर्घसंसारको हि स्फुटमसाविति ॥ कथमज्ञो देशनां करोतीत्याह ।

## देशं कालं बलं सूत्रमाश्रित्य गदितो विधिः । जिनानाशातयेत्पापस्तदुल्लङ्घनतामितः ॥१२३॥

देशं सच्चरितजनानुकूलं कान्तारं च विद्विडाकीर्णमनाकीर्णम्वा कालं सुभिक्षं दुर्भिक्षं वा ग्रीष्मादि वा बलं विद्यासहाय औरस्यादिरूपं रोगाधानादिखिन्नाऽखिन्नादिरूपं वा सूत्रं निशीथकल्पव्यवहारादिरूपम् । अथवा देशमार्यक्षेत्रादि कालं चतुर्थारकलक्षणम् बलं प्रथमसंहननादि सूत्रं नवमपूर्वतृतीयवस्तुलक्षणम् आश्रित्य अङ्गीकृत्य गदितो विधिः प्रतिपादितः क्रमः यः तमुल्लङ्घनतामितः यस्तदुल्लङ्घ्यान्यथा प्रवर्त्तते स पापो जिनानाशातयेज्जिनैरिदमुक्तमिति वदन् जिनानलीकवादितया योजयतीत्यर्थः ॥

**अत एवाधिकारित्वं यत्र सूत्रे न दर्शितम्। सर्वज्ञोक्तं न तत्सूत्रं व्यभिचारो न तत्कृतः ॥१२४॥**

यत एव देशाद्यपेक्षो विधिरभिहितः तत एवाधिकारित्वम्। "तवेण सत्तेण सुत्तेण एगत्तेण बलेणय॥ तुलणा पंचहा वुत्ता जिणकप्पं पडिवज्जओ" इत्यादिना यत्राधिकारित्वमनुष्ठानस्य न दर्शितं किन्तु यस्मिन् सामान्यतो विधिर्गीतः सर्वज्ञोक्तम् सर्वविद्गीतं न तत्सूत्रं स्वमतिपरिकल्पितं तदित्यर्थः व्यभिचारो विरोधापादनं न तत्कृतो न तेन सूत्रेण विरोधो दर्शनीय इति ॥ व्यभिचारपरतां दर्शयितुमाह।

**निर्ग्रन्थता जिनैरुक्ता निमित्तं मोक्षशर्मणः। कुतः परिग्रहस्तस्यां तस्मिन् वा सा कथं ननु ॥१२५॥**

निर्गतो ग्रन्थो अस्मादिति निर्ग्रन्थस्तद्भावो निर्ग्रन्थता जिनैरुत्पन्नज्ञानैस्तीर्थकरैरुक्ताऽभिहिता निमित्तं कारणं मोक्षशर्मणो निर्वाणसुखस्य ततः परिग्रहस्तस्यां कुतो न कुतोपीति भावः। परिग्रहो वस्त्रपात्रादिरूपः तस्मिन्वा परिग्रहे सा निर्ग्रन्थता कथं न कथञ्चिदित्यर्थः नन्विति वितर्के॥ सूरिमतमाशङ्क्य पर एवाह।

**धर्मार्थं स न तां हन्ति हस्त्यश्वरथशालिनाम्। राजादीनां कथं सा न को विशेषोऽपरत्र वः॥१२६॥**

धर्मार्थं धर्मनिमित्तं क्रियमाण इति शेषः स परिग्रहः न नैव तां निर्ग्रन्थतां हन्ति विनाशयति यद्येवं हस्त्यश्वरथशालिनां तत्पराणां राजादीनामादिशब्दादमात्यादिपरिग्रहः कथं केन कारणेन सा निर्ग्रन्थता मोक्षनिमित्तभूता नेति नेष्यते, न तेषां सा चेदाह को विशेषोऽपरत्र वः अपरत्र कम्बलाद्युपकरणवत्सु को विशेषो वो युष्माकं प्रतिभासते येन सेष्यत इति॥ सूरिराह

**कैषा निर्ग्रन्थता वीरैरुक्ता वस्त्राद्यभावतः। गवादीना न सा केन कथं वा भवतामसौ ॥१२७॥**

कैषा निर्ग्रन्थता या निमित्तमुक्ता मोक्षशर्मणः वीरैः साहसिकैः पातकभीरुभिः भवद्भिः क्रियते किमत्र मष्टव्यं वस्त्रा-

द्यभावतः सेति । सूरिराह गवादीनां न सा केन, सा निर्ग्रन्थता गवादीनां केन हेतुना न तेषामपि वस्त्राद्यभावस्य तुल्यत्वात्, अथ सा तेषां नेष्यते कथं केन प्रकारेण वा समुच्चये भवतां युष्माकमसौ निर्ग्रन्थतेति वाच्यं न विशेषं पश्याम इति भावः ॥ परमतमाशङ्क्य सूरिराह ।

**आन्तरत्यागतः सैषा हन्त सा नास्ति केन नः। भावाभावौ समौ हन्त परोक्षत्वाद्द्वयोरपि॥१२८॥**

न वस्त्रादित्यागरूपा सा कथं गवादीनामासज्येत । किन्त्वान्तराणामष्टादशपापस्थानानां त्यागतः सैषेति हन्त धीमन् सा एवम्विधा निर्ग्रन्थता नास्ति केन कारणेन नोस्माकमिति ब्रूहि किञ्चिदुत्तरमिति। परोक्षत्वादान्तरत्यागस्य स किं भवत उतास्माकं उत नैकस्यापि उत द्वयोरपि न ज्ञायते ॥ किञ्च

**वस्त्रादीनामभावे च जीवरक्षा कथञ्च वः। ग्लानस्य रोगिणोर्थायौषधाद्यानयनं कथम् ॥१२९॥**

वस्त्राभावे शुषिरतृणग्रहणमग्निप्रज्वालनं शुषिरतलपट्टिकाप्रावरणं कुर्वतां जीवरक्षा कथं पात्रं विनैकत्र भाजने कथमाधाकर्मादिभुञ्जानानां बहिर्निर्गतसाधोर्वेषे सञ्जाते वस्त्रकम्बलाभावे क्षारतनुसम्पर्कैः षट्कायघाते सेति ब्रूथ वो युष्माकं सा जीवरक्षेति तां विना कथं प्रव्रज्येति भावः पात्रं विना न च ग्लानः तत्र गन्तुं स समर्थः उत्क्षिप्य नीयमानो म्रियेतापि गृहस्थभाजनेष्वानीयमाने पुरःकर्म पश्चात्कर्मप्रसङ्गः। पुस्तकानि च चकारादुपासकायतनानि च कथं परिग्रहे न पतन्ति वो युष्माकम् ॥

**निर्णीतसाहसा ह्यासन् जैनकल्पं समाश्रिताः। उज्झितं भक्तमादद्युरज्ञातेष्वेव गोचरः॥१३०॥**

निर्णीतं निश्चितं निर्व्यूढं वा साहसं येषां ते निर्णीतसाहसाः हि यस्मादासन् अभूवन् जैनं कल्पं जिनकल्पमित्यर्थः। समाश्रिताः प्रतिपन्नाः उज्झितं त्यक्तं भक्तमोदनमादद्युर्गृह्णन्ति गृहीतवन्तो वा, यदाह। पञ्चसु अग्गहो दोसु यग्गहोत्ति ।

तथा अज्ञातेषु न विद्यते ज्ञातं ज्ञानं येषु कुलेषु यदुतायमुज्झितं गृह्णातीति तेष्वेव गोचरो भिक्षाचर्येति ॥

**नाग्निसेवां तथा कार्षुः पुस्तकादेर्न सङ्ग्रहम्। स्थाविरं कल्पमाश्रित्य परदीक्षाविधिर्मतः॥१३१॥**

जिनकल्पिका हि भगवन्तो न सिंहव्याघ्रहस्त्यश्वरथराजादीनामपसृत्य मार्गमनुप्रयच्छन्ति भक्तं पन्थानं वा तृतीयपौरुष्यामनुसरन्ति शीनसहा नाग्निसेवां तथा यथा भवन्तो विलुप्तसंयमपरिणामाः सेवन्ते किन्तु मणिपतिराजर्षिरिव त्यक्तशरीरानुबन्धतया यदि परं सेवामकार्षुः पुस्तकादेरादिशब्दादायतनोपासकादेर्ग्रहस्तस्य न सङ्ग्रहमकार्षुः, स्थाविरं कल्पमाश्रित्य परदीक्षाविधिर्मतः। तथेत्यनुवर्तते तथा योयं परेषामनुग्रहाय दीक्षाविधिरयमपि स्थाविरं कल्पमाश्रित्य प्रवृत्तः तदुक्तौ वर्णपथानां कथमयं भवतां प्रवर्तत इति वाच्यम्। स्यादेतन्न वयं जिनकल्पिकाः किन्तु स्थविरकल्पिका एव न च तत्र वस्त्रादिसङ्ग्राहकं वचो यदाह, से अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमन्तं वा नेव सयं परिग्गहं परिगिण्हिज्जा इत्यादि, न खलु वस्त्राद्यल्पाद्यन्यतरन्न भवति इति तत्राह।

**न चाल्पं बहु वा न स्यात् कुण्डिकादि न चापरम्। धर्मोपकारितां नैति वृथा शुष्काभिमानिता॥१३२॥**

न च नैव अल्पं स्तोकं बहु वा प्रचुरं एकस्मिन्नपि पक्षे न पतति कुण्डिकादि भावत्कमिति। स्यादेतत् धर्मोपकरणमेतदित्याह न चापरं वस्त्रादिधर्मोपकारितां नैति न याति ततो वृथा निरर्था शुष्काभिमानिता शुष्का नीरसा मौढ्यापादनेनाभिमानिनो भावोऽभिमानितेति॥

**ततो विप्लव एवायं न सर्वज्ञस्य शासनम्। नन्वागमः स एवायं निश्चयस्तत्र केन वः॥१३३॥**

तत इत्युपसंहारवचनं हेतुवचनं वा यस्मादेवं ततो विप्लवो अनाभोगविजृम्भितमेवेति न सर्वज्ञमतगन्धोपीति। एत-

देवाह । न सर्वज्ञस्य शासनं न सर्वज्ञस्य भाषितमेतत्, इति क्षपणकपक्षमुपसंहृत्य पक्षान्तरेण परमतमाशङ्कते नन्वागमः स एवायं नन्विति परवचनमूवकं वचः आगमो यः परलोकविधौ प्रमाणीकृतः सर्वज्ञप्रणीतत्वेन स एवायमिति निश्चयस्तत्र वस्तुनि केन प्रमाणेन वो युष्माकमिति ॥

**प्रत्यक्षदृष्टसंवादाद्देशकालान्तरादिषु। सोयमित्यवसातव्यः किमिवात्र मुधा श्रमः॥१३४॥**

प्रत्यक्षेण दृष्टः प्रत्यक्षदृष्टः प्रत्यक्षदृष्टश्चासौ संवादश्च तस्मात् । केत्याह देशकालान्तरादिषु यथा द्विपलस्य मुद्गादेस्तक्रादिसंयोगे जीवसम्भूतिरेतावति क्षेत्र इत्युक्तमत्रागमे प्रत्यक्षेण च संवाद्येतदिति तथा भगवति निर्वाणं गते एतावता कालेन केवलज्ञानादिव्यवच्छेदो भविष्यत्येतदपि दृष्टसंवादि तथा चन्द्रार्कोपरागादि तदुक्तं संवादि ततो ज्ञायते सोयमित्यवसातव्योऽवसेय इति किमिवात्र मुधा निष्प्रयोजनः श्रम इति ॥

**सन्ति चानन्ददातारः सूरयो वीतकल्मषाः। अव्यवच्छिन्नसन्तानो यैरानीतोयमागमः॥१३५॥**

सन्तीति मध्यग्रहणादुभयप्रान्तग्रहः तेनाभूवन् भविष्यन्ति च आनन्दः कल्याणं दातुं शीलं येषां ते आनन्ददातारः वीतमपगतं कल्मषं येभ्यो येषां वा ते तथा वीतराग एवाव्यवच्छिन्नसन्तानः तथाहि वीरात्सुधर्मे ततोपि जम्बूनामनि ततोपि प्रभवे ततोपि शय्यम्भवे ततोपि यशोभद्रे ततोपि भद्रबाहौ ततोपि स्थूलभद्रे ततोपि सुहस्तिनि इत्यादि परम्परया यावदिदानीन्तनाः सूरयस्ततोपि क्रमेण यास्यति यावद्दुष्प्रसह इति ॥ यैरानीतो नयिष्यते च अयमुपलभ्यमान आगमस्ततः स एवायमिति

**वेदेपि तुल्यतामेति वितथानयने विधिः। तापादिशुद्धयो ह्युक्ताः सार्वेण निजभाषिते॥१३६॥**

वेदेपि मीमांसकानभीदमुच्यते । अपि शब्दान्नैयायिकाभ्युपगतागमग्रहः तुल्यतां समताम् एति गच्छति वितथानयने

विपरीतानयने विधिः प्रकारः। किञ्च तापादिशुद्धयो मुक्ताः तापच्छेदनाडनाकपरूप शुद्धयो यतोभिहिताः किन्तु कषताडनाच्छेदता-परूपतया क्रम इति ॥ यदुक्तम् । "तापाच्छेदान्निकषणात् सुवर्णमिव पण्डितैः। परीक्ष्य भिक्षवो ग्राह्यं मद्वचो न तु गौरवात् ॥" इति, अतः स्थितमेतद्वचनं प्रमाणमङ्गीकृत्य कर्त्तव्यं तत्त्वार्हत्प्रणीतमेवेति । अत्र सुगतसूनवः प्रतिपादयन्ति न खलु वाग्यभिमतत्वेन प्रमाण-मर्थं व्यवस्थापयति किन्तु साध्यादुत्पन्नतया साध्यं व्यवस्थापयतीति । तथाहि रूपालोकमनस्कारेन्द्रियादिसामग्रीत उत्पन्नं ज्ञानं प्रत्यक्षमर्थजन्यतया तमवस्थापयति । अनुमानमपि पारम्पर्येणार्थमनिबद्धं वह्नौ धूमो धूमे चाध्यक्षं तत्र च परोक्षार्थानु-मापकमनुमानमिति । प्रतिबन्धोपि तादात्म्यतदुत्पत्तिभ्यां न चापरोस्ति वास्तवो न च शब्दार्थयोरन्यतरसम्बन्धसम्भव इति कथं शब्दस्तदुत्थज्ञानं वा साक्षात्पारम्पर्येण वार्थं गमयिष्यत इति । सति चान्यतरसम्बन्धे अनुमान एवान्तर्भावान्न पृथक् प्रमाणान्तरमिति ॥

**बालाङ्गनादिसिद्धेपि शब्दार्थस्यावधारणे। कुधियो नाभिमन्यन्ते केन शब्दस्य मानता ॥१३७॥**

बालो डिम्भरूपः अङ्गना स्त्री आदिशब्दाद्गोपालादिपरिग्रह एते किलाव्युत्पन्नमतयस्तेषामपि सिद्धेपि शब्दार्थस्य घटादेरवधारणे निश्चये सति यदि नाम गवादिशब्देभ्यस्तेपि सास्नादिमत्पदार्थान् प्रतिपद्यन्ते अन्यथा शब्दोच्चारणवैयर्थ्यप्रसङ्गः कुधियो मन्दबुद्धयो विहस्यमाना अपि जनपुरतो बालादिसिद्धेपि मोहं गच्छन्तः कुधियो भवन्त्येव नाभिमन्यन्ते नाभ्युपग-च्छन्ति केन कारणेन शब्दमानतां जाड्यं विहाय नापरो हेतुरिति ॥

**वाच्यवाचकभावस्तु सम्बन्धोऽत्र परिस्फुटः। लिखितादर्थसंवित्तिर्न स्यादुच्छन्नकर्तृकात् ॥१३८॥**

वाच्यवाचकभावः नियतानुपूर्वीकः शब्दो नियताकारार्थप्रतिपादकः न खलु गोशब्दादुष्ट्रार्थप्रतिपत्तिरनुभूयते किन्तु

सास्नादिमानेवार्थः प्रतीयते अत एवंविधोऽर्थ एवंविधानुपूर्वीकस्य शब्दस्य वाच्यः शब्दो वाचकः अर्थस्तु वाच्यस्तयोर्भावो वाच्यवाचकभावः स एव सम्बन्धः। स एव न सिद्ध इति चेत्तदुत्पत्तिरपि चेतसोऽर्थेन कथम्, तद्भावे भावात्तदभावेऽभावादिति चेत्, अन्वयव्यतिरेकानुविधानमेवास्तु किं तदुत्पत्त्या, तां विना तदेव न सिद्ध्यतीति चेदितरेतराश्रयदोषः तदुत्पत्तिं विना नान्वयव्यतिरेकौ तौ विना न तदुत्पत्तिरिति। अन्वयव्यतिरेकानुविधानं च शब्दार्थप्रतिपत्तावपि समानमिति॥ तर्हि सति प्रामाण्येऽनुमानेऽन्तर्भाव इत्याह।

## नित्योपयोगतः शास्ता विकल्पातीत इष्यते। विवक्षाजन्यता तन्न तच्छब्दस्योपपद्यते॥१३९॥

इह अमनस्काः केवलिन इति वचनान्न मनोव्यापारो भगवतः किमिति नित्योपयोगात् सन्ततमुपयोगसद्भावात् न खलु मर्वादौ क्षारोदकाः कूपाः सर्वत्रापि तथेति प्रतिपत्तिः न खल्वेकः पुमान् विद्यापात्रं दृष्टः सर्वेणापि तादृशा भवितव्यमिति सिद्धम्। नहि व्याप्त्या हेतुफलभावो विवक्षाशब्दयोर्भवतोपि सिद्धो, गोत्रस्खलनादेरभावापत्तेः। न चान्यधर्मोऽन्यत्रासम्भवीति विरोधः कश्चित्, न छद्मस्थानां केवली भिन्नजातीयो न भवत्यन्यथातीन्द्रियार्थादर्शनप्रसङ्गः, साधितं चातीन्द्रियार्थदर्शित्वं साधयिष्यते च अतो न दृष्टव्यतिक्रमः, अतः सततोपयोगाद्धेतोः शास्ता भगवान् विकल्पातीत इष्यते, अत एव यदुच्यते समाधिबलसम्भूतज्ञानेन जानन् वचनकाले असमाधिस्थः प्राप्नोति तथाच तज्ज्ञानाभावादसर्वज्ञः स्याद्विवक्षा च विकल्पात्मिका विकल्पस्तु सम्भ्रान्ताज्ञानमतः सर्वज्ञो न वक्तेति तत्परस्य परसमयानभिज्ञतामापादयति ततोऽनभ्युपगमात्तद्दूषणमपास्तमिति, इष्यते इत्यनेन तु परस्यानभ्युपगतोपालम्भदानमावेदयति न पुनर्ज्ञातव्यमिष्टिमात्रमेतन्न वस्तुस्थितिरिति छाद्मस्थिकधर्मातीतत्वेन वस्तुस्थितेरविरोधादिति। विवक्षाजन्यता तत्तस्मान्नेति नैव तच्छब्दस्य तस्य भगवतः शब्दः तच्छब्दः तस्योपपद्यते घटत इति। ततः शब्दो न विवक्षाकार्यमतो न कार्यहेतावतरतीति॥ स्वभावहेतुर्भविष्यतीत्याह।

**घटादिरूपताया तु मुखभङ्गादिसम्भवः। नैव चानुपलम्भोपि विधेरपि च साधनात् ॥१४०॥**

यदि हि शब्दार्थयोस्तादात्म्यं स्यात् तदा स्वभावहेतावबतारः स्यान्न चैवम्, यतः शब्दोचारकाले मुखभङ्गादिसम्भवः घटशब्दस्य घटात्मकत्वान्मुखे न मायात्तथाच मुखभङ्गमसङ्गः। आदिग्रहणादग्निशब्दाद्दाहो जलशब्दात् क्लेदः खड्गशब्दाच्छेदप्रसङ्गः तन्न स्वभावहेतुरपि शब्दः। न चानुपलम्भो भविष्यतीनि वाच्यमित्याह। नैवानुपलम्भोपि शब्दोऽनुपलम्भस्याभावसाधकत्वात् यदाह अत्र द्वौ विधिसाधनावेकः प्रतिषेधहेतुरिति ॥ भवत्वेवं को दोष इति चेदाह विधेरपि च साधनात्, न खलु शब्दादभाव एव प्रतीयते किन्तु विधेरपि च साधनाच्छब्देनेति। किञ्च चतुर्द्धानुपलम्भः स्वभावानुपलम्भः कारणानुपलम्भो व्यापकानुपलम्भो विरुद्धविधिश्चेति, ततो न स्वभावानुपलम्भादिष्ववतारः ॥ कथमित्याह।

**न चैकज्ञानसंसर्गस्तस्य केन चिदस्ति वः। निश्चितो न विरोधोपि प्रत्यक्षानुपलम्भतः ॥१४१॥**

एकज्ञानसंसर्गी शब्देन सह न कोप्यर्थो घटादिः तन्न तदनुपलम्भादभावः वाच्यतां मुक्त्वा। नापि विरुद्धः, केन सह विरोधस्तस्य यस्याभावं साधयति वाच्यतां मुक्त्वा ॥

**कारणानुपलम्भोपि व्यापकानुपलम्भनम्। न शब्दो विधिरूपेण ततोऽर्थप्रतिपत्तितः॥१४२॥**

न शब्दः कारणानुपलम्भरूपः साक्षादुपलभ्यमानत्वेन प्रतीतेः कस्य वा कार्यस्याभावं साधयति तज्जन्यार्थज्ञानस्य चेन्न ततोऽर्थप्रतीतितः विज्ञानाभावे च तदसम्भवादिति, एतदेव व्यापकानुपलम्भेपि वाच्यं कस्य वा शब्दो व्यापक इति, तस्मान्नानुमानेऽन्तर्भावः शब्दस्य, उक्तलिङ्गव्यतिरेकेण सौगतैर्लिङ्गान्तरस्यानिष्टेरिति ॥ ननु शाब्दः प्रत्ययो भ्रान्तो दृष्टेपि विसंवाददर्शनाद्यथा नद्यास्तीरे गुडशकटं पर्यस्तं धावत डिम्भकाः इत्यादौ तत्कथमस्य प्रामाण्यमित्याह।

**मरीचिकाजलज्ञानं भ्रान्तं सर्वमपीदृशम्। हेत्वाभासजविज्ञानं भ्रान्तं सर्वं तु तादृशम् ॥१४३॥**

मरीचिका ग्रीष्मोष्माक्रान्ताया भुव ऊर्द्धयायी बाष्पविशेषो जलभ्रान्तिनिमित्ततां प्रतिपद्यमानो मरीचिका उच्यते इति तासु जलज्ञानमसत्यपि जले जायमानं भ्रान्तं भवति तत्किं सर्वमविशेषेण चक्षुरादिप्रभवं भ्रान्तमस्तु तथा हेत्वाभासाज्जातं ज्ञानं भ्रान्तं भवति किं सर्वमपि तुरिति प्रश्नार्थे तादृशं भ्रान्तमित्यर्थः सर्वं लिङ्गजं विज्ञानमेवं भ्रान्तं प्राप्नोति भवत इत्यर्थः यथाच विशुद्धचक्षुरादिसामग्रीतो जायमानं ज्ञानं प्रमाणं स्वसाध्याविनाभूतलिङ्गात्सुनिश्चितादुपजायमानं प्रमाणं ज्ञानमेवमिहापि सुनिश्चितात्प्रणीतशब्दादुपजायमानं ज्ञानं प्रमाणमस्तु न कश्चिद्विशेष इति ॥ एतदेव युक्तिगर्भमाह ।

**एकत्र दृष्टसंवादमक्षजाद्यविगानतः । प्रमाणमेवमत्रापि साध्यः संवाद एव हि ॥१४४॥**

एकत्र कुत्रचिदन्यार्थमुपसर्पता जलं दृष्टं गतेन च प्राप्तं ततस्तेनान्यार्थमुपसर्पता ज्ञानसामग्र्या विशुद्धत्वमवसितं ततोऽन्यदाऽन्यत्र यज्ज्ञानमुपजायते तत्संवादात् प्रागपि प्रमाणतया निश्चिनोत्यन्यथा न क्वचित्प्रवृत्तिः स्यादेवमत्राप्यनुमानेऽप्येवमन्वयादिशुद्धिं निश्चित्यान्यदाऽविगानेन प्रामाण्यं व्यवस्थापयति एवमत्रापि शाब्देऽपि साध्यस्तदुक्त एकत्र संवाद एव हि यस्मात्स चेत्सिद्धः सर्वत्राप्यविगानेन प्रमाणमेष्टव्यमिति ॥ स एव आगमे संवादो दुर्लभ इत्याह ।

**सूर्योपरागमुष्ट्यादौ दृष्टसंवाद एकदा । सर्वत्राप्यविगानेन प्रामाण्यं प्रतिपद्यते ॥ १४५ ॥**

सूर्योपरागश्च मुष्टिश्च तावादी यस्य स तथा सूर्योपरागादौ मुष्ट्यादावित्यर्थः ॥ सूर्यचन्द्रोपरागादि आदिशब्दात् ग्रहभेदयुद्धवातोल्कापातादिग्रहस्तसिन्वायव्यमण्डलादिक्रमेण यत्फलाफलमुद्दिष्टं भद्रबाहोः चन्द्रप्रज्ञप्तिसूर्यप्रज्ञप्त्यादौ तद्दृष्टसंवादं यस्य तस्य सर्वत्राविगानेन प्रामाण्यनिश्चयं को वारयति । तथा मुष्ट्यादौ आदिशब्दान्नष्टसङ्ख्याभूभागलाभालाभ-

चिन्तालूकादि यदुक्तं चूडामण्यादौ तत्र संवादस्य सर्वत्राविगानेन तदुक्ते संवादनिश्चयं को वारयति तस्मादादौ साध्यः संवादः स च दर्शित एवेति प्रमाणमेव शाब्दमिति ॥ ननु परस्मादधिगम्योपदिशतोपि संवाददर्शनादखिलज्ञप्रणीतोयं कुतोवसीयतेऽन्यथा वराहमिहिरादेरपि सर्वज्ञतापत्तेरित्याह ।

**अखिलातीन्द्रियज्ञानः पुरस्तादुपपादितः। आयातोऽच्छिन्नसन्तानः तत्प्रणीतोऽयमागमः॥१४६॥**

अखिलं परिपूर्णं समग्रं सर्वमित्यर्थः अखिलं च तदतीन्द्रियमिन्द्रियातीतं च अखिलातीन्द्रियं तद्विषयं ज्ञानं यस्यास्ति, अर्शआदिपाठादच् । अथवा अखिले अतीन्द्रिये ज्ञानं यस्येति बहुव्रीहिः, पुरस्ताद्योगिज्ञानरूपप्रत्यक्षप्रस्तावे उपपादितः युक्त्या प्रतिपादितः आयातोच्छिन्नसन्तानोऽविनष्टप्रवाहस्तत्प्रणीतोयमुपलभ्यमान आगमः सिद्धान्तः एतदपि उपपादितं सन्ति चानन्देत्यादिना, अतीन्द्रियज्ञानं च तदावरणक्षये तत्र च यथैकत्र तथा सर्वत्रापि आवरणक्षयस्य सर्वेषु तुल्यत्वात् यदाह ॥ "घटायोन्मीलितं चक्षुः पटं नहि न बुध्यत" इति ॥ तेन यदुक्तं कुमारिलेन धर्मज्ञत्वनिषेध एवास्माभिः क्रियते सर्वमन्यद्विजानानो न वार्यते सर्वशब्दोपि प्रकृतापेक्षः यदि तथापि तज्ज्ञो न वार्यते यदि च सर्वशब्दं जानातीति तथापि न वार्यते तथा षड्भिः प्रमाणैः षट्प्रमेयविवेकवित् सोपि न वार्यत इत्याद्याघटितं तत्सर्वं परसिद्धान्तानभिज्ञतयेति स्थितम् ॥ ननु संवादः साध्य इत्युक्तं संवादेनापि संवादः पुनर्मृग्यस्तथैव हीति ते दूषणं तदवस्थमेवेति तत्राह ।

**संवादादुत्तरं ज्ञानं कमर्थं पोषयिष्यति । सर्वज्ञः केन वोऽभीष्टस्तद्वचश्चेन्न ते प्रमा॥१४७॥**

संवादो हि अर्थक्रियावाप्तिज्ञानं ततो वाञ्छितार्थसिद्धेः किमपरज्ञानेन यत्र हि सन्देहस्तत्र साशङ्कास्तदर्थिनः संवादादिनिमित्तान्तरमपेक्षन्ते अर्थक्रियासिद्धौ तत्रापरं ज्ञानं कमर्थं पोषयिष्यति न कश्चिदित्यर्थः ॥ अथैकत्र संवादेपि वचना-

न्तरे न ज्ञायते का गतिरिति तर्हि प्रत्यक्षादावपि कथं निश्चय इत्युक्तमेव । अथवा यद्यदाचारादावभिहितं तत्तदविसंवादि यथा नष्टमुष्टिलूकाचिन्तादिवचनं आचाराद्यन्तर्गतं च दानादेः स्वर्गादिप्रतिपादकवचनमिति न खलु सर्वज्ञप्रणीते एकत्र संवादोऽन्यत्र विसंवादो, निबन्धनाभावादिति ॥ अथ भिक्षुभिः संवादश्चोद्यते तत्रोच्यते युष्माभिरपि न संवादे ज्ञानान्तरमिष्यते निष्फलत्वादनवस्थापत्तेश्च, किञ्च सर्वज्ञः केन कारणेन वो युष्माकं अभीष्टो विस्तरेण तत्साधनाभिधानादभीष्टत्वं गम्यते यदि तद्वचो न प्रमाणं किं तेनेति ॥

वैभाषिकादिना सार्द्धं विवादोऽप्यागमाश्रितः । तस्याप्रमाणतायां तु न युक्तः किं मुधा श्रमः ॥१४८॥

वैभाषिकाः शाक्यपुत्रीयविशेषाः आदिशब्दात्सौत्रान्तिकाणां योगाचारैः माध्यमिकैरितरेतरयोरन्योन्यं विवादो विप्रतिपत्तिरपरस्यापरेण सार्द्धमागमाश्रितः भारं वो भिक्षवो दर्शयिष्याम इत्यादाविति । कथमित्याह । तस्यागमस्य अप्रमाणतायां तुरवधारणार्थोऽप्रमाणतायामेव संविवादो न युक्तो नोचितः । किं मुधा श्रमः केन कारणेन निष्फलायासोऽभ्युपगतो विवादलक्षण इति ॥

द्वयं प्रतीत्य विज्ञानं तायिना कथितं कथम् । वैभाषिकैः समाख्याते योगाचारैः किमुच्यते ॥१४९॥

द्वयमतीतमनागतं च तमाश्रित्य यज्ज्ञानं वर्त्तमानमात्रे परोपि मन्यत इति द्वयग्रहणं, न च वर्त्तमानमात्रग्रहणे सर्वज्ञत्वं न भगवतो युक्तं तथा च कथं विजानीत रुचो(?)पवर्णनं कृतमहमासीद्व्रज इत्यादिना अतो द्वयमाश्रित्य यज्ज्ञानन्तायिना भगवता कथितं कथं तन्नीयत इति शेषः ॥ एवं वैभाषिकैः समाख्यातेऽभिहिते योगाचारैः किमुच्यते केन कारणेन तैरिदमिति शेषः उच्यते कथ्यते इति ॥ किं तदाह ।

**उच्छेददृष्टिनाशाय नैवं शास्त्रा प्रकाशितम्। अन्यथा शून्यतासूत्रे कथं नीयेत देशना ॥१५०॥**

उच्छेदे दृष्टिरुच्छेददृष्टिस्तस्यानाशस्तस्मायेति मा मुग्धमतयो नास्तिका भवन्त्वित्यर्थः । यदि हि उच्छेदमात्रमेवाभविष्यत्तदा न कोपि कुत्रचिद्धर्मानुष्ठाने प्रावर्तिष्यत ततो नैवं शास्त्राभिनाऽनुशासकेन प्रकाशितं पूर्वापरत्रुटितवर्त्तमानमात्रमेवावशिष्यत इति । कथमेतदेवं विज्ञायते इत्याह । अन्यथा शून्यतासूत्रे देशना नीयते कथमिति, आह नित्यस्यार्थक्रियाविरोधात् क्षणिकतोक्ता भावानां तस्यां परिस्थितायाम्, निरालम्बनाः प्रत्ययाः प्रत्ययत्वात् स्वप्नप्रत्ययवदित्यादिना बहिरर्थनिरासेन ज्ञानमात्रावशेषोभिहितः तच्च ज्ञानं स्वसंविदितमपि क्षणमात्रावस्थायि तथा घटनाप्रत्ययस्य चानेकक्षणावस्थितस्यासम्भवात् ज्ञानमात्रप्रतिभासरूपोप्ययं व्यवहारो भ्रान्त इति शून्यतामात्रमेवावशिष्यत इति अतस्तत्र शून्यतासूत्रे कथं नीयेत तद्देशना न कथञ्चिदित्यर्थः तस्मादागमप्रामाण्ये सत्येवं युक्तमिति ॥

**वचसां प्रतिबन्धो वा को बाह्येष्वस्ति वस्तुषु। वाच्यवाचकभावोऽयं सम्बन्धोत्र परिस्फुटः॥१५१॥**

अत्र पुनः परः प्रेरयति न खल्वसम्बन्धादर्थेन वाक्यादर्थप्रतिपत्तिर्युक्ता, एकस्मादपि शब्दादशेषार्थप्रतिपत्तिप्रसङ्गात् । अथ सम्बन्धोस्ति शब्दार्थयोस्तदयुक्तं तादात्म्यतदुत्पत्तिलक्षणसम्बन्धस्य त्वयैव निषिद्धत्वादित्याह । वचसां शब्दानां सम्बन्धो वा शब्दो ह्युपगमसूचकस्तावत्सम्बन्धो नास्ति यत्त्वभ्युपगच्छसि कोसाविति वाच्यं बाह्येषु घटादिषु बाह्यग्रहणाद्विवक्षायामस्तीति सूचयति वस्तुग्रहणाद्वस्तुप्रतिबिम्बेपि वास्तवो नास्तीति दर्शयति सूरिराह । वाच्यवाचकभावोऽयं सम्बन्धोऽत्र परिस्फुटः । दर्शितं चैतत्पुरस्तात्सुपरिस्फुटो वास्तवो न परिकल्पनाशिल्पिसङ्घटित इति ॥ वास्तवसम्बन्धे कथं व्यभिचारो व्यभिचारे वा कथं वास्तवसम्बन्ध इत्याह ।

**व्यभिचारस्तथाध्यक्षे दृष्टस्तन्मानमस्तु किम्। तादात्म्यं नैव चार्थेन युज्यतेऽध्यक्षचेतसः॥१५२॥**

व्यभिचारोऽर्थं विनापि भावात्तथा तद्वन्मरीचिकाज्ञानादाविव अध्यक्षे चक्षुरादिज्ञाने दृष्टोऽनेकधोपलब्धः तदध्यक्षं दृष्टव्यभिचारं मानमस्तु प्रमाणं भवतु किमिति काका पृच्छति। स्यादेतद्यत्तेन सम्बद्धं तन्न व्यभिचरति यथा सत्यजलावभासि यत्न प्रतिबद्धं तद्व्यभिचरति यथा मरीचिकाज्ञानमिति, नैतदेवम्, यतः तादात्म्यं नैव चेति चकारान्नापि तत्कारणैश्चक्षुरादिभिः अर्थेन वाच्येन युज्यते घटत इति॥ किमित्येवमित्याह।

**ज्ञानस्य जननायोगादर्थस्य ज्ञानताप्तितः। विरुद्धधर्मयोगे च भेद एवानुषज्यते ॥१५३॥**

यदि हि प्रत्यक्षचेतसो घटेन सह तादात्म्यं स्यात् ज्ञानस्य जडता स्यात् घटेन जडात्मनाऽभेदादन्यथा भेद एव स्याद्विरुद्धधर्मस्य तल्लक्षणत्वात्॥ अथवा घटादेरर्थस्य ज्ञानता स्यात्तद्व्यतिरेकादन्यथा भेद एव स्यादिति॥ स्यादेतज्ज्ञानस्य जडता कैश्चिदिष्यत एव तेषामबाधकमेतदिति॥

**ज्ञानस्य जडतायोगे जगदन्धं प्रसज्यते। घटान्नहि पटे ज्ञप्तिरनवस्थापि किं न वः ॥१५४॥**

ज्ञानस्य जडतायोगे घटेन सह तादात्म्यादविभागावस्थानादिति प्रक्रमायातम्, जगद्विश्वं जगज्ज्ञेयं चराचरमिति वचनादन्धं दृशि विकलम्, यदि हि चक्षुरादिकरणप्रवर्तितज्ञानं जडं तदा रूपाद्यर्थानुपलब्धेः जगदन्धमित्युपलक्षणं मत्तसुप्तमूर्छितादप्यधमतमं स्यादिति प्रसज्यत इत्यनेन प्रसङ्गापादनमाह। स्यादेतज्जडमपि ज्ञानमर्थं प्रकाशयति विचित्रशक्तीनि हि वस्तूनि यद्येवं घटात्पटेज्ञप्तिरनुषज्यत इति शेषः। प्रतिनियतशक्तित्वमत्रापि शक्यमुद्घोषयितुमिति। स्यादेतज्ज्ञानं ज्ञानान्तरेणाधिगतं घटादिप्रकाशकमिष्टं न तु घटो घटान्तरेण प्रकाश्यत इति आह च। उत्पन्ना मे बुद्धिर्यस्मादर्थः प्रतिभातीति।

अत्राह । अनवस्थापि किं न वः । तदपि ज्ञानं ज्ञानान्तरेणाधिगतं ज्ञानं प्रकाशयिष्यति तदप्येवमेवं चानवस्था, अर्थापत्तिसमधिगम्यं ज्ञानं ननु सापि यदि ज्ञानं तदन्तरेण ज्ञेया सैवानवस्था यदुक्तमर्थस्य ज्ञानताप्तिः ॥ तत्राभीष्टज्ञानसाधनमेव योगाचाराणामित्याह ।

**पूर्वापरविवेकेन वर्त्तमानक्षणं मनः । सत्यं संवेदनात्सिद्धं सन्ततिस्तु कथं नु वः ॥१५५॥**

पूर्वापरयोर्विनष्टानुत्पन्नत्वेन असत्त्वाताभ्यां विवेकः सिद्ध एव तेन हेतुभूतेन वर्त्तमानक्षणं मनो ज्ञानं तच्च सत्यमेतत्संवेदनात्सिद्धम् किन्तु सन्ततिः क्षणपरम्परा कथं नु केन प्रकारेण नुरिति वितर्कयामि । तथाचैकसन्ततिपतितपूर्वोत्तरक्षणयोर्हेतुफलभावे स्वकृतफलभोगो न बाध्यत इति व्याहतमामज्येत पूर्वोत्तरयोः सत्तासाधकाभावात् । अतीतानुत्पन्नयोः संवेदनाविषयत्वात् तत्काले तदस्तु घटनाप्रसयं विना सा न सिद्ध्यतीति ।

**संवित्त्या सिद्ध्यतां कल्पः सोऽनेकाक्षरसङ्गतः। एकस्यानेकता नेति घटनेह कथं नु वः॥१५६॥**

संवित्त्या संवेदनेन सिद्ध्यतां निश्चीयतां कल्पो विकल्पः, उपसर्गा हि धात्वर्थस्य द्योतका न चासतोऽर्थस्य द्योतनं युक्तं तेन कल्पो विकल्प एक एवार्थः । किन्तु सोऽनेकाक्षरसङ्गतः स विकल्पोऽन्तर्जल्पात्मकत्वात् क्रमभाव्यनेकाक्षरसङ्गतस्तद्भेदितया अनेकवर्णात्मक इत्यर्थः । ततश्च तस्य क्रमभाविवर्णाभिन्नत्वादनेकत्वे कथं घटनेति । अथैकोऽभ्युपगम्यते विकल्पस्तथाच एकस्यानेकता नेति एकस्य सतो वर्णभेदायाता अनेकता नेति न सिद्ध्यतीति घटना पूर्वोत्तरयोस्तद्वशेन संयोजना इहेत्यपिशब्दलोपो द्रष्टव्यः इहापि जन्मनि स्वयं निहितप्रत्युन्मार्गणा अनुभूतेऽभिलाषोऽनुस्मरणं पूर्वदृष्टे प्रत्यभिज्ञानं स एवाहं सोयं मदीयो हेतुफलतागतिः एतत् क्षणिकत्वेपि अनुसन्धिप्रत्ययाधीनं युष्माभिरिष्टम् । लुप्तापिशब्दात् परत्रापि सोहमित्यनुस-

न्धिप्रसयादेकत्वमभिसन्धाय प्रवर्त्तते प्रेक्षावान् तदपि कथं वो युष्माकमिति एतच्च ज्ञानार्थवादयोस्तुल्यम् ॥ ज्ञानपक्षमाश्रित्याह।

**परसंविन्न संवित्त्या सिध्यतीति कथं नु सा। सन्तानान्तरसिद्धिर्वः केन केन विवादिता॥१५७॥**

परेषां संवित्परसंवित्सा संवित्त्या स्वकीयज्ञानेन न सिध्यति चक्षुरादिधियां नीलादिप्रतिभासितया संवेदनान्न च परसंविदेवंविधा येन सा तत्र प्रतिभासेत प्रतिभासे वा सर्वस्यापि सर्वज्ञतापत्तेः सन्निहितेतरभावस्य तत्रानुपपन्नत्वात्, न च ग्राह्यग्राहकभावो ज्ञानवादे सिद्धस्तत्र हि ग्राहकमेव न ग्राह्यमिति, सन्तानान्तरसिद्धिः केन प्रमाणेनेति शेषः ॥ तथा केन वो युष्माकं प्रतिवादिना सह विवादिता उपलक्षणत्वात् स्थेयदण्डधरादयो के न केचिदित्यर्थः तन्नाध्यक्षस्य तादात्म्यलक्षणः सम्बन्धोऽर्थेनेति स्थितम् ॥ स्यादेतत्तदुत्पत्तिलक्षणः सम्बन्धो भविष्यतीत्याह ।

**तदुत्पत्तिस्ततोऽन्यस्मान्नातः पूर्वमसत्त्वतः। सत्ताकाले च नोत्पत्तिर्नान्यतो विषयत्वतः॥१५८॥**

तस्मादुत्पत्तिरस्य सोयं सम्बन्ध उच्यते सम्बन्धस्तु सामर्थ्यलभ्य उत्पाद्योत्पादकयोरविनाभावलक्षण इति ॥ अथवा तदुत्पत्तिरुत्पादः सम्बन्धः। कार्यस्येति सामर्थ्यलभ्यम्। तदुत्पत्तिस्ततो ज्ञानकाले विद्यमानादन्यस्मात् पूर्वोत्तररूपात् समानकालयोः हेतुफलभावानिष्टेर्युष्माभिरपि, यदाह यत्सद्भावे भवति यदभावे न भवति तत्तस्य कार्यमितरच्च कारणमिति। स्यादेतन्न खलु व्यापारवत्कारणमिष्यते किन्तु सत्तामात्रेण ततः को विशेषः पूर्वः समान उत्तरो वा हेतुरिति तेन समानकालोऽपि हेतुर्भवतु न काचित् क्षतिरत्राह। नातः अन्योन्यं तदापत्तेः ततो धूमादग्निरेव नाग्नेर्धूमो गम्यत इति न स्यात्। यदपि कैश्चिद्भावि कारणमिष्यते कारणं हि निमित्तं स्वर्गादिनिमित्तमादाय दानादौ प्रवृत्तिरिति। अत्राह। पूर्वमसत्त्वतः। नेति सम्बन्धः न पूर्वं कार्यमिति प्रक्रमाद्गम्यते। कुतः असत्त्वतः कारणस्येति शेषः एवं निर्निमित्तं कार्यं स्यात्। सत्तामात्रेण

हेतुफलभावे विश्वं विश्वस्य हेतुः फलं च स्याद्नियतमनियतस्य गम्यं गमकं चापद्येत । स्यादेतत्सन्नेव हेतुरिति आह । सत्ताकाले च हेतोः सत्ताकाले नोत्पत्तिः कार्यस्येति शेषः क्रमभावित्वात् । यद्येवं हेतुफलभावो व्यवच्छिन्न एव प्रकारान्तराभावादिति आह । नान्यतो विषयत्वतः क्षणभङ्गिनि भावे नायं प्रक्रमो नान्यतः परिणामिनो हेतोः हेतुफलयोरभावः किन्तु तत्र प्रयुज्यते । एवं कथमित्याह । विषय इति वचनात् पूर्वस्य हेतुभावे कार्यकाले तस्य नाशे निर्विषयमक्षमासक्तमिति ॥ अथ न खलु अयोगोलकसन्दंशवद्ग्राह्यग्राहकभावोऽभीष्टः किन्तु तदाकारतयोत्पत्तिरेव स चातीतेपि न दुष्यतीत्याह ।

**तदाकारतयोत्पत्तिः सर्वथा जडता न किम् । एकदेशो निरंशस्य नेति व्यालूनमीदृशम् ॥१५९॥**

तदाकारतया तस्यार्थस्याकारतयोत्पत्तिः सर्वथा सर्वात्मना तदाकारतया जडता अचिद्रूपता न किं केन कारणेन जडताऽध्यक्षचेतसो नेति एकविषयत्वतः तस्यैवावस्थितस्य जनकस्य विषयत्वादिति भवतां मतेन न कारणम् । देशेन तदाकारतेत्याह एकदेशो निरंशस्य नेति निरंशं वस्तु भवन्मतेन न चास्मिन्नेकदेशसम्भव इति व्यालूनं व्याहतमीदृशं एवंविधं वचनमिति तत्कोयं सम्बन्धोऽध्यक्षस्यार्थेन सहेति ॥ किञ्च

**अर्थाभावे भवच्चेतः कथं स्यात्तन्निमित्तकम् । शक्तिभेदोपि भावेषु देशकालादितो भवेत् ॥१६०॥**

अर्थस्य नीलादेरभावेपि स्वप्नादौ भवज्जायमानं चेतो विज्ञानं रूपाद्यालम्बनं कथं केन प्रकारेण स्याद्भवेत् तन्निमित्तकमर्थनिमित्तं ' स्यादेतदेकदा दृष्टसंवादोऽन्यदापि कारणशुद्धत्वमवसाय अर्थजन्यतामवस्यतीत्याह । शक्तिभेदोपि सामर्थ्यभेदोपि अपि[illegible]भेदोपि भावेषु पदार्थेषु देशभेदाद्यथा खर्जूरीणां नागवल्लीनां वा अन्यथा च रूपरसादयः ॥ कालकृतोपि नियतकालमशोकादीनां पुष्पादिदानादिति । एवं चाक्षजविज्ञानेपि सन्देह इति ॥

रूपादिचेतसोऽवश्यमर्थसम्बन्ध इष्यते। शब्देप्येवमनिष्टौ वा निमित्तमभिधीयताम् ॥१६१॥

अ... से हे पर रूपादिचेतसो रूपाद्यालम्बनविज्ञानस्य कश्चिदर्थसम्बन्ध इष्यते अन्यथा व्यवहारोच्छेद एव स्यात् यद्येवं शब्देप्येवमस्त्विति शेषः। अथ नेष्यते शब्दार्थयोः सम्बन्धस्तर्हि निमित्तं कारणमभिधीयतां प्रतिपाद्यताम् ॥

अर्थं विनापि शब्दस्य जायमानस्य दर्शनात्। व्यभिचारनिमित्तस्य प्रामाण्यं किं मुधा ननु ॥१६२॥

किमत्रोच्यते निमित्तं स्पष्टमपि यत्रोपलभ्यते भवता नीलाद्यर्थं विनापि अपिशब्दात् सन्दिग्धे वार्थे जायमानस्य उत्पद्यमानस्य दर्शनादुदात्तादिभेदैः समतया प्रतीतेः। एवं च व्यभिचारनिमित्तस्य विप्रलम्भनिबन्धनस्य शब्दस्य प्रामाण्यं प्रमाणता किं केन कारणेन मुधा निष्फलं नन्वित्यक्षमायामिति ॥

मरीचिकादिविज्ञानविवेकादन्यचेतसः। सम्बन्धोऽभ्युपगन्तव्यो न प्रमाणमदोऽन्यथा ॥१६३॥

मरीचिका आदिर्येषां द्विचन्द्रदर्शनादीनां तानि तथा तेषु विज्ञानं मरीचिकादिविज्ञानं तस्माद्विवेको भेदस्तस्मात्तत्परिहृत्येत्यर्थः। अन्यचेतसः सत्यजलादिचेतसो अध्यक्षस्य सम्बन्धोऽविनाभावनिमित्तमभ्युपगन्तव्योऽभ्युपेयः। किमित्याह। न प्रमाणमदोऽन्यथा, अन्यथा सम्बन्धानभ्युपगमे न प्रमाणमदोऽध्यक्षमिति ॥

अनुमानं च तत्पूर्वं तद्विना न प्रवर्त्तते। अन्योन्याश्रयदोषोपि स्वातन्त्र्ये वाऽनवस्थितिः ॥१६४॥

अनुमानं पुनस्तत्पूर्वमध्यक्षानुपलम्भपूर्वत्वात्साध्यसाधनसम्बन्धग्रहणस्य, साध्यधर्मिणि साधनप्रतीतिरपि तन्निबन्धना नचाप्रतीतान्वयो धर्मिणि वा अप्रतीतो हेतुः साध्यसिद्धये अतस्तदभावे नानुमानमपीति। स्वतन्त्रमनुमानमिति चेदाह।

स्वातन्त्र्ये वान्योन्याश्रयः, सम्बन्धेऽसिद्धेनुमानासिद्धिस्ततस्तत्सिद्धावनुमानसिद्धिरिति । अथानुमानान्तरात्सम्बन्धसिद्धिरिष्यते तदप्यनुमानान्तरं सिद्धव्याप्तिकं तत्रापि व्याप्तिरन्यत इत्यनवस्था यथा च व्यवहारानुपपत्तितोऽर्थेनाध्यक्षस्यावश्यं सम्बन्धोऽभ्युपगन्तव्यस्तथातीन्द्रियार्थविषयप्रवृत्त्यन्यथानुपपत्त्या शब्देपि प्रामाण्यमेष्टव्यमेवेति ॥ परः पुनराह ।

**अथ स्वलक्षणं जातिस्तद्योगो जातिमांस्तथा। बुद्ध्याकारो न शब्दार्थो घटामञ्चति तत्त्वतः॥१६५॥**

सङ्केतवशात् शब्दा अर्थं प्रतिपादयन्ति सङ्केतोपि व्यवहारार्थं स्वलक्षणं च वर्त्तमानक्षणभावि तत्तावद्दर्शनकाले अपि न सम्भवति कारणत्वात्तस्य तत्प्रागभाविकं तत्कथं शब्दोच्चारणकाले स्यात् यच्च सङ्केतकालेपि न स्थितिमत्तत्कुतो व्यवहारकालानुयायि तत्कथं शब्देनाभिधीयत इति । जातेस्तु सामान्यपरीक्षायां निषिद्धत्वात्कथमसती शब्दार्थः । किञ्चार्थक्रियार्थी शब्दार्थमवधारयति न चार्थक्रियायां जातिरुपयुज्यते । किञ्च तस्याः परैर्नित्यत्वेन विभुत्वेन चेष्टत्वान्न देशकालकृतो व्यतिरेकः सम्भवति अतः सर्वशब्दसाधारणत्वात् सर्वेप्यन्योन्यं पर्यायाः स्युः तन्न सोपि शब्दार्थः । तद्योगस्तयोः स्वलक्षणजात्योर्योगः सम्बन्धः स च समवाय एव सम्भवति तस्य च समवायपरीक्षायामेव निरस्तत्वाद्भावेपि तस्यार्थक्रियायामनुपयोगात् व्यापकत्वान्नित्यत्वात्स एव व्यतिरेकाभावस्तत्र एतावद्दोषदुष्टत्वान्नासावपि शब्दार्थः। जातेरभावे जातिमान्न सम्भवतीति न च स्वलक्षणातिरेकिणी काचिद्व्यक्तिः, तत्र चोक्तं बुद्ध्याकारोपि नार्थक्रियाकारी नापि बुध्यन्तरानुयायी नाप्यर्थानुयायी न तत्रापि सङ्केतक्रिया तत्त्वत इति भ्रान्तस्य शब्दव्यवहारस्यास्माभिरभीष्टत्वादिति ॥ अत्राह सूरिः ॥

**उच्यते शब्दतो नार्थप्रतिपत्तिरभविष्यत्। यदि तस्यार्थसम्बन्धो न कश्चिदपि विद्यते॥१६६॥**

उच्यतेऽत्र समाधिः शब्दतः शब्दान्नार्थप्रतिपत्तिर्नैवार्थस्य वाच्यस्य प्रतीतिः प्रतिपत्तिरभविष्यदुदपत्स्यत् यदि तस्य

शब्दस्यार्थेन सह न सम्बन्धः स्यात् कश्चिदर्थसम्बन्धो न विद्यते न कोपि सम्भवतीति अस्ति च ततोऽर्थप्रतीतिः कथमन्यथा त्वयैवैतत्प्रतिपादितमस्मात्प्रतीति ॥ स्यादेतत्तत्त्वत इत्युक्तं तेन भ्रान्तोऽभ्युपगम्यत एवेत्याह ॥

भ्रान्तं यद्यनुमानं च प्रमाणं किं मुधा श्रमः। सारूप्यादर्थसंवादि प्रत्यक्षं च त्वयेष्यते॥१६७॥

भ्रान्तं स्वप्रतिभासे अनर्थे अर्थाध्यवसायेन प्रवृत्तेर्भ्रान्तमनुमानं तथा प्रमाणं त्वयेष्यते अत्रापि तथाभावः किं त्वया नेष्यत इति, सारूप्यात्तत्सदृशतयोत्पत्तेर्नियतेनार्थेन संवाद्यविनाभावि प्रत्यक्षमक्षज्ञानं त्वयेष्यते प्रमाणमिति वर्त्तते सारूप्यं चाप्रमाणाभिमतेप्यस्तीति ॥

स्वलक्षणाद्यभावेन वाच्यं किं वा व्यवस्थितम्। अन्यथा व्यर्थमेवेदं सर्वमारटितं त्वया॥१६८॥

तत्र स्वलक्षणं जातिस्तद्योगोजातिमांस्तथेत्याद्यावेदयता स्वलक्षणाद्यभावेन शब्दाभिधेयतया वाच्यं वो युष्माकं किं व्यवस्थितं सम्मतं शब्देनार्थमस्मान् प्रति प्रतिपादयताम्, अन्यथा यदि न किञ्चिद्वाच्यमस्ति व्यर्थमेव निष्फलमेवेदं स्वलक्षणादिशब्दाभिधेयं न भवतीति सर्वमा प्रबन्धादारटितं प्रलपितमित्यर्थः। स्यादेतदपोहः शब्दार्थः भवतु किन्तु अर्थप्रतिपत्त्या प्रयोजनं सा चेदस्ति तावता प्रामाण्यं सिद्धं किं नः परेणेति किञ्च कोयमपोहो नाम अन्यस्य विजातीयस्यापोहो व्यवच्छेदः सोयमित्याह ।

देशकालस्वभावानां भेदो वस्तुषु भेदकः। एकमुत्सृज्य शेषासु व्यावृत्तेः किं न गोचरः॥१६९॥

देशभेदाद्वस्तुभिद्यते यथा भिन्नदेशौ पाठौ भिन्नावन्योन्यमिति, कालभेदाद्यथा, बीजाङ्कुरौ स्वभावभेदाद्यथा घटपटौ

ततो देशादिभेदो वस्तुषु विषयभूतेषु भेदकः देशादिभेदाद्वस्तूनि भिद्यन्त इति तथाच एकमवधीकृत्य उत्सृज्य त्यक्त्वा शेषा घटादिवत् पटादयोपि व्यावृत्तेर्विजातीयवत्सजातीयादपि व्यावृत्तेर्य्यवच्छेदस्य किं न गोचरो विषय इति ॥

**व्यावृत्तेस्तु स्वरूपत्वादतुच्छा जातिरेव सा। व्यावृत्तोपि च नान्वेति वाच्यं वाच्यं त्वयापि नः॥१७०॥**

किञ्चापोहो भवता प्रसज्यरूपः पर्युदासरूपो वा भिधीयते यद्याद्यः स न युक्तो व्यावृत्तेः प्रसज्यरूपायास्तुच्छरूपत्वात्तुच्छस्य चार्थक्रियायामक्षमत्वात् तथाच न कोपि कचिच्छब्दात्प्रवर्त्तेत तथास्तत्प्रतिपादनाय शब्दमारम्भप्रयासोऽनर्थकः स्यादिति, अथ द्वितीयः तथाच विधिरूपेणान्वयिनो रूपस्याभिधाने जातिरेव सा नामान्तरेणाभिहितेति ॥ अथ न व्यावृत्तादन्या किन्तु व्यावृत्त एव स्वस्वभावव्यवस्थितत्वाद्भावानामिति आह । व्यावृत्तोपि च नान्वेति, न चानन्वयिनोपि सङ्केतकालव्यवहारकालव्यापित्वं च तदभावेपि शब्दविषयतेति चर्चितमायमेनदिति ॥ वाच्यमभिधेयं वाच्यं वक्तव्यं त्वयापि अतिविचारकेणापि नोस्माकमिति ॥

**एकप्रत्यवमर्षस्य हेतवः केचिदेव हि। भेदेपि नियताश्चैव स्वभावेनेन्द्रियादिवत् ॥१७१॥**

अथ किमत्रोच्यते सुप्रसिद्धोयं न्याय एकप्रत्यवमर्षे एकत्वेन परामर्षे एकत्वाध्यवसायः तस्य हेतवः कारणानि केचिदेव हि यस्मान्न किञ्चिदिह वक्तव्यमस्ति । नन्वनुगताकारं विरहय्य एकार्थक्रियाभ्युपगमेऽतिप्रसङ्गः गवाश्वमहिषोष्ट्रादयोप्यनुगतैकप्रत्ययहेतवः स्युरित्याह । भेदेपि नियताश्चैव भेदाविशेषेपि केचिदेव नियतास्तत्त्वेनोपलब्धस्वभावास्तथेष्यन्ते, किमित्येवमित्याह । स्वभावेन हेतुना, किंवदित्याह । इन्द्रियादिवत् तथाहि रूपालोकमनस्कारेन्द्रियाणि भिन्नस्वभावान्यपि एकं रूपज्ञानं जयन्ति न खल्वेकतरापायेपि प्रत्यक्षचेतसो भाव इति सर्वेपि जनकाः न चैषामेकमनुगतं रूपमस्ति नहि सामग्री

समग्रेभ्यो भिन्ना पृथगुपलब्धिप्रसङ्गादनुपलभ्यस्य च सत्ताभ्युपगमो निर्णिमित्त एव ॥

**स्वभावो न च भावानां प्रेरणाविषयः क्वचित् । अग्निर्दहति नाकाशं कोऽत्र पर्यनुयुज्यते ॥१७२॥**

स्वभावः स्वं रूपमसाधारणं भावानां पदार्थानां न च नैव प्रेरणा चोदना पर्यनुयोग इत्यर्थः तस्या विषयो गोचरो नेति सम्बन्धः, क्वचिद्देशे काले कार्ये वा कथमेतदित्याह । अग्निश्चित्रभानुः दहति भस्मसात्करोति नाकाशं यथेन्धनं दार्वादि दहति न तथाकाशं व्योमेति । अथवा यथाग्निर्दहति दाह्यं न तथाकाशं दहति अन्यथा तस्य विश्वव्यापित्वात्सर्वं विश्वं भस्मसाद्भवेदिति, जगत्स्थितिरत्र कारणमिति चेत्सापि तत्स्वभाव एवेति कोऽत्र पर्यनुयुज्यते न कोपीत्यर्थः ॥

**भिन्नं चानुगतं चैव गवादिभ्योऽभिजायते । ज्ञानं द्विधापि तेनायं व्यवहारः प्रवर्त्तते ॥१७३॥**

सूरिराह । भिन्नं शावलेयादिरूपं तथा सापि शावलेया धेनुरन्या वा मदीयान्यदीया वा अनुगतं गौर्गौरेवं सदित्येवं वा, गवादिभ्य आदिशब्दात्पटादिपरिग्रहः अभिराभिमुख्ये आभिमुख्येन वस्तुस्वीकुर्वन् जायते उत्पद्यते, किन्तदित्याह । ज्ञानं शब्दादिगोचरं द्विधापि अनुगतव्यावृत्ततयापि इति तेन कारणेन अयमुपलभ्यमानो व्यवहारः प्रवर्तते प्रभवतीति ॥

**किं येनैव स्वरूपेण भावो व्यावृत्तचेतसः ॥ जनकोह्यन्वयिनोपि तेनैवाथ परेण वा ॥१७४॥**

किमिति प्रश्ने येनैव रूपेण भावः पदार्थो व्यावृत्तचेतसः असाधारणस्य जनक उत्पादकः । इदमुक्तं भवति सामग्र्यन्तर्भूतो घटादिको भावो देशकालविभक्तघटज्ञानं जनयति येनैव रूपेण किं तेनैव रूपेणात्मीयस्वभावेन घटो घट इत्यनुगताकारं जनयति उतान्यथा पररूपेणेति प्रष्टव्योसीति ॥ आद्यपक्षे आह ।

**ज्ञानस्यैकत्वमापन्नं कारणाभेदतोऽथवा । भाव एव द्विधा प्राप्तो विरुद्धाध्यासयोगतः॥१७५॥**

यदि येनैव व्यावृत्तं चेतो जनयति तेनैवानुवृत्तमपीति तदा ज्ञानस्यैकत्वमापन्नमेकमेव ज्ञानं व्यावृत्तमनुगतं वा न रूपान्तरसम्भव इति । कुत इत्याह । कारणाभेदत एकस्मात्स्वभावादुत्पत्तेः अयमेव च भेदो भेदहेतुर्वा यदुत विरुद्धधर्माध्यासः कारणभेदश्च अतः कारणभेद एव भेदहेतुः, इह तु कारणाभेदात्कार्याभेद एव स्यात्, एवमपरेण स्वभावेन व्यावृत्तमन्येनानुगतमित्याह । अथवा यदि कार्यस्यैकत्वं नेष्यते भिन्नस्वभावजन्यतया तदा भाव एव द्विधा द्विप्रकारः प्राप्तः प्रसक्तः, विरुद्धाध्यासयोगतः विरुद्धयोर्धर्मयोरध्यासः समावेश एकत्रैकदा प्राप्तिरित्यर्थः तस्य योगः सम्बन्धस्तस्मादिति ॥

**स्वरूपग्रहणे साऽस्तु तां विना न च तद्ग्रहः। अन्योन्याश्रयदोषोऽयं कथं वो नानुषज्यते॥१७६॥**

यदि स्वस्वभावव्यवस्थिता एव सर्वभावा नापरा व्यावृत्तिस्तदा तेषामन्वयासिद्धेः कथं सङ्केतविषयाः । अथ व्यावृत्तिरिष्यते तदा तत्राप्युक्तं नीरूपा नार्थक्रियानिमित्तं वस्तुभूता चेज्जातिरेव सा । किञ्च त्रिविधापि व्यावृत्तिः स्वरूपग्रहणे विजातीयव्यवच्छिन्नरूपग्रहणे सा व्यावृत्तिः अस्तु स्यात् न वार्यते न च तां त्रिविधां व्यावृत्तिं विना तस्यान्यविविक्तस्य ग्रहः। तथाचान्योन्याश्रय इतरेतराश्रयो दोषोयं कथं येन प्रकारेण वो युष्माकं नानुषज्यते ब्रूहीति ॥ किमत्रोच्यते उक्तमेवात्र ।

**स्वस्वभावस्थिता भावा गृह्यन्ते च स्वरूपतः। अन्यथा वृत्तिरन्योन्या नेतरेतरदूषणम् ॥१७७॥**

आत्मीयात्मीयस्वरूपस्थिताः सर्वे भावाः सङ्कीर्णतायां व्यवहारोच्छेदादिति यथैव ते सन्ति तथैवाभ्रान्तचेतसि प्रतिभान्ति अन्यथा प्रतिभाने भ्रान्ततापत्तेस्ततः कोयमन्योन्याश्रयो नामेति ॥

**सन्तु भावाः स्वभावस्थाः कुम्भः कुम्भान्तरेण तु। भिन्नरूपोपि तुल्योपि विरूपोपि पटादिभिः॥१७८॥**

सन्तु भवन्तु स्वस्वभावस्थाः पररूपाऽसङ्कीर्णाः भावाः पदार्थाः किन्तु कुम्भो घटः कुम्भान्तरेण अपरेण कुम्भेन तु किन्त्वित्यर्थो भिन्नरूपो देशकालनवपुराणादिना तुल्योपि संस्थानक्रियाज्ञानादिभिः विरूपो विसदृशसंस्थानादिभिः अपिशब्दात्सत्त्वमूर्त्तत्वद्रव्यत्वादिभिः सदृशोपीति ॥

**द्विस्वभावास्ततो भावाः समानेतररूपिणः। समानेतररूपस्य चेतसो विषयत्वतः॥१७९॥**

द्विस्वभावा अनेकात्मानः ततोऽनन्तरोक्तक्रमात् भावाः घटादयः समानं च इतरच्च समानेतरे समानेतरे रूपे विद्येते येषां ते तथा, कथमित्याह । समानेतररूपस्यानुगतव्यावृत्तिरूपस्याकारस्य चेतसो विज्ञानस्य विषयत्वतो विषयभावादिति ॥

**एकस्यानेकरूपत्वं कीर्त्तिनैव समर्थितम्। कुलालवार्तिके कल्पो भेदवान् घटना कथम्॥१८०॥**

एकस्यापि वस्तुनो लुप्तापि शब्दनिर्देशादनेकरूपत्वं नानास्वभावता । कीर्त्तिना धर्मकीर्त्तिना भवदाचार्येण समर्थितं तदर्थं युक्तिमुपवर्णयता, केत्याह । कुलालवार्त्तिके हेतुविध्यन्तर्गते तत्र हि सामग्रीभेदात्कार्यभेदो दर्शितः तथाहि मृच्चक्रात्मिकायाः सामग्र्या मृद्रूपो घटो जायते मृत्पिण्डकुलालचक्रात्मिकाया मृण्मयकोशात्मको घटो जायते अत्रैव चीवरान्तःपाते सति च श्लक्ष्णात्मको जायते अत्रैव सूत्रान्तःपाते स एव चक्रविभक्तो जायत इति सर्व एव चैते कारणभेदात्कार्यभेदाः न चैते घटादिकार्याद्व्यतिरेकिणः पृथगप्युपलम्भप्रसङ्गात् पृथक्करणापत्तेश्च न चैतदेकस्यानेकरूपतां विरहय्य सम्भवति । युक्त्यन्तरमाह । कल्पो विकल्प उपसर्गाणां द्योतकत्वान्न चासतो द्योतनं न च सतोप्यनभिधानं भीमन्यायेन वा कल्पशब्देन विकल्पोऽभिप्रेतः । वक्तृवशाद्धि शब्दानामर्थप्रवृत्तिर्क्वापि च व्यवहारानुपातिन्यर्थे नियोजनीया स्थितं चैतत् कल्पो विकल्प

इति स च भेदवान् क्रमभाव्यनेकाक्षरोल्लेखितया तस्याप्यनेकात्मकतासिद्धेरिति ततो यदि भेद एव नैकात्मकतापि तदा घटना कथं तथाहि भवतैतत्पूर्वं पक्षयित्वा, "यः क्षणः कुशलादीनां कर्त्तृत्वेनोपवर्ण्यते। फलप्रसवकाले तु नैवासावनुवर्त्तते ॥ यः फलस्य प्रसूतौ च भोक्ता संवर्ण्यते क्षणः। तेन नैव कृतं कर्म तस्य पूर्वमसम्भवात् ॥ कर्मतत्फलयोरेवमेकत्र न परिग्रहात्। कृतनाशाकृतप्राप्तिरासक्तेऽतिविरोधिनी ॥ रागादिनिगडैर्बद्धः क्षणोऽन्यो भवचारके । अबद्धो मुच्यते चान्य इतीदं नावबुद्ध्यते ॥ मोक्षमासादयन् दृष्टो बद्धः सन्निगडादिभिः । अबद्धो मुक्तिमेतीति दृष्टव्याहतमीदृशं ॥ कार्यकारणभावोपि प्रत्यक्षानुपलम्भतः । नेयर्त्ति सिद्धिं भावानां स्वभावानुपलम्भनात् ॥" इत्यादि, प्रतिविहितम्। "कर्त्तृत्वादिव्यवस्थानात् सन्तानैकविवक्षया । कल्पनारोपितैवेष्टा नाङ्गं सा तत्त्वसंस्थितेः ॥ अहीनसत्त्वदृष्टीनां क्षणभेदविकल्पना। सन्तानैक्याभिमानेन न कथञ्चित्प्रवर्त्तते ॥ सन्तानैक्याभिमानस्तु विकल्पस्थोपि नैकधा । तत्कथं घटना तेन चिन्तनीयमिदं त्वया ॥" किञ्च ।

**रक्ते च भाग एकस्मिन्सर्वं रज्येत रक्तवत् । इत्यादि गदितं मोहाद्वस्तुरूपमजानता ॥१८१॥**

बहिरर्थनिरासाय यदुक्तं शान्तिरक्षितेन रक्ते लाक्षादिना भागेऽशे कम्बलादेरिति गम्यते एकस्मिन्विभागे सर्वं रज्येत रक्तवत् । अन्यथा विरुद्धधर्माध्यासाद्भेद एव स्यान्नैकं वस्त्विति इत्यादि गदितमुक्तं मोहादज्ञानाद्वस्तुनः पदार्थस्य रूपमजानता, । अन्यथा कर्त्तृत्वादिव्यवस्था सन्तानैकविवक्षयाऽविकल्पनारोपितैवेष्टेति यदुक्तं त्वयैव कर्मतत्फलसम्बन्धपरीक्षायां तद्विकल्पस्यानेकरूपत्वे न सिद्ध्यति ॥ अवयविद्रव्यं निराकुर्वता ज्ञानस्यानालम्बनतामभिधातुं यदन्यदपि तेनैवोक्तम् ।

**किं येनैव स्वरूपेण परमाणुरपरं प्रति। आभिमुख्यं भजेतासौ तेनैवान्यस्य तत्र तु ॥१८२॥**

किमिति प्रश्ने ब्रूहि अवयविवादिन् येनैव रूपेण स्वभावेन पूर्वदिग्भागिनमपरं परमाणुं प्रति आभिमुख्यं भजेत प्रति-

पश्येत परमाणुर्मध्यवर्त्ती तेनैव स्वरूपेणान्यस्य परमाणोराभिमुख्यं भजेत ॥ तदा किमित्याह ।

**एकदिग्भागिताणूनां न समुच्चयरूपता । यद्यन्येन स्वभावेन्यं भेदाद् भेदोऽनुषज्यते ॥ १८३ ॥**

एकादिग्भागिताणूनां परमाणूनां श्रेणिमेव प्राप्नोति न समुच्चयरूपता, अथान्येन स्वभावेनान्यं प्रति आभिमुख्यं भजेत मध्यवर्त्ती परमाणुः कुतः समुच्चयाभावः । तथासति स्वभावभेदेऽभ्युपगम्यमाने वस्तुनोपि भेदः प्राप्नोति स्वभावभेदनिबन्धनत्वाद्भेदव्यवहारस्य अन्यथा विश्वस्यैकतापत्तेः सहोत्पादविनाशौ स्यातामिति ॥

**इत्यादि गदितं सर्वमसम्बद्धं न केन वः । एकस्यानेकरूपत्वं यत्त्वयैव समर्थितम् ॥ १८४ ॥**

इत्यादि आदिशब्दादन्यमपि त्रैकाल्यपरीक्षायां स्याद्वादभङ्गे च यद्गदितमभिहितं तत्सर्वमसम्बद्धमसङ्गतं नेति केन कारणेन वो युष्माकमिति । एकस्यानेकरूपत्वमनेकस्वभावत्वं यद्येन त्वयैव भवतैव समर्थितं साधितमिति ॥ कथं समर्थितमित्याह ।

**उच्छेददृष्टिनाशाय घटनामनुधावता । न चित्रप्रतिभासोऽपि नानात्वे संविदां ननु ॥ १८५ ॥**

उच्छेदो नाहमस्मीति निरन्वयविनाशात्र खलु पूर्वापरत्रुटितवर्त्तमानक्षणावस्थायिनि भावे परमार्थसति शुभाशुभक्रियाः काश्चन सन्ति न खल्वनुत्पन्नः कर्त्ता क्रियामारभेत वान्ध्येयस्यापि तदारम्भापत्तेः न खल्वसत्ताविशेषेणानाधेयातिशयत्वे तस्य वान्ध्येयस्य वा विशेषः । उत्पन्नोपि न स्वसत्ताकाले क्रियाक्रियावतोरनुपलम्भात् न चानुपलब्ध्याङ्गीकरणमतिप्रसङ्गं नावहति न च भूतिरेव क्रिया फलस्याहेतुकतापत्तेः । न चानन्तर्यमात्रेण हेतुफलभावे नियतं नियतस्य फलम्, विश्वस्य विश्वस्मिन्नानन्तर्यसिद्धेः ॥ आह च वैभाषिकः । "अवस्थाभेदभावेपि यथावर्णं जहाति न । हेमाद्यस्तु तथा भावो द्रव्यत्वं न

त्यजत्ययम् ॥ अतीताजातयोर्ज्ञानमन्यथा विषयं भवेत् । द्वयाश्रितं च यज्ज्ञानं तायिना गदितं कथम् ॥ कर्मातीतं न नासत्त्वं अन्यथा फलदं कथम् । अतीतानागते ज्ञानं योगिनां विभक्तं कथम् ॥" अत्र शान्तिरक्षितेनोक्तम्, उच्छेदे दृष्टिरभिप्रायस्तस्य नाशाय उच्छेददृष्टिर्माभवत्विति रक्षार्थे क्वचित्पाठः उच्छेददृष्टिरक्षार्थमनुसन्धिप्रत्ययः सत्कायदृष्टीनां सकलं व्यवहारमारचयतीति एवं घटनामनुधावता अनुसन्धिप्रत्ययमिच्छता हेतुफलभावपरम्परया सोहं कृतं मदीयमित्येवं स्मृतिरूपविकल्पप्रत्ययः तमिच्छता एकस्यानेकरूपत्वं प्रतिपादितमेव, दोषान्तरमाह । न चित्रप्रतिभासोपि चित्रं प्रतीतं तत्र प्रतिभासो ज्ञानं पुरुषोयं स्त्रीयं हस्तीत्येवं घटना प्रत्ययस्यानेकत्वे स न स्यादिति नानात्वे संविदां प्रतिवर्णगतज्ञानानां भेदे न खल्वनेकज्ञातृदृष्टे एकं स्मरणमुत्पद्यत इति दृष्टमिष्टं वा केनचिदतो घटनाप्रत्ययानुत्पाद एव त्वन्मतेन आस्तां घटनाप्रत्ययस्यानेकरूपतेति ॥

**तत्त्रैकाल्यपरीक्षार्थं मुधैवारटितं त्वया। स्याद्वादसिद्धिभङ्गोऽपि तवोन्मादानुमापकः॥१८६॥**

तत्तस्मात्त्रैकाल्यपरीक्षायां मुधैव व्यर्थमेवमारटितं त्वया स्याद्वादसिद्धिभङ्गोपि तव एकान्तवादिन उन्मादो ग्रहकृतो विकारस्तस्यानुमापकः । अनुमीयत एवैतत्सर्वव्यवहारसिद्धिनिबन्धनस्याद्वादसिद्धेर्भङ्गाय परवादिनं प्रत्यसिद्धविरुद्धानैकान्तिकदोषदुष्टं साधनमुपन्यस्यन् ज्ञायते ग्रहगृहीतो भवानिति ॥ कथमित्याह ।

**आश्रयासिद्धता हेतोःस्वतन्त्रे साधने मते। अनैकान्तिकता हेतोः प्रसङ्गेऽप्यभिधित्सिते॥१८७॥**

तथाहि स्वतन्त्रं वा साधनं स्याद्वादनिरासायोक्तं प्रसङ्गापादनेन वा किञ्चातः, यदि स्वतन्त्रं तदा आश्रयः साध्यधर्मी तस्यासिद्धता आश्रयो हेतोर्न सिद्ध्यतीति । तथाहि स्याद्वादः साध्यधर्मी नास्तित्वं साध्यधर्मः विरुद्धधर्माध्यासादिको हेतुः तत्र यदि साध्यधर्मी विद्यमानः तदा विरुद्धो हेतुः, सतोऽसत्त्वविरुद्धत्वात् । अथाविद्यमानः तदा हेतुराश्रयासिद्धः ।

विरुद्धधर्माध्यासोपि विकल्पसंविन्निष्ठः अतो हेतुरनैकान्तः तन्न स्वतन्त्रं साधनम्, नापि प्रसङ्गापादनं युक्तं विरुद्धधर्माध्यासेपि चित्रज्ञानादावेकतासिद्धिः तत्रापि विकल्पस्यानेकात्मनः एकतासिद्धेः अन्यथा ऐहिकामुष्मिकव्यवहारविलोपापत्तेः ॥

**प्रमाणविषयातीतं तारापथसरोजवत् । नैव सद्व्यवहर्त्तव्यं स्याद्वादो न प्रमाश्रयः॥१८८॥**

प्रमाणं प्रत्यक्षादि तस्य विषयो गोचरो ग्राह्यस्तमतीतं प्रमाणविषयातीतं अनेन हेतुं सूचयति तारापथ आकाशं तत्र सरोजं पद्मं तद्वदनेन दृष्टान्तमाह । नैव सद्व्यवहर्त्तव्यमनेन साध्यनिर्देशमाह । स्याद्वादः कथं विवादः स्यादस्ति स्यान्नास्ति स्यादस्ति च स्यान्नास्ति चेत्यादिरूपः स न प्रमाया आश्रयःविषय इत्यनेन प्रसिद्धान्वयं हेतुं साध्यधर्मिणि दर्शयति, प्रयोगः पुनरित्थं कार्यः, यः प्रमाणविषयभावमनापन्नः सोऽसद्व्यवहर्त्तव्यो यथा तारापथसरोजं प्रमाणविषयभावमनापन्नश्च स्याद्वाद इति व्यापकानुपलब्धिरिह च स्याद्वादशब्देन तद्गोचरं वस्तूच्यते शब्दस्य प्रत्यक्षेणैव सिद्धेः । प्रत्यक्षबाधितधर्मनिर्देशानन्तरप्रयुक्तत्वात् कालात्ययापदिष्टो हेतुः स्यात् ॥ अत्राह ।

**असिद्धं च विरुद्धं च व्यभिचारि च साधनम् । कालात्ययापदिष्टं च साध्येन समतामितम्॥१८९॥**

यत्तावदुक्तं प्रमाणविषयभावमनापन्नश्च स्याद्वादस्तदसिद्धं यदि स्वतन्त्रं साधनमाश्रयासिद्धं स्याद्वादरूपिणो धर्मिणोऽसिद्धेः अथ मा भवत्वयं दोषः सिद्धोऽभ्युपगम्यते तदा तन्निबन्धनं प्रमाणमेष्टव्यं तद्बाधितधर्मनिर्देशानन्तरं प्रयुक्तत्वात्कालात्ययापदिष्टो हेतुः । तथा प्रतिवादिनः प्रमाणविषयभावमनापन्नश्च स्याद्वाद इत्यसिद्धो हेतुः प्रत्यक्षादिप्रमाणागोचरत्वात् अथ प्रत्यक्षाद्यविषयत्वं साधयसि तथाच साध्यसमतामितं साधनम् । किञ्च सर्वप्रमातृप्रमाणविषयातीतमिष्टं तदा सन्दिग्धान्वयत्वादनैकान्तिकत्वम्, अथ भवत्प्रमाणविषयातीतत्वं तथाप्यनैकान्तिकत्वं स्वमातृविवाहादौ व्यभिचारदर्शनात् । अथ

पुत्रलक्षणकार्यदर्शनात्तत्सिद्धिः तदयुक्तं बन्धकीनां तदभावेपि पुत्रलक्षणकार्यदर्शनात् । अथ मातुः सतीत्वात् नान्यथाभाव एतदपि कथम् भवत्प्रत्यक्षस्याप्रामवृत्तेः तत्पूर्वकत्वादनुमानस्य तदभावात् न च परसंविदो भवतः प्रत्यक्षास्तन्न परप्रमाणादपि न च वचनं प्रमाणमिष्टं सर्वज्ञवचनस्याप्यप्रामाण्ये कथमितरवचनं प्रमाणम्, किञ्च विरुद्धोपि हेतुः प्रमाणविषयभावस्य स्याद्वाद एव सम्भवात् तथाहि निर्विकल्पकाध्यक्षमपि नैकान्तानित्यस्य नित्यस्य वा ग्राहकं नाकारणं विषय इति हि भवतां मतं यच्च कारणं ज्ञानस्य तत्कार्यकारणयोर्भिन्नकालत्वात् न प्रत्यक्षकालेस्ति न च समानकालयोर्हेतुफलभावः, न चाकारार्पणमात्रमेव तु फलभावो विषयविषयिभावो वेति वाच्यं देशकालव्यवहितस्यापि तदाकारस्य तुल्यत्वात् न नियता प्रवृत्तिः स्यात् । न च प्रतिभासमात्ररूपत्वात्प्रवृत्तेर्नायं दोष इति वाच्यं बहिरर्थनिराकरणस्य दूषितत्वान्नहि सन्तानान्तरासिद्धिः स्वसंविदा, न चानुमानं साध्यसाधनसम्बन्धग्रहणं विना न चैतत्साध्यं साधनं चैतन्निर्विकल्पस्य विषयः । यदाह भवदाचार्यः प्रत्यक्षपूर्वकानुपलम्भादनुपलम्भपूर्वकप्रत्यक्षात् हेतुफलभावग्रह एवाविनाभावग्रह इति । अतो विकल्पव्यापार एषः स चाविषयो भवन्मतेन, न चाविषयो विषयं व्यवस्थापयतीति युक्तम्, न च सोपि परमार्थतः, तस्यानेकवर्णोल्लेखितयाऽनेकक्षणस्थायित्वात् तस्य च भवन्मतेनासम्भवात्, । न चासतोपि व्यवस्थाकर्तृत्वं तन्न सन्तानान्तरसिद्धिरनिबन्धनत्वात् । तथा कस्य केन विवाद इति निरीहं जगदापद्येत अतो नायं हेतुरिति समुदायार्थः ॥ अक्षरगमनिका तु असिद्धं साधनमिति सम्बन्धः । चकारः समुच्चये तच्च दर्शितं विरुद्धं च साधनं तच्च दर्शितमेव व्यभिचारि च साधनं तच्च दर्शितमनन्तरमेव कालात्ययापदिष्टं च साधनं दर्शितं चैतत् साध्येन समतामितं साध्यसममित्यर्थस्तच्च दर्शितमेव अतः साधूक्तं स्याद्वादपक्षभङ्गाय वृथैव रटितं त्वयेति ॥ ननु विरुद्धधर्माध्यासेपि यदि भेदो नेष्यते तदा घटपटयोर्भेदव्यवस्थानिबन्धनं मृग्यमन्यथा लोकव्यवहारोच्छेद एव स्यान्न च स्वभावभेदे भेदनिबन्धने तदेव नित्यं तदेव तदैव तत्रैव सत्तदेव तदैव तत्रैवासदिति न विरोधभागिति तन्न कथञ्चिद्वादसम्भवः ।

उक्तंच । "आयायाश्च जनन्याश्च भेद एव यदीष्यते । स्वपक्षभङ्ग एवं स्यादभेदे मातृभोगिता ॥" अत्राह ।

**स्वदेशे सत्त्वमन्यत्र तस्यासत्त्वं न चापरम् । नन्वेवमेकता प्राप्ता तयोरेषाऽविभागतः॥१९०॥**

स्वस्य आत्मनो देशः क्षेत्रं तस्मिन्सत्त्वमन्यत्र देशान्तरे अविद्यमानता । एतदुक्तं भवति यथा घटादेः पाटलिपुत्राव-स्थितदेवदत्तगृहाङ्गणैकदेशे सत्त्वमेवं यदि तस्यान्यत्रापि सत्त्वं स्यात्तदा घटान्तरवैयर्थ्यात्तत एवाशेषाणामशेषदेशकालाश्रितानां जलाद्याहरणक्रियाप्रसङ्गः । तथा तद्वच्छ्रुपाककराग्रावस्थानात्ततस्तस्योच्छिष्टतापत्तेः शौचादिक्रियावैयर्थ्यप्रसङ्गश्च उपलक्षणं चैतदेवं स्वकाले सत्त्वं वस्तुनो रूपं अन्यथा पितृपुत्रव्यवहारादिलोपः । तथाच योऽयं लोके हेतुफलाभावो रूढः स न सङ्ग-च्छेत । एवं स्वरूपेण सत्त्वं पररूपेणासत्त्वं वस्तुरूपम् अन्यथा य एव स्वभावो जनन्याः स एव यदि जायायाः स्यात्स्वभा-वभेदे चैकत्वमिच्छतो भवतो जायाभोगे मातृभोग आसज्येत । तथा भिक्षुश्वपाकयोः स्वभावभेदे ततोऽप्येकत्वे भवाँश्चाण्डाल इत्यापन्नम्, तस्माद्देशकालस्वभावभेदे भेदोऽभ्युपगन्तव्यो वस्तुन इति । अत्राह परः इष्टमेतत् किन्तु न चापरं परदेशकालस्व-भावासत्त्वं न च नैव अपरं भिन्नं ततो वस्तुनः किन्तु यदेव स्वदेशे सत्त्वं तदेव परदेशासत्त्वमिति । एवं कालस्वभावयोरपि वाच्यमिति । सूरिराह नन्वेवमेकता प्राप्ता तयोरेषा विभागतः ननु चेत्यक्षमायां एवमिष्यमाणा एकता ऐकात्म्यं प्राप्ता प्रसक्ता तयोः सत्त्वासत्त्वयोः एषा अनन्तरोक्ता अविभागतो विभागभावादिति । इदमुक्तं भवति यदेव स्वदेशे सत्त्वं तदेव परदेशेऽस-त्त्वमिष्यते तदा सत्त्वासत्त्वयोरेकता प्राप्ता तथाच स्वदेशवत्तस्य परदेशेपि सत्त्वं स्यात् तत्सत्ताऽव्यतिरिक्तत्वात्परदेशासत्त्वस्य स्वदेशे वा असत्त्वं स्यात्परदेशासत्त्वाव्यतिरिक्तत्वादिह सत्त्वस्य एवं कालेपि वाच्यं तथाच त्रिकालावस्थायित्वमेव वस्तुनः स्वकाले वा सत्त्वाभाव इत्यापद्येत एवं स्वभावेपि वाच्यम् । तथाच जायाया अन्यस्वभावत्वमेव जनन्यास्तत्स्वभावत्वं ततो

जायाजनन्योरेकत्वं जायास्वभावरूपत्वाज्जनन्या अन्यस्वभावत्वस्येति पुनरपि जनन्या भोगापत्तिरिति । जायाया अन्यस्व-भावत्वं तदपि यदि प्रसज्यात्मकं तदाऽभावापत्तिर्जायाया न कदाचित्तद्भोगसम्प्राप्तिः अथ पर्युदासात्मकमन्यस्वभावत्वं तदा जायाया जननीत्वापत्तिरिति ॥ एतदेव दर्शयति ।

**परदेश इवासत्त्वं स्वदेशे तस्य किं न वः। सत्त्वं स्वदेशवत्प्राप्तं परदेशेऽविगानतः ॥१९१॥**

परदेश इव स्वदेशादन्यदेशवत्स्वदेशे स्वावगाहक्षेत्रे तस्य घटादेः किं केन कारणेन नासत्त्वं स्वदेशे परदेशवत् वो युष्माकमिति । सत्त्वं स्वदेशवत्स्वावगाहक्षेत्रवत् सत्त्वं परदेशे किं न वः अविगानतः विशेषाभावादिति ॥ पर आह ।

**नाभावः कश्चिदन्योस्ति भाव एव स्वनिष्ठितः। अभावव्यवहारस्तु कल्पनाशिल्पिनिर्मितः ॥१९२॥**

न खल्वभावो नाम कश्चिदपि किन्तु स्वस्वभावव्यवस्थितो भाव एव पदार्थ एव स्वनिष्ठितः पररूपासङ्कीर्णः अभावव्य-वहारस्तु योयमभावव्यवहारः सोपि कल्पना विकल्पः स एव शिल्पी तेन निर्मितो विकल्पाधीनो न वास्तव इति ॥ सूरिराह ।

**अभावाभावतो ह्येवं भावाः सङ्कीर्णरूपिणः। स्वस्वभावस्थिता भावा अपराभाव इष्यताम् ॥१९३॥**

यदि हि भाव एव नाभावः कश्चिदस्ति तदा अभावस्याभावात् हिर्यस्मादर्थे स चैवं सम्बध्यते यस्मादभावस्याभा-वाद्भावा एव एवं सङ्कीर्णरूपिणः सङ्कीर्णस्वभावाः स्युः स्वस्वभाव एव स्थिता भावाः कुतः पररूपावकाशः । अत्राह न हि पररूपव्यवच्छेदमन्तरेण स्वरूपावस्थानलाभः तस्मात्पराभावमिष्यतामिति ॥ किञ्चात इत्याह ।

**तच्चेद्भिन्नं घटादिभ्यः सङ्कीर्णत्वमवारितम्। अभिन्नत्वे तु भावस्य शून्यताप्यविशेषतः ॥१९४॥**

तच्चेत्पररूपासत्त्वं भिन्नं व्यतिरेकि घटादिभ्यः आदिशब्दादशेषभावग्रहः सङ्कीर्णत्वमेकरूपता अवारितमनिषिद्धमेव,

अथ नेष्यते भिन्नं अभिन्नत्वे तु एकरूपत्वे पुनः शून्यतापि पररूपासत्त्वरूपत्वाद्धटादिसत्त्वस्येत्यभ्युपगमे शून्यता घटादेस्तथा च सौत्रान्तिकमताभावापत्तिरिति । अपिशब्दाद्धटाभावे पररूपेणापि सत्त्वं चासज्येतेति अविशेषाद्विशेषाभावादिति ॥ किञ्च ।

**धर्मभेदेऽप्यभेदोपि धर्मिणो भवतां मतः । क्रमभाव्यक्षरोल्लेखिविकल्पैकत्वसाधनात् ॥१९५॥**

स्वभावो धर्मो रूपमित्यनर्थान्तरं तस्य भेदेपि पार्थक्येपि अभेदोऽपिशब्दात्कथञ्चिद्भेदोपि, कस्येत्याह धर्मिणो मूलवस्तुनः भवतां युष्माकं मतोऽभीष्ट इति कुत एतदित्याह क्रमः पर्यायः परिपाटी तेन भवनशीलानि च तान्यक्षराणि च तान्युल्लेखनशीलश्चासौ विकल्पश्च तस्यैकत्वं तस्य साधनादत्रैवेति ।

**स्याद्वादभङ्गहानिश्च त्वयैव प्रतिपादिता । विचित्रज्ञानमप्येकमिच्छता स्पष्टभासि यत् ॥१९६॥**

स्याद्वादस्य भङ्गः तस्य हानिः सा च त्वयैव हे धीमन्प्रतिपादिता, कथमित्याह विचित्रज्ञानमप्येकमिच्छता । विविधं चित्रं विचित्रं ज्ञानम्, अपिशब्दाद्विकल्पज्ञानं तदप्येकमनेकाकारमपीत्यर्थः एकमिच्छता सता । ननु भ्रान्तं चित्रज्ञानमाकाराणामलीकानां प्रतिभासनात्तत्र हि बहिरुल्लेखितया नीलाद्याकारः संवेद्यते न च बाह्यस्य संवेदनमस्ति जडताहानेः तस्यापि चिद्रूपतायां बाह्यताहानेः चिद्रूपं च बाह्यं चेति व्याहतं वचः तस्मान्न ततो वस्तुव्यवस्थेति अत्राह । स्पष्टप्रतिभासि यत् । स्पष्टं विशदं यथा भवत्येवं प्रतिभासितुं शीलं यस्य तत्तथा यद्यस्मात् यत्तदोर्नित्यसम्बन्धात्तस्मादिति गम्यते । तेन एतदुक्तं भवति स्पष्टप्रतिभासि यस्माच्चित्रज्ञानं तस्मान्न तद्भ्रान्तं तत एकमनेकमिच्छता स्याद्वादभङ्गाभावः प्रतिपादितो भवतीति । ननु स्पष्टं किमभ्रान्तमुत अविकल्पकमभिप्रेतं यद्यभ्रान्तमिति पक्षः सोऽसिद्धोऽतस्मिंस्तदिति प्रवृत्तेः, एतदुक्तं भवति अबाह्यमात्मानं बाह्यतयाध्यवस्यतो भ्रान्तत्वादत एव चिद्रूपतातिरेकी प्रतिभासो भ्रान्त इति अनाद्यविद्यावशसमुद्भूतः कश्चिदेष प्रतिभाति

यथाहि स्थिरस्थूरायतादिरूपेण देशविच्छेदेन ज्ञानाकारः संवेद्यते न चैवंविधं ज्ञानं नित्यत्वमूर्त्तत्वशरीरभिन्नदेशत्वप्राप्तेः, न च सबहिर्देशसम्बन्धाऽर्थः प्रतिभातीति वाच्यम्। शशिद्वयाद्यप्रतिभासनप्रसङ्गात्। स्मृतिसम्प्रमोषाभ्युपगमे सर्वत्रापि तदाशङ्काया निवर्त्तयितुमशक्तेः। संवादात्तन्निश्चये परतः प्रामाण्यमिति चर्वितप्रायम्॥ अथाविकल्पकं स्पष्टप्रतिभासमुच्यते तत्रापि वाच्यं किं सुखादिवत् स्फुटप्रतिभासं स्फुटं संवेद्यमानमुत स्पष्टमिति नामकरणं यद्याद्यः स न युक्तः सर्वस्यापि चेतसः स्पष्टसंवेदनादविकल्पकविशेषणमयुक्तमथ नामकरणं नातोऽर्थसिद्धिरिति॥ अत्राह।

**सर्वं संवेदने स्पष्टमभ्रान्तमिह सम्मतम्। नीलाकारो न चेदर्थो न ज्ञानं वेदनं कुतः॥१९७॥**

यदुक्तं किमभ्रान्तं स्पष्टं तदयुक्तं तत्रोच्यते सर्वमशेषं ज्ञानं संवेदने स्पष्टं न तत्र विप्रतिपत्तिरतो विशेषणमनर्थकमभ्रान्तं स्पष्टमिष्टमिति। यत्तु नीलाद्याकारो न ज्ञानं न बाह्यमिति तत्राह। नीलाकारोऽर्थाकार इत्यर्थः तेन स्थिरथूरायतादिरूपो देशादिविच्छिन्नः संवेद्यते न चैवंविधं ज्ञानं वेद्यते कुतः न खल्वज्ञानात्मनः संवेदनमस्ति सतो वा न ज्ञानमिति कुतः यदि परं नामकरणमेव स्यात्। एतदुक्तं भवति स्थिरस्थूराकारो देशविच्छिन्नो नीलादिरूपः पुरः प्रतिभासमानः कदाचिद्बहिरर्थो वा कदाचिदन्तःसंवेदनं वा प्रकारान्तरं वा, न बहिरर्थो भवता ज्ञानवादिनाऽनभ्युपगमात् जडस्य प्रकाशायोगाच्च, नापि संवेदनाकारः छेदभेददाहप्लावनाद्यापत्तेः। न च देशविच्छिन्नं संवेदनम्, सुखादिप्रतिभासस्यापि देशादिविच्छेदेन प्रतिभासनप्रसङ्गात् विशेषो वा कश्चिद्वाच्यो न च शरीराद्बहिर्ज्ञानानुभवः सिद्धः परस्यापीति, ज्ञानाधारस्यात्मनः परेणानिष्टेः। तथा चैकं वपुषि तथान्यं बहिरित्यात्मद्वयमासज्येत, न चैकस्य देशविच्छेदावभासः, एकत्वे विच्छेदासिद्धेः। न च बाह्यसंवेदनाभ्यामन्यः प्रकारः सम्भवति, न च भ्रान्त्या विच्छिन्नस्यापि संवेदनाकारस्य विच्छेदेनावभास इति वाच्यं निर्बीजभ्रान्त्ययो-

गादिति । अविद्या बीजमिति चेत्तज्ज्ञानादनन्यत्वात्तस्याः, अन्यथा वस्तुसत्त्वे बाह्यरूपा स्यात्तथाच ज्ञानवादहानिरिति ॥ न चावस्त्वपि बीजमर्थक्रियाविरहरूपत्वादवस्तुत्वस्य अतः किञ्चिदत्र भवता समाधानीयमिति तस्मादसदूहितमपास्य सर्वथाऽनेकान्तात्मकं वस्त्वभ्युपेयं तथाच स्याद्वादपरीक्षायामारटितमेव भवतेति मतम् ॥ ननु सर्वज्ञप्रणीतमागमं प्रमाणमिच्छतः प्रणेतृवशाद्वचनस्य प्रामाण्यमित्यापन्नं एतदेवाह ।

**प्रामाण्यं परतश्चैवं प्रसक्तं भवतां ननु । न च स्वतोऽसती शक्तिः कर्तुमन्येन पार्यते ॥१९८॥**

प्रामाण्यं प्रमाणभावः प्रमाणता परतो निमित्तान्तरात्प्रसक्तं प्राप्तं भवतां युष्माकं नन्वित्याक्षेपे न चैतद्युक्तं तथाच प्रयोगः ये यद्भावं प्रत्यनपेक्षास्ते तत्स्वभावनियताः यथान्त्या कारणसामग्री स्वकार्योत्पादने, स्वोत्पादककारणव्यतिरिक्तनिमित्तान्तरानपेक्षं च प्रामाण्यमुत्पत्तौ स्वकार्ये स्वनिश्चये चेति स्वभावहेतुः, अर्थपरिच्छेदशक्तिः प्रामाण्यं विज्ञानमात्रस्य भ्रान्तचेतस्यपि भावान्न चानुत्पन्ने विज्ञाने शक्तेराधानं वान्ध्येयवत् नापि विनष्टे मृतवत् ज्ञानानतिरेकिणी न च तदैव भिन्नहेतुजा कारभेदनिबन्धनत्वाद्भेदस्य ज्ञानमेव कारणेभ्योपि ज्ञानमेवोपजायते शक्तिस्तु स्वत एवोपजायते ॥ यत्तु विज्ञानकारणव्यतिरिक्तनिमित्तान्तरानपेक्षमित्युक्तं तद्विज्ञानानतिरेकमात्रादिति । अत एव स्वतोऽसतीत्युक्तं नहि साङ्ख्याभ्युपगतसत्कार्यवादाश्रयमिदमुक्तं किन्तु स्वतोऽभवन्ती नापरेण कर्तुं पार्यते पूर्वापरयोराधारयोरसत्त्वे सत्ताकाले च ज्ञानकारणातिरेकेणापरस्यानुपलब्धेः ॥ सूरिराह ।

**अप्रामाण्यनिमित्तापि शक्तिर्नान्यनिमित्तिका। स्वतोऽसती यतो नासौ कर्तुमन्येन शक्यते॥१९९॥**

नन्वेवं सति समानयुक्तिकत्वादप्रामाण्यनिमित्तापि स्वतोऽसती शक्तिर्नापरेण कर्तुं शक्यते तथाच परतोऽप्रामाण्यं

स्वतः प्रामाण्यमिति को विशेषः ॥ किञ्च ।

**को वा ज्ञाने समुत्पन्ने पश्चाच्छक्तिं व्यवस्यति। किन्तु तत्र स्थिताप्येषा निमित्तात्सम्प्रतीयते ॥२००**

नहि स्वतोऽसती शक्तिः कर्तुमन्येन पार्यत इति परमतानभिज्ञेनोक्तं को वा ज्ञाने स्वहेतुभ्यः समुत्पन्ने पश्चान्निमित्तान्तरात्तत्र शक्तिरुत्पद्यते इति व्यवस्यति प्रक्रमादभ्युपगच्छतीति, किन्तु तत्र ज्ञाने सहजतया स्थिताप्येषा शक्तिर्निमित्तात्कारणगुणादेः सम्प्रतीयते निश्चीयत इति एतावता परतोऽभ्युपगम्यत इति ॥ ततः किमित्याह ।

**तस्मादर्थक्रियाज्ञानमन्यद्वा समपेक्षते । निश्चयायैव नो तस्या आधानाय विषादिवत् ॥२०१॥**

यत एवं तस्मादर्थक्रियाज्ञानं स्नानपानजलावगाहादिज्ञानं अर्थक्रियानिर्भासिज्ञानमर्थक्रियाज्ञानमुच्यते अन्यद्वा कारणशुद्धिपरिज्ञानं वा समपेक्षते प्रेक्षावान् प्रमाणादर्थमवगच्छन् वाञ्छति निश्चयायैव तस्याः शक्तेः नो पुनराधानाय सिद्धत्वादेवेति विषादिवत् । तथाहि विषादिशक्तिरुत्तरकालभाविनो विकारादनुमीयते पूर्वस्थिता न तु तैर्विकारैराधीयत इति ॥ अत्र चार्थे भवन्तः साक्षिण इति दर्शयन्नाह ।

**शक्तयः सर्वभावानां कार्यार्थापत्तिसाधनाः । वदता परतो हन्त त्वयैव ह्युपपादितम् ॥२०२॥**

षड्विधामर्थापत्तिं साधयता शक्तयः सर्वेषां भावानां कार्यार्थापत्तिसाधना इत्युक्तं ततश्च परतो निश्चीयन्त, इत्युक्तं भवति अस्माभिरपि तदेवोक्तमिति किन्तु शक्तिलक्षणं प्रामाण्यं परतो हन्त वल्लभ त्वयैव भवतैवोपपादितं साधितमिति ॥ यदुक्तं "अनपेक्षत्वमेवैकं प्रामाण्यस्य निबन्धनं तदेव हि विनश्येत्तु सापेक्षत्वे समाश्रितं इत्यादि" तत्राह ।

**अनपेक्षत्वमेवैकमप्रामाण्यनिबन्धनं । इत्यादि वदतां नैव मुखभङ्गादिसम्भवः ॥ २०३ ॥**

यथा अनपेक्षं प्रामाण्यं भवानाह एवं यदि परोपि ब्रूयान्न मुखभङ्गादिसम्भवः । अथ दोषसापेक्षमप्रामाण्यमेवं गुणसापेक्षं प्रामाण्यमस्तु । नन्वतीन्द्रियेन्द्रिये तद्गतगुणानामप्यतीन्द्रियत्वान्न प्रत्यक्षेण प्रतीयन्ते तदभावे नानुमानेनापि न चात्र प्रमाणान्तरप्रवृत्तिस्तत्कथं सापेक्षत्वं तर्हि अतीन्द्रियाश्रितदोषाणामप्यतीन्द्रियत्वान्न प्रत्यक्षादिगम्यता तदपि स्वतोऽस्तु । ननु दोषाभाव एवेन्द्रियस्वरूपं यद्येवं गुणाभाव एवेन्द्रियस्वरूपमस्तु नापरे केचन दोषास्तदपि स्वतोऽस्तु । नन्विदानीं सदोषमिन्द्रियं ममेति लोको वदति ततो न दोषात्मकमिन्द्रियं किन्तु स्वरूपमस्तु रूपातिरेकिणो दोषा इति, यद्येवं लोक एवमपि वदन्नुपलभ्यते वैद्योपदेशात्समासादितगुणमिदानीं मदीयमिन्द्रियमिति ततो न गुणात्मकमेवेन्द्रियं किन्त्विन्द्रियातिरेकिणो गुणाः तदधीनं तदपि परतोऽस्तु मतिबिम्बेनैव समानगुणदोषमिदमिति ॥ ननु

**आत्मलाभे हि भावानां कारणापेक्षिता भवेत् । लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥ २०४ ॥**

आत्मलाभे स्वोत्पत्तौ भावानां घटादीनां कारणापेक्षिता कुलालाद्यपेक्षा इष्यते अभ्युपगम्यते दृष्टत्वात् । लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु, लब्धात्मनां समासादितात्मरूपाणां स्वकार्येषु जलाहरणादिषु कुलालादिनिरपेक्षैव प्रवृत्तिर्व्यापारः स्वयमेव जनकनिरपेक्षमेव योपिदादयस्तु जनका घटादीनामिति भावः ॥ सूरिराह ।

**अन्यत्र युज्यते चैतन्न ज्ञाने क्षणनाशिनि । नाशादुत्तरकालं हि तस्य वृत्तिः कथं भवेत् ॥ २०५ ॥**

अन्यत्र ज्ञानाद् घटादौ युज्यते घटमानकमेतत् आत्मलाभे हीत्यादि न पुनर्ज्ञानेऽप्येवमभिधातुं शक्यं किम्भूते क्षणनाशिनि क्षणादुत्तरकालं नश्वरशीले, यदुक्तं भवदाचार्येण क्षणिका हि सा न कालान्तरमवतिष्ठते इति किमिति नैवं शक्यते

वक्तुं ज्ञान इत्याह । नाशादुत्तरकालं हि तस्य वृत्तिः कथं भवेत्, क्षणिकत्वादुत्पत्त्यनन्तरमेव नाशात्तस्य ज्ञानस्य वृत्तिः स्वकार्ये वर्त्तनं कथं भवेन्न कथञ्चिदित्यर्थः ॥ ननूत्पत्तौ स्वकार्ये स्वनिश्चितौ वा कारणगुणा ज्ञाता अपेक्ष्यन्ते प्रमाणेन प्रमात्रा उताज्ञाता अपि प्रमाणान्तरेण तेनैव वा न तावत्तेनैवेतरेतराश्रयापत्तेः, नापि प्रमाणान्तरेणानवस्थापत्तेरेतदेवाह ।

**कारणेषु गुणज्ञानं नापेक्ष्येतानवस्थितेः ।एकत्र दृष्टसंवादे शुद्धिः किं नानुमीयते ॥ २०६ ॥**

पूर्वार्द्धेन परवचनं उत्तरार्द्धेन सूरिवचनं कारणेषु कारणविषये गुणज्ञानं कारणेषु चक्षुरादिषु गुणा नैर्मल्यादयस्तद्ग्राहकं ज्ञानं प्रत्यक्षादि नापेक्ष्येत प्रमात्रा प्रमाणेन वा, कुत इत्याह । अनवस्थितेरनवस्थानात् गुणग्राहि ज्ञानमपि तद्ग्राहकं स्वकारणगुणज्ञाने तद्गुणज्ञानमपि तद्ग्राहकं स्वकारणगुणज्ञान एवं चानवस्थेति सूरिराह । एकत्र कचित्प्रदेशे दृष्टः संवादो यस्य तस्मिन् शुद्धिर्गुणवत्कारणमित्यर्थः । किं कस्मान्नानुमीयते अपित्वनुमीयत एव । इदमुक्तं भवति अन्यार्थमुपसर्पतोपि जलग्राहिज्ञानमुत्पन्नं गच्छता च कल्हारवारमकरन्दसारं वारि प्राप्तं ततोऽस्य कारणशुद्धिपरिज्ञानमुत्पन्नं तथाचान्यदपि तथा प्रमिणोतीति काऽनवस्था ॥ संवादात्प्रामाण्यनिश्चयेऽनवस्थां परो दर्शितवान् "संवादेनापि संवादः पुनर्मृग्यस्तथैव हि" इति तत्राह।

**संवादेनापि संवादो नैव मृग्यो न तद्यतः ।अर्थक्रियाभिनिर्वृत्तेः साशङ्का न तदर्थिनः ॥२०७॥**

संवादेनापि उपदर्शकज्ञानेनैव तदुत्तरकालभाविनाऽर्थक्रियालक्षणेन संवादेनापि नैव मृग्योऽन्वेषणीयः संवादक इत्याह । अर्थक्रिया स्नानपानावगाहनलक्षणा न तस्यां जातायामपि संवादान्तरापेक्षा, कुत इत्याह । न तत् यतः, तत् क्रियाज्ञानं यद्यस्मान्न सा शङ्का किं सत्यं जलं पीतमुतासत्यमित्येवं शङ्काया अभावात् । तृडुच्छेदस्य स्वस्थानुभवरूपस्य संवेदनेनैव सिद्धत्वादिति न नैव तदर्थिनोऽर्थक्रियार्थिनः फलप्राप्तेरिति ॥ भवतैवात्र स्वहस्तो दत्त इति दर्शयन्नाह ।

**आशङ्क्येत हि यो मोहादजातमपि बाधकम्। भवतेत्यादि गदितं तत एव प्रशस्यते ॥ २०८॥**



आशङ्क्येत मा कदाचिद्बाधको भविष्यतीति यो मूर्खो मोहादज्ञानादजातमपि अनुत्पन्नमपि बाधकं तस्यालीकताधायकम् आदिशब्दात्संशयात्मा सर्वव्यवहारेषु क्षयं व्रजेदिति सङ्ग्रहः। इत्यादि गदितमभिहितं भवता कारिकायां तत एव तेनैव कारणेन प्रशस्यते श्लाघ्यते न्यायवादी भवानिति भावः ॥ किञ्च।

**अप्रामाण्यं स्वतो नेति प्रामाण्यं स्वत इष्यते। को विशेषस्त्वया दृष्टो नानवस्था तवापि किं॥२०९**

अप्रामाण्यं विसंवादनशक्तिः स्वतो निमित्तान्तरानपेक्षं प्रामाण्यापवादकदोषानधीनं नेति नैव प्रामाण्यं स्वतोपि विज्ञानोत्पादकव्यतिरिक्तनिमित्तान्तरानपेक्षमिष्यतेऽभ्युपगम्यते अत्र को विशेषो दृष्टः स्वतोऽसती शक्तिर्नैवापि कर्तुं पार्यत समानेपि प्रवृत्तिनिमित्ते को विशेषः किमाधिक्यं त्वया तत्त्वान्वेषणपरेण सता दृष्टो येनैकमन्यथा अन्यथा चान्यदिति। नानवस्था तवापि किं यथाहि परतः प्रामाण्येऽनवस्था तथा परतोऽप्रामाण्येपि कथं न ते भवतीपीति ॥ पर आह।

**परायत्तेपि चैतस्मिन्नानवस्था प्रसज्यते। प्रमाणाधीनमेतद्धि स्वतस्तच्च व्यवस्थितम् ॥ २१०॥**

यदुक्तं को विशेषो दृष्टः सोऽयं विशेषो येनास्मत्पक्षेऽनवस्था न भवति परायत्तेपि निमित्तान्तरसापेक्षत्वेपि एतस्मिन् प्रमाणे नानवस्था भवतामिव, कुत एतदित्याह। प्रमाणाधीनं प्रमाणायत्तमेतत् प्रामाण्यं तच्च प्रमाणं न प्रमाणान्तरसम्पाद्यं भवतामिवास्माकं येनानवस्था स्यादिति, यतः स्वतस्तच्च प्रमाणं प्रतिष्ठितं स्वव्यवस्थितप्रामाण्यमित्यर्थः ॥ पुनः पर एवाह।

**तत्रापि त्वपवादस्य स्यादपेक्षा पुनः क्वचित्। जाताशङ्कस्य पूर्वेण साप्यल्पेन निवर्त्तते ॥ २११॥**

तत्रेति प्रमाणे अपिः सम्भावनायां तुर्विशेषावधारणे सम्भाव्यत एवैतदत्रापेक्षा स्यात् पुनः युक्त्या निश्चितेपि प्रामाण्ये पुनरुत्तरकालमपेक्षा प्रमाणान्तरगोचरा स्यात् क्वचिदुपदर्शकज्ञाने, कथमित्याह जाताशङ्कस्य जातसंशयस्य पूर्वेण पूर्वोपलब्धमरीचिकाज्ञानेन सापि शङ्का अल्पेन निवर्त्तते ।

**बाधकान्तरमुत्पन्नं यद्यस्यान्विच्छतोऽपरं । ततो मध्यमबाधेन पूर्वस्यैव प्रमाणता ॥२१२॥**

बाधकान्तरं प्रमाणाभिमतबाधगोचरं बाधकान्तरं बाधकबाधकमित्यर्थः यदि कथञ्चिदित्यर्थः अन्विच्छतोऽमन्दयत्नेनान्वेषणं कुर्वतः ततो मध्यमबाधेन मध्यमं प्रमाणाभिमतबाधकं तस्य बाधो निराकारः तेन पूर्वस्यैव प्रमाणाभिमतस्यैव प्रमाणता निरपवादत्वादेतदुक्तं भवति यदि प्रमाणबाधकाभिमतस्यापरं बाधकमुत्पन्नं तदा तेन प्रमाणापवादनिराकरणात्पूर्वस्य स्वतः सिद्धा प्रमाणतेति ॥

**अथानुरूपयत्नेन सम्यगन्वेषणे कृते । मूलाभावान्न विज्ञानं भवेद्बाधकबाधकम् ॥ २१३ ॥**

अत्र लुप्तनिर्दिष्टो वाशब्दो द्रष्टव्यः तेन अथवानुरूपयत्नेन सूक्ष्मेक्षिकां विना यत्नेनादरेण सम्यगन्वेषणे कृते तत्कालभाविबाधकाभावशोधने कृते मूलाभावान्निमित्ताभावात् न विज्ञानं भवेज्जायेत बाधकस्य मध्यमस्य बाधकम् ॥

**ततो निरपवादत्वात् तेनैवाद्यं बलीयसा । बाध्यते तेन तस्यैव प्रमाणत्वमपोद्यते ॥ २१४ ॥**

तत इत्युपसंहारे निरपवादत्वाद्बाधकाभावात् तेनैव मध्यमेनाद्यं बलीयसा दृढेण बाध्यते निराक्रियते तेन तस्यैवाद्यस्य प्रमाणत्वमपोद्यते निषिध्यते परतश्चाप्रामाण्यमिष्टमेवेति ।

**एवं परीक्षकज्ञानत्रितयं नातिवर्त्तते । ततश्च जातबाधेन नाशङ्क्यं बाधकान्तरम् ॥ २१५ ॥**

एवमनन्तरोक्तेन न्यायेन परीक्षकज्ञानत्रितयं नातिक्रामतीति, ततश्च जातबाधेन अदृष्टबाधकेनेत्यर्थः । नाशङ्क्यं नापे-

क्षणीयं बाधकं प्रमाणापवादकं पुनरपीति ॥ सूरिराह ।

**यद्येवमनवस्थैषा ममाप्येवं न युज्यते । समानन्यायमारूढावावां हन्ताविशेषतः ॥ २१६ ॥**

यदीत्यभ्युपगमे यदि तवापि सङ्गतोऽयं पक्षः अनवस्था परापरमाप्तिरेषा या त्वया मां प्रत्यभिहिता सा ममाप्येवं न युज्यते न सङ्गच्छते, । किमित्याह । समानन्यायमारूढौ तुल्यनीतिसङ्गतौ आवां हन्त वल्लभाविशेषत अविशेषणेति । एतदुक्तं भवति प्रमाणाभिमते प्रामाण्यापवादकं प्रमाणान्तरं जातं तत्रापि तदपवादकमपरमेवं यदि त्रितयं नातिवर्त्तते संवादपक्षेपि संवादान्तरापेक्षा तृतीयान्नाधिका भवतीति ॥ पर आह ।

**एकार्थमथ भिन्नार्थं प्रमाणत्वावधारकं । एकार्थमप्रमाणं तु गृहीतग्रहणादपि ॥ २१७ ॥**

अत्र संवादात्प्रामाण्ये परः प्रेरयति एकार्थमेकविषयप्रवृत्तं भिन्नार्थं भिन्नविषयप्रवृत्तं पूर्वज्ञानस्य प्रमाणत्वावधारकं प्रामाण्यनिश्चायकं यद्येकार्थं तदा गृहीतग्रहणादप्रमाणं तन्न तेन प्रामाण्यनिश्चितिः । किञ्च यद्येकार्थं पूर्वार्थे को विरोधः तदन्यस्मादनवस्था एतच्चापिशब्देन अनिश्चितप्रामाण्यं न प्रमाणं व्यवह्रियते तदोत्तरस्य कथं तन्निश्चयः पूर्वज्ञानादन्योन्याश्रयः स्वतः पूर्वत्र को विरोधः । तदन्यस्मादनवस्था एतच्चापिशब्देन सूचितम् ॥

**भिन्नार्थं यदि विज्ञानमन्यदन्यस्य साधकम् ॥ द्विचन्द्रादिधियोप्येवमस्तु तारादिगोचरम्॥२१८**

भिन्नार्थं पूर्वज्ञानाद्विभिन्नविषयप्रवृत्तं पूर्वज्ञानं हि रूपग्राहि संवादकं च रसग्राहि । अन्यदन्याकारमुत्तरमन्यस्य अन्यजलावभासिनः साधकं भीमन्यायेन प्रामाण्यसाधकम्, तदा किमित्याह द्विचन्द्रादिधियोप्येवमस्तु निशीथिनीनाथद्वयग्राहिबुद्धेरप्यस्तु तारादिगोचरं प्रामाण्यनिश्चायकं प्रथम आदिशब्दो मरीचिकादिग्राहकः द्वितीयस्तु नक्षत्रादिग्राहक इति ॥

**कश्चायं हन्त संवादस्तत्प्राप्यार्थक्रियामतिः । श्रोत्रधीरप्रमाणं स्यादितराभिरसङ्गतेः ॥२१९॥**

कश्चायं कः पुनरयं संवादो नाम हे हन्त वल्लभ अथ मन्यसे किमत्र प्रष्टव्यम् तस्योपदर्शकस्य प्रमाणतयेष्टस्य या साध्या अर्थक्रिया तस्यां मतिर्ज्ञानं संवादोऽस्माकमिष्ट इति सत्यजलोपदर्शकमिदं स्नानपानावगाहज्ञानरूपो वा संवादप्रत्यय इति यद्येवं श्रोत्रं कर्णस्तस्य तेन तस्माद्वा धीर्ज्ञानमप्रमाणं स्याद्भवेदितराभिरिन्द्रियान्तरबुद्धिभिरसङ्गतेरसंवादात्, इदमुक्तं भवति न खलु श्रोत्रबुद्धेर्विषये चक्षुरादिबुद्धीनामपि प्रवृत्तिः, किं तत्र संवादकज्ञानमिति न चान्यविषयः संवादकमतिप्रसङ्गादिति ॥

**पूर्वज्ञानप्रमानं किं प्रमाणं केन चोत्तरम् । स्वसन्ततिसमुत्थं वा सन्तानान्तरवर्त्ति वा ॥२२०॥**

पूर्वज्ञानमुपदर्शकज्ञानमप्रमानमप्रमाणं केन हेतुना चकारो युक्त्यन्तरसमुच्चये उत्तरं संवादकत्वेनाभिमतं तत्रापि संवादान्तरापेक्षणात् । किञ्च तत्संवादकं स्वसन्ततिप्रभवं च द्रष्टुः परसन्तत्यप्रभवं सन्तानान्तरप्रभवं पुरुषान्तरप्रभवं तत्संवादकज्ञानम् ॥

**न चान्यदीयविज्ञानमसिद्धं साध्यसाधकम् । प्रथमोत्तरयोः स्वस्य चेतसोः किं विशिष्यते ॥२२१॥**

नान्यदीयं नैवापरं परसन्तानवर्त्ति विज्ञानमसिद्धं सत्परसंविदामत्यन्तपरोक्षत्वादप्रतीतं सत्साध्यस्य पूर्वज्ञानप्रामाण्यस्य साधकम्, अथ स्वसन्ततिपतितमेव ज्ञानं प्रामाण्यसाधकं तत्रापि पूर्वमुपदर्शकमुत्तरं संवादकमनयोः स्वस्य संविधिनोः किं विशिष्यते किं निर्धार्यते प्रमाणत्वाऽप्रमाणत्वेन ज्ञातुरेकस्य ज्ञानयोरविशिष्टत्वात् । ज्ञातृदोषेण हि ज्ञानं भ्रान्तं स्यादेकज्ञानबीजत्वे न विशेष इति ॥ सूरिराह ।

**उच्यते संशयज्ञानं विपर्यासानुषङ्गि वा । मन्ये न जातु वो ज्ञानं तेनैवमभिधीयते ॥ २२२ ॥**

उच्यते तत्र समाधिः संशयज्ञानं स्थाणुरयं पुरुषो वा इत्युभयपक्षावलम्बिज्ञानं विपर्यासो व्यत्ययस्तदभावस्तत्रानुष- ङ्गोऽनुबन्धो विद्यते यस्य तद्वा ज्ञानमुत्तरेण सम्बन्धः । मन्येहं न जातु कदाचिद्वो युष्माकं ज्ञानमुत्पद्यत इति शेषः तेन कार- णेन एवमनन्तरोक्तक्रमेणाभिधीयते ॥

**तत्रापूर्वार्थविज्ञानं निश्चितं वदता त्वया । परतो निश्चयेप्यत्र नानवस्थेति साधितम् ॥ २२३॥**

साधारणं प्रमाणलक्षणं वदता त्वया हे कुमारिल, किं तदित्याह । तत्रापूर्वार्थविज्ञानं अनधिगतार्थाधिगन्तृ प्रमाण- मिति सूत्रं व्याख्यानयता अनधिगतार्थाधिगन्तृ अपूर्वार्थविज्ञानमित्येकोऽर्थः । शेषं तूपचयव्याख्यानं निश्चितं तद्बाधवर्जित- मिति लक्ष्म कुर्वता स्वतः संवेदनमात्रमेव नार्थे प्रामाण्यनिश्चयोऽन्यथा सर्वसाधारणत्वेन विशेषणाभिधानमनर्थकं व्यवच्छेद्या- भावात्, प्रमाणान्तरेण च निश्चयेऽनवस्था त्वयैव निषिद्धा । त्वयैवात्र समाधेयमिति बाधवर्जितमित्यत्र न स्वरूपबाधा चिद्रूप- तया स्फुटमवभासनात् किन्त्वर्थपरिच्छेदे बाधा प्रमेयस्य प्रमाणान्तरेणान्यथा व्यवस्थापनमित्यर्थः । पात्रकाभावनिश्चयश्च न संवादमन्तरेण ततः पूर्वज्ञानमप्रमाणं किमित्यादिना यदुक्तं भवता तत्र त्वयैव बाधवर्जितमिति वदता समाधेयमिति तदेवोत्तरम- स्माकं भविष्यतीति ॥ तदेवाह ।

**संवादाद्धेतुशुद्धेर्वा ज्ञानं बाधविवर्जितम् । तत्रानवस्थितौ यद्वः समाधानं तदेव नः ॥ २२४ ॥**

संवादोऽर्थक्रियाज्ञानं तस्मात् हेतुश्चक्षुरादिस्तस्य शुद्धेर्वा ज्ञानं बाधवर्जितमवसीयते तत्रानवस्था भवताऽभिहिता तत्र यद्वो युष्माकं समाधानं तदेव नोऽस्माकमिति ॥

**तस्माद्वक्तृगुणाधीनं शब्दे प्रामाण्यमिष्यताम् । वेदे कर्त्तुरभावश्च निःप्रमाणः कथं स वः॥२२५॥**

यस्मात्सुदूरमपि गत्वा परतः प्रामाण्यमभ्युपेयमुपदर्शितन्यायात्, अनवस्थापरिहारोपि तस्मादित्युपसंहारे । वक्ता शब्दप्रयोक्ता तस्य गुणाः न रागद्वेषमोहोद्भवाः किन्तु वीतरागित्वलक्षणास्तदधीनं तन्निमित्तं शब्दे प्रामाण्यमिष्यतामभ्युपगम्यतां न खलु पुरुषमात्रप्रणीते वचसि दृष्टेपि विसंवाददर्शनादप्रामाण्यम्, अभ्युपेयं च शब्दे प्रामाण्यं दानादौ प्रवृत्तिमिच्छतेति प्रतिपादितम्, न च यथोक्तगुणाधारपुरुषप्रणीतप्रवचने विसंवादसंम्भवो, यदाह, "रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम् । यस्य च नैते दोषास्तस्यानृतकारणं किं स्यात् ॥" स्यादेतद्वेदाद्दानादौ प्रवृत्तिर्भविष्यतीत्याह वेदे सामादौ कर्त्तुः प्रणेतुरभावश्च कर्त्तास्य नास्तीति निश्चयः निष्प्रमाणस्तत्साधकप्रमाणशून्यः सन्कथं स प्रणेतुरभावः वो युष्माकं सर्वज्ञप्रतिक्षेपकर्त्तॄणामिति

**सर्वादृष्टिस्तवासिद्धा स्वादृष्टिर्व्यभिचारिणी । विपक्षवृत्ति कालत्वं तदभावं न साधयेत्॥२२६॥**

कर्त्तुरभावो न प्रत्यक्षसाध्यस्तस्य विधिसाधकत्वान्निवर्त्तमानं साधयेत्तन्न सर्वेषामदृष्टिः सर्वादृष्टिस्तवासिद्धा निखिलदेशकालाश्रिताखिलपुरुषदर्शने तज्ज्ञानस्योपलब्धिलक्षणप्राप्तस्यानुपलम्भे सा सिध्यति न चासर्वविदः सा सति च सर्वविदि किं वेदेन तद्वचनादेवेष्टप्रवृत्तेः । स्वादृष्टिः स्वीयमदर्शनं व्यभिचारिणी स्वमातृविवाहादौ व्यभिचारदर्शनात्, अनुमानातदभावश्चेन्न विपक्षवृत्ति कालत्वं । यदुक्तं कुमारिलेन । "अतीतानागतौ कालौ वेदकारविवर्जितौ कालत्वात्तद्यथा कालो वर्त्तमानः समीक्ष्यते ॥" अतः कालत्वं विपक्षवृत्ति कुमारसम्भवादावस्य वर्त्तनात् कर्त्तृस्मृतिः समेहापि, श्रूयन्ते सुलसादयो वेदानां कर्त्तार इति तेन कारणेन तस्य वा कर्त्तुरभावं न साधयेदिति ॥

**आनुपूर्वी नराधीना भारतादौ विनिश्चिता । कालात्ययापदिष्टं तदशेषं तत्र साधनम् ॥ २२७॥**

आनुपूर्वी वर्णानामिति शेषः वर्णक्रमो नराधीना पुरुषप्रणीता भारतादावादिशब्दाद्रामायणादिपरिग्रहः । अतोऽनुमानबाधितकर्मनिर्देशानन्तरं प्रयोगादशेषं तदभावसाधनं कालात्ययापदिष्टं तत्र साधनम् ॥

याज्ञवल्क्य इहोवाच वेदवाक्यश्रुतेरपि । नाकर्तृकत्वमेतस्य खाण्डिकीयविधानतः ॥२२८॥

याज्ञवल्क्य इतीहोवाच एवं वेदे वाक्यश्रुतेस्तत्प्रणीतत्वमवसीयते अतः आगमेनापि नाभावः कर्तुरिति । खाण्डिकीयविधानतः । लुप्तोत्र चकारो निर्दिष्टस्तेन खाण्डिकीयविधानतश्च । खण्डिकया प्रोक्तं वेदमधीयन्ते खाण्डिकीयाश्छात्रा, यदि प्रोक्तमध्यापितं कोत्र विशेषोऽन्यत्रापि ठण् प्राप्नोति । तथाच वेदाङ्गभूतपाणिनिव्याकरणात्खण्डिकादिभ्यष्ठणिति व्याहतं वच इति उपमानादेरमानत्वं परस्तादभिधास्यते निष्प्रमाणस्ततो हेतुर्यः सूचितः स न सिद्ध उक्तक्रमादिति ॥ किञ्च ।

क्रियाप्रज्ञादयोप्येते गुणाः सत्यत्वहेतवः । पुंसि धर्मिणि वर्त्तन्ते तदभावे सत्यता कथम् ॥२२९

क्रिया प्राणिदया प्रज्ञाबुद्धिर्ज्ञानमादिशब्दाद्रागाद्यभावग्रहः एते गुणाः सत्यत्वावितथाविधानत्वहेतवस्ते च पुंसि धर्मिणि आधारे वर्त्तन्ते तिष्ठन्ति तदभावे तदाश्रितगुणाभावे सत्यता कथं न कथञ्चिदित्यर्थः ॥

वितथार्थाभिधायी च नित्यत्वान्नेति का प्रमा । वायुर्गन्ता स्थिरा भूमिरमूर्त्तं चाम्बरं तथा ॥२३०

वितथमलीकं तमभिधातुं शीलं यस्य स तथा नकारः प्रतिषेधवाचक इति एवमर्थे एतस्मिन्नर्थे का प्रमा किं प्रमाणं न किञ्चिदित्यर्थः । इदमुक्तं भवति यदि नाम नित्यो वेदः वितथार्थाभिधायी न भवतीत्यत्रार्थे का प्रमा भवतां कुतः प्रमाणात्सिद्धमेतदित्यर्थः । पूर्वार्धे चकारो व्यवहितसम्बन्धोऽव्ययानां व्यवहितसम्बन्धानामपि प्रयोगदर्शनादनेकार्थाश्चाव्यया इष्यन्ते । तेन यस्मादर्थो यस्मान्नित्या अपि नानास्वभावा दृश्यन्ते, तदेवाह वायुः समीरो गन्तानवस्थितस्वभाव इत्यर्थः ।

स्थिरा स्थाणुर्भूमिर्वसुधा अमूर्त्तमचाक्षुषादि अम्बरमाकाशं तथा तद्वच्छब्दोपीति शेषः इदमुक्तं भवति यथा वाय्वादि नित्यमपि नानास्वभावमेवं यदि शब्दोपि नित्यः सन्नपि नानास्वभावः स्यान्न कोपि बाधक इति । इदमुक्तं भवति नित्योपि वायुरपरापरदेशसम्बन्धी स्थिरा भूमिः अपरापरर्तुसम्बन्धिपुष्पफलदात्री नित्यमपि चाकाशं मूर्त्तामूर्त्तसम्बन्धफलभाक् ॥ एतदेव विशेषणाह ।

**दोषाभावेपि वेदस्य नैव सत्यार्थता कुतः । अनर्थकत्वमप्यस्ति यस्मात्पक्षान्तरं परम् ॥२३१॥**

दोषाभावेपि तदाधारपुरुषाभावेन दोषाणामभावेपि वेदस्य सामादेर्नैव सत्यार्थता, कुत इति विप्रः पृच्छति । सूरिराह आनर्थक्यमप्यस्ति आस्तां यन्नित्यो नानास्वभावत्वात्कश्चित्सत्याभिधायी कश्चिदसत्याभिधायीति । अपि तु आनर्थक्यमनकर्थताप्यस्ति । यस्मात्पक्षान्तरं सत्यत्वासत्यत्वाभ्यां परं भिन्नमन्यदित्यर्थः ॥ किञ्च ।

**नित्यं ज्ञानप्रसूतिश्च नित्यं वेदे व्यवस्थिते । सहकारिव्यपेक्षापि न नित्ये युक्तिसङ्गता ॥२३२॥**

नित्यं सदा ज्ञानस्य तज्जन्मनः प्रसूतिरुत्पत्तिश्च चकारो दोषान्तरसमुच्चये । नित्यं वेदे व्यवस्थिते । नित्यत्वादेव नित्यं व्यवस्थितस्तस्मिन्नविकलकारणे व्यवस्थिते सति । स्यादेतन्न सत्तामात्रेण वेदो ज्ञानं जनयति किन्तु सहकारिणोऽपेक्ष्येति तत्राह । सहकारिव्यपेक्षापि न नित्ये युक्तिसङ्गता । सहकारिणस्तदनुवादकादयस्तेष्वपेक्षा तदधीनता सापि शब्दाश्च च ते तस्य सन्तीति दर्शयति । किञ्च वचनमात्रेण नेत्याह । युक्तिसङ्गता नेति सम्बन्धः । युक्तिः प्रमाणनिबन्धना विचारणा तया सङ्गता युक्तेति । एतदुक्तं भवति नित्यस्य सहकारिणः किमुपकारिणः उत नेति । यद्युपकारिण उपकारस्तज्जो नित्याद्भिन्नोऽभिन्नो वा यदि भिन्नः किं तेन सम्बद्धः उतासम्बद्धः । नासम्बद्धोऽतिप्रसङ्गात्सम्बद्धोपि किं तादात्म्येन तदुत्पत्त्या

संयोगेन समवायेन वा तादात्म्येन नित्यानित्ययोस्तादात्म्यविरोधादुपकारवद्वेदस्याप्युत्पत्तिप्रसङ्गात् । नापि तदुत्पत्तिरुपकारस्य सहकारिभ्य एवोत्पादात्तैः सह सम्बन्धोऽस्तु न वेदेन वेदादुपकारोत्पत्तौ किं सहकारिभिर्नकिञ्चित्सन्निदधानेनाप्यनुपकारकेण न च तेभ्य उपकारो भिन्नोऽभिन्नोवेति प्रतिपादितं न च संयोगः सम्बन्धो द्रव्ययोरेव स इति वचनान्नापि समवायः आधाराधेययोरेव तस्य भावान्न च सोपि अनुपकार्यानुपकारकयोरुपकारश्चाधारेणाधेयस्य क्रियमाणो नाभिन्न आधेयस्यैव करणप्रसङ्गादन्यथा भेद एव न च कथञ्चिद्वादी भवानन्यथा सर्वज्ञाभिव्यक्त आगमः परलोकविधौ प्रमाणीकर्त्तव्यस्तत्र चाविवाद एवेति । भेदे चोपकारस्य सम्बन्धान्तरकल्पनेऽनवस्थेति । न चानुपकारिणः सहकारिणोऽतिप्रसङ्गान्नित्यवेदमात्राधीनं च श्रोत्रज्ञानमनवरतमनुषज्येत नित्यं शक्तकारणसन्निधेरनुत्पादे च न नित्यशक्तः शक्ताशक्तयोर्भेदेनावस्थानाद्विरुद्धधर्माध्यासस्य तन्निबन्धनत्वादित्यास्तां तावदिति ॥ भवतु नाम नित्यो वेदः तथापि ।

**सङ्केताधीन एवायमर्थमाह ध्वनिर्यतः । सङ्केतपौरुषेयत्वे दोषस्तत्रापि तादृशः ॥ २३३ ॥**

सङ्केतः समयः सम्बन्धः अस्य शब्दस्यायमर्थः तत्र तस्य वा अधीन आयत्तः सन्नर्थमाह वाच्यमभिधत्ते ध्वनिः शब्दः यतो यस्मात्तेन सम्बन्धे चिन्ता यद्यसङ्केतितमर्थमाह शब्द एकेनैव सर्वार्थप्रतिपत्तिः स्यान्न वा कस्याप्यविशेषात्तस्मात्सङ्केतो वक्तव्यः । स यदि पौरुषेयः पुरुषप्रणीतस्तदा दोषः पुरुषाश्रयस्तत्रापि सङ्केते तादृशो यादृशः शब्द इति ततो "वेदे कर्त्तुरभावाच्च दोषाशङ्कैव नास्ति नः" इति व्याहतमापद्येत ॥ स्यादेतद्वेदवन्नित्यः सम्बन्धोऽपीति तत्राह ।

**नित्यसम्बन्धसद्भावे व्याख्यादीनामसम्भवः। आगमो वर्णनित्यत्वे सर्वो नित्यः प्रसज्यते॥२३४**

यदि नित्यः सम्बन्धः तदा सोऽभिव्यक्तरूपोऽनभिव्यक्तरूपो वा यदि नित्यमभिव्यक्तस्तदा किं व्याख्यातृभिः किं

वा तत्क्रियारूपव्याख्यानेन सम्बन्धप्रकाशहेतुत्वात्तयोस्तस्य च स्वत एव प्रकाशरूपतया स्थितेर्न किञ्चित्ताभ्याम् आदिश-ब्दाद्विकल्पव्याख्यानकरणमयुक्तं सम्बन्धानभिव्यक्तौ संशये तस्य सम्भवात्, अनभिव्यक्तः स इति चेत्तथापि व्याख्यादीनामसम्भवोऽनभिव्यक्तरूपस्य नित्यस्यान्यथाकरणे नित्यताहानेरिति ॥ किञ्च वेदनित्यत्वे द्वयी विकल्पना किं वर्णा नित्या वर्णानुपूर्वी वा यदि वर्णाः तदा आगमो राद्धान्तो वर्णानामकारादीनां नित्यत्वे सर्वो नित्यः प्रसज्यते शाक्याद्यागमस्यापि नित्यता प्राप्नोति ॥ अथानुपूर्वी तत्राह ।

**आनुपूर्वी यदा नित्या नियता स्यादथाखिला । नाखिला सर्वशास्त्राणा प्रमाणत्वप्रसङ्गतः ॥२३४॥**

यद्यानुपूर्वी नित्या तदापि वाच्यं किं नियता काचिदेव उताखिलाऽपीति नाखिला सर्वशास्त्राणां नित्यत्वप्रसङ्गात् तथाच वेदवत् प्रामाण्यमनिवारितमेव तथाचाग्निहोत्रादिक्रिया दुर्गतिनिबन्धनेति वचनस्यापि प्रामाण्यमासज्येत तथापि तद्-करणप्रसङ्ग इति ॥ काचिदेव न सर्वेति चेदाह ।

**नियता को विशेषोऽस्या दृष्टान्यापि विषापहा । सापि तदंशभूतेति तेऽपि विप्रा इवासताम् ॥२३५**

यदि नियता वेदान्तर्गतैव तदा वाच्यं को विशेषोऽस्या अन्याभ्य इति अथाथर्वणान्तर्गता विषापहेति विशेषस्तन्न यतो दृष्टोपलब्धाऽन्यापि कौलिकरजकवरुटाद्यधीयमानापि विषापहेति, सापि वरुटाधीयमाना वेदांशभूतेति चेत्ते वरुटादयः विप्रा इव वेदाध्ययनसद्भावात् विप्रा इवाग्रजातय आसतां भवन्तु ॥ किञ्च ।

**तस्या अप्यर्थसम्बन्धः पौरुषेयो वृथा श्रमः ॥ नित्यो व्याख्याश्रमो व्यर्थो नित्यं श्रवणचेतसः २३६**

तस्या अप्यानुपूर्व्या अपि अर्थसम्बन्धः वाच्येनार्थेन सम्बन्धः पौरुषेयो पुरुषविरचितश्चेद् वृथा श्रमः पौरुषेयस्या-

प्रमाणताहेतुत्वात्, अर्थप्रतिपत्तिः सङ्केतादेव तेन नित्यत्वेपि वेदस्यानित्यत्वे सङ्केतस्य वृथा श्रमो वेदापौरुषेयत्वसाधन इति ॥ तर्हि नित्यो भविष्यतीत्याह नित्यो व्याख्याश्रमो व्यर्थः यदि नित्यः सम्बन्धो व्याख्याश्रमः व्याख्यानपरिश्रमो व्यर्थः स्यात् । कथमित्याह । नित्यं श्रवणचेतसः अस्योत्तरश्लोकेन सम्बन्धः ॥

**प्रसूतिरन्यथा नित्यः स वा सा वा प्रसज्यते । नित्यस्य चैकरूपत्वान्न संस्कारविधिर्मतः॥२३७**

प्रसूतिर्नित्यं श्रवणचेतस इति सम्बन्धः । आनुपूर्व्या नित्यत्वेसङ्केतस्य चानित्यत्वे अविकलकारणत्वान्नित्यं श्रवणचेतसः श्रवणविज्ञानस्य प्रसूतिः स्यादिति शेषः । अन्यथा यद्येवं नेष्यते अनित्यः स वा सङ्केतः सा वा आनुपूर्वी प्रसज्यते यदि कदाचिन्नेति न ह्यविकलकारणे कार्याणि विलम्बत इति युक्तम्, नित्यस्य च सहकारिकारणापेक्षा प्रागेव निरस्ता अत एकरूपे कारणे कार्यं सदैव स्यान्न वा कदाचिदपीति, अथानित्या तदा स एव पौरुषेयत्वलक्षणो दोष इति, स्याच्चैतदभिव्यक्तोनभिव्यक्तो वा नित्यत्वेपि ज्ञानहेतुरित्याह । नित्यस्य च वेदस्य सङ्केतस्य वा एकरूपत्वादप्रच्युतानुत्पन्नस्थिरैकरूपत्वात्, नित्यस्य च न संस्कारोऽनभिव्यक्ताभिव्यक्तिरूपस्तस्य क्रियाकरणं तत्र विधिर्विधानं मतोऽभीष्टो नेति सम्बन्धः ॥ स्यादेतन्नित्यस्यापि संस्कारापेक्षा प्रवृत्तिस्तेनायमदोष इति । उच्यते किं वर्णा नित्या आनुपूर्वी सम्बन्धो वा इन्द्रियं वा यथोक्तम् । "देशकालस्वभावानां भेदेपि च न भेदवान् । गादिवर्णो यतस्तत्र प्रत्यभिज्ञा परिस्फुटा ॥" आनुपूर्वी नित्यत्वप्रतिपादनायोक्तं कुमारिलेन । "तस्मादकृत्रिमः शब्दो न कदाचिद्विनश्यति । नित्येन नित्यसम्बन्धादाकाशपरमाणुवत् ॥" सम्बन्धनित्यताप्रतिपादनार्थमुक्तम् । "तस्माच्छब्दार्थसम्बन्धो नित्य एवाभ्युपेयताम् । न तु सामयिको युक्तः सर्वथा तदसम्भवात् ॥" तत्रामीषां कोऽयं संस्कारः किं पूर्वाशक्तरूपपरित्यागेन शक्तरूपापादनमुत तादवस्थ्यमेव नाद्यो विकल्पोऽमीषामनित्यताप्राप्तेः स्वभाव-

भेदलक्षणत्वाद्भेदस्यान्यथा विश्वस्यैकतापत्तिः सहोत्पत्तिविनाशौ च स्यातामिति तादवस्थ्ये तु न कोऽप्यतिरिक्तः संस्कार- स्तदवस्थः प्रसङ्गः एतद्धृदि निधायाह । नित्यस्य चैकरूपत्वान्न संस्कारविधिर्मतः । नित्यस्य पराभ्युपेतस्य एकरूपत्वादेक- स्वभावत्वात् । न खलु स्वभावान्यथात्वेऽप्येकत्वं यदाह अयमेव भेदो भेदहेतुर्वा यदुत विरुद्धधर्माध्यासः कारणभेदश्च स चेन्न भेदको विश्वमेकं द्रव्यं स्यात्तथाच सहोत्पादविनाशाविति ॥ ततस्तस्य संस्कारस्ततो भिन्नोऽभिन्नो वा क्रियते न भिन्नः सम्बन्धाभावप्रसङ्गान्न तादात्म्यं भेदाङ्गीकरणात्परैरस्यानिष्टेश्च, सहकारिभ्यः संस्कारोत्पत्तेर्नित्याधीनत्वे सततं संस्कारोत्पत्ति- प्रसङ्गान्न तदुत्पत्तिरपि, द्रव्ययोरेव संयोग इति वचनान्न संयोगोऽप्यत्र, समवायस्य चाधाराधेयभूतयोरेव संवर्णनात् सोऽप्युप- कार्योपकारकभावे उपकारोऽपि भिन्नोऽभिन्नो वा भेदे समवायान्तरकल्पनातोऽनवस्था, अभेदे चाधारेणाधेय एव कृतः स्यात् न चासति तस्मिन्नाधारो युक्तः न च सतोऽप्यस्य करणमतिप्रसङ्गात्, अतः पृच्छति कोऽयं संस्कारविधिर्मत इति ॥

**सर्वेषां तुल्यमाकाशं तच्चेच्छ्रोत्रं श्रुतिः समा । यदीयादृष्टसंस्कारस्स शब्दं प्रतिपद्यते ॥२३८॥**

सर्वेषां श्रुतिः समा प्राप्नोति किमिति तुल्यमाकाशं सर्वेषामिति योगः । तच्चेच्छ्रोत्रं चेदिति यद्यर्थे तेन यदि श्रोत्रमा- काशं मन्यस इति, यदीयादृष्टेन श्रोत्रं सम्भूतं स एव शब्दं प्रतिपद्यत इति चेन्न आकाशादीनामनेकतामाप्तेः । अथ जैनैः साङ्ख्यैः सावयवमाकाशमिष्यते तेन नानात्वादाकाशस्यायमदोषः ॥

**पराभ्युपगमो मानं सर्वथा भवतो यदि । परेण पौरुषेयत्वं वेदस्येष्टं न केन वः ॥२३९॥**

यदि पराभ्युपगमो मानं प्रमाणं भवतस्तव हे विप्र तदा परेण पौरुषेयो वेदोऽभ्युपगतः सोऽप्यभ्युपगमो मानमस्त्विति तेन यदुक्तम्, "तेनाकाशैकदेशो वा यद्वा वस्त्वन्तरं परम् । कार्यार्थापत्तिगम्यं तच्छ्रोत्रं प्रतिनरं स्थितम् ॥" तत्र न पराभ्युपगमेन

सावयवत्वं किं तद्वस्त्वन्तरं यच्छ्रोत्रशब्दवाच्यमिति वाच्यं यागविधौ दिशः श्रोत्रमुक्तमिति चेत् यथोक्तम्, दिशः श्रोत्रमिति ह्येतत्प्रलयेष्वभिधीयते ॥ तच्च प्रकृतिगामित्ववचनं चक्षुरादिवत् । तत्राह ।

दिशोपि नित्यतायोगे संस्कारो नोपपद्यते । श्रोत्रदृष्टवशान्नैव संस्कार उभयोरपि ॥ २४० ॥

प्रलयकालोक्ताया दिशो व्यापित्वं नित्यत्वं तदवस्थमिति तदवस्थं दूषणं श्रोतुरदृष्टं कर्म तद्वशान्नैव संस्कार उभयोर्दिगाकाशयोरपि तेन यदुक्तं यदीयादृष्टेन कर्णशष्कुली संस्कृता स एव शब्दं श्रोष्यतीति शब्दं न श्रोष्यति श्रोत्रं तेनासंस्कृतशष्कुली तदपास्तमित्येवं वदतेति न खलु श्रोत्रदृष्टं वस्त्वन्यथात्वं कर्तुं शक्तं दृष्टव्यतिक्रमात् । अन्यथात्वकरणे वा द्वयोरप्यनित्यतापत्तेरिति ॥ यथोक्तं को वा शब्द इहानित्यत्वेन साध्यते किमम्बरगुण इत्यादि तदप्यनुचितं य एव भवता नित्यः साध्यते स एवेति ॥ यच्च यदि पौद्गलः शब्दः किं भूताद्द्रव्यमाविशेषात् को वर्णो निष्पद्यते कथं श्लेषद्रव्यं विनासम्बन्धः कथं वैकेन शब्देन कर्णरन्ध्रे पूरितेऽपरेषां तत्र प्रवेशः कथं पूर्वेषां प्रयत्नमन्तरेण निर्गमस्तत्राह ।

तवापि पौद्गलो नादः कर्णपूरणमायतेत् । विनाप्रयत्नमेतस्य निर्गमोपि कथं हि वः ॥ २४१॥

हे विप्र तवापि समानमेतद्यदत्र भवतः समाधानमस्माकमपि तद्भविष्यति समानन्यायत्वात् । उपलक्षणं चैतत्तवापि श्लेषद्रव्याभावे कथं नादरूपतया घटना कथं वा आगच्छतां विश्लेषो न भवति ॥

वर्णस्यावरणापाये विभुत्वे च श्रुतिर्न किं । सर्वेषामविशेषेण वर्णनानात्वमन्यथा ॥ २४२ ॥

किञ्च यदि स्तिमितवायुना वर्णास्तिरोहितास्तेषां वक्तृप्रेरितवायुना स्तिमितवायुविघटनेनाभिव्यक्तिः क्रियते तदा तत्रोक्तमेव नित्यस्य व्यक्तेरसम्भवादिति किन्तु सर्वत्रावरणापाये विभुत्वे च सर्वेषां श्रुतिः प्राप्नोति । अथ विभुत्वं नेष्यते

यदाह, "यद्यपि व्यापि चैकं च तथापि ध्वनिसंस्कृतिः। अधिष्ठाने तु सा यस्य स शब्दं प्रतिपद्यते ॥" इति व्यक्ताव्यक्तयोर्भेदे-नावस्थानाद्वर्णनानात्वमेवं वदताऽभ्युपेतं स्यात् ॥ तथा।

**कादिजातिसमावेशो व्यक्तीनां नित्यताक्षतिः। श्रोत्रनानात्वपक्षोपि नाकाशैकत्वहानितः॥२४३॥**

ककारनानात्वात्तज्जातिसमावेशस्तथा तद्व्यक्तीनामनित्यतयैव व्यवहारप्रवृत्तेः तथाच यदुक्तं कारिकायां तद्विशीर्येत तथाहि तत्रोक्तं "देशकालविभिन्नाश्च गोशब्दव्यक्तिबुद्धयः। समानविषयाः सर्वा नवा नानार्थगोचराः॥ गौरित्युत्पद्यमान-त्वात्सम्प्रत्युत्पन्नबुद्धिवत्। गोशब्दबुद्ध्या ह्यस्तन्या गोशब्दोऽयं प्रकाशितः॥ गोशब्दविषयत्वेन यथैवाद्यप्रसूतया।" इ-त्यादि तत्सर्वं विघटेतेति। तथा श्रोत्रनानात्वपक्षोपि न युक्तः किमिति आकाशस्य उपलक्षणत्वादिशोपि नानात्वप्रसक्तेः। तथाच यद्यपि व्यापि चैकं चेत्यभ्युपगमविरोध इति ॥ किञ्च।

**न वर्णपदवाक्यानां वैसदृश्यं हि किञ्चन। एकत्रादृष्टसंवादो वेदेऽप्याशङ्क्यते न किम् ॥२४४॥**

वर्णानामकारादीनां पदानां सुप्तिङन्तानां वाक्यानां पदसमुदायरूपाणां न लौकिकेभ्यो वैदिकानां वैसदृश्यं हि य-स्माल्लौकिकवैदिकशब्दानामुच्चारकृतो लिपिकृतो विशेष उपलभ्यते तस्मादेकत्र लौकिकिवाक्ये न दृष्टः संवादो यत्र सोऽदृष्ट-संवादः शब्दः वेदेऽप्याशङ्क्यते वेदोपि विसंवादहेतुरिति आशङ्क्यते न किं केन कारणेन नाशङ्क्यते इत्यर्थः तेन यदुक्तं कुमारिलेन।

**न ह्यतो वचनादर्थं सन्दिग्धं वेत्ति कश्चन। इत्यादि भक्तलोकाना पुरतो ननु राजते ॥२४५॥**

न ह्यतो वाक्यादिति चोदनापि भूतं भवन्तं भविष्यन्तमर्थमवगमयितुं शक्ता नान्यत्किञ्चन इन्द्रियमिति तेनाग्निहोत्रं जु-

हुयात्स्वर्गकाम इत्यतो वेदवाक्यान्न खलु सन्दिग्धमर्थमवगच्छति कश्चन किं स्यान्न वेति इत्यादि भक्तलोकानां पुरतोऽभिधीयमानं राजते शोभते न अस्माकमग्रतो राजते ये युक्तायुक्तं विचारयाम इति ॥ किञ्च ।

**यागात्प्राणिवधस्तस्मादपायः पारलौकिकः। इत्यत्र दृश्यते बाधा न काचिदपि सम्प्रति॥२४६॥**

यागादश्वमेधादेः सकाशात्प्राणिवधोऽश्वादिवधः मन्त्रैरपि मारितो मारित एव न च सत्यं चक्षुस्तेगुन्धामीसादि वाक्यैरसौ म्रियते किन्तु नासादिनिरोधत इति, अतो यागात्प्राणिवधः पश्वादिघातः तस्माच्चापायः पारलौकिकः। "यो मां सर्वगतं ज्ञात्वा न हनिष्यति कदाचन। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥" यस्तु वस्त्रादि हन्ति स वासुदेवं हन्ति ततो अपायस्तदृष्ट्यैव पारलौकिक इति ॥ इत्यत्र दृश्यते उपलभ्यते बाधा व्यभिचारो न काचिद्बाधेति सम्बन्धः सम्प्रति तेन, "न स्त्री दुष्यति जारेण नाग्निर्दहनकर्मणा। नापो मूत्रपुरीषाभ्यां न विप्रो वेदकर्मणा ॥" इति व्याहतं वचनमिति ॥ अवश्यं कालान्तरेप्यत्र बाधया भवितव्यं वेदव्यभिचारासम्भवादित्याह।

**बाधा सम्भाव्यतेऽत्रार्थे वेदे सा केन वार्यते। यद्वा लोकविरुद्धेपि प्रामाण्यं कथमिष्यते॥२४७॥**

यागात्प्राणिवधस्तस्मादपायः पारलौकिकः। यथोक्तम्, "वसेत्स नरके घोरे दिनानि पशुरोमभिः। सम्मितानि दुराचारो यो हन्त्यविधिपूर्वकम् ॥" इति अपायः पारत्रिकः तदयुक्तं यो हन्त्यविधिपूर्वकमिति वचनात्तदयुक्तं यतः शान्तिप्रकरणे भारतेऽभिहितम्। "एकतः क्रतवः सर्वे समग्रवरदक्षिणाः। एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥" अतः सम्प्रति न काचिद्बाधेह बाधाव्यभिचारः सम्भाव्यते भवितव्यमित्यमनेनेति, वेदे सा केन वार्यते वेदे तवाभिमते सा बाधा केन प्रमाणेन वार्यते निषिध्यते न केनचिदित्यर्थः यद्वा लोकविरुद्धेपि वेदे न खलु लोके मातृभोगादिप्रशस्यते। तथाचोक्तम्।

ऋग्वेदे त्रयस्त्रिंशतिये ब्राह्मणे हरिचन्द्रकथायां पाठः । नापुत्रस्य लोके गतिरस्तीति सर्वे पशवो विदुः तस्मात्पुत्रार्थं मातरं स्वसारं चाभिगच्छेदिति एप पन्था उभयगामीत्यादि । तथा । सामवेदे सौमित्रिकाणां गोसवे यज्ञोपदेशे पाठः । एतत्ते सुभगे भगं आलिप्य मधुसर्पिषा जिह्वया लेलिहामीत्यादि । न चैतल्लोके सम्मतम् । न च लोकप्रतीतिबाधितं प्रामाण्यं साध्यमित्यलमतिविस्तरेण ॥ पुनः कुमारिलेनोक्तम्, "धारणाध्ययनव्याख्या नित्यकर्माभियोगिभिः । मिथ्यात्वहेतुरज्ञातो दूरस्थैर्ज्ञायते कथम् ॥ ये तु ब्रह्मद्विषः पापा वेदाद्दूरं बहिष्कृताः । ते वेदगुणदोषोक्तिं कथं जल्पन्त्यलज्जिताः ॥" तत्राह ।

**धारणाध्ययनेत्यादि नाक्रोशः फलवानिह । अज्ञैरज्ञाततत्त्वोऽपि पण्डितैरवसीयते ॥ २४८ ॥**

धारणा पठितस्याविस्मृत्या धरणा । अध्ययनमादौ ग्रहणम् । आदिशब्दाद्व्याख्यादीनां ग्रहः । नाक्रोशः फलवानिह । आक्रोशो ये तु ब्रह्मद्विषः पापा इत्यादिकः स न फलवान्निष्फल आयासमात्रफलो वा इह युक्तायुक्तविचारे न खल्वाक्रोशेभ्यस्तत्त्वज्ञानं स्वस्य परस्य वेति तदर्थश्च विचार इति । यच्चास्माभिर्मिथ्यात्वहेतुरज्ञातो दूरस्थैर्ज्ञायते कथं तत्राह । अज्ञैरज्ञाततत्त्वोऽपि पण्डितैरवसीयते । अज्ञैर्युक्तायुक्तविवेचनाकुशलैरज्ञाततत्त्वोऽपि अविदितस्वभावोऽपि भावः पण्डितैर्विवेचनचतुरैरवसीयते निश्चीयत एवेति ॥ उपसंहरन्नाह ।

**तस्मादतीन्द्रियार्थेषु सर्वज्ञगदितागमः । मानमभ्युपगन्तव्यो न वेदस्तात्त्विको यतः ॥२४९॥**

यत एवमनन्तरोदितमारभ्य तस्मादतीन्द्रियार्थे इन्द्रियविषयातीतेषु भावेषु सर्वज्ञगदितागमः सकलज्ञप्रतिपादितसिद्धान्तः मानं प्रमाणमभ्युपगन्तव्योऽङ्गीकर्त्तव्यः । किमित्याह । न वेदस्तात्त्विको यतः यस्माद्वेद इति यो द्विजातिभिरभिधीयते सोऽनन्तरन्यायान्न तात्त्विकः किन्तु समारोपमात्रेण न च तस्माद्दृश्येऽप्यर्थे निश्चयो युक्तः कुत एवातीन्द्रियेष्विति॥

ननु सर्वज्ञगदितागमः प्रमाणीकर्त्तव्य इत्युक्तमेतच्च सर्वज्ञे सति स्यादित्यादि परः प्रेरयन्नाह ।

**सर्वज्ञे सति तद्वाक्यं प्रमाणत्वं प्रयास्यति तत्सत्तासाधनं मानं नाध्यक्षादीह किञ्चन ॥२५०॥**

सर्वज्ञगदितागमः सर्वज्ञे सति स्यान्न तं विना न हि प्रणेतुरभावे प्रणेयं सिद्ध्यति न च सर्वज्ञाभावे सर्वज्ञप्रणीतं वाक्यं प्रमाणत्वं प्रमाणभावं प्रयास्यत्यभावादेवेत्यर्थः । कथं सर्वज्ञाभाव इति चेदाह । तत्सत्तायाः साधकं तस्य सर्वज्ञस्य सत्ता विद्यमानता तस्याः साधकं निश्चायकं मानं प्रमाणं नेति नैवम् अध्यक्षादि आदिशब्दादनुमानादिग्रहः इह सर्वज्ञसत्तासाधने न किञ्चन किमपीत्यर्थः ॥ कथमेतदित्याह ।

**सदुपलम्भकमानस्य गोचरो नेह सर्ववित् । अभावसाधको भावः सा सत्ता तस्य दुर्लभा ॥२५१**

सत उपलम्भकं सदुपलम्भकं विद्यमानस्य वस्तुन उपलम्भकं ग्राहकं व्यवच्छेदकं व्यवस्थापकं मानं प्रमाणं नाध्यक्षादि प्रत्यक्षानुमानादीत्यर्थः । अत्र प्रयोगः ये सदुपलम्भकप्रमाणविषयभावगनापन्ना न ते सद्व्यवहारविषयाः यथा वन्ध्यास्तनन्धयादयः सदुपलम्भकप्रमाणविषयभावमनापन्नश्च परपरिकल्पितः सर्वज्ञ इति व्यापकानुपलब्धिः ॥ न चायमसिद्धो हेतुरित्यादर्शयितुमाह ।

**चक्षुरादिधियो ग्राह्या परसंविन्नेष्यते यत् । अनुमानं च तत्पूर्वं तदभावेन वर्त्तते ॥ २५२ ॥**

चक्षुरादिर्येषां तानि चक्षुरादीनि तेभ्यस्तेषां वा धीर्बुद्धिर्ज्ञानं चक्षुरादिधीस्तस्याः ग्राह्या परिच्छेद्या परसंवित्परेषां संवित्परसंविन्न यद्यस्मादिष्यतेऽभ्युपेयते तेन न प्रत्यक्षग्राह्या । अत्र प्रयोग इह यत्कृते प्रत्यये यन्न प्रतिभाति न तत्तस्य ग्राह्यं यथा रूपकृते प्रत्यये रसोऽप्रतिभासमानः न प्रतिभासते चक्षुरादिकरणप्रवर्त्तितज्ञाने परसंवित् । न चायमसिद्धो हेतुश्चक्षुरादिधियां

प्रतिनियतेष्वेव रूपादिषु प्रतिनियतप्रवृत्तेः संविदश्चान्यतररूपाभावात् नचान्याकारा बुद्धिरन्यस्य व्यवस्थायिका युक्ताऽतिप्रसङ्गात् । अनुमानात्प्रत्येष्यत इति चेदाह अनुमानं च तत्पूर्वम् अनुपश्चाल्लिङ्गग्रहणसम्बन्धस्मरणान्मानं प्रमाणमनुमानं च पुनरर्थेऽनुमानं पुनः तत्पूर्वं प्रत्यक्षपूर्वं तत्पूर्वं यस्य ततथा तत्प्रत्यक्षं लिङ्गविनाभावाग्रहणपक्षधर्मग्रहणयोस्तन्निबन्धनत्वात्तदभावे न प्रवर्त्तत इति । अत्र प्रयोगो यद्यन्निमित्तं तत्तदभावे न भवति यथा धूमो वह्नेरभावे प्रत्यक्षपूर्वं चानुमानमिति कारणानुपलब्धिः । प्रमाणफलं दर्शयितुमाह । तदभावे न वर्त्तते तस्य प्रत्यक्षस्याभावेऽप्रवृत्तौ न प्रवर्त्ततेऽत्रार्थे इति शेषः ॥ न चायमसिद्धो हेतुरिति दर्शयन्नाह ।

**अन्योन्याश्रयदोषो वा तत्पूर्वत्वेऽनवस्थितिः । आगमोपि न तद्गीतस्तं विना सिद्धिमृच्छति ॥ २५३ ॥**

तथाह्यनुमानं स्वतन्त्रं वाऽनुमानपूर्वं वा न स्वतन्त्रं यतः सिद्धव्याप्तिकलिङ्गजमसिद्धव्याप्तिकलिङ्गजं वा, नासिद्धव्याप्तिकलिङ्गजमप्रमाणत्वाद्व्याप्तिरपि न तत एवान्योन्याश्रयापत्तेरनुमाने सति व्याप्तिसिद्धिस्तत्सिद्धावनुमानसिद्धिः । नानुमानान्तरादनवस्थापत्तेः तदप्यनुमानान्तरमन्यतः सिद्धव्याप्तिलिङ्गजात्तदप्यन्यत इत्यनवस्था । स्यादेतदागमात्तदभावो ज्ञास्यत इत्याह । आगमः सिद्धान्तः सोपि न मानमिति सम्बन्धः कीदृशस्तद्गीतः तेन सर्वविदा गीतः कथितः सोपि तदभावे सर्वज्ञाभावे न सिद्धिमृच्छति याति अन्योन्याश्रयापत्तेः सर्वज्ञे सति तद्गीतागमसद्भावस्तत्सद्भावात्तत्सिद्धिरिति तदन्तरादनवस्थापत्तेरिति ॥

**न चापरं परैरिष्टं प्रमाणं न ततो गतिः । तत्कथं तद्वचो मानं सम्भवत्यनघं ननु ॥ २५४ ॥**

न चापरं प्रमाणत्रितयादधिकं परैर्जैनैरिष्टमभ्युपगतं प्रमाणमुपमानार्थापत्त्यभावाख्यमस्माभिरिव न ततः प्रमाणान्त-

रात् गज्ञिः परिच्छेदस्तत्कथं केन प्रकारेण तद्वचो मानं प्रमाणं सम्भवति निर्मूलत्वात्तस्य निर्दोषं वच इति सम्बन्धः ननि- त्याक्षेपे ॥ किञ्च ।

धर्मज्ञत्वनिषेधश्च केवलोऽत्रोपयुज्यते । सर्वमन्यद्विजानानः पुरुषः केन वार्यते ॥ २५५ ॥



धर्मः शुभक्रियासाध्यः साधनं सुगतेः तं धर्मं जानातीति धर्मज्ञस्तस्य भावो धर्मज्ञत्वं तस्य निषेधः स एव केवलम- त्रोपयुज्यते एतावतैव वेदस्य स्वर्गादिप्रापकानुष्ठानं प्रति प्रामाण्यसिद्धेः । सर्वमन्यद्विजानानः पुरुषः केन वार्यते । धर्मं विहाय सर्वज्ञस्सर्वमन्यद्विजानातु यदि जानाति सम्भवी यथेच्छमसौ जानातु न वयं वारयामः किन्तु दृश्यति क्रमो दोषो दुर्वारो न खलु चक्षुषो रूपादन्यत्र प्रवृत्तिः तत्रापि स्थिरस्थूलयोग्यदेशावस्थितरूप एव न रसादौ ततो यदि चक्षुषा गन्धादीन्न जा- नाति किञ्चिज्ज्ञ एव जानाति चेत् दृश्यतिव्यतिक्रमदोषो दुर्वार इत्युक्तमिति ॥ किञ्च ।

समस्तावयवव्यक्तिविस्तरे ज्ञानसाधनम् । काकदन्तपरीक्षावत् क्रियमाणमनर्थकम् ॥ २५६ ॥

समस्ताश्च तेऽवयवाश्च तैर्व्यक्तयस्तासां विस्तरः तस्मिन्साधनम्, इदमुक्तं भवति समस्ताः सर्वे अवयवाः परमाणव- स्तैरेतावद्भिः परमाणुभिः निर्मितैरेषा व्यक्तिर्गवादिपिण्डस्तथा तासां व्यक्तीनां विस्तर एतावत्यो जगति व्यक्तयो नाधिका वापि न्यूनास्तत्र साधनं प्रमाणं क्रियमाणमनर्थकं निष्फलम्, यदाह । कीटसङ्ख्यापरिज्ञानं तस्य नः कोपयुज्यते ततो न किञ्चिदेतेनेति, किंवदित्याह । काको वायसस्तस्य दन्तास्तेषां परीक्षा यथा निष्फला काकदन्तानामसत्त्वादेव सतामपि पुरु- षार्थेऽनुपयोगात्तेषां परीक्षा क्रियमाणा यथा निष्फला एवं सर्वज्ञ्याप्यसत्त्वात्तदसत्त्वं तत्साधकप्रमाणाभावात्सतोपि पुरुषा- र्थेऽनुपयोगात्तत्साधनमफलमेव धर्मस्य प्रधानपुरुषार्थस्य वेदादेवाधिगतेरिति ॥ किञ्च सर्वं जानातीति सर्वज्ञः स चैवम्विधो न सम्भवतीति दूषयन्नाह ।

एकस्यापि शरीरस्य यावन्तः परमाणवः । केशरोमाणि यावन्ति कस्तान्विज्ञातुमर्हति ॥२५७

एकस्यापि आस्तां सर्वेषां शरीरस्य गजादेर्देहस्य यावन्तो लक्षकोटीसङ्ख्यया एतावन्त एते इति परमाणवो निर्विभागा भागाः केशाः कुन्तलाः रोमाणि शरीरोद्भवा लघवो बाला यावन्ति तानि च सङ्ख्यया परिच्छिद्य एतावन्तः परमाणव एतावन्तो बाला एतावन्ति रोमाणि अत्र शरीरे को ज्ञातुं शक्नोति दुर्विज्ञेयत्वादिति ॥

साक्षात्प्रत्यक्षदर्शित्वाद्यस्याशुचिरसादयः । स्वसंवेद्याः प्रसज्यन्ते को नु तं कल्पयिष्यति ॥२५८

साक्षादव्यवधानेन प्रत्यक्षदर्शित्वादनुभवादित्यर्थः यस्य सर्वज्ञस्य अशुचिरसादयः स्वसंवेद्याः प्रसज्यन्ते अनुभवप्राप्ताः प्राप्नुवन्ति कस्तं कल्पयिष्यति ॥

येपि विच्छिन्नमूलत्वाद्धर्मज्ञत्वे हते सति । सर्वज्ञान् पुरुषानाहुः तैः कृतं तुषकण्डनम् ॥२५९॥

येऽपि जैनादयो विच्छिन्नमूलत्वात् त्रुटितनिबन्धनत्वात्सर्वज्ञानाहुरितिसम्बन्धः कथं विच्छिन्नमूलत्वमित्याह । धर्मज्ञत्वे हते सति चोदनैव यच प्रमाणमिति भावः । सर्वज्ञान्पुरुषानाहुस्तैर्जिनादिभिः कृतं निष्पादितं तुषकण्डनं तत्करणे तन्दुलानामप्राप्तेर्यथाहि तुषकण्डने कृते सुचिरेणापि न तन्दुलप्राप्तिरेवं धर्मज्ञत्वं विनाशेषपरिज्ञानेपि न तदुपदेशाद्धर्मार्थिनः पारलौकिकविधौ प्रवृत्तिरिति ॥ यच्चोक्तं युष्माभिरपि शङ्करादयः सर्वज्ञाः इष्टा इति तत्राह ।

क च बुद्धादयो मर्त्याः क च देवोत्तमं त्रयम् । देवा यदि च सर्वज्ञा बुद्धादेर्मानुषस्य किम् ॥२६०

क च बुद्धादयः आदिशब्दात्कपिलादिपरिग्रहः । मर्त्या मानुषमात्रमित्यर्थः । क च देवोत्तमं देवानामप्युत्तमं त्रयं

ब्रह्मविष्णुमहेश्वरलक्षणं का एभिः समग्रीयेति भावः । देवाः सृष्टिसंहारकारिणो यदि सर्वज्ञा भवन्तु नाम न देवचरितं चरेत् बुद्धादेर्मानुषस्य सतः किं सर्वज्ञत्वेनेति शेषः ॥ ननु बुद्धादिभिरपि तत्त्वमुद्दिष्टं कथं न ते सर्वज्ञा इत्याह ।

**उपदेशो हि बुद्धादेरन्यथाऽप्युपपद्यते । स्वप्नादिदृष्टव्यामोहाद्वेदाद्वा वितथश्रुतात् ॥ २६१ ॥**

उपदेशो यस्मात् बुद्धादेरन्यथापि सर्वज्ञत्वं विनापि शासनप्रणयनलक्षण उपदेश उपपद्यते युक्तो भवतीति कथमित्याह । स्वप्नः प्रतीतः आदिशब्दात्तु क्षोभादिग्रहः । स्वप्नादौ दृष्टे व्यामोहस्तस्माद्वेदाद्वा, किंभूतादित्याह । वितथश्रुतादर्थत्वेनानवधारितादित्यर्थः ।

**यद्यसौ वेदमूलः स्याद्वेदवादिभ्य एव तम् । उपदेशं प्रपच्छेयुर्यथा मन्वादयस्तथा ॥ २६२॥**

यद्यसावुपदेशो बुद्धादीनां वेदमूलो यथार्थवेदमूल इत्यर्थः तदा वेदवादिभ्य एव ब्राह्मणेभ्य एव तमुपदेशं प्रपच्छेयुरन्येषामनधिकारित्वादिति, किंवदित्याह यथा मन्वादयो वेदवादिभ्य एवोपदेशं दत्तवन्त एवं तेपि वेदवादिभ्य एवोपदेशमकार्षुर्न वै मतो विपर्यय इति ॥ एवं द्विजातिनोक्ते सत्याह सूरिः ॥

**उच्यते तदभावोपि न प्रमाणात्कुतोपि वः । आश्रयासिद्धता नापि शब्दे धर्मिणि युज्यते॥२६३**

यत्तावदुक्तं ये सदुपलम्भकप्रमाणविषयभावमनापन्ना न ते सद्व्यवहर्तव्या इत्यादि प्रयोगे तत्राह उच्यते भवतोपि तदभावस्तस्य सर्वज्ञस्याभावोपि कुतः कस्मान्मानात्प्रमाणात्प्रत्यक्षादेर्विनिश्चितो न कुतोपीत्यर्थः । तथाहि प्रत्यक्षं नाभावसाधनमन्यथा भावव्यवहारोच्छेदापत्तेः नापि निवर्त्तमानं तत्तदभावसाधकं प्रमाणस्य प्रमेयकार्यत्वाभ्न च कार्याभावे कारणाभावो दृष्टो धूमाभावेपि वह्निसद्भावादिति । किञ्च सर्वादृष्टेः सन्दिग्धासिद्धत्वात्स्वादृष्टेः स्वमातृविवाहादावनैकान्तिकत्वाज्ज्ञात-

स्तदभावः नाप्यनुमानात्तदभावगतिः कार्यस्वभावहेत्वोर्विधिसाधकत्वात्स्वभावानुपलम्भस्य एकज्ञानसंसर्गिपदार्थान्तरोपलम्भरूपत्वान्न चात्यन्ता सतैकज्ञानसंसर्गः सम्भवति तन्न स्वभावानुपलम्भोऽत्र सम्भवी, कारणव्यापकानुपलम्भौ तु सिद्धे कार्यकारणव्याप्यव्यापकभावे भवतः तत्सिद्धिश्च प्रत्यक्षानुपलम्भाभ्यां न चासति प्रत्यक्षानुपलम्भनिबन्धनौ तौ भवतस्तन्न ताभ्यामपि विरोधोपि प्रत्यक्षानुपलम्भसाध्यस्तदभावे न प्रवर्त्तते तन्नानुमानादपि तदभावसिद्धिर्नाप्यागमात्पुरुषमात्रप्रणीतस्याप्रमाणत्वात्सर्वज्ञप्रणीतस्य तदभावेऽसम्भवादपौरुषेयस्य चानन्तरमेवनिषिद्धत्वान्न चापरं प्रमाणान्तरमस्ति उपमानादीनां निषेत्स्यमानत्वादत्रैव ततो भवतोपि तदभावः कुतोमानादिति वाच्यमिति । यच्चोक्तं सर्वज्ञसत्तासाधने हेतुराश्रयासिद्धः सर्वज्ञरूपस्य धर्मिणोऽसिद्धेराश्रयासिद्धो हेतुः सर्वज्ञसिद्धौ वा हेतुर्वैयर्थ्यम् । किञ्च यदि भावधर्मो हेतुस्तदा भावेऽसिद्धे हेतुरसिद्धः अथाभावधर्मो हेतुस्तस्याभावाव्यभिचारित्वाद्विरुद्धो हेतुरथोभयधर्मो हेतुस्तस्योभयव्यभिचारित्वात् अनैकान्तिको हेतुरित्यत्राह । नाश्रयासिद्धताहेतोः शब्दे धर्मिणि युज्यते । न खलु वचने धर्मिणि हेतोराश्रयो न सिद्धो वचनस्यैवाश्रयत्वात् तेन यदुक्तं यदि भावधर्म इत्यादि तदयुक्तं वचनरूपिणो भावस्य धर्मो हेतुस्तेन नासिद्धो भावस्य सिद्धत्वात्तद्धर्मस्यापि सिद्धेरत एव विरुद्धानैकान्तिकयोरसम्भव इति ॥ एतदेव प्रयोगेण दर्शयितुमाह ।

**सर्वज्ञवीतरागोक्तमाचारादिवचः स्फुटम् । तदुक्तार्थाविसंवादात्प्रत्यक्षेणैव कुत्रचित्॥२६४॥**

सर्वज्ञोपि योपिदासक्तत्वान्परैः परिकल्पितस्तेन वीतरागग्रहणम् । वीतरागोऽप्यसर्वज्ञ उक्तो यथा बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते बुद्धिश्च प्रकृतिविकारः । यदाह, प्रकृतेर्महान्महतोऽहंकार इत्यादि महदिति बुद्धेः संज्ञाप्रकृतिवियोगाच्च केवलमिति । बुद्धिविकलस्तु कथं पदार्थमात्रमपि जानातीति तेन सर्वज्ञग्रहणम् । सर्वज्ञश्चासौ वीतरागश्च तेनोक्तमाचारादि अङ्गा-

नङ्गप्रविष्टं कालिकोत्कालिकरूपं च एतदन्तर्गतो वचनराशिरित्यर्थः। स्फुटं न समारोपेणाचाराद्यन्तर्गतमिति, कथमेतदित्याह। तदुक्तार्थाविसंवादात्तेनाचारादिवचसा उक्तश्चासावर्थश्च तत्राविसंवादाद्धेतोः। असिद्धिपरिहारायाह। प्रत्यक्षेणैव कुत्रचित्। तदुक्ताविसंवादात्प्रत्यक्षेणैव। नन्वतीन्द्रियेषु कथमर्वाग्दर्शिप्रत्यक्षेण संवाद इत्याह। कुत्रचित्कालान्तरभाविनि ऐन्द्रियेऽर्थे तथैवाविसंवाददर्शनात्। प्रयोगस्तु यद्यत्राविसंवादकं वचनं तत्तत्परिज्ञातृप्रणीतं यथा उभयसम्मतो वचनविशेषः स्वार्थेनाविसंवादि चाचाराद्यन्तर्गतं वच इति। न चायमसिद्धो हेतुः प्रत्यक्षेणैव संवाददर्शनात्॥ ननु पक्षैकदेशासिद्धो भविष्यतीत्याह।

**एकत्र दृष्ट संवादं सर्वत्रापि तथेष्यते। नान्यन्निमित्तमत्रास्ति तद्विसंवादकल्पने॥ २६५॥**

एकत्रेन्द्रियविषये दृष्टः संवादो यस्य तत्तथा, अन्यत्रापि इन्द्रियातीते तथेष्यते दृष्टसंवादवदिष्यते। कथमेतदित्याह। नान्यन्निमित्तमत्रास्ति, नान्यत्तत्प्रणीतत्वादन्यनिमित्तमस्ति तस्यातीन्द्रियविषये विसंवादकल्पने चिन्तने, तथाहि यद्यदाचाराद्यन्तर्गतं तत्तदविसंवादकं दृष्टं यथा प्रत्यक्षविषये आचाराद्यन्तर्गतं च स्वर्गादिगोचरमिति स्वभावहेतुः। नन्वत्र विपक्षव्यावृत्तिर्न सिद्धातोऽनैकान्तिको हेतुरित्याह। नान्यन्निमित्तमत्रास्ति तद्विसंवादकल्पने। एकशास्त्रोक्तत्वेपि यद्येकं संवादि तदा वचनान्तरस्य निमित्तान्तरं चिन्तनीयं तावत्यामपि सामग्र्यां सत्यां समं स्यादिति न चान्यन्निमित्तान्तरमसंवादकल्पने समस्तीति॥ यदि परं दृश्ये कालान्तरे बाधकप्रवृत्तिः सम्भाव्यते नातीन्द्रिये तथापि सन्देहादप्रवृत्तिरिति चेदाह।

**अनुमानेपि नैव स्यान्निश्चयः साध्यधर्मिणि। यदि नामैकदा दृष्टः सर्वत्रापि कुतो गतिः॥२६६॥**

अनुमानेऽपि अनुमानादपि आस्तां शब्दादिति नैव स्याद्धेतोर्निश्चयोऽर्थव्यवस्था साध्यधर्मिणि पक्षे, केन कारणेनेत्याह। यदीति अभ्युपगमे नामेति सम्भावनायां अभ्युपगतमेतत्सम्भाव्यते अनुमानेप्येतदिति, किं तदित्याह एकदा कदाचित्

काले क्षेत्रे वा रन्धनादौ वह्निसद्भावे धूमो दृष्टः सर्वत्रापि वह्निसद्भावे धूमो भवतीति कुतः प्रमाणात् गतिर्देशकालान्तरयोः प्रत्यक्षस्याप्रवृत्तेः स्मरणस्य च गृहीतग्राहित्वाच्चाप्रामाण्यं सौगतान् प्रति न चाविकल्पस्यान्वयव्यतिरेकग्रहे प्रवृत्तिः प्रतिपत्त्रध्यवसायापेक्षया च गृहीतग्राहित्वाद्वस्तुनो निर्विषयाच्च विकल्पकस्य न ततोपि तद्गतिर्न चागृहीतसम्बन्धं प्रमाणं न च तत एवानुमानात्सम्बन्धग्रहणम् अन्योन्याश्रयापत्तेः तदन्तरादनवस्थापत्तेः। न चागमे सम्बन्धः पश्यते, अथ समानमनुमानं द्वयोरपि आगमैकविशनिपत्तिः पौरुषेये व्यभिचारदर्शनादिति चेदितरत्रापि समानं सुनिश्चितप्रामाण्येन प्रमात्रा भवितव्यमितरत्रापि समानमिति

**अविनाभावसम्बन्धनिश्चयादनुमा प्रमा। आगमे त्वविनाभाव निश्चयः केन वो ननु ॥२६७॥**

विना न भवतीत्यविनाभावः स एव सम्बन्धः तस्य तत्र वा निश्चयस्तस्मादविनाभावसम्बन्धनिश्चयादनुमानमानं प्रमा प्रमाणम्। आगमेप्येवं भविष्यतीति चेदाह। आगमे तु सिद्धान्ते पुनरविनाभावस्तस्य निश्चयः केन प्रमाणेनेति शेषः वो युष्माकं नन्विति परमूचकमिति ॥

**समानमेतदन्यत्र सममस्तु द्वयं ततः। सर्वत्रामानमध्यक्षं यद्येकत्रान्यथा क्वचित् ॥ २६८ ॥**

समानं तुल्यमेतदन्यत्रानुमानेपीति कथं तवापि तन्मानम्। सममस्तु द्वयं ततः। समं तुल्यवृत्ति भवतु द्वयमनुमानागमरूपं विशेषाभावात् ततोऽविनाभावनिश्चयवशादिति। किञ्च सर्वत्र सत्यजलादौ अमानमप्रमाणमध्यक्षं प्रत्यक्षं यदि एकत्र मरीचिकादावन्यथा दृष्टमिति शेषः। क्वचिदूष्माक्रान्तभूभाग इति ॥

**तदुत्पत्त्याऽविनाभावो वाच्यवाचकतेह च। शब्दार्थयोरसम्बन्धे कथं सापि समं द्वये ॥२६९॥**

तस्मादुत्पत्तिः कारणात्कार्यस्य तयानुमानेऽविनाभावनिश्चयः वाच्यवाचकतार्थो वाच्यः शब्दो वाचकः तद्भावः सा

इह चागमेऽविनाभावनिश्चयकारणमिति शब्दार्थयोरसम्बन्धे कथं सापि शब्दस्यार्थेन सम्बन्धाभावे कथं सापि समं द्वये अनुमाने चागमे च समं तुल्यमेतदिति, सापि तदुत्पत्तिः कार्यकारणयोरसम्बन्धे कथं सैव सम्बन्धो नापर इति चेदिहापि वाच्यवाचकभाव एव सम्बन्धो नापरः कश्चिदिति ॥ यदुक्तं धर्मज्ञत्वनिषेधश्चेत्यादि तत्राह ।

**धर्मज्ञत्वनिषेधोपि भवतामनिबन्धनः । प्रत्यक्षादेरिहावृत्तिः पुरस्तादुपपादिता ॥ २७० ॥**

धर्मज्ञत्वनिषेधो धर्मज्ञो नास्ति न वचनमात्रात्तस्यान्यथाभिधातुं शक्यत्वात् प्रत्यक्षादीनां च अप्रवृत्तिरिहपुरस्तात्पूर्वं सर्वज्ञप्रतिषेधे उपपादिता कथितेति ॥

**एकं जानन् समस्तानि सर्वं जानंस्तथैककम् । ततश्च निष्फलारम्भः केन तत्साधने हि नः २७१**

एकं जानन् हेतुफलरूपतया साधारणतया विवक्षितकार्यसाधकतत्कारणकारणतया व्याघातकतया तद्धेतुतया च एकं जानानः सर्वमन्यद्विजानानीति उक्तक्रमेण तथा यः सर्वं जानाति स एवैकं जानाति तदन्येभ्योऽविज्ञातेभ्यस्तद्व्यवच्छेदासिद्धेरिति अतो वस्तुस्थितिमजानता भवतेदमुक्तमिति ॥ यच्चोक्तं कस्तान् ज्ञातुमर्हतीति तत्राह ।

**क्षायोपशमिका भावाः क्षयमायान्ति कुत्रचित् । क्षायोपशमिकाश्चैता विज्ञानावृतयः स्फुटम् २७२**

क्षायोपशमिकाः क्षयोपशमनिर्वृत्ताः भावाः पदार्थाः वह्न्यादयः क्षयं विनाशमायान्ति कुत्रचिदपरेन्धनप्रक्षेपाभावे क्षायोपशमिकाश्चैताः प्रत्यक्षावसिता ज्ञानावृतयो ज्ञानावरणानि स्फुटमनेनासिद्धतापरिहारमाह । न खलु ज्ञानावृत्तयः क्षयोपशमं न यान्ति ज्ञानस्य तरतमविशेषदर्शनस्यानुपपत्तिप्रसङ्गादिति ॥ यच्च साक्षात्प्रत्यक्षदर्शित्वेत्यादि तत्राह ।

सन्दिग्धेपि च धर्मज्ञे भव्यजन्तोर्न कर्कशः। अधिक्षेपस्य दायिन्यो वाचः पाप यथा तव॥ २७३

सन्दिग्धे विवादास्पदीभूतेपि धर्मज्ञे सर्वज्ञे भव्यजन्तोर्मोक्षगमनार्हप्राणिनः नातिकर्कशः नातिकठोरः अधिक्षेपस्तिरस्कारस्तं दातुं शीला वाचो गिरः हे पाप पापिष्ठ यथा तव हे दुर्बुद्धे ॥

इन्द्रियार्थोपभोगश्च नानक्षेणेति शासितम्। स्वप्ने चाप्यनक्षेण तवापि रससंविदः ॥२७४॥

इन्द्रियार्थो रूपादिश्चक्षुरादिग्राह्यः तस्योपभोगोऽनुभवोऽनक्षेण इन्द्रियातीतज्ञानेन न इति शासितं योगिप्रत्यक्षप्रस्तावे किञ्च स्वप्ने अन्यतरेन्द्रियविषयोपभोगे न तत्रापि रससंविदो बहुवचनं गणपरिग्रहार्थं तेन रसादिसंविदो ज्ञानानि ॥

देवोत्तमत्रयं त्वं वा सर्वज्ञं कथमिच्छसि। साधनं तत्किमन्यत्र व्याघातं प्रतिपद्यते ॥ २७५॥

देवानां शक्रादीनामुत्तमं शक्रादिनिर्माणहेतुभूतं त्रयं ब्रह्मविष्णुमहेश्वररूपं तमपि इत्यर्थः। सर्वं सर्वज्ञं सकलज्ञं कथं केन प्रमाणेनेच्छसि मन्यसे यस्मात्साधनं सर्वज्ञतायां देवोत्तमत्रयस्य यत्तत्किमन्यत्र बुद्धादौ व्याघातं प्रतिपद्यतेऽसाधनतां भजते येन तत्त्रितयं सर्वज्ञं बुद्धादि नेति स्यादिति। तथा सर्वज्ञनिराकरणाय यानि दूषणानि सरभसं त्वयोक्तानि तानि त्रितये कथं नानुषज्यन्ते कथं चानिष्टरसास्वादभोगो नानुषज्यते त्रयस्येति निरूपणीयमिति ॥

उपदेशो हि बुद्धादेरित्यादि विफलं वचः। त्रयेप्यस्य समानत्वात् को विशेषोऽपरत्र वः॥२७६

यदुक्तम्, उपदेशो हि बुद्धादेरन्यथाप्युपपद्यते स्वप्नादिदृष्टव्यामोहाद्वेदाद्वा वितथश्रुतादिति इत्यादि विफलं वचः निरर्थकं वचनमिति, केनेत्याह। त्रयेऽप्यस्य समानत्वात्। ब्रह्मविष्णुमहेश्वरेष्वस्य दूषणस्य तुल्यत्वादथ तत्र यदि दोषो नेष्यते को विशेषोऽपरत्र बुद्धादिषु वो युष्माकं ब्रह्मादयो देवा बुद्धादयो मर्त्या इत्यत्रापि नास्ति प्रमाणम् ॥ यच्च यथा मन्वा-

द्यस्तथा इत्युक्तं कीदृशमुपदिष्टं तैर्वेदवादिभ्य इति । न मांसभक्षणे दोषो न मद्ये न च मैथुने । इति चेदाह ।

**एकतः सर्वपापानि मद्यं मांसं च एकतः । इत्यादि गदितं मोहान्नारदादिभिरञ्जसा ॥२७७॥**

एकतः एकत्र घटे समारोप्यन्ते सर्वाणि पापानि गोब्राह्मणवधादीनि एकत एकस्यां दिशि घटे समारोप्यते मद्यं मांसं च इत्यादि यद्गदितं मोहान्नारदादिभिः स्मृतिकारैर्भवतां प्रमाणवचनैरञ्जसा प्राञ्जलन्यायेन तन्मोहादिति सम्बन्धः ॥ पूर्वोक्तं प्रमाणं स्पष्टतरमाह ।

**यथा यथाऽपनीयन्ते ज्ञानावरणमस्य तु । तथा तथा च संवित्तौ विशेषः सम्प्रतीयते॥२७८॥**

मानुषस्य किमित्युक्तं तत्राह यथा यथेति क्रमशो हानिं चोपचयं च दर्शयति अपचीयते क्षीयते ज्ञानावरणं तपोध्यानादिभिस्तथा तथा चेति पूर्ववत्संवित्तौ संवेदने ज्ञान इत्यर्थः । स्पष्टः स्पष्टतरो विशेषः सम्प्रतीयते निश्चीयते इत्यर्थः ॥

**यच्चापचीयमानं तु सर्वथाऽप्यपचीयते । नारकादेर्यथैवायुः सर्वथैवापचीयते ॥ २७९ ॥**

यत्र यत्पुनरपचीयते अपचीयमानस्वभावं तुरवधारणे यदेवापचीयमानं दृष्टं तदेव सर्वथाप्यपचीयते निःसत्ताकतामपि प्रतिपद्यते । यद्यपरं बन्धे निषेधं कर्तुमीशः सस्यासेन नातिप्रसङ्ग इति । अपिः अस्यैवार्थस्य समर्थनार्थः किंवदित्याह । नारकादेर्यथैवायुरादिशब्दान्मनुजादिग्रहः । न खलु रसायनादेरपि आयुषो वृद्धिर्दृष्टा अन्यथा चिरन्तनानाममरणमपि स्यात् हान्यां च खड्गादयो निमित्तभावं व्रजन्ति दृष्टत्वान्न च वृद्धिर्दृष्टा न चादृष्टकल्पनयात्मानं स्वयमेव विप्रलभेमहीति ॥

**ज्ञस्वभावे स्वतः पुंसि तारतम्यविशेषतः । तपसापचयो दृष्टो ज्ञानावृतिषु कश्चन ॥ २८० ॥**

ज्ञस्वभावे ज्ञानरूपे स्वतः स्वरूपेण, तदुक्तम् , स्थितः शीतांशुवज्जीवः प्रकृत्या भावशुद्धया । चन्द्रिकावच्च विज्ञानं

तदावरणमभवदिति । प्रयोगो यो हि यत्स्वभावो न भवति न स पश्चात्तत्स्वभावः कर्तुं शक्यते यथा हिमांशुः खररश्मितया तद्वद् ज्ञस्वभावो जीवो यदि भवेन्न प्रकाशादिभिरप्युपलम्भस्वभावो भवेदिति एवं चान्धबधिरं जगत्स्यादिति विपर्ययः यच्च ताम्रादयः कठिना अपि द्रवीक्रियन्ते सामग्र्या तदपि न व्यभिचारपदं पर्यायास्तिकनयमतेन वस्तुभेदाद्द्रव्यास्तिकमतेन द्रव्यत्व-मूर्त्तत्वपुद्गलमयत्वादिभिरेवैकत्वं प्रमाणम् तेनानन्तात्मके वस्तुनि न व्यभिचार इति ॥

**अबन्धयोगमापन्ने सर्वथाऽपचयो मतः । साक्षात्तस्य ततो ज्ञानमशेषार्थेषु जायते ॥ २८१ ॥**

इह हि कर्मणां बन्धहेतुरपि योगव्यापारोऽस्ति तत्सद्भावे प्रतिसमयं बन्धभावात्तपोध्यानादिभिरपचयेऽप्यपरबन्धसद्भावान्नात्यन्तिकः क्षयस्तेनैव नातिप्रसङ्गश्चोदनीयः सर्वथा हि निःसत्ताकतया अपचयो विनाशो मत इष्टः साक्षादपरोपाधि तस्य जन्तोर्भगवतो वा ततोऽशेषावरणापगमादशेषार्थेषु सर्वपदार्थज्ञानं जायते प्रादुर्भवतीति, प्रयोगो यत्प्रकाशस्वभावं सर्वथाऽपगतावरणं तत्प्रकास्त्येव यथा तदावारकापगमे भानुः सर्वथापगच्छति कस्याप्यावरणमिति व्यापकानुपलब्धिः । न चायमसिद्धो हेतुरावारकाणामत्यन्तक्षयस्य दर्शनात् । न चेत्थं प्रकरणसमता हेतोः यतो यद् क्षयोपशमभाक् तदात्यन्तिकक्षययुक्तं दृष्टं यथा क्वचित्प्रदेशे वह्निरित्यादिना पूर्वमेव हेतोः साधितत्वात् ॥ एवं च ।

**अशेषावरणापाये ज्ञानं सर्वार्थगोचरम् । ज्ञस्वभावत्वतः पुंसः को नु तं वारयिष्यति ॥२८२**

अशेषं समस्तं तच्च तदावरणं च ज्ञानस्येति गम्यते ज्ञानं जीवस्वरूपमात्रनिश्चये जीवस्वरूपमनावृतं गोचरं विश्ववर्तिपदार्थविषयं ज्ञस्वभावत्वतः पुंसः ज्ञानात्मकत्वाज्जीवस्य तत्तादृशमुपजायमानमशेषार्थेषु युगपदेवोपजायमानं को नु तज्ज्ञानं वारयिष्यति निषेत्स्यतीति वस्तुस्वभावस्य अन्यथा कर्त्ता कः नुरिति वितर्के एतदहं वितर्कयामि वस्तुस्वभावस्यान्यथा कर्त्ता

यस्तद्वारयिष्यतीति । प्रयोगो यः प्रकाशकस्वभावः स आवरणापगमे प्रकाश्यं प्रकाशयत्येव यथा घटान्तर्गतो दीपो घटापगमे प्रकाश्यं प्रकाशयत्येव योग्यानां तथा च कश्चित्पुरुषविशेष इति न चायमसिद्धो हेतुः आवरणापगमस्य पूर्वं दर्शितत्वादिति ॥

**इत्यादि गदितं पूर्वं तद्दोषाणामपाकृतेः । तत्र तत्रैव चोक्तानामभावापत्तितः स्फुटम् ॥२८३॥**

इत्यादि सर्वज्ञविषये गदितमनेकधा पुरस्तात् तथा तत्र भगवति ये दोषाः कुमारिलादिभिरुक्तास्तेषामनन्तरमेवापाकृतेः सर्वज्ञे ये दोषास्तेषामुक्तत्वादित्यर्थः । तत्र तत्रातीन्द्रियविषये येऽर्था अभिहिता एवम्बिधौषधैरेवम्बिधव्याधेरपगमस्तथा एवम्बिधेषु ग्रहेषु एवम्बिधं शुभाशुभं तथैवम्बिधोपरागे सूर्यादेरेवम्बिधमर्थजातं निष्पद्यत इति एवम्बिधेषु वा प्रश्नाक्षरेषु दग्धालिङ्गिताभिधूमितेषु लाभालाभादिरिति । तथा सोमरससम्पर्कादितो रसो बन्धमायातीत्यादि । अभाव आसज्येत न चैव ततो विपर्ययः ॥ पुनः कुमारिल आह ।

**युगपत्परिपाट्या वा सर्वं वैकस्वभावतः । जानन्यथाप्रधानं वा शक्त्या वेष्येत सर्ववित् ॥२८४॥**

युगपदशेषार्थान् जानाति परिपाटिः क्रम एकं ज्ञात्वा पुनरन्यं जानाति एवं वा सर्वं चैकस्वभावतः एकस्वभावतो जात्याश्रयेण स जानन् यथाप्रधानं वा । यथा ग्राम आयात इत्येवं वा जानाति शक्त्या वेष्येत शक्तिः सर्वार्थाधिगन्त्री तया इष्येताभ्युपगम्येत सर्ववित्सर्वज्ञ इति कथं भवता सर्वज्ञ इष्यते इति वाच्यमिति ॥ किमत्रोच्यते प्रयोजनं वद अत्रोच्यते ॥

**नानारूपसमाकारमेकं चेतः कथं नु ते अनाकारे व्यवस्था तु नियतार्थे कथं तव ॥ २८५ ॥**

नाना अनेकरूपं नीलादिसारूप्यं समानाकारं हस्त्यश्वतुल्याकृति नानारूपं यस्य तत्तथा तच्च तत्समानाकारं च नानारूपसमाकारं तदेकं चेतः एकं विज्ञानं कथं केन प्रकारेण एकस्यानेकरूपतादिरहात्, अन्यथा विश्वमेकं द्रव्यं स्यात्तथाच

सहोत्पादविनाशौ स्यातामिति, नुरिति वितर्के एवमहं वितर्कयामि अमम्भव्येषपक्षो यदुत एकस्य वस्तुनोऽनेकस्वभावो यदाह। अयमेव भेदो भेदहेतुर्वा यदुत विरुद्धधर्माध्यासः कारणभेदश्च स चेन्न भेदको विश्वमेकं स्यादिति स च साकारचेतसोऽनेकरूपस्य प्राप्नोतीति अनेकरूपता च युगपदशेषार्थग्रहणे सतीति, स्यादेतन्निराकारं तदेकं चेन इष्यते इति चेदाह । निराकारे तु विज्ञाने, निराकारं नीलादिप्रतिभासरहितमित्यर्थः । व्यवस्था कालो नीलो रक्तस्तथा हस्तीसिंहोऽश्वो रथ इति व्यवस्था नियतार्थेषु विभिन्नवर्णाकृतिकटुरसादिरूपतया च कथमर्थसंस्थितिरिति ॥ स्यादेतत्परिपाट्या ज्ञास्यतीति तत्राह ।

**भाव्यर्थानामनन्तत्वान्न क्रमोऽप्युपपद्यते । जात्याश्रयं च विज्ञानमस्मदादेर्न किं मतम्॥२८६**

भाविनश्च तेऽर्थाश्च भाव्यर्थास्तेषामानन्त्यात् अपरिसमाप्तेर्नानन्तेनापि कालेन सकलज्ञ इति न क्रमः परिपाटिरुपपद्यते युज्यते इति । अथ एकरूपतया जानाति तत्राह जात्याश्रयं च जातिगोचरं च विज्ञानमस्मदादेर्मादृशामपीति न किं मतं न केन कारणेन नाभिप्रेतमिति । एतदुक्तं भवति जातेः सर्वगतत्वादनवयवत्वात्प्रत्येकंपरिसमाप्तत्वादेकव्यक्तावुपलब्धा सर्वत्राप्युपलभ्यत इति समानमस्माकं सर्वविच्वमिति ॥

**यथा प्रधानमन्येपि राजादीश्च विदन्ति हि। सर्वज्ञतायामेवं तु स्युःसर्वज्ञास्तवाखिलाः॥२८७॥**

यदि यथा प्रधानं जानन् सर्वज्ञः स्यात्तदान्येपि राजादीन् विदन्ति हि यस्मात् क एष याति आगच्छति वा इति पृच्छतो वदन्ति राजा एष याति आगच्छति वानो विदन्ति जानन्ति राजानम्, एवं सर्वज्ञे अभिमते स्युर्भवेयुः सर्वज्ञास्तव तेऽखिलाः सर्वे जना इति ॥ सूरिराह ।

**एकदैकमनेकार्थं वेत्ति स्याद्वादवादिनः । क्रमभाव्यक्षरोल्लेखिविकल्प इव मे मनः ॥ २८८ ॥**

एतेषां पक्षाणां मध्ये युगपद्वेत्तीति पक्षः एकदा युगपदेकं मन इति सम्बन्धः । अनेकश्चासावर्थश्च तं वेत्ति जानाति । स्याच्छब्दः कथञ्चित्पर्यायः तेन स्याद्वादेन वादो जल्पो यस्यास्ति तस्य अथवा स्यात् कथञ्चित्तेन वादो जल्पस्तं वदितुं शीलस्य मे मम, किंवदित्याह । क्रमः पर्यायः तेन भवनशीलानि च तान्यक्षराणि च तेषामुल्लेखस्तदन्तर्जल्पतया परामर्शः स विद्यते यत्र यस्य वा स चासौ विकल्पश्च स इव मे ममाङ्गीकरणेन ममाभिप्रायेण मनोविज्ञानमिति । शेषास्तु पक्षा अनभ्युपगमादेव निरस्ता इति ॥

**यस्य ज्ञेयप्रमेयत्ववस्तुसत्त्वादिलक्षणाः । निहन्तुं हेतवः शक्ताः को नु तं कल्पयिष्यति॥२८९**

इति सुगमम् ॥ एतत्कुमारिलेनोक्तं तत्प्रतिविधातुमाह ।

**एवं ज्ञेयप्रमेयत्ववस्तुसत्त्वादि यत्परैः । साधनं तदसिद्धादिदोषदुष्टमुदाहृतम् ॥ २९० ॥**

एवमनन्तरयुक्तिभिः सर्वज्ञे सिद्धे सति ज्ञेयत्वात्प्रमेयत्वाद्वस्तुसत्त्वादित्यादिसाधनं यत्परैरुक्तं तदसिद्धादि असिद्धविरुद्धानैकान्तिकदोषदुष्टमिति कृत्वा न तत्साधनं साध्यसिद्धये परैरुदाहृतमिति । तथाहि ज्ञेयत्वलक्षणो हेतुस्तावच्चिन्त्यते नास्ति सर्वज्ञो ज्ञेयत्वात् खरविषाणवदिति पदार्थो विवक्षितः तदा हेतुराश्रयासिद्धः सर्वज्ञलक्षणसाध्यधर्मिणोऽसिद्धत्वात्, अथ मा भवत्वयं दोषः सर्वज्ञलक्षणो धर्मी सिद्धोऽभ्युपगम्यते तदा तत्साधकप्रमाणबाधितकर्मनिर्देशानन्तरं प्रयुक्तत्वात्कालात्ययापदिष्टो हेतुः । अथैवं प्रयोगो यो यः प्रमेयः स स सर्वज्ञो न भवति यथाऽयं रथ्यापुरुषः एवं चानेकान्तः यः प्रमेयः स शूद्रो दृष्टो यथायं रथ्यापुरुषः प्रमाणग्राह्यतया प्रमेयश्च भवानिति न चैवम्, अन्यथा इष्टविघातकारित्वाद्विरुद्धः स्यादतोऽनेकान्तः । सन्दिग्धसाध्यं च निदर्शनं रथ्यापुरुषेऽसर्वज्ञताबोधकप्रमाणाभावात् । अथ यत्प्रमेयं तदसर्वज्ञप्रमाणग्राह्यं यथाऽयं घटः तथा च

विश्ववर्त्तिनो भावा इति अत्र सन्दिग्धव्यतिरेको दृष्टान्तः । किञ्च यत्प्रमेयं तद्ब्राह्मणप्रमाणग्राह्यं यथा शूद्रगृहावस्थितो घटः प्रमेयं च भवतां स्वगृहमिति एवमिष्टविघातकारित्वात् विरुद्धमिति, एवमन्येपि सत्त्वादयो द्रष्टव्या इति ॥

सर्वज्ञे सति युज्येते युगपत् क्रमशोपि वा। तस्य ज्ञानं विजानाति भावान्विश्वगतानिति॥२९१

सर्वज्ञे विश्वविदि सति विद्यमाने युज्यतेऽयं विकल्पः किं युगपज्जानात्याहोस्वित् क्रमेण तस्य भगवतो ज्ञानं जानातीति परिच्छिनत्ति भावान् पदार्थान् विश्वगतान् त्रैलोक्यवर्त्तिनश्च स एव च न सिद्धः किं तद्धर्मविकल्पपरिग्रहेण पक्षान्तरव्युदासोऽभिहित इति ।

सिद्धे तवापि चैतस्मिन् प्रेरणापि समा तव। न सिद्धः किं विकल्पेन प्रेरणा तां विना शृणु।२९२

सिद्धे प्रमाणेन निश्चिते तवापि हे वादिन् तस्मिन्प्रेरणापि सर्वविदि इयं प्रेरणा युगपत् क्रमधर्माश्रया समा । अथ न सिद्धः सर्ववित् किं धर्माश्रया प्रेरणा तत्सिद्धिरेव प्रेरणीया तां विना किं विकल्पप्रेरणा तत्सिद्धौ प्रेरणायाः शृणु वक्ष्यमाणमुत्तरमिति ॥

एतदत्रोदितं पूर्वं नैव चातोऽपरा प्रमा । दानादेरविनाभावग्राहिकेति निवेदितम् ॥ २९३ ॥

एतदपि क्षायोपशमिका भावाः क्षयमायान्ति कुत्रचिदित्यादिना अत्र सर्वज्ञसिद्धावुदितं पूर्वं योगिज्ञानसिद्धाधारतश्च नैव च अत आगमादपरा प्रमा प्रमाणं दानादेरादिशब्दात् वात्यादिग्रहः अविनाभावः अव्यभिचारसम्बन्धस्तस्य ग्राहिकेति एतदपि निवेदितं पूर्वं पुरस्तादिति ॥ स्यादेतद्वेदादेव दानादेरविनाभावो ग्रहीष्यत इत्याह ।

वेदस्यासत्त्वतो नैव तस्मादर्थविनिश्चयः । प्रत्यक्षादेरिहावृत्तिः पुरस्तादुपपादिता ॥ २९४ ॥

वेदस्यानन्तरं निषेधादसत्त्वं ततो नार्थविनिश्चयः दानादेरविनाभावस्य नागमं विना परा प्रमा ग्राहिकेत्यप्युक्तमिति ॥
प्रत्यक्षादीनां प्रमाणानामिहाप्रवृत्तिरुक्ता पूर्वमेवेति कुमारिलोक्तमनूद्य विधिशेषमाह ।

केवलागमगम्यत्वं लप्स्यते पुण्यपापयोः । पौरुषेयः स चाभीष्टस्तत्प्रणेता च सर्ववित् ॥२९५

प्रत्यक्षादीनामत्राप्रवृत्तेः प्रवृत्तौ वा विवादाभावापत्तेः सर्ववादिनां प्रत्यक्ष ऐकमत्यान्नैवंविधा विप्रतिपत्तिः स्यादनु-
मानस्यापि प्रत्यक्षपूर्वत्वात्तदभावेऽभावात्प्रमाणान्तरस्य च परैरनिष्टत्वात् केवलश्चासावागमश्च तस्य गम्यस्तद्भावस्तत्त्वं ल-
प्स्यते पुण्यं च पापं च पुण्यपापे तयोः पुण्यं सुकृतं पापं दुष्कृतं तयोः प्रमाणान्तरनिरपेक्षागमगम्यत्वं लप्स्यते प्राप्स्यतीति
यदुक्तं कुमारिलेन बहुसम्बद्धभाषिणापि एतदेकं सुभाषितमुक्तं किन्त्वेतदिह विशेषणीयम्, कथमित्याह पौरुषेयः स चाभीष्टः
तत्प्रणेता च सर्ववित् । पौरुषेयः पुरुषप्रणीतः स चागमोऽभीष्टोऽभिमतो न्यायविदामिति शेषः । स च पुरुषस्तत्प्रणेता पुनः
सर्वविदिति विशेषणीयमिति तथाच सर्वं सुस्थम् अपौरुषेयस्य निषिद्धत्वादितरपुरुषप्रणीतवचसां विसंवाददर्शनादिति ॥
किमभ्युपगममात्रेण सर्वज्ञः सिध्यतीत्याह ।

अतीन्द्रियार्थद्रष्टृत्वमावृतीनां परिक्षयात् । नष्टचित्तोपरागादिज्ञानलिङ्गादवस्थितम् ॥ २९६ ॥

अतीन्द्रिया इन्द्रियातीतगोचरा इन्द्रियविषयमतिक्रान्ताः तान् द्रष्टुं शीलं यस्य सोऽतीन्द्रियार्थद्रष्टा तद्भावस्तत्त्वं
तदतीन्द्रियार्थद्रष्टृत्वमावृतिरावरणमाव्रियते एभिरिति वा आवृतयस्तासां ज्ञानस्येति शेषः । परिक्षयात्सर्वथा नाशात् (परिरपु-
नर्भावे,) तेनापुनर्भावेन क्षयस्तस्मात्, तदेव कथमवसितमित्याह । नष्टं स्वामिनो अविज्ञातं स्थानलिङ्गादिभिः चिन्ता धातु-

मूलजावगोचरा, उपरागश्चन्द्रादीनां ग्रहणतया रूढः आदिशब्दात् लूकादिपरिग्रहः एतच्चोक्तं चूडामण्यादिषु अवितथज्ञानेषु नष्टमुष्टिचिन्ता लूकादिकं ग्रहोपरागादि च ज्योतिस्तिलकादिषु तत्र ज्ञानं तत्परिज्ञानं तदेव लिङ्गमनुमापकमतीन्द्रियार्थसंविद इति तस्माल्लिङ्गादवस्थितं सुव्यवस्थितं निश्चितं अतीन्द्रियार्थद्रष्टृत्वमिति ॥

**परेभ्यो ज्ञातवस्तूनामुपदेशो न दुष्यति । आद्योपदेष्टा सर्वज्ञ इत्यत्रोक्तं न किञ्चन ॥ २०७॥**

परेभ्यस्तदर्थज्ञातृभ्यो ज्ञानानि च वस्तूनि च तेषामुपदेशो न दुष्यति न व्यभिचरति तत्कथं तदुपदेशमात्रात्सर्वज्ञः स्यादिति तत्राह आद्योपदेष्टा यस्माद्विज्ञायोपदिशेत्स कथमवितथोपदेश इति वाच्यं स स्वयं ज्ञात्वोपदिशतीति चेत्स एव सर्वज्ञ इति । तत्रोक्तमभिहितं दूषणमिति शेषो न किञ्चन न किमप्यत्रोक्तमित्यर्थः ॥ उपसंहरन्नाह ।

**एवं दोषापवादेन सर्वज्ञत्वे व्यवस्थिते । तत्स्थाने क्लिश्यते लोकः संरम्भारम्भवादयोः॥२०८॥**

एवमनन्तरोक्तन्यायेन सर्वज्ञे भगवति ये दोषा अभिहिताः सुखदौस्थ्यं स्थापयेन पृथ्व्यधिक्षेपज्ञानेन दुर्गतिगामिना कुमारिलेनाभिहिताः तेषामपवादो निराकारस्तेन दोषापवादेन हेतुना सर्वज्ञत्वे व्यवस्थिते प्रमाणाबाधितत्वेन सत्ता सिद्धैव । अथवोपलक्षणमेतत्तेन तत्साधकप्रमाणे चोपदर्शिते तत्तेन कारणेन स्थाने क्लिश्यते स्थाने युक्तिसङ्गतपक्षे क्लिश्यते तत्साधनप्रयासमनुभवति, कथमित्याह संरम्भ उद्यम आरम्भस्तत्साधनाय प्रमाणान्वेषणं वादो राजहंससंसदि जल्पः तत्र संरम्भेण आरम्भवादौ संरम्भारम्भवादौ तयोर्विषये क्लिश्यते लोको जन इति ।

**सर्वज्ञेषु च भूयस्सु विरुद्धार्थोपदेशिषु । इत्यादावुदितं पूर्वं यथा नान्योस्ति सर्ववित् ॥२०९॥**

यदुक्तं कुमारिलेन सर्वज्ञेषु च भूयस्सु इत्यादि तत्रोदितं कथितं पूर्वं योगिविज्ञानप्रस्तावे यथा नान्योस्ति सर्ववित्त-

थाऽन्यशब्दोऽवधिमपेक्षते तेन नान्योऽस्ति जिनादिति सर्वविद् सर्वज्ञः साधितं च योगिविज्ञानाधिकारे पुनरुच्यत इति ॥ यदुक्तं चोदनैव परोक्षेऽर्थे प्रमाणं नान्यत्किञ्चनेन्द्रियमिति तत्राह ।

**चोदनैव परोक्षेऽर्थे प्रमाणमिति निश्चयः । कुतो मानात्तवापीह नाविनाभाववेदकम् ॥ ३०० ॥**

चोदनेति क्रियाप्रवर्तकं वेदवाक्यं चोदनामाहुः सैव प्रमाणमतीन्द्रियेऽर्थे कुतो मानात्प्रमाणाद्विनिश्चयो येन सा तथाऽरणः प्रयोग इति । तवापि दुर्बुद्धेर्यस्त्वया परपक्षे सरभसमुक्तं तत्प्रतिबिम्बेनेव तवाप्यापततीति तत्र यद्वः समाधानमिहत्रापि तदेवेति । तवापीत्युभयत्रापि सम्बध्यते । तेन तवापि चोदनातीन्द्रियार्थयोरविनाभावोऽव्यभिचारस्तस्य वेदकं न प्रत्यक्षादि तत्प्रामाण्यसाधकं विषयान्तरसंविदां विषयान्तरे प्रामाण्यसाधकत्वं त्वया निषिद्धं यतः । तद्दूषणान्यसंरम्भा जिनसर्वज्ञसाधने इत्यादावाह ।

**तद्दूषणान्यसंरम्भाः बुद्धसर्वज्ञसाधने जैना यानि वदन्त्येवं नैवं शक्ता हि भिक्षवः ॥ ३०१ ॥**

तदिति उपसंहारे तस्य वा दूषणानि तद्दूषणानि, असंरम्भाः मन्दादरा अवज्ञयेति यावत्, सुगतो बुद्धः स चासौ सर्वज्ञस्तस्य साधने क्रियमाणे इति शेषः । जैना जिनशिष्या यानि दूषणानि नैवं शाक्या वदन्ति प्रतिपादयन्ति । अत्र सुगतसर्वज्ञसाधने नैवं शक्ता हि भिक्षवः सुगतसूनवः जिनसर्वज्ञसाधन इति एतेन यदुक्तं शान्तिरक्षितेन नैवं शक्ता दिगम्बराः तत्प्रत्युक्तमिति ॥ यदुक्तं कुमारिलेन वेदवादिमुखस्थैवं युक्तिरित्यादि तदनुवादेन प्रतिसमाधानमाह ।

**वेदवादिमुखस्थैवं युक्तिर्वैदिकलौकिकी । उपहासपदं याति सर्वा सा चारुचेतसः ॥ ३०२ ॥**

न तावत्प्रमाणं वैदिकी युक्तिः वेदस्यासत्त्वेन प्रामाण्याभावान्न हि खरविषाणादि कस्यापि साधने प्रमाणं वेदासत्त्वं

च तैरपौरुषेयतया प्रतिपादितत्वात्तस्य चानन्तरमेव निषिद्धत्वात्तत् कुतस्तदुत्था युक्तिर्विवक्षितकार्यसाधिकेति तेनोपहासपदं यायादिति । न च लौकिक्यां युक्तौ भवानभिज्ञः कथमन्यथा यो हि ज्ञेयमप्रमेयत्वइत्याद्युक्तवान् । तथाहि यो यो ज्ञेयः स सोऽसर्वज्ञो यथायं रथ्यापुरुषः अत्र सन्दिग्धव्यतिरेको दृष्टान्तः हेतुरप्यनैकान्तोन्यथा यो यो ज्ञेयः स शूद्रो दृष्टो यथायं रथ्यापुरुषः ज्ञेयश्च भवान्न चैवमतो नैकान्तः । तथा यो यः कालः स स वेदकारवियुक्तो दृष्टो यथा वर्त्तमानकालः कालौ चातीतानागताविति कथमुक्तवानिति एतच्च स्वस्थाने दर्शितं यथा एता युक्तयो न भवन्तीति अत उपहासपदं यानि न सन्देह उपहासो नाम अवज्ञासूचकमीषद्धसितगर्भं तदुच्चारणमहो युक्तय इति सर्वा निरवशेषा सा युक्तिः चारुचेतसः शोभनमनोवृत्ते:॥ उपसंहरन्नाह ।

**तेनैव सर्वविद्वाक्यप्रामाण्यमुपगच्छताम् । दानादौ स्वर्गमोक्षार्थं प्रवृत्तिर्युक्तिसङ्गता ॥३०३॥**

येनैव नापरा गतिरस्ति येनैव च सर्वज्ञे बाधकं नास्ति साधकं चाभिहितमसकृत्तेनैव कारणेन सर्वविद्वाक्यं सर्वज्ञवचनं तत्र प्रमाणमुपगच्छतामङ्गीकुर्वतां दानादौ प्रवृत्तिरादिशब्दाद्विशिष्टज्ञानध्यानादिग्रहः शिरस्तुण्डमुण्डनादेर्वा दानादौ स्वर्गार्थे ध्यानादौ मोक्षार्थे प्रवृत्तिः प्रवर्त्तनं तत्तदनुष्ठानासेवनं युक्तिरुपपत्तिः प्रमाणमिति यावत् तया सङ्गता प्रमाणेनोपपन्नेति ॥ साम्प्रतमेवास्यैव सर्वज्ञागमस्य विषयनिरूपणायाह ।

**विषयश्चास्य तत्त्वानि नवैतानि जिनागमे । एतेभ्योऽभ्यधिकं नान्यद्विद्यते हि जगत्त्रये॥३०४**

विषयो गोचरो व्यवस्थाप्यो निश्चेतव्य इति यावत् सोऽस्य जिनागमस्य वक्तव्यो न्यायप्राप्तः प्रमाणाभिधानात्तद्विषयभेदाभिधानप्राप्तेः विषयभेदेन हि प्रमाणानां भेदः ततो विषयः प्रमाणात्तद्विषयात् भिन्नो वक्तव्यः सर्वतत्त्वानि तस्य

भावस्तत्त्वं वस्तुनः पारमार्थिकं रूपं तत्त्वमुच्यते तानि च दर्शनभेदेनानियतानि, तथाहि दुःखसमुदयमार्गनिरोधा इति सौगताः द्रव्यगुणकर्मसामान्यविशेषसमवाया इति वैशेषिकाः । नैयायिकदर्शने प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानि । मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ इति तत एका प्रकृतिः सप्त प्रकृतिविकृतयः षोडशको विकार इति चतुर्विंशतिः पञ्चविंशतिकः पुमानिति साङ्ख्या एवमादिस्वरूपसङ्ख्याविप्रतिपत्तावाह नवैतानि जिनागमे । यद्यप्याहो पुरुषिकया भिन्नसमवायशास्त्रभिर्भिन्नरूपसङ्ख्यान्यभिहितानि, तथापि तेषामत्रैवासर्वज्ञताप्रतिपादनान्न तत्प्रणीतानां तत्त्वानां वस्तुतत्त्वं किन्तु समारोपमात्रेणेति अत एवाह जिनागम इति । जिना हि रागद्वेषमोहजेतारो वीतरागवीतद्वेषवीतमोहाः सर्वज्ञास्तत्प्रणीतस्यान्यथात्वनिबन्धनाभावादिति, यदाह । "रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम् । यस्य तु नैते दोषास्तस्यानृतकारणं किं स्यात्" इति ॥ इह च सर्वज्ञः पुरस्तादुपपादितः । स च वीतरागवीतद्वेषपदवीमनुभूय ततः सर्वज्ञपदवीमासादयतीति तेनागम एव एतान्येव च वस्तुतत्त्वानि इतरोक्तानि तु समारोपितरूपाणीति, सन्तु वा तान्यपि वस्तुतत्त्वरूपाणि तथापि जीवाजीवद्वयान्तर्भावान्नाधिकसङ्ख्यया किञ्चिदिति तत्राप्यधिकसङ्ख्यया किं प्रयोजनमिति चेदुच्यते प्रधानपुरुषार्थो मोक्षः तस्य च निमित्तं सम्यग्ज्ञानं तदपि सनिमित्तमुपायदर्शनात् उपायाश्च नव, कर्मणां बन्धाभावः स च संवरात्सोऽप्याश्रवद्वारनिरोधात्मकः अतः सतामेवाश्रवद्वाराणां निरोधो वस्त्वसतः क्रियाविषयत्वादिति, संवरोऽपि नासंस्तानि निरुणद्धि, संवृताश्रवस्यापि तपसा निर्जरा, ततो निःशेषकर्ममुक्तो भवतीति स चाश्रवो द्वेधा भवति जिनवन्दनादिजः पुण्यः प्राणिवधादिजः पापरूपः । स च जीवस्य नाजीवस्य तेन जीवाजीवयोरुपादानं स चाश्रवो जीवस्य पौद्गलिककर्मवर्गणाभिरन्योन्यानुगमो अयःपिण्डादिवद्योगप्रत्ययो बद्धस्पष्टनिधत्तनिकाचनारूपबन्धहेतुर्न चासता बन्धेन बध्यते

ततो बन्धस्योपादानं तस्य संवरनिर्जराभ्यामात्यन्तिकक्षयान्मोक्षो जीवस्य शुद्धावस्थेति यावत्तस्य पूर्वदेशात्प्रमयेनालोकान्तं यावत् गमनं भवति तदुपर्यपि निमित्ताभावान्न गच्छतीति तेन विज्ञानसन्ततिनिरोधात्मको मोक्षो न युक्तो अर्थक्रियालक्षणं हि तैः सत्त्वमिष्टं सन्ततिक्षये च पूर्वक्षणस्याकारकत्वादवस्तुत्वं यावदाद्यासन्ततिरवस्तुसती स्यादिति । यदपि मुक्ताः सर्वत्र तिष्ठन्ति व्योमवत्तदपि सर्वगतात्मनिषेधे न युक्तमिति यदपि हेतुफलभावापन्ना अविद्या बन्धस्तदपि तस्याः त्रुटिर्विज्ञानस्यैव त्रुटेर्विज्ञानरूपानतिरेकाद्व्यतिरेके वा विज्ञानस्वरूपस्य तादवस्थ्यात्किन्तया, तथैव तिरोधीयते चेत्तदयुक्तं स्वरूपापरित्यागे तिरोधानाभावाद्भावे वाऽतिप्रसङ्गात्ततः पूर्वक्षणाभावे सम्यग्ज्ञानात्मकक्षणान्तराभावप्रसङ्गः । न युगपदिह क्षणद्वयोत्पादो शीतोष्णयोरिव विरोधिनोः यापचीयमानक्षणजनकतया भ्रान्तस्य सम्यग्ज्ञानक्षणजनयित्री युक्ता एकशरीरे जीवद्वयप्राप्तेर्विज्ञानसन्ततिनाम्नापि तस्याभिधानादिति । तस्माद्विज्ञानात् भिन्नं ज्ञानावरणं नाम कर्माभ्युपेयं तदुदये भ्रान्तज्ञानप्रविधेति तेन परमार्थतो जीवाजीवद्वयेऽप्यत्तेष्वेतेषामुक्तक्रमदर्शनार्थं भेदेनोपादानं स च भेदः पञ्चविध एव तत्प्रतिपादकस्यैव प्रमाणत्वादिति प्रत्यक्षादेरसदादिसम्बन्धिनस्तत्रासम्भवादिति ॥ एतदेव दर्शयन्नाह ।

**जीवाजीवौ च पुण्यं च पापं चाश्रवसंवरौ । निर्जराबन्धमोक्षौ च नवैतानि समासतः ॥ ३०५**

जीव आत्मा स च अजीवश्च धर्मास्तिकायादि तौ जीवाजीवौ चः समुच्चये पुण्यं शुभप्रकृतिलक्षणं तच्च पापमशुभप्रकृतिलक्षणं तच्च आश्रवः कर्मबन्धनिबन्धनः स च संवर आश्रवनिरोधः स च तौ तत्राश्रवः शुभः पुण्यस्य अशुभः पापस्य शुभो जिनवन्दनादिजः अशुभः प्राणिवधादिजः तस्य निरोधः संवरः शुभाशुभयोर्निरोधः शैलेश्यवस्थायां स एव मुख्यः संवरः व्यवहारतः साधूनां सर्वतः श्रावकाणां देशतः निर्जरा बद्धस्य कर्मणो जीवप्रदेशविश्लेषः सा च स्थितिक्षयेण विपा-

कानुभवेन उभयं च नात्यन्तिकी या तु पिहिताश्रवद्वारस्य विशिष्टध्यानानुगतस्य अपुनर्भावतया सर्वकर्मांशनिर्जरणरूपा सा मोक्षहेतुरिति । बन्धश्च मोक्षश्च तौ तत्र बन्धो जीवप्रदेशैरन्योन्यानुगमः क्षीरनीरयोरिव सोऽष्टविधकर्मणो ज्ञानावरणादेरत्यन्तसम्बन्धो जीवस्य मोक्षस्तु संवरनिर्जराभ्यामात्यन्तिको वियोगः कर्मभिरेतानि नवेति दर्शितम् । एतत्सर्वमागमाद्विज्ञायते प्रत्यक्षादेरस्मदादिसम्बन्धिनः एवंविधे विषये प्रवृत्त्यसम्भवात्तथाहि प्रतिनियतदेशकालावस्थितरूपादिषु प्रतिनियतेषु चक्षुरादिकरणप्रवर्तितविज्ञानानां संवेदनात् । जीवादीनां चातीन्द्रियत्वात्तत्रेन्द्रियाणामव्यापारात्प्रत्यक्षगृहीताविनाभावमनुमानं तदभावे कथमत्र प्रवर्त्तेत स्वतन्त्रस्याप्रमाणत्वात्प्रामाण्ये वाऽतिप्रसङ्गः । अनुमानपूर्वत्वे चान्योन्याश्रयोऽनवस्था च, एतच्च शतशश्चर्चितमिति ॥ जीवं प्रतिपादयन्नाह ।

**परिणामी तनुव्यापी कर्त्ता भोक्ता च चेतनः । संसारी बन्धयोग्यस्तु मोक्षयोग्यश्च कश्चन ॥ ३०६ ॥**

इहोपयोगलक्षणो जीवः स परिणामी परिणामोऽस्यास्तीति उत्तरोत्तरावस्थागमनं सुवर्णवत् । कुण्डलादिगमनेपि स्वर्णानुवृत्तिदर्शनात्, तेन यदुच्यते अवस्था अवस्थातुर्भिन्नाभिन्ना वा भिन्ना चेद्भेदेनोपलम्भः स्यात्स इष्यत एव कुण्डलं भिन्नमुपलभ्यते एव केयूरादभेदे कटककुण्डलयोरेकत्वमासज्येत सुवर्णादपि कथञ्चित् भिन्ना कुण्डलावस्था कुण्डलापगमेपि सुवर्णदर्शनाद्यच्च कथं पृथग् नोपलभ्यते तन्निजाचार्यं पृच्छत यो भिन्नकारणानामपि एकत्वमिच्छति, उक्तं च एतत्कुलालवार्त्तिकानुवादेन किं पुनरभिधानेनावश्यं चाभ्युपगन्तव्यः परिणामः परलोकमिच्छता, एकसन्ततिपतितक्षणानां हेतुफलभावे सिद्धे सर्वमुपपन्नमिति चेन्नैवं सन्ततीनां स्वेतरविशेषः कुतः निरन्वयः, प्राक्सन्निधिभावेन हेतुफलभावे सर्वः कारणं पूर्वः क्षणः सर्वः फलं उत्तरक्षणस्तत्को विशेषो येनैका स्वसन्ततिरन्यापरसन्ततिस्तथाच सर्वत्र स्मरणमासज्येत प्राक् सन्नि-

धेरविशिष्टत्वादुपादानसहकारिकृतविशेषोऽप्यन्वयाभावे न युक्तस्तस्मादेकान्तक्षणनाशिना परेणेष्टा सा अज्ञनया प्रतिपन्ना ।
तथाहि यद्येकान्तक्षणक्षयी जीवः स्यात्तदा पारत्रिको विधिरयुक्तस्तस्य कर्तुस्तदैव नाशात्, तदुत्तरोत्तरक्षणोत्पादादेः सन्ततिपतितक्षणान्तरेणानुसन्धिमसयतोऽर्वाग् दर्शिनां क्रियासु प्रवृत्तेस्तत्त्वविदां तु हेतुफलभावमात्राश्रयेण प्रवृत्तेरदुष्टत्वादिति चेदुक्तमत्र प्राक्सन्निधिमात्रेण हेतुफलभावस्य नियतस्य धूमो वह्नेरेव कार्यं नान्यस्य एवम्भिन्नवस्य नियामकाभावेनाभावात् अन्वयव्यतिरेकाभ्यां नियम्यते चेदशिक्षितस्योल्लापः अन्वयव्यतिरेकयोरेकस्य प्रतिपत्तुरसम्भवादिति सम्भवे वा क्षणिकताहानेः, अनुसन्धिमसयादेकत्वाध्यवसायतस्तददोष इति चेदसम्भव्येतदनुसन्धिप्रत्ययस्याप्यनेकाक्षरोल्लेखितया एकत्वहानेस्तदसिद्धं यदसिद्धेन साध्यते शतक्षश्चर्चितमेतत् । अतोऽन्वयोऽभ्युपगन्तव्योऽन्यथा हेतुफलभावोऽपि नियतो न स्यादुक्त आवेदितं चैतदनेकधेति, नाप्येकान्तनित्ये बन्धमोक्षव्यवस्थेति चर्चितप्रायं अप्रच्युतानुत्पन्नस्थिरैकरूपत्वान्नित्यस्य तस्यैकरूपत्वे बद्धस्य मोक्षासम्भव एवान्यथा नित्यताक्षतेः सर्वगतेऽप्यात्मनि भोगायतनवशात्संसारस्थितिस्तदप्येकस्वभावे न युक्तमित्युक्तप्रायं यच्च नित्यत्वेपि बुद्धिवेदनामनोभिसंस्कारस्तस्याजन्माभिधीयते तदपि न सूक्तम्, नित्यत्वे सदैव तत्प्राप्तेरन्यथा सदैवाप्राप्तिरिति तथाच प्रागुक्ताभिर्वियोगस्तु मरणमित्येतदपि न सङ्गतमासज्येत यच्च स्वदेहस्य मनोयोगो धर्माधर्माभिसंस्कृतो जीवनमिति तदप्येकान्तनित्ये सदैवापद्येत तथाच न जन्ममरणयोरुपपत्तिरिति अतः सूक्तमुक्तं परिणामी कथञ्चिन्नित्य इति विरोधापादनं चात्र परिहृतं पुरस्तादेवेति न पुनरुच्यत इति तनुतया तनुव्यापी नखकेशादिवर्जितशरीरमात्रव्यापी बहिःशीताद्यननुभवादिति भोगायतनाभावाच्च बहिःशीताद्यनुभव इति चेन्नैवं एवं हि सर्वत्रोपलभ्यमान गुणत्वादित्यसिद्धो हेतुः स्यात् । अथ न स्पर्शानुभवात्सर्वत्रोपलभ्यमानगुणत्वं किन्तु दूरदेशादपि इष्टानिष्टवस्त्वागमनदर्शनात् तत्रस्थानां तत्कर्माणि प्रापकाणि तानि च न जीवव्यतिरेकेण सम्भवन्ति निराश्रयाणामवस्थानाभावादिति, तदयुक्तं नहि कर्माणि तत्रस्थान्येव तदाकर्षकाणि अन्यथा

इह देशगतान्यपि किं नाक्षिपेयुः कथं चैकमेव वस्त्वनेकेषामुपभोगमायाति सर्वेषां तत्र कर्माणि विद्यन्त इति चेत्कथं पर्यनुयोगा-क्षेपः न चेह कर्माणि न सन्ति येनात्रज्ञानामभोगो दृश्यते च शुभेतराणामत्रत्यानां केषाञ्चिद्भोग इत्यलं प्रसङ्गेन। तथा कर्ता भोक्ता च न खल्वकृतस्य कर्मणो भोगो युक्तोऽतिप्रसङ्गादकृताभ्यागमकृतविप्रणाशप्रसङ्गाच्च किञ्च सत्त्वादीनां नित्यत्वात्तत्स-मुदायात्मिका प्रकृतिरपि नित्या कथमन्यथा मूलप्रकृतिरविकृतिः स्यात् नित्याया अभावे कार्यानापत्तेरिति। कथं वा तत्र लयं गच्छेन्महदादिकार्यग्रामस्तस्या अनित्यत्वे सति तथाच तस्या एकरूपतया सदैव सातमसातं वा कुर्यात् न चैवं दृश्यते विचित्र-मुपलभ्यते, तच्च वैचित्र्यं कारणाभेदे न युक्तमिति कार्यभेदानामहेतुकतापत्तेः। अथ पुरुषाभिलाषानुसारेण प्रकृतिः प्रवर्त्तत इति कार्यभेदो युक्त एव, तदयुक्तमचेतना हि सा यदाह चैतन्यं पुरुषस्य स्वं रूपम्। अथ बुद्धिमत्त्वात् प्रकृतेर्नायं दोष इति नैवम्, बुद्धिमत्त्वे चैतन्यप्राप्तेः। यदाह, "बुद्धिरध्यवसायो हि संवित्संवेदनं तथा। संवित्तिश्चेतना चेति सर्वं चैतन्यवाचकमिति" न च बुद्धिर्भिन्ना अविभागाभ्युपगमहानिप्रसङ्गादित्यलमतिविस्तरणेति। तथा कर्त्तेति परकृतकर्मभोगे अतिप्रसङ्गः प्रकृतेर्नित्यत्वा-त्कर्मकर्तृत्वमयुक्तमुक्तं चैतत्। तथा भोगोऽभ्युपगन्तव्यस्तेन प्रतिबिम्बोदयन्यायेन भोगो न युक्तः साक्षादेव सुखदुःखभोगा-दन्यथा ह्युपचारमात्रेण भोगः स्यान्न साक्षादिति दृष्टविरुद्धं चैतदिति। चेतन इति न खल्वचेतनश्चेतनायोगाच्चेतन इति वक्तुं युक्तं समवायस्य प्रागेव निषिद्धत्वात् आधाराधेयभावे तत्सद्भावात्तस्य चोपकार्योपकारकभावं विना असम्भवात् तस्यापि भेदाभेदविकल्पनेन सम्बन्धासिद्धेरित्यादि पूर्वमुक्तं न पुनरुच्यते इति अतश्चेतनायोगाच्चेतयत इत्यसङ्गतं वच इति। तथा संसारी संसरणशीलो नानायोनिषु तेन पशवः पशुत्वमश्नुवन्तीत्याद्यप्यपास्तमिति। अथवा संसार्येव बन्धयोग्यस्तोरवधार-णत्वात् तस्यापि व्यवहितसम्बन्धादिति न चाबद्धानां पुनरिहागमनम्। तेन "ज्ञानिनो धर्मतीर्थस्य कर्त्तारः परमं पदम्। गत्वा-गच्छन्ति भूयोपि भवं तीर्थनिकारतः"। तथा "प्रलये सर्वेपि ब्रह्मणि लयं गच्छन्ति ततः सृष्टिकाले ब्रह्ममुखात् ब्राह्मणान्

बाहुभ्यां क्षत्रियान् " इत्यादिसर्गविधिरसम्भवी मुक्तानां बन्धाभावात्तेषां पुनः संसाराभावादिति संसारी अथवा संसारी बन्धयोग्यस्तु मोक्षयोग्यश्च कश्चन अनेन यदुक्तं वेदे स वै एष विगुणो विभुर्न बध्यते संसरति मुच्यते मोचयति वा न वा एष बाह्यमभ्यन्तरं वा वेद इत्यादि तदपास्तं युक्तिरुक्तैव, आत्मापि ज्ञस्वभावः साधितो यतः बन्धयोग्यस्तु बन्धयोग्योपि शैले-श्यवस्थायां तदयोगात्संसारिणोपि, तथा मोक्षयोग्यश्च कश्चन यो हि भव्यः सोपि तथा भव्यत्वाक्षिप्तो विशिष्टक्रियाकलाप-युक्तो मोक्षयोग्यश्च कश्चन न सर्वोपि अभव्यानां तदसम्भवात् भव्यानामपि ये आसन्नभव्यास्त एवेति । तेन सुट्ठु भविस्सइ सव्वजगाजीवसङ्गतं वचः। तच्छास्तास्त्वसर्वज्ञश्चोक्तो भवत्यसम्भवार्थप्रतिपादनादिति, तत्र तदुक्तं प्रमाणमिति ग्राह्यमिति ॥ ननु प्रत्यक्षादिप्रमाणगोचर आत्मा तथाग्राह्यहमिति प्रत्ययस्य संवेदनसिद्धत्वात्स चाहं प्रत्यय आत्मनो न व्यतिरिक्तः ततः संवे-दनसिद्ध एवात्मा, अथवा स्वभावहेतुरहंकार आत्मनि साध्ये शिंशपात्वादिवद्वृक्षसाधन इति तथा परार्थाश्चक्षुरादयः संहत-त्वाच्छयनाशनादिवदिति साङ्ख्याः, व्यतीताहंकृतिग्राह्यो ज्ञाताऽग्राप्यनुवर्तते अहंप्रत्ययगमत्वादिदानींतनबोद्धृवत् इत्या-दि मीमांसकाः तथेच्छाद्वेषप्रयत्नचिकीर्षादयः क्वचित्समाश्रिताः गुणत्वादाश्रयश्चानुरूप एव अतो योऽसावाश्रयः स आत्मेति इत्यादि नैयायिकाः तत्कथमेतदित्याह ।

## विश्वव्यापी न वाध्यक्षान्नाकर्त्ता नाप्यचेतनः। एको नाभो न चाङ्गुष्ठपर्वमात्रो न सूक्ष्मकः॥ ३०७

विश्वं जगत्तद्व्याप्तुं शीलं यस्य स तथा न वाध्यक्षान्नैव प्रत्यक्षात्सिध्यति प्रतिनियतदेशादिष्वेव रूपादिषु चक्षुरादि-करणप्रवर्तितचेतसः प्रवृत्तिदर्शनात्, अकर्त्ता प्रकृतिः कर्त्री पुरुषो भोक्ता नेत्यध्यक्षेण सम्बन्धादिति, नाप्यचेतनः अध्यक्षा-दिति सम्बन्धस्तेन यदाहुर्नैयायिकादयः इच्छादीनां समाश्रयः स्वतोऽचिद्रूपो नित्यः सर्वगत आत्मेति तदपि नाध्यक्षादिति,

एको नाध्यक्षतोन यदाहुरेके, "एक एव हि भूतात्मा भूते भूते प्रतिष्ठितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" तदपि नाध्यक्षादिति तथा नाभौ नाध्यक्षादिति सम्बन्धः नाभावष्टदलपद्मं तत्रात्मेति तदपि नाध्यक्षात् तथाङ्गुष्ठपर्वमात्र आत्मेत्यपि नाध्यक्षादिति सूक्ष्मः स एतदपि नाध्यक्षात्। एवं विकल्पानां करणप्रवर्तितचेतस्यप्रतिभासनादिति, तद्गतधर्मप्रतीतौ धर्म्यपि परमार्थतोऽप्रतीत एवेति॥ स्यादेतदनुमानादेष विभागो ज्ञास्यत इति आह।

तत्पूर्वकमनुमानं स्वातन्त्र्ये न प्रमा तथा। अन्योन्याश्रयदोषोऽपि तच्चेत्तत्पूर्वकं मतम् ॥३०८॥

तत्प्रत्यक्षं पूर्वं यस्य तत्तथा अनुमानं प्रत्यक्षावसितलिङ्गसम्बन्धे साध्यधर्मिणि निश्चिते च लिङ्गे पश्चादनुमानं तथा समुच्चये एतच्च दूषणान्तरमिति अथवा तथेति प्रत्यक्षवत् प्रवर्तते तर्हि स्वतन्त्रमनुमानं भवतीत्याह। स्वातन्त्र्ये सम्बन्धग्राहकप्रमाणानपेक्षत्वे न प्रमाणता न प्रामाण्यं अन्यथातिप्रसङ्गः स्यादिति अनुमानमेव सम्बन्धं ग्रहीष्यति इति चेदाह अन्योन्याश्रय इतरेतराश्रयो नाम दोषोऽपि स च बहुधा दर्शित इति अपिशब्दादनवस्थादोषोऽपि सापि दर्शितेति न प्रतन्यते तदनुमानं चेद्यदि तदनुमानं पूर्वं सम्बन्धग्राहकत्वेन यस्य तत्तथा मतमिष्टमिति ॥

तस्मादागमगम्योऽयं विभागः परिकल्पितः। परैर्मुधा यतो नैष सर्वज्ञजिनभाषितः ॥३०९॥

किमित्याह यतो यस्मात् एष विभाग आत्मगतः सर्वज्ञजिनभाषितः सर्वज्ञो विश्ववेत्ता स चासौ जिनश्च तेन भाषितोऽभिहितः इति तद्भाषित एव प्रामाण्यमिति अनेकशोऽभिहितमिति ॥ किमित्येवमित्याह।

तद्वदितन ये भावाः शिष्टास्तेषु न युज्यते। प्रमाणव्याहतिर्यद्वदेषु पक्षेषु दृश्यते ॥३१० ॥

तेन सर्वविदागदितो यः स तद्वदितस्तेनागमेनेति शेषः। ये भावाः ये केचन पदार्थाः शिष्टाः कथिता इन्द्रियग्रा-

ह्या अतीन्द्रियविषया वा तेषु न युज्यते न सम्भवति । कासावाह । प्रमाणव्याहतिः प्रत्यक्षादिप्रमाणबाधा न युज्यत इति स-म्बन्धः । किंवदित्याह । यद्वदेषु पक्षेषु आत्मगतेषु दृश्यते समुपलभ्यत इति ॥ कथमेतदित्याह ।

**यदि प्रत्यक्षगम्यश्च सत्यतः पुरुषो भवेत् । तत् किमर्थं विवादोऽयं तत्सत्तादौ प्रवर्तते॥३११**

यदि तवापि सम्मतं प्रत्यक्षगम्यः प्रत्यक्षपरिच्छेद्यो ग्राह्य इति यावत्तत्स्मात्किमर्थोऽयं विवादः किं निमित्तोऽयं सर्व-गतत्वादिलक्षणो विवादो विमतिपत्तिरिति तस्यात्मनः सत्ता किमस्ति नास्तीति वा आदिशब्दात्सर्वगतत्वादौ च प्रवर्तत इति सम्पत्यपीति ॥ स्यादेतदनुमानगम्यो भविष्यतीति आह ।

**इष्टघाति निराधारमन्वयेन विवर्जितम् । प्रमाणमस्य संसिद्धौ विशेषेषु विशेषतः ॥ ३१२ ॥**

इह संहतस्य परार्थ्यं मूर्तस्य देवदत्तादेर्दृष्टं शयनाशनादेरिति न चैवमात्माभीष्टः ततोऽभीष्टविघातकारित्वाद्विरुद्धसा-धनाद्विरुद्ध इति अभीष्टसाध्यविकलश्च दृष्टान्तः यदि वास्ति आत्मा इति प्रयोगस्तदाश्रयासिद्धो हेतुर्निराधारमाश्रयासिद्धमु-च्यते, अन्वयेन विवर्जितं अनन्वयि साधनमनैकान्तिकमिति प्रमाणमनुमानं प्रक्रमादस्यात्मनः संसिद्धौ यदुच्यत इति शेषः । विशेषेषु सर्वगतत्वादिषु विशेषतः सर्वथैवेति यावत् ॥नन्वेवमाचारादिनिर्युक्तौ यज्जीवसाधनमुक्तं तत्राप्ययं दोषः प्राप्नोतीत्याह ।

**निर्युक्तौ साधनं यच्च जीवसंसिद्धये कृतम् । तद्वादे इष्टघातादिदोषो जल्पेऽनुषज्यते॥ ३१३॥**

आचारादिनिर्युक्तौ यत्पुनः साधनमुक्तं जीवसिद्धौ तद्वादाश्रयेण द्रष्टव्यमिति अन्यथा यदि तदित्थं नेष्यते तदा ज-ल्पे तु राजसंसदि जयपराजयव्यवस्थायां स्थेयदण्डधरादिपुरतः इष्टघातादिविरुद्धसाधनाद्विरुद्धं आदिशब्दादाश्रयासिद्ध-तादि अनन्वयदोषश्च साधनस्य, तथा यदि भावधर्मो हेतुस्तस्मिन्नसिद्धे हेतुरसिद्धः अथाभावधर्मो हेतुस्तस्याभावाव्यभिचा-

राद्विरुद्धो भावसाधनायोक्तः स्यात् अयोमयधर्मो हेतुः तस्योभयव्यभिचारित्वादनेकान्तइति दोषोऽनुपज्यते परैरिति वाक्यशेषः ॥ तथाच किं स्यादित्याह ।

**तस्माच्च निग्रहस्थानं शासनस्य पराभवः । तस्मादतीन्द्रियार्थानां वचनमेव प्रमा परा ॥ ३१४**

यस्मात्साधनदोषान्निग्रहस्थानं प्राप्यते तथाच शासनस्य जैनमार्गस्य पराभवो न्यक्कारो भवति उपसंहरन्नाह । तस्मादित्युपसंहारेऽतीन्द्रियार्थानां चक्षुरादिकरणप्रवर्तितचेतसामविषयतामागतानां पदार्थानां वचनमेव सिद्धान्ते प्रमा प्रमाणं परा प्रकृष्टा साधनमव्यभिचारिणीति । अथातीन्द्रियग्रहणं किमर्थं उच्यते ऐन्द्रियाणां प्रत्यक्षादिभिरपि निश्चीयमानत्वादिति ॥ ननु पुद्गलेष्वपि विमतिपद्यन्ते योगाचारास्तत्कथमित्याह ।

**चिद्रूपता मनस्कारादाकारो नानिमित्तकः । नाविद्यालम्बनं बुद्धेस्तत्त्वज्ञेऽभेदिनी मतिः॥ ३१५॥**

इह तावदुपादानकारणं मनस्कारस्तस्माच्चिद्रूपता भवेत् बुद्धेर्ज्ञानस्य नीलाद्याकारः साक्षात्स्फुटरूपतया ज्ञानेऽनुभूयमानः कुतो मनस्कारनिमित्तत्वे सदैवैकरूपं चेतः संवेद्येत न चित्रमिति, न चानिमित्तको भविष्यतीति वाच्यं नित्यं सत्त्वादिप्रसङ्गादत्रार्थे च युष्माभिरेव दत्तः स्वहस्तः नित्यं सत्त्वमसत्त्वं वेत्याद्यभिधानादनाद्यविद्यानिमित्तोऽयमिति चेदाह । उपादानकारणं मनस्कारोऽविद्या तु आलम्बनतया यदि परं निमित्तमिति तदेव च रूपमविद्याशब्देनोक्तं न तत्त्वे विशेषः । मनस्कार एवाविद्या तस्याः चिद्रूपतैवोत्पद्येत न नीलादिरूपतेति, किञ्च तत्त्वज्ञे पारमार्थिकज्ञानयुक्ते मतिरभेदिनी ज्ञानमेकाकारमेव स्यात्तस्य अविद्याया अभावादिति । तथाचैकरूपतया न व्यवहाराङ्गं स्यादिति तथाच प्रतिविभागेन देशना विरुद्ध्येत, ततो बाह्यवस्तुनिमित्तेयं मतिरेष्टव्येति । उक्तं चात्र पुरस्तादिति न पुनरुच्यते स्थानाशून्यार्थमेतदिति ॥ अस्य फलमुपदर्शयन्नाह ।

विषयाधिगतिश्चात्र प्रमाणफलमिष्यते । एतान्येव प्रमाणानि नापरं विषयादृते ॥ ३२६ ॥

इहलक्षणगोचरसंख्याफलविषया विप्रतिपत्तयः सामान्यतः प्रमाणविषयाः । तत्र प्रमाणं स्वपराभासीत्यादिना निरस्ताः लक्षणविषयास्तथा प्रत्यक्षं योगिविज्ञानमित्यादिना निश्चयप्रत्यक्षविषयाः, तथा अर्थक्रियासमर्थेर्थे वृत्तिकृच्चतदर्थिन इत्यादिना व्यवहारप्रत्यक्षस्य लक्षणादिविप्रतिपत्तयो निरस्ताः, तथा स्वसाध्येनाविनाभावनिश्चये क्वापि निश्चितः इत्यादिना स्वार्थानुमानस्य, तथा यल्लक्षणो मतो हेतुः स्वार्थसंवित्तये इत्यादिना परार्थानुमानस्य, तथा शब्दादसन्निकृष्टेऽर्थे इत्यादिना शाब्दस्य लक्षणगोचरविषयां निरस्य फलविषयां च निरस्य प्रत्यक्षादिप्रमाणसंख्याफलविप्रतिपत्तिं निराकुर्वन्नाह । विषयाधिगतिश्चात्रेत्यादि । विषयो गोचरः परिच्छेद्यः अत्रागमप्रमाणेन तत्त्वानि जीवादीनि तेषामधिगतिरधिगमो निश्चयनमिति यावत्, एतत्प्रमाणस्यागमाख्यस्य फलमेतावत्युक्ते समाप्तः शाब्दप्रमाणपरिच्छेदः । सर्वप्रमाणविषयसंख्याविप्रतिपत्तिं निराकुर्वन्नाह । एतान्येवादित आरभ्य यान्युक्तानि प्रत्यक्षानुमानागमलक्षणानि नापरं प्रमाणान्तरमस्तीति शेषः । कथमेतदित्याह विषयादृते प्रमाणभेदव्यवस्थापको हि विषयभेद एव तदभेदे गृहीतग्राहितया प्रामाण्याभावापत्तेः कथमन्यथा अनधिगतार्थाऽधिगन्तृ प्रमाणमिति प्रमाणलक्षणं प्रणीयते किन्तु अर्थक्रियार्थिनो नान्यद्विषयान्तरमस्ति यत्परिच्छिन्ददन्यत्प्रमाणान्तरं स्यान्न चाविषयस्य प्रमाणचिन्तया, किञ्चिदर्थक्रियोपयोगिन एव चेतसः प्रमाणतयेष्टेरिति । न हि व्यसनितया प्रमाणलक्षणं प्रणीयते किन्तु अर्थक्रियार्थिनोऽविप्रलम्भेनार्थक्रियासम्पादनार्थमिति एतच्च मिथ्याज्ञानान्न सम्भवति विषयमन्तरेणापि तस्य भावात् यच्च नास्ति तत्कथं प्रापयति सर्वप्रापणापत्तेरिति यच्चाप्रापकं तन्न प्रमाणव्यवस्थापकं गुणमासादयति पुरुषार्थानुपयोगादिति किं तेन तस्यापि प्रमाणत्वेऽतिप्रसङ्गः इति प्रत्यक्षादुत्तीर्णमिन्द्रियविदो विषयतापोग्यमनुमानस्य

गोचरं न किञ्चिदत्रापरेण, यच्चातीन्द्रियविषयं प्रमेयमसदाद्यर्वाग्दृशामगोचरं तदागमविषयं न चापुरुषार्थोपयोगि प्रमेयान्तरमास्थामासादयति अनेनोपमादीनामप्रामाण्यं दर्शितं सति चास्मिन्ननुमानेऽन्तर्भाव इत्यावेदितं भवति तथाप्यतिमुग्धतया परः कथितमप्यनवबुध्यमानः निजपक्षानुरागितया जातिप्रत्ययेन गुणवत्यपि परोक्ते मत्सरितया स्वानुरूपमुखरजनोत्साहितोऽगणयन्न्यायमाह ।

**अयमेवेति यो ह्येष भावे भवति निर्णयः । नैष वस्त्वन्तराभावसंवित्त्यनुगमादृते ॥ ३१७ ॥**

अयमेवेति साधारणप्रयोगं दर्शयति तेन एतान्येवेति योऽयं भावेषु प्रमाणरूपेषु भवति उत्पद्यते जायते वा निश्चयः नैष निश्चयः वस्त्वन्तरस्य प्रस्तुतप्रमाणव्यतिरिक्तप्रमाणान्तरस्य अभावस्तत्र संवित्तिः संवेदनं ज्ञानमिति यावत् तस्यानुगमनमनुवृत्तिरनुगमस्तस्मादृते नविनेति, एतदुक्तं भवति योऽयं कश्चिदयमेवेति नियमः स विपक्षाभावनिश्चयं विना न भवतीति तत्कथमेतान्येवेति नियमः ॥ एतदेव स्फुटीकुर्वन्नाह ।

**गां दृष्ट्वाऽयमरण्येऽन्यं गवयमीक्षते यदा । भूयोऽवयवसामान्यभाजं वर्त्तुलकण्ठकम् ॥३१८॥**

गां चतुष्पदविशेषं दृष्ट्वा उपलभ्य स्वगृहादाविति अरण्ये अटव्यां गवयमीक्षते यदा पश्यति यस्मिन्काले किम्भूतं भूयसां बहूनामवयवानां खुरककुदलाङ्गूलादीनां सामान्यं सादृश्यं भजत इति क्विप् तं केवलम्, तस्य कम्बलो न भवतीति तेनाह, वर्त्तुलकण्ठकम्, वर्त्तुलं कण्ठं यस्य स तथा तं कम्बलशून्यमित्यर्थः ॥ अत्र पर एव परमतमाशङ्कते। तदाऽस्य गवये ज्ञानं रूपमात्रावबोधकम्, प्रत्यक्षमेव यच्चापि विशेषेण विकल्पकम् । तदारण्यस्थितगवयदर्शने गवये तद्विषये ज्ञानं यत्तद्रूपमात्रावबोधकं खुरककुदलाङ्गूलसमुदायावभासं तत्किमित्याह प्रत्यक्षमेव नात्रापि संशयः इन्द्रियव्यापारानुविधानाद्यच्चापि

उत्तरकालमुत्पद्यते विधिमुखेन विशेषेण विकल्पकम् ॥ किंवदित्याह ।

**गवा सदृशरूपोऽयं पशुरित्येतदिष्यते । अक्षव्यापारसद्भावे जातेः प्रत्यक्षमिष्यते ॥ ३१९ ॥**

गवा स्वगृहावस्थितादिना सदृशं समानं रूपं यस्य स तथा सोयं सापेक्षत्वेपि समासो यथा देवदत्तस्य गुरुकुलं केन सदृशरूपो गवा तिरश्चा पशुराटव्यस्तिर्यङिति । एवं इष्यते एतद्दृश्यते अक्षव्यापारसद्भावे इन्द्रियप्रयोगे सति तदाविर्भावात् उत्पत्तेः प्रत्यक्षमिष्यते तदपि विकल्पकज्ञानमध्यक्षमिति सम्बन्धः ॥

**तत्र यद्यपि गां स्मृत्वा तज्ज्ञानमुपजायते । सन्निधर्गवयस्थत्वात् भवेदिन्द्रियगोचरम् ॥ ३२० ॥**

तत्रेति प्रक्रमे यदीत्यभ्युपगमे अपिः सम्भावने यदि नाम गां स्मृत्वा तज्ज्ञानं गवयग्राहकं ज्ञानमुपजायते इति सम्भाव्यते तथापि सन्निधेः सादृश्यस्य गवयस्थत्वादारण्यपशौ स्थितत्वात् भवेदिन्द्रियगोचरं जायेताक्षव्यापारज्ञेयमिति ॥

**सामान्यवद्धि सादृश्यं प्रत्येकं च समाप्यते । प्रतियोगिन्यदृष्टेपि तस्मात्तदुपलभ्यते ॥ ३२१ ॥**

सामान्यवज्जातिरिव सादृश्यं प्रत्येकं प्रतिपिण्डं समाप्यते अन्यथा सांशता स्यात्तथा वस्त्वंशेषु सर्वात्मना एकदेशेन वा वर्तेत इत्यादि प्रसज्येत तेन प्रतियोगिनि गवि अदृष्टेपि तस्मात्सादृश्यं उपलभ्यते प्रतिभासत इति ।

**सादृश्यस्य च वस्तुत्वं न शक्यमपबाधितुम् । भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ॥ ३२२**

सदृशस्य भावः सादृश्यं तस्य, च शब्दो व्यवहितसम्बन्धः, तच्चैव न शक्यमेव अपबाधितुं अपाकर्तुं वस्तुत्वं वस्तुरूपता सादृश्यस्य, किमित्याह । भूयोऽवयवसामान्ययोगो भूयसामवयवानां खुरककुद्लाङ्गूलादीनां सामान्यं समता तेन

तस्य वा योगो जात्यन्तरस्य गोत्वलक्षणस्य तत्सादृश्यमिति तत्प्रत्यक्षेणैव प्रतीतं किमत्रार्थउपमानेनेति ॥ अत्र विमः प्रति-समाधानमाह ।

**तस्यामेव त्ववस्थायां यद्विज्ञानं प्रजायते । पशुनैतेन तुल्योसौ गोपिण्ड इति सोपमा ॥३२३॥**

अत्र सर्वं परकीयं चोद्यमनवकाशमेव तस्यामिति गां गृहे दृष्ट्वा गवयमरण्ये पश्यति यद्विज्ञानं प्रकर्षेणोपजायते किम्भूतमित्याह पशुनैतेन तुल्योसौ गोपिण्डः पशुना तिरश्चा एतेनोपलभ्यमानेन तुल्यावयव इति सोपमा सैषोपमा गोगवयग्राहिप्रत्यक्षादन्यद्घटनाज्ञानमित्यर्थः ॥ एतदेवोपसंहारव्याजेन स्फुटीकुर्वन्नाह ।

**तस्माद्यत्स्मर्यते तत्तु सादृश्येन विशेषितम् । प्रमेयमुपमानस्य सादृश्यं वा तदाश्रितम् ॥३२४॥**

यत एव पशुनैतेन तुल्योऽसौ गोपिण्ड इति सोपमा तस्माद्यत्स्मर्यते गोरूपं गवयसादृश्येन विशेषितं तत्प्रमेयमुपमानस्य न गवयसादृश्यविशिष्टं गोरूपं पूर्वाध्यक्षेण गृहीतं गवये अगृहीते तत्सादृश्यस्याग्रहणात् कुत एव तेन विशिष्टं गोरूपं गृह्यते न चेदानींतनाध्यक्षेण गोपिण्डो गृह्यते येनोपमानविषयता हीयेत अत एव तस्मादित्युक्तं गवयदर्शनाविर्भूतसादृश्यं वा तदाश्रितं पिण्डाश्रितं उपमानस्य प्रमेयमिति ॥ युक्त्यन्तरमाह ।

**प्रत्यक्षेणावबुद्धे च सादृश्ये गवि च स्मृते । विशिष्टस्यान्यतो भावे उपमायाः प्रमाणता ॥३२५॥**

प्रत्यक्षेण चक्षुरादिधिया अवबुद्धे ज्ञाते सादृश्ये गवयदर्शनात् गवि च पूर्वदृष्टे च स्मृते विशिष्टस्य गोपिण्डस्य सादृश्यस्य वा विशेष्यविशेषणभावेन विशिष्टस्यानयोरन्यतरस्यान्यत उपमायाः सिद्धेरुपमायाः प्रमाणता प्रामाण्यमिति ॥ दृष्टान्तान्तरमाह ।

प्रत्यक्षेपि यथा देशे स्मर्यमाणे च पावके । विशिष्टविषयत्वेन नानुमानाप्रमाणता ॥ ३२६ ॥

प्रत्यक्षेपि प्रत्यक्षेणोपलभ्यमानेपि देशे यत्र साध्यं साध्यते स्मर्यमाणे च पावके वह्नौ साम्प्रतं विशिष्टविषयत्वेन पूर्वोपलब्धस्य स्मर्यमाणस्य पावकस्य प्रत्यक्षावसितदेशेन सह सम्बन्धविषयमनुमानं नाप्रमाणमेवमिहापीति ॥

न हि प्रत्यक्षता तस्य विज्ञानस्योपपद्यते । इन्द्रियत्वाभिसम्बन्धव्यापारविरहात्तदा ॥३२७॥

न तावदेतत्प्रत्यक्षेऽन्तर्भवति इन्द्रियत्वेन यः सम्बन्धस्तस्य तत्र वा यो व्यापारस्तस्य विरहात् तदा गवयदर्शनकाले गां सादृश्यविशिष्टं पश्यतः ॥ नाप्यनुमानेन्तर्भाव इति दर्शयन्नाह ।

त्रैरूप्यानुपपत्तेश्च न च तस्यानुमानता । पक्षधर्मादि नैवात्र कथञ्चिदपि युज्यते ॥ ३२८ ॥

त्रैरूप्यस्य पक्षधर्मान्वयव्यतिरेकरूपस्य अनुपपत्तेश्च न च नैव तस्योपमानस्यानुमानता त्रैरूप्यानुपपत्तेरेतदेव दर्शयति पक्षधर्मादि आदिशब्दात्सपक्ष एव सत्त्वं विपक्षे चासत्त्वमेव निश्चितं गृह्यते एवम्भूतं त्रैरूप्यमत्रोपमाने कथञ्चिदपि केनापि प्रकारेणोपपद्यते घटत इति तस्मात्पृथक् प्रमाणमेतदिति ॥ अत्र सूरिराह ।

नासमानेषु सामान्यं समाना नापि तद्विना । पिण्डेभ्यो भिन्नसामान्ये दोषोऽयमितरेतरः॥३२९

न तावदसमानरूपेषु खरोष्ट्रादिषु सामान्यं समानानां भावः सामान्यं कथमसमानरूपेषु स्यादिति, भावे वाऽतिप्रसङ्गात्समानाः समानजातीयाः, नापि तत् सामान्यं तथाच इतरेतरदोषोऽयमन्योन्याश्रयदोषोऽयमुक्तक्रमेण दर्शित इति ॥

पिण्डेभ्यो यदि सामान्यं भिन्नमभ्युपगम्यते । सर्वात्मनैकदेशेन तेषु तद्वर्त्तते ननु ॥ ३३० ॥

प्रमाल० || गोचरं न किञ्चिदन्यपरेण, यत्त्वतीन्द्रियविषयं प्रमेयमस्मदाद्यर्वाग्दृशामगोचरं तदागमविषयं न चापुरुषार्थोपयोगि प्रमेया- || श्लो०



पिण्डेभ्यो व्यक्तिभ्यो यदीत्यभ्युपगमे सामान्यं जातिरित्यर्थः । उपलक्षणं चैतत्सादृश्यमपि यदि भिन्नं पिण्डेभ्य-स्तथासति, तत्सामान्यं सादृश्यं च तेषु वर्तते न वा, यदि वर्तते किं सर्वात्मना उत एकदेशेनेति वाच्यम्, यदि सर्वात्मना न तर्हि किञ्चिदनुगतं सामान्यं किन्तु व्यक्तय एव कथमन्यथा सर्वात्मना तत्र वृत्तं स्यात्तद्वा पिण्डानामेकतापत्तिरेकस्मादभिन्न-त्वात्, अथैकदेशेन तेष्वप्येकदेशेषु स वर्तते नावर्त्तमानोऽनुगतप्रत्ययनिमित्तं भवितुमर्हतीति, तेष्वपि चैकदेशेषु वर्तते सोऽन्यथा ते एकदेशा निस्सत्ताकाः स्युः । तत्र यदि सर्वात्मना वर्त्तते स एव प्रसङ्गः । अथैकदेशेनेति पक्षस्तत्रापि वृत्तिरङ्गीकर्त्तव्या तथाचानवस्था, न चावर्त्तमानस्तत्रानुगतप्रत्ययनिमित्तमित्युक्तम्, अतः किमिदं सामान्यं येषां भूयस्ता, किञ्चोपमानगाह्यमिति ।

**सर्वानुगे च सामान्ये पिण्डवद्दृश्यतेष्यताम् । तददृष्टावदृश्यत्वं पिण्डानामनुषज्यते ॥ ३३१॥**

सर्वानुगे सर्वासु व्यक्तिषु यद्यभिन्नं प्रत्येकं च समाप्यते तदैकव्यक्त्यनुपलब्धं सर्वत्रोपलभ्येत अन्यथा व्यक्तीनाम-दृश्यता प्राप्नोत्यन्यथा भेद एव स्याद्विरुद्धधर्माध्यासस्य तन्निबन्धनत्वादन्यथा भेदव्यवहारोच्छेद एव स्यात्तेन यदुक्तम्, न हि प्रत्यक्षता तस्य विज्ञानस्योपपद्यत इत्यादि तन्न्याहृतमनन्तरोक्तयुक्तेः ॥ तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् । प्र-मेयमुपमानस्य सादृश्यं वा तदाश्रितम् ॥ श्लोकः पूर्वं व्याख्यातो न पुनरुच्यते ।

**अत्रोच्यते नु सादृश्यमेकनिष्ठं द्वयाश्रितम् । नान्वयज्ञानसम्भूतिरेकनिष्ठं यदा हि तत् ॥३३२॥**

तस्मादित्यादावुच्यते नुरिति वितर्के एवमहं वितर्कयामि न प्रकारान्तरसम्भवः एकान्तवादिनः, स्याद्वादवादिना तु भिन्नं सामान्यं सादृश्यं वाऽभ्युपेयमिति । तत्र यदि एकनिष्ठं तदा अनुगताकारप्रत्ययसम्भूतिस्तस्यानुपपत्तिरेव व्यक्तेरिव तन्निमित्तताहानेरेकनिष्ठं एकव्यक्तिसमाश्रितम्, हिरवधारणे, नैवान्वयज्ञानसम्भूतिरिति ॥

श्लो० ॥३३२॥

**द्वयनिष्ठे तु सामान्ये गोपिण्डे गवये पि वा। गृहीते तद्गृहीतं नु नोपमानमिहापरम्॥३३३॥**

द्वयनिष्ठे तु गोगवयनिष्ठे, तुरवधारणे, द्वयाश्रित एवायं दोषः एकाश्रितत्वे त्वनन्वय एवेति द्वयाश्रितत्वे गोपिण्डे गृहीते तद्गृहीतमेव अन्यथा नैकं द्वयाश्रितम्। न च विरुद्धधर्माध्यासेपि न भेदोऽतिप्रसङ्गात्, न च दृश्यत्वात् दृश्यत्वेन विरुद्धे कथमन्यथा परं प्रति आसञ्जनं क्रियते एकान्तवादिना न हि स्वयमसिद्धं परं प्रत्यासञ्जयितुं युज्यते न च प्रसङ्गसाधनं तत् परस्य तत्र विरोधासिद्धेः तस्मात्तवायं दोष एव ततो गोपिण्डे गवये वादृष्टे दृष्टमेव तत्तस्मादध्यक्षसिद्धे कोपमेति॥ न केवलं प्रत्यक्षविषये किमुपमानेन अनुमाने चान्तर्भाव एतदेवाह।

**एवं लिङ्गावसाये च उपमातो न चान्यतः। दृष्टान्तान्वेषणं केन तत्र वः सम्मतं ननु॥३३४॥**

एवं गवि स्मर्यमाणे गवये च दृश्यमाने घटनाप्रत्यय उपमानं यदि तव सम्मतं तदा पूर्वदृष्टे धूमे स्मर्यमाणे महानसस्थे तथा साध्यधर्मिणि च दृश्यमाने सोयमिति घटनाप्रत्ययः उपमानमत्रापि तथाचान्वयसिद्धेर्न किञ्चित् दृष्टान्तेन अन्यथा महानसधूमसदृशतया न गृहीतः स्यात्तस्य वाऽनन्वयत्वादसाधनत्वमेव अथ तत्रापि समानोयं दोषः यदि सोयमिति निश्चयः किं ज्ञातेन अन्यथा वाऽनन्वय इति। एतदुक्तं भवति सामान्यवादिना लिङ्गं सामान्यमेवेष्टव्यं व्यक्तेरनन्वयाच्च च सामान्यं सादृश्यमित्यत्र शब्दभेदं विरहय्य कश्चिदर्थभेदः तच्चेदुपमानगोचरं न किञ्चिद्दृष्टान्तानुसरणेन तथाहि गृहाश्रितगोस्थानीयो महानसस्थोग्निसम्बद्धो धूमो अटवीस्थगवयस्थानीयः प्रदेशान्तरवर्ती धूमो यथा च गोगवयग्राहिप्रत्यक्षद्वयातिरिक्तो घटनाप्रत्यय उपमानं तथा महानसेतरत्रस्थधूमद्वयग्राहिप्रत्यक्षद्वयातिरिक्तोत्रापि घटनाप्रत्ययोऽभ्युपेयोऽन्यथाप्रमक्ताहानेः। ततश्च लिङ्गप्रतिपत्तिरुपमानादेव। अथोपमायाः सादृश्यं विषयो न सामान्यं कोनयोर्विशेषो भूयोऽवयवसामान्ययोगः सा-

दृश्यम्, सर्वावयवसामान्ययोगः सामान्यं तथाप्ययं दोषः महानसस्थो हि धूमो वह्निप्रतिबद्धः प्रत्यक्षेणावसितः प्रदेशान्तरस्थो न तथा तत्र प्रमाणान्तरभावापत्तिस्ततोऽत्रापि न सर्वात्मना समानावयवयोगः । ततः सादृश्यग्रहणादेव वह्निसिद्धेः सम्बन्धग्राहिप्रमाणविषयीभूतदृष्टान्ताभिधानमनवसरमिति । अथोपमानाल्लिङ्गप्रतिपत्तिरितरत्र को विशेषः अथैवमुपमानं प्रवर्त्तते पशुनैतेन तुल्योसौ गोपिण्डः न तु गोपिण्डेन सदृशोयं पशुरिति ततः प्रदेशान्तरवर्त्तिना अमुना सदृशोसौ महानसस्थो धूम इत्युपमाने प्रदेशान्तरवर्त्तिनोग्निसम्बन्धासिद्धेस्तत्सदृशत्वे महानसस्थस्यापि तत्सम्बन्धो सिद्धः स्यादिति न वह्निप्रतीतिसम्भवः नैतदस्ति, न खल्वेकपक्षाश्रितं सादृश्यं किन्तु द्वयोस्तुल्यतायां सादृश्यमिति तथाच गोपिण्डसदृशोयमित्यपि न काचित् क्षतिरिति, अथ तत्र दृष्टान्तोऽभ्युपगम्यते तर्हि अन्यत्रापि समानमेतत् तथाचानुमानमेव वस्तुस्थित्या भवता ग्राहविशेषादुपमानमुच्यते, दृष्टान्तापत्तौ च त्रैरूप्यानुपपत्तेश्चेत्याद्यप्यसङ्गतमापन्नमिति, किञ्च प्रत्यक्षद्वयातिरिक्तानुसन्धिप्रत्यय उपमानं हन्तैतावता विशेषेण प्रमाणान्तरत्वे तदुक्तौ दृष्टायां द्वितीयशाखिदर्शनाद्यशाखिनि यदाद्योयमिति ज्ञानं प्रथमदर्शनात् द्वितीयोयमिति च यज्ज्ञानं तथा ह्रस्वो दीर्घोयमिति यज्ज्ञानमुपजायते तत्प्रमाणान्तरमासक्तमिति प्रमाणेयत्ता विशीर्येत तथाच प्रमाणषट्काभ्युपगमो न शोभनेति ॥ यद्येवं तत्रापि यदि सामान्यं लिङ्गं दृष्टान्तानुसरणमनुचितं अथ व्यक्तिर्लिङ्गं तदाऽनन्वयदोषस्तत्रापीत्याह ।

**प्रत्यक्षेणावसीयन्ते हेतवः साध्यधर्मिणि । सम्बन्धग्राहिमानं नो ज्ञात एव प्रतीयते ॥ ३३५॥**

प्रत्यक्षेणेति नोपमानेन नियतदेशकालतया प्रत्यक्षेणैव ग्रहणात् । अन्यथा सामान्यस्य सर्वगतत्वात् न नियतदेशे हेतूपलम्भः स्यात्तथाच नियतदेशे साध्यप्रतीतिरिति द्विस्वभावास्ततो भावा इत्याद्युक्तं प्राक् तेन व्यक्तिरेव लिङ्गं तत एव च सम्बन्धग्राहिमानं स्मरणार्थमिष्यते ।

**प्रत्यक्षबलसम्भूतस्मरणं नापरा प्रमा । प्रत्यक्षगोचरातीतगोचरान्तरहानितः ॥ ३३६ ॥**

प्रत्यक्षमक्षजज्ञानं तस्य बलं निमित्तभावः तस्मात्सम्भूतं ज्ञानं तच्च तत्स्मरणं च प्रत्यक्षबलसम्भूतस्मरणं न प्रमाणान्तरं प्रत्यक्षविषयातिरिक्तविष .न्तराभावात्, यथा प्रत्यक्षावसीयमाने वह्नौ धूमादित्यनुमानं प्रत्यक्षगोचरातीतविषयशून्यं च प्रत्यक्षबलसम्भूतमुपमानमिति न चायमसिद्धो हेतुः पिण्डद्वयस्य प्रत्यक्षद्वयेनोपलब्धेः न चान्यत्सामान्यमन्यत्सादृश्यं चास्ति तस्यानुमानप्रस्तावे निषिद्धत्वान्नापि विरुद्धः, सपक्षे भावान्नाप्यनैकान्तिकः विषयशून्यस्यापि प्रामाण्येऽतिप्रसङ्गात्तन्नोपमानं नाम प्रमाणान्तरमस्तीति स्थितो विप्रोक्तोपमानविचारः ॥ साम्प्रतं नैयायिकादिनिरूपितोपमाननिरूपणायाह ।

**कीदृग्गवय इत्येवं पृष्टो नागरकैर्यदा । ब्रूयादारण्यको वाक्यं यथा गौर्गवयस्तथा ॥ ३३७ ॥**

कीदृग् गवयः किं विशिष्टः स आटव्यः पशुर्गवयनामा इत्येवमिति प्रश्नावधिसूचकः । एवं प्रश्नानुकरणे पृष्ट आयापितो नागरकैर्नगरवासिलोकैर्यदा ब्रूयादभिदध्यादारण्यकः शबरादिः वाक्यं प्रतिवचनं यथा गौः स्वगृह एव दृष्टो युष्माभिस्तथा तद्वद्गवयोपि विज्ञेयः ॥

**श्रुतातिदेशवाक्यस्य समानार्थोपलम्भने । संज्ञासम्बन्धविज्ञानमुपमा कैश्चिदिष्यते ॥ ३३८ ॥**

श्रुतमुपलब्धमतिदेशवाक्यं शबरादिनाभिधीयमानं प्रतिवचनं येन पुंसः समानार्थोपलम्भने समानश्चासावर्थश्च तस्योपलम्भने समानः सदृशः तुल्यावयवः तस्य गवा सदृशस्य गवयस्योपलम्भने दर्शने संज्ञा नाम यत्पूर्वं श्रुतं शबरेणोच्यमानं तस्य सम्बन्धस्तत्र गवये योजनं तत्र विज्ञानं संवित् सोयमिति उपमानं कैश्चिन्नैयायिकादिभिरिष्यतेऽभ्युपेयत इति ॥ सूरिराह ।

आदेशाश्रवणे तस्य संज्ञासम्बन्धनिश्चयः । गवयस्योपलम्भे च कोपमेह त्वयोच्यते ॥३३९॥

आदेशः शवरमनिवचनं तस्य श्रवणं तस्मिंस्तस्य नागरिकस्य संज्ञा गवय इत्येवं नाम तस्य सम्बन्धः तथाभूते गोसदृशे निवेशनं तत्र निश्चयः सञ्जात इति शेषः गवयस्योपलम्भे दर्शने पुनः कापरोपमा त्वयोच्यतेऽभिधीयत इति ॥

अन्यथा किं विजानीते समानपशुदर्शने । सोयं यस्य मया संज्ञा संश्रुतेति तदा ननु ॥३४०॥

यदि तेन संज्ञिनो न संज्ञासम्बन्धो निश्चितस्तदा समानावयवपशुदर्शने किं केन कारणेन विजानीते सोयं पशुर्यस्य संज्ञा शबरेणोच्यमाना श्रुता मया तथा पशुदर्शनकाले अथवा तदा नगरावस्थितिकाले यस्य संज्ञा संश्रुतेति नन्विसक्षमायां नैवं सहामहे सोयं पशुर्यस्य संज्ञा नगरस्थितेम श्रुता एवं परामर्शेन ज्ञानं यदि तस्य संज्ञासंज्ञिसम्बन्धज्ञानं नोत्पन्नमासीदिति ॥

न ह्यविज्ञातसम्बन्धः शक्तः एवं विवेचितुम् । सोयं यस्य पुरा नाम शबरेण निवेदितम् ॥३४१॥

हिर्यस्मात् नाविज्ञातसम्बन्धः पुमान् शक्तः समर्थ एवमनन्तरोक्तक्रमेण विवेचितुं विनिश्चेतुं सोयं गवयनामा पशुर्यस्य पुरा पत्तनस्थितेन नामाभिधानं शवरेण आटव्यपुरुषेण ममोदितं मम पुरतोऽभिहितम् । तस्मात्पूर्वमेव संज्ञासम्बन्धनिश्चयस्तत्रोत्पन्नस्तत्रापरं गृहीतग्राहीति न प्रमाणं विज्ञानमिति नैयायिकोपकल्पितोपमानपरीक्षा ॥

सूत्रे यत्रोपमा नाम नन्द्याख्य उदिता किल । वादकाले फलं तस्य नान्यदेति विदुर्बुधाः ॥३४२

सूत्रे किम्भूते नन्दौ नन्द्यध्ययननाम्नि यत्र यत्पुनरुपमा नाम उपमानं नामेति सम्बोधने उदिताऽभिहिता किलेति स्थितोयं पक्षः किन्तु वादकाले शिष्याचार्ययोर्विचारकाले फलं तस्य उपमायाः साफल्यं नान्यदा जल्पकाले निग्रहस्थान-

प्राप्तेः कथमन्यथाऽभयदेवपादैरनुग्रहपरैरपि न समर्थिता परकीयदोषोद्धारेण अपितु दूषिता प्रसङ्गत इति ॥ त्रिंशः पुनरर्थापत्तिलक्षणं प्रमाणान्तरमाह ।

**प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवन् । अदृष्टं कल्पयत्यन्यं सार्थापत्तिरुदाहृता ॥३४३॥**

प्रमाणानि प्रत्यक्षादीनि तानि च तानि षट्कृतानि यत्र तत्प्रमाणषट्कं तेन विज्ञातः यत्र धर्मिणि अर्थो दाहादिः नान्यथा विवक्षितमर्थं विना शक्तिं विना भवन् जायमानोऽदृष्टं कल्पयति अन्यं एवंविधार्थो नैवंविधमर्थं विना भवति इत्यदृष्टं शक्तिरूपं कल्पयति सम्भावयति सार्थापत्तिरदृष्टस्य सामर्थ्येनापत्तिः प्राप्तिः सार्थापत्तिरुदाहृता कथिता तज्ज्ञैरिति शेषः ॥ तां च प्रत्यक्षादिनिमित्तां षट्प्रकारां दर्शयितुमाह ।

**तत्र प्रत्यक्षतो ज्ञाताद्दाहाद् दहनशक्तिता । वह्नेरनुमिताद्यानात्सूर्ये तच्छक्तियोगिता ॥३४४॥**

तत्रेति क्रमोपन्यासे प्रत्यक्षतो विज्ञातात्प्रत्यक्षेणाधिगताद्दाहात्तेजःस्फोटाद्दहनशक्तिता दहनं दाहस्तत्र शक्तिस्तद्भावः शक्तिता कस्य वह्नेर्जातवेदसः सा प्रत्यक्षपूर्वा अर्थापत्तिरिति । तथाऽनुमितादनुमानावसितात्सूर्ये आदित्ये यानात् गमनात् तथाहि गतिपूर्विका देशान्तरावाप्तिर्दृष्टा यथा देवदत्ते देशान्तराद्देशान्तरे चोपलभ्यते सूर्यस्तस्मादस्य गतिरनुमीयते तस्मादनुमिताद्यानात्तच्छक्तियोगिता तत्र गमने शक्तिस्तया योगो विद्यते यस्य तद्भावः तत्ता साऽर्थापत्त्यागम्यते नहि गंत्री शक्तिविरहस्य सम्भवतीति ॥ न चानुमानेऽन्तर्भावोऽस्या इति दर्शयितुमाह ।

**शक्तयः सर्वभावानां कार्यार्थापत्तिसाधनाः । अपूर्वास्ताश्च गम्यन्ते सम्बन्धग्रहणादृते ॥३४५॥**

शक्तयः सामर्थ्यानि सर्वेषां भावानां कार्यार्थापत्तिः कार्यप्राप्तिः साधनाः कार्यदर्शनगम्याः कार्यार्थापत्तिः साधनं या-

सामिति विग्रहः। यदि कारणस्य कार्यकर्त्री शक्तिर्न भवेत् तदा कार्यलक्षणस्यार्थस्यापत्तिरेव न स्यादिति भवति च कारणात् कार्यमिति अतस्तदापत्तेः साधनास्ताः न च कार्यानुमानेऽन्तर्भावोऽनुमानं हि पूर्वदृष्टसाधनसाधर्म्याद्भवति न चैवमर्थापत्तियतः, अपूर्वास्ताश्च गम्यन्ते ताः पुनरपूर्वा न दृष्टसाधर्म्यात् गम्यन्ते परिच्छिद्यन्ते साध्यसाधनसम्बन्धग्रहणादृते तं विनेति॥

**न चाऽसां पूर्वसम्बन्धो न चाऽन्यो गम्यतेऽधुना। कार्यैः सह यतस्तासां पक्षधर्मान्वयाविह॥३४६**

न चैव आसां शक्तीनां पूर्वसम्बन्धो वह्निधूमयोरिव न चासां शक्तीनां गम्यते अवसीयतेऽधुना साम्पतं साध्यधर्मिण्येव सत्त्वक्षणिकत्वयोरिव भवत्कल्पितयोर्भवन्मतेन कार्यैः सह येन कार्यलिङ्गगम्याः स्युरेता इति यतो यस्मात् स्यातां भवतां पक्षधर्मत्वं स पक्ष एव सत्त्वमेव एवम्भूतौ पक्षधर्मान्वयाविह शक्तिष्विति॥ किञ्च।

**श्रोत्रादिशक्तिपक्षे च यावान् हेतुः प्रयुज्यते। सर्वोऽसावाश्रयासिद्धो धर्म्यसिद्धेः प्रसज्यते॥३४७**

श्रोत्रमादिर्येषामिन्द्रियाणां तानि श्रोत्रादीनि तेषां श्रोत्रादीनां या शक्तिः सा यदि पक्षीक्रियते तस्मिन् श्रोत्रादिशक्तिपक्षे यावान् कश्चन हेतुः साधनं प्रयुज्यते तत्साधनायाभिधीयते स सर्वोपि आश्रयासिद्धः प्रसज्यते, श्रोत्रशक्तिलक्षणस्य धर्मिणोऽसिद्धेः। किञ्च यदि भावधर्मो हेतुस्तदा भावेऽसिद्धेऽसिद्धत्वात् हेतुरसिद्धः स्यात्। अथाभावधर्मो हेतुस्तदा तस्याभावाव्यभिचारित्वाद्भावसाधनायाभिहितो विरुद्धः स्यात्, अथोभयधर्मो हेतुस्तदा तस्योभयाव्यभिचारित्वादनैकान्तिकः॥

**पीनो दिवा न भुङ्क्तेऽथ एवमादिवचःश्रुतौ। रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते॥३४८॥**

पीनः समर्थो बलवान् दिवा अह्नि न भुङ्क्ते नाश्नातीति इत्येवमादिवचःश्रुतौ वचनश्रवणे रात्रिभोजनविज्ञानं रात्रौ भुङ्क्त इत्येवंविधज्ञानं श्रुतार्थापत्तिरुच्यते अभिधीयते तज्ज्ञैरिति शेषः॥

न राज्यादिपदार्थश्च दिवावाक्येऽवगम्यते । न दिवादिपदार्थानां संसर्गो रात्रिभोजने ॥३४९॥

न रात्र्यादिपदार्थो दिवापदस्य तेनासौ तत्र न गम्यते न प्रतीयते यस्मान्न दिवादिपदार्थानां दिवादिपदानामित्यर्थः संसर्गः सम्बन्धो रात्रिभोजने भोजनविषये यदि वा सुपां सुप इति न्यायाद्रात्रिभोजनेन सहेति शेषः तत्कथमप्रतिबद्धानि दिवादिवाक्यानि रात्रिभोजनादीनि प्रतिपादयन्ति अतिप्रसङ्गात् ॥

न भेदो येन तद्वाक्यं भवेत्तत्प्रतिपादकम् । अन्यार्थव्यावृत्तत्वाच्च न द्वितीयार्थकल्पना ॥३५०॥

न भेदो न च तस्य वाक्यस्य भेदो रूपद्वयं येनैकेन रूपेण रात्रिभोजनमपि प्रतिपादयेत्, न चैकमेव कार्यद्वयं करोतीति वाच्यम्, अन्यार्थव्यावृत्तत्वाच्च यस्माद्दिवावाक्यं तत्प्रतिपादकं वासराद्यर्थस्यैव प्रतिपादकं यतः नञश्च प्रतिषेध इति पदार्थान्तरे व्यावृत्तत्वान्न ततो रात्रिभोजनप्रतीतिरिति । न द्वितीयार्थकल्पना न द्वितीयमर्थं कल्पयितुं क्षमत इति ॥

तस्माद्वाक्यान्तरेणायं बुद्धिस्थेन प्रतीयते । तेनानागमिकत्वेपि यत्तद्वाक्यं प्रतीयते ॥ ३५१ ॥

यत एवं तस्माद्वाक्यान्तरेण दिवेति वाक्यादपरेण अयं रात्रिभोजनसम्बन्धः किम्भूतेन बुद्धिस्थितेन अन्तर्जल्पात्मकेन प्रतीयते निश्चीयते, तेन कारणेन, अथवा तेन बुद्धिस्थितेन वाक्यान्तरेण अनागमिकत्वेपि न खल्वमुच्चारितं वाक्यमागम इत्यतोऽनागमिकत्वेपि यत्तद्वाक्यं प्रतीयते यदिति बुद्धिस्थं तदिति उत्तरेण सम्बन्धः रात्रिभोजनप्रतिपादनाय तस्मात्तोऽवसीयते इति ॥

प्रमाणं तस्य वक्तव्यं प्रत्यक्षादिषु यद्भवेत् । न त्वनुच्चारिते वाक्ये प्रत्यक्षं व्यपदिश्यते ॥३५२॥

प्रमाणं साधकं तस्य बुद्धिस्थवाक्यस्य वक्तव्यमभिधातव्यं प्रत्यक्षादिषु मध्ये यद्भवेत् यत्किमपि सम्भवतीति न पुनरनुच्चारिते वाक्ये बुद्धिस्थ एवेति प्रत्यक्षं तद्ग्राहकं व्यपदिश्यतेऽभ्युपेयत इति ॥



**नानुमानं न हीदं हि दृष्टं तेन सह क्वचित् । यदि त्वनुपलब्धेपि सम्बन्धे लिङ्गतेष्यते ॥३५३॥**

नानुमानं तस्य ग्राहकं न हीति यस्मादिदं बुद्धिस्थं वाक्यं दृष्टं तेन लिङ्गतयेष्टेन सह क्वचिद् दृष्टान्तधर्मिणि यदि वाऽनुपलब्धेपि साधनस्य सम्बन्धे लिङ्गतेष्यते हेतुतेष्यते ॥

**तदुच्चारणमात्रेण सर्ववाक्यगतिर्भवेत् । सम्बन्धरहितत्वेन नान्यतस्तद्विशिष्यते ॥ ३५४ ॥**

तस्यादिवाक्यस्य उच्चारणमेव तन्मात्रं तेन सर्वेषां वाक्यानां गतिः परिच्छेदः प्रतीतिर्भवेद् जायेत यस्मात्सम्बन्धरहितत्वेन हेतुना नान्यतोऽपरस्माद्वाक्यान्तरात्तद्विशिष्यते तद्रात्रिभोजनवाक्यं न विशिष्यते न विशेषयितुं शक्यते, यदुत रात्रिभोजनवाक्यं दिवा न भुङ्क्त इति प्रख्यापयति नान्यद्वाक्यान्तरमिति नहीयं राज्ञामाज्ञेति येनैवं स्यादिति ॥

**गवयोपमिताया गोस्तज्ज्ञानग्रहशक्तता । उपमाबलसम्भूतसामर्थ्येन प्रतीयते ॥ ३५५ ॥**

गवयेनाटव्यपशुना या उपमिता गौस्तस्यास्तज्ज्ञानग्रहणे शक्तता तेन ज्ञानेन ग्रहः परिच्छेदः तत्र शक्तस्य भावः तज्ज्ञानग्रहशक्तता गौस्तज्ज्ञानविषयभावे समर्था एतदुपमानबलेन सम्भूतं जातम्, तच्च तत्सामर्थ्यं च तेन प्रतीयते निश्चीयते एतदुक्तं भवति गवयदर्शनादुपमिताया गोरुपमानविषयभावे सामर्थ्यमस्ति अन्यथा तत्रोपमानमेव न प्रवर्त्तेतेति ॥

**अभिधा नान्यथा सिद्ध्येदिति वाचकशक्तता । अर्थापत्त्यैव गम्येत तदनन्यगतेः पुनः ॥३५६॥**

अभिधा अभिधानं नान्यथा परेण प्रमाणेन न सिद्ध्येदिति कृत्वा वाचकस्य शक्तता सामर्थ्यम्, अन्यथा साध्यार्थं नाभिदध्यादर्थापत्त्या पञ्चमप्रमाणेनैव गम्येत परिच्छिद्येत, न अन्यः अनन्यस्तस्मादनन्यस्तदनन्यस्ततो मतेः परिच्छेदात्पुनरिति ॥

अर्थापत्त्यन्तरेणैव शब्दनित्यत्वनिश्चयः । अनित्यो हि न सङ्केतव्यवहारानुवृत्तिमान् ॥३५७॥

शब्दस्य नित्यत्वे निश्चयः सोऽप्यर्थापत्त्यन्तरेणैव एका ह्यर्थापत्तिः शब्दस्य वाच्यवाचकतासाधिका इयं पुनस्तदन्तरं तेन शब्दनित्यत्वनिश्चयः यस्मादनित्यः शब्दो न, सङ्केतश्च व्यवहारश्च ततस्तत्रानुवृत्तिमान् ॥

प्रमाणाभावनिर्णीतचैत्राभावविशेषितात् । गेहाच्चैत्रबहिर्भावसिद्धिर्यात्विह वर्णिता ॥ ३५८ ॥

प्रमाणश्चासौ अभावश्च प्रमाणाभावः तेन निर्णीतो निश्चितः स चासौ चैत्राभावश्च तेन विशेषिताद्गेहाच्चैत्रस्य बहिर्भावोऽन्यत्र सत्ता तस्य सिद्धिर्यातु पुनरिह वर्णिताभिहितेति ॥

तामभावोत्थितामन्यामर्थापत्तिमुदाहरेत् । पक्षधर्माद्यनङ्गत्वात् भिन्नैषाप्यनुमानतः ॥ ३५९ ॥

तामनन्तरोदितां गेहाभावे चैत्रस्य बहिर्भावसाधिकां अभावोत्थितामभावप्रमाणसम्पाद्यां अन्यां पूर्वापेक्षया अर्थापत्तिमुदाहरेत् कथयेदिति । पक्षधर्माद्यनङ्गत्वात् भिन्नैषाप्यनुमानतः । पक्षधर्मोऽन्वयो व्यतिरेकोऽनुमानकारणमिह तु पक्षधर्मः साध्यधर्मिणि साधनस्योपसंहारः आदिशब्दादन्वयव्यतिरेकपरिग्रहः एते अनङ्गमकारणं यस्यां सा तथा तद्भावस्तत्त्वं तस्माद्भिन्नैषापि अभावबलसम्भूतापि अनुमानतोऽनुमानादिति ॥

बहिर्देशविशिष्टेऽर्थे देशे वा तद्विशेषिते । प्रमेये यो गृहाभावः पक्षधर्मस्त्वसौ कथम् ॥ ३६० ॥

बहिर्देशेन विशिष्टे विशेषित इति अर्थे चैत्रादिके देशे वा तद्विशेषिते चैत्रविशेषिते प्रमेये प्रमाणविषये प्रमाणग्राह्ये यो गृहाभावः चैत्रस्येति गम्यते स पक्षधर्मः साध्यधर्मिणि साधनमसौ गेहाभावः न कथञ्चिदित्यर्थः ॥

जीवतश्च गृहाभावः पक्षधर्मोऽत्र कल्प्यते । तत्संवित्तिर्बहिर्भावं न चाबुद्ध्वोपजायते ॥ ३६१ ॥

जीवतो जीवनधर्मविशेषितात् गृहे अभावो गृहाभावः स पक्षधर्मोऽत्र यदि कल्प्यते स पक्षधर्मः बहिर्भावं बहिः सत्तां न चाबुद्ध्वा तस्य पक्षधर्मस्य संवित्तिः सा नोपजायते नो भवतीति ॥

गेहाभावस्तु यः शुद्धो विद्यमानत्ववर्जितः । स मृतेष्वपि दृष्टत्वाद्बहिर्वृत्तेर्न साधकः ॥ ३६२ ॥

यदि पुनर्निर्विशेषणो गेहाभावः पक्षधर्म उच्यते तदा विद्यमानत्वविशेषणवर्जितो गेहाभावः स मृतेष्वपि दृष्टत्वादुपलब्धत्वात् बहिर्वृत्तेर्न साधकः ॥ अत्र सूरिराह ।

अदृष्टं कल्पयेदन्यं दृष्टो वा यदि वा श्रुतः । तस्य तेनाभिसम्बन्धो मानतो निश्चितः क्वचित् ॥ ३६३ ॥

अदृष्टमर्थं दाहशक्तिलक्षणमन्यं वा वह्न्यादेः कल्पयेद्व्यवस्थापयेत् दृष्टो वा प्रत्यक्षादिना श्रुतो वा परोपदेशात् यः स्वयं प्रतीतः सन्नदृष्टं कल्पयेत् शक्तिलक्षणमर्थं तस्यार्थस्य दृष्टश्रुतस्य तेनादृष्टेनाभिसम्बन्धोऽविनाभावो निश्चितो मानतः प्रमाणात् क्वचित् कुत्रचित् धर्मिणि ॥ ततः किमित्याह ।

अनुमानेऽवतारोऽस्याः अन्यथा न प्रमाणता । अन्यथा ह्यविशेषेण गमयेदखिलं न किम् ॥ ३६४ ॥

यदि कश्चित्प्रमाणेनाविनाभावो दाहादेर्निश्चितः शक्त्या सह तदा पक्षधर्मान्वयसद्भावादनुमानेऽवतारोऽन्तर्भावोऽस्या-
अर्थापत्तेः न पृथक् प्रमाणान्तरम्, अथ न निश्चितः तदा अन्यथा अन्येन प्रकारेण न प्रमाणता अर्थापत्तेरिति भावः ॥
अथाविनाभावं विनापि प्रामाण्यमिष्यते तथाप्यविशेषेण सर्वं सर्वस्य गमकमासज्येत न खल्वसम्बद्धोऽसम्बद्धं गमयतीत्य-
भ्युपगमे दाहः शक्तिं गमयेत्, नापरोऽपरमिति न खलु राज्ञामाज्ञेयमिति ॥

**किञ्चापरं पितॄणां वा शक्तेर्वा श्राद्धकर्मणि। पिण्डः कस्योपकाराय पितॄणां हि न युज्यते॥३६५**

अपरमप्यत्राभिधीयते पितॄणां वा श्राद्धकर्मणि पिण्डः उपतिष्ठति किं वा शक्तेः कस्योपकाराय सोऽभिवाञ्छितः ।
पितॄणां हि न युज्यते हि स्फुटं पितॄणां न सङ्गच्छते तत उपकारो न घटत इति ॥ किमित्याह ।

**शक्त्या पुत्रो यतो जातस्तस्या एवोपतिष्ठतु। अन्यथाऽतिप्रसङ्गोऽपि तत्सम्बन्धान्न सङ्गतम्॥३६६**

शक्त्यातिरिक्तया यतः पुत्रो जातो न शक्तात् तस्या एव पिण्डः समुपतिष्ठतु अन्यथा यदि पितॄणामुपतिष्ठतीत्युपग-
म्यते, तदातिप्रसङ्गोतिव्याप्तिर्यद्यकृतोऽप्युपतिष्ठत्यविशेषेण सर्वस्याप्युपतिष्ठतु अपिशब्दादकृताभ्यागमः कृतप्रणाशश्च, तत्स-
म्बन्धात्तेन शक्तेन शक्तसम्बन्धाददोषोऽयमिति शेषस्तन्न सङ्गतं तदेतन्न युक्तियुक्तम् । यतः कोयं सम्बन्धः ॥

**तादात्म्यं न च भेदेन कार्यता न सहोद्भवात्। द्रव्ययोरिव संयोगः समवायो नानवस्थितेः॥३६७**

तथाहि योऽयं सम्बन्धो भवताऽभिधीयते न तावत्तादात्म्यं भेदेन हेतुना अन्यथा शक्त एव शक्तिः स च प्रत्यक्षेण
गृहीतः किं तत्र प्रमाणान्तरेण गृहीतग्राहितयाऽप्रामाण्यापत्तेः, अतो न तादात्म्यम् । नापि कार्यता हेतुफलभावः सहोद्भवात्,
न खलु सहोत्पन्नयोः सव्येतरगोविषाणयोरिव हेतुफलभावो युक्तः, अन्यथा कथमुक्तम्, "तस्मात्माकार्यनिष्पत्तेर्व्यापारो यस्य

दृश्यते । तदेव कारणं तस्य न तानन्तर्यमात्रकम् ॥" न च पश्चात्सक उत्पन्नो निराधारायाः शक्तेरभावात्, अथ शक्तिः पश्चादुत्पन्ना किं शक्तादुत्पन्ना उतान्यतः, न शक्ताच्छक्तिं विना शक्तस्यैवाभावादन्यथातिप्रसङ्गाच्च चान्यतः शक्तेन सह सम्बन्धाभावस्य तादवस्थ्यात्, नापि संयोगः द्रव्ययोरेव स इति वचनान्नापि शक्तेर्द्रव्यता शक्तेर्गुणत्वादन्यथा शक्त एव सा, नापि समवायः तत्रानवस्थामाप्तेरेतच्च शतशश्चर्चितमत्रैवेति न पुनरुच्यते ॥

अभेदे शक्तिमानेव प्रत्यक्षेण स निश्चितः। भेदाभेदेपि ते दोषा न चास्मास्वपि तत्समम्॥३६८

अथ मतं न शक्तेर्भिन्नः शक्तिमानिष्यते येनानन्तरदोषावकाशः किं त्वभिन्नस्तत्रोच्यते अभेदेऽभ्युपगम्यमाने शक्तिमानेव न काचिदपरा शक्तिः स च शक्तः प्रत्यक्षेणैव निश्चितः न हि वह्निरप्रत्यक्षस्तत्प्रतीतावुपायान्तराभावात्। वह्निदर्शने च तद्व्यतिरिक्ता शक्तिरप्यध्यक्षसिद्धैव किं तत्र प्रमाणान्तरेण गृहीतग्राहितयाऽप्रामाण्यात्, अथ भेदश्चाभेदश्चाभ्युपगम्यते तत्रापि त एव दोषा उभयपक्षभाविनः । न चास्मास्वपि तत्सममिति न च नैव अस्मासु विषये तदुभयदोषापत्तिलक्षणं दूषणं समं यूयं हि उभयदोषापादनं कुरुतास्मान् प्रति तद्भवतामतिप्रतीतमित्यापाद्यते । वयं तु पक्षद्वयोपनिपाते पक्षद्वयभाविदोषाभावं ब्रूमो गुडनागरसद्भाव इव कफपित्ताभाववदिति ॥ किञ्च ।

पिण्डदानक्रिया यस्मादनिष्टा जैनवादिनाम्। शक्तेः पिण्डे कथं तृप्तिं लभन्ते पितरस्तव॥३६९॥

मृतस्य पिण्डदानं श्राद्धादिषु तन्निमित्ता क्रिया पिण्डदानक्रिया यस्मात् येन कारणेन अनिष्टा असम्मता जिनो देवता येषां ते जैनास्ते च ते वादिनश्च तेषां तत्रायं समतापादनेन यो दत्तो दोषः सोऽस्माकमिति, शक्तेः पिण्डे कथं केन विधिना तृप्तिं लभन्ते प्राप्नुवन्ति पितरः मृताः पित्रादयः तव भवतः॥ तथाच किं जातमित्याह ।

**यवैर्व्रीहितिलैर्माषैरद्भिर्मूलफलेन वा । दत्तेन मासं तृप्यन्ते पितरो विधिवन्नृणाम् ॥ ३७० ॥**

श्राद्धकाले पितॄनुद्दिश्य यवैः प्रसिद्धधान्यविशेषैः व्रीहिभिः षष्ठिकादिभिः तिलैः प्रतीतैरेव माषैः कुल्माषैः अद्भिः पानीयैः मूलेन सूरणादिना फलेन कुष्माण्डादिना दत्तेन सता पात्रेभ्यः मासमेकं त्रिंशदिनानि तृप्यन्ते पितरः पूर्वोक्ता विधिवद्दत्तेन नृणां पुरुषाणाम् ॥

**इत्यादि गदितं यस्मादानर्थक्यं प्रपद्यते । प्रत्यक्षाधिगते शक्ते कार्थापत्तिरिहापरा ॥ ३७१ ॥**

इत्येवमादिशब्दात् द्वौ मासौ मत्स्यमांसेनेत्यादिपरिग्रहः गदितं प्रतिपादितं पितृकर्मादिषु यस्मादानर्थक्यं प्रपद्यते शक्ताविष्यमाणायां पितृकर्मादि यस्मादानर्थक्यं प्रपद्यते प्रतिपद्यते तस्माच्छक्तिर्नाभ्युपेया इति शेषः । तथाच किमित्याह । प्रत्यक्षाधिगते प्रत्यक्षेणोपलब्धे शक्ते शक्तिमति का अर्थापत्तिः केयमपरा प्रमाणान्तरभूता न काचिदपीति ॥ श्रोत्रादिशक्तिपक्षे चेत्यादावाह ।

**सत्यं श्रोत्रादयो नाक्षाः शब्दज्ञानं न सर्वदा । निमित्तान्तरसापेक्षा कार्यात्तेषामतो गतिः ॥३७२**

सत्यमेतद्यदुत श्रोत्रादयो न प्रत्यक्षा नाध्यक्षगम्या इन्द्रियविशेषाः इतरेतराश्रयदोषापत्तेः तेषां प्रत्यक्षेण साधने किन्तु शब्दे ज्ञानं शब्दग्राहि शब्दग्राहकमुपलक्षणत्वाद्रूपादिज्ञानपरिग्रहः न सर्वदा जायत इति उपलक्षणं चैतत्तेन सर्वत्र न सर्वाकारं ततो नियतकालादिनिमित्तान्तरसापेक्षं गम्यते तेनाधिगतिनिमित्तमिन्द्रियं नाम किञ्चिदस्ति आलम्बननिमित्तं तु शब्दादिकमप्यस्तीति सहकारिनिमित्तं तु आलोकादीनि श्रोत्रे तु स्पष्टतादीति ततो ज्ञानलक्षणकार्यात्तेषामिन्द्रियाणां गतिः परिच्छेदः । न खल्वस्ति श्रोत्रमिति प्रतिज्ञा किन्तु सनिमित्तकमिदं ज्ञानं कादाचित्कत्वात्ततो नोक्तदोषोऽस्तीति ॥

गन्तुः शक्तिर्न काप्यन्या पुरस्तादुपपादितम् । नानुमापूर्विका तस्मादर्थापत्तिरिहोचिता ॥३७३

गन्तुरादित्यादेः गन्त्रीशक्तिर्न कापि न काचिदन्या ततो भिन्ना अस्तीति शेषः पुरस्तात्पूर्वं श्रोत्रवादानन्तरमेव चेति उपपादितं साधितं नानुमापूर्विका तस्माद्यत एवं तस्मान्नानुमापूर्विका काचिदर्थापत्तिरिह प्रमाणान्तरभूतेति इह प्रमाणविचारे युक्तिसङ्गतेति ॥ शब्दपूर्वां प्रत्याह ।

पीनत्वं भोजने दृष्टं तदभावे न जातुचित् । दिवाभोजनवैकल्ये पीनोयं रात्रिभुक्तिमान्॥ ३७४

पीनत्वं बलिष्ठत्वं भोजने आहारे सति दृष्टमुपलब्धं तदभावे तस्य भोजनस्याभावे न दृष्टं तदभावे न जातुचित् कचिदित्यर्थः दृष्टमित्येतेन सम्बन्धः दिवाभोजनवैकल्ये अभावे पीनोयं अयमिति अग्रगो व्यवस्थितः पुरुषः रात्रिभुक्तिमान् दिवाभोजनवैकल्ये पीनोयं यतः । अत्र प्रयोगः अयमग्रे स्थितः पुरुषः रात्रिभुक्तिमान् दिवाभोजनवैकल्ये पीनत्वात्, न चायमनैकान्तिको हेतुः यतो भोजने सति पीनत्वं दृष्टं यथोभयप्रसिद्धस्य देवदत्तादेस्तदभावे च न दृष्टं यथा ज्वरादिरोगिणः अन्यत्रापि चान्वयव्यतिरेकनिबन्धन एवाविनाभावनिश्चयः स चेहाप्यस्त्येव अतोऽनुमानमेव कार्यहेतुसमुत्थमेतदिति, न काचिदर्थापत्तिरिति ॥ किञ्च ।

दिवा न भुङ्क्ते इत्यत्र रागिणो वचनं प्रमा । केनेष्टा भवता हन्त वेदे तद्वन्न किं मतम् ॥३७५ ॥

दिवायं न भुङ्क्ते यः प्रतिपादयति स वीतरागः सरागो वा न वीतरागो भवता तस्यानिष्टेरन्यथा तद्वद्न्योस्तु तत्प्रतिक्षेपो न सुव्रतामूचकः । अथावीतरागः सः हन्त भद्र व्यवहितसम्बन्धः रागिणो वचनं प्रमा प्रमाणं केन कारणेन इष्टाभ्युपगतेति । अन्यथा वेदेपि भवता प्रमाणतयाभ्युपेतेपि किमपौरुषेयकल्पनया भोजनाप्राप्त प्रतिपादकपुरुषवचनवत किं

मतो केन हेतुना नाभ्युपेत इति ।

**उपमायाः प्रमाणत्वे त्वर्थापत्तेर्निवारिते । तत्पूर्विके कथं स्यातामर्थापत्ती ततो ननु ॥ ३७६ ॥**

उपमाया अत्रैवानन्तरवादे तथा अर्थापत्तेरत्रैव प्रस्तुतवादे प्रमाणत्वे प्रमाणान्तरत्वे निवारिते निषिद्धे, तत्पूर्विके उपमानपूर्विका अर्थापत्तिपूर्विका सा च सा च ते कथं केन प्रकारेण स्यातां भवेतामर्थापत्ती द्वे अपि न कथञ्चिदित्यर्थः न-नुरिति युक्त्यन्तरसूचकः ॥ तदेवाह ।

**प्रत्यक्षादिधियां ग्राह्ये भावे तद्ग्रहशक्तिता ।संख्यातिरेकिणी तस्याः षट्प्रकारा मुधोदिता ३७७**

प्रत्यक्षानुमानोपमानार्थापत्त्यभावाख्यप्रमाणग्राह्ये भावे पदार्थे तद्ग्रहशक्तिता तस्य प्रमात्मकस्य ग्रहो ग्राह्यता तत्र शक्तिभावः सा संख्यातिरेकिणी तस्या अर्थापत्तेः प्रत्यक्षादिनिबन्धनायाः प्रकारान्तरेणाभिधानात् इयं तु प्रकारान्तररूपेति । तथाच षड्धा मुधा निर्निबन्धनोदिताभिहितेति ॥

**शब्दादर्थप्रतीतौ च काऽपरा शक्तिरिष्यते । अभावोपि प्रमा नेति तत्पूर्वापि ततो न सा ॥३७८॥**

शब्दादर्थप्रतीतौ इति शब्दादर्थप्रतिपत्त्यन्यथानुपपत्त्या शब्दस्य वाचि का शक्तिरस्तीति यदुक्तं तत्रेदमुच्यते शब्दा-द्वचनादर्थस्य वस्तुनः प्रतीतौ परिज्ञाने पुनः काऽपरान्या तत्र शक्तिरिष्यते किंवा तया प्रयोजनमिति शब्दादेव तदर्थसिद्धेः । अभावोपि अभावाख्यमपि प्रमा प्रमाणं नेति नञ् प्रतिषेध इति उपप्रदर्शने उपपत्त्यन्तरस्य अनन्तरमेव तस्य निषेत्स्य-मानत्वात् तत्पूर्वापि अभावप्रमाणपूर्वापि ततः कारणात्र साऽर्थापत्तिरिति ॥ किञ्च ।

**गेहे चापश्यतश्चैत्रं प्रमाणं तस्य जीवने । नैव चार्वाग्दृशः किञ्चिद्बहिर्भावस्ततः कथम् ॥३७९**

गेहे वेश्मनि अपश्यतः सतः चैत्रं पुरुषविशेषं प्रमाणं प्रत्यक्षादि तस्य चैत्रस्य जीवने आयुष्मत्त्वे प्रमाणने नैव प्र विद्यत एव अर्वाग्दृशः असर्वविदः किं न किञ्चिदित्यर्थः बहिर्भावो गेहाद्बहिरस्तीति कथं सिद्धमिति भावः ॥ अथ जीवत इति विशेषणं क्रियते तत्राह ।

**गेहाभावोऽविनाभूतो जीवतोऽन्यत्र संस्थितेः । अनुमानादिदं सिद्धं कार्थापत्तिरिहापरा ॥३८०**

गेहाभावो गृहाविद्यमानता अविनाभूतो विना न भवनमस्येति अविनाभूत उच्यते कस्येत्याह । जीवतश्चैत्रस्यान्यत्र संस्थितेः गेहाद्बहिरवस्थानस्य अनुमानादिदं गेहादर्शनाद्बहिश्चैत्र इति सिद्धमेतत्कार्थापत्तिरिह बहिरवस्थाने अपरा अनुमानादिति गृहीतग्राहितयाऽप्रमाणतापत्तेरिति ॥ अभावप्रमाणमाह ।

**प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते । साऽऽत्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि ॥३८१**

सा अनुत्पत्तिरात्मनो जीवस्य अपरिणामो वा वस्तुग्रहणरूपतया जीवस्य परिणतिस्तत्रानुपयोगादिना ज्ञानावभासितया अप्रतीतिः, अनेन प्रसज्यप्रतिषेधमाह । विज्ञानं वान्यवस्तुनि प्रत्यक्षादेरनुत्पत्तिः शुद्धभूतलविज्ञानमेव घटं प्रति प्रत्यक्षादेरनुत्पत्तिः सा वा अभावाख्यं प्रमाणमिति ॥ विषयमाह ।

**प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते । वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ ३८२ ॥**

यत्र सदुपलम्भकप्रमाणपञ्चकं वस्तुरूपे स्वभावे न जायते नोत्पद्यते तत्र वस्तुरूपे अभावाख्यस्य प्रमाणतेति ॥

प्रमाभावाच्च वस्तूनामभावः सम्प्रतीयते । चतुर्द्धा च विभक्तोऽसौ प्रागभावादिभेदतः ॥३८३॥

तद्ग्राहकप्रमाणाभावात् वस्तूनां भावानामभावः सत्ताविरहः सम्प्रतीयते ज्ञायते प्रमाणाधीनत्वाद्वस्तुसत्तायाः तदभावे तदभावो न्यायप्राप्त एव चतुर्द्धा चतुर्भेदः पुनरसावभावो विभिन्नः प्रागभावादिभेदतः प्रागभावः प्रध्वंसाभावः अन्योन्याभावोऽत्यन्ताभाव इति ।

न च स्याद्व्यवहारोऽयं कारणादिविभेदतः । प्रागभावादिभेदेन नाभावो भिद्यते यदि ॥३८४॥

न च नैव स्यात् भवेत् व्यवहारोयमुपलभ्यमानः कारणादिविभेदतः एतत्कारणमेतच्चास्य कार्यमिति एवम्विधः प्रागभावादिभेदेन पूर्वोक्तरूपेण नाभावो भिद्यते यदि यद्यभावो न प्रागभावादिरूपेण भिद्यते ततोऽयं व्यवहारः कारणादिरूपो न स्यादिति ॥

क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते। नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम् ॥३८५

क्षीरे पयसि दध्यादिशब्दात्तक्रनवनीतादिग्रहः यन्नास्ति यदित्युपदर्शने प्रक्रमाद्धि शब्दा भिद्यन्ते नास्ति न विद्यते प्राक् पूर्वमभावः प्रागभावः स ईदृश उच्यते तज्ज्ञैः । नास्तिता पयसो दध्नि, नास्तिता क्रियापत्तिप्रतिरूपकमव्ययं तस्माद्भावप्रत्ययः पयसो दुग्धस्य दध्नि प्रध्वंसाभावः प्रध्वंसेनाभावः पूर्वस्य सतोऽभावः तस्य लक्षणं उपलम्भनमिति ।

गवि योऽश्वाद्यभावश्च सोऽन्योन्याभाव उच्यते। शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ३८६

गवि बलीवर्दे योऽयमश्वादीनामभावः सोऽन्योन्याभावः अन्यो परो गोरश्वस्तस्यान्यस्याभावादेर्गवि अभावस्तादा-

त्म्यनिषेधो यः सोऽयमुच्यते इति सम्बन्धः शशशृङ्गादिरूपेण स तादृशोऽत्यन्ताभावः अत्यन्तं सर्वथा निःसत्ताकतया अ-भावः सोऽयमिति



**न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता। कार्यादीनामभावः को योऽभावः कारणादितः ३८७**

न च नैव अवस्तुनः एते प्रागभावादयो भेदाः स्युर्भवेयुः तेन कारणेनास्याभावस्य वस्तुता वस्तुभाव इति कार्या-दीनामादिशब्दात्कारणादिपरिग्रहः । अभावो भावविरहः को योऽभावः कारणादितः नपुंसकनिर्देशादित्थमुक्तं तेन कार-णादेरिति ज्ञेयम् ।

**यद्वानुवृत्तव्यावृत्तबुद्धिग्राह्यो यतस्त्वयम्। तस्माद्गवादिवद्वस्तु प्रमेयत्वाच्च गम्यताम् ॥३८८॥**

अनुवृत्ता अभावोऽभाव इति व्यावृत्ता प्रागभावः प्रध्वंसाभाव इत्यादिना रूपेण अनुवृत्ता चासौ व्यावृत्ता च सा चासौ बुद्धिश्चतस्या ग्राह्यो यस्मात्तस्माद्गवादिवद्वस्तु आदिशब्दादश्वादिपरिग्रहः । वस्तुभाव इह वस्तुत्वं साध्यं गवादयो दृष्टान्तः अनुवृत्तादिबुद्धिग्राह्यत्वादिति हेतुस्तथा प्रमेयत्वादित्यपरो हेतुरिति ॥ एवं द्विजातिनोक्ते सूरिराह ।

**उच्यते पर्युदासोऽयं प्रसज्यो वा मतस्तव। स्वापमूर्च्छाद्यवस्थासु नार्थाभावोऽस्ति नान्तिमः ३८९**

उच्यतेऽत्र समाधिः किं पर्युदासोऽयमभावः प्रसज्यो वा मतोऽभीष्टस्तव हे वादिन् स्वापः स्वपनं निद्रासद्भाव इत्यर्थः मूर्च्छा विह्वलता पित्ताद्युपद्रवात् आदिशब्दात्सन्निपातादिग्रहः त एव स्वापादयोऽवस्थापर्यायास्तासु अनुपलम्भेपि प्रत्यक्षादि-प्रमाणाभावेपि नार्थाभावोस्ति अर्थे सत्यप्यदर्शनादिति, नान्तिमः पक्ष इति शेषः प्रसज्यप्रतिषेधो नेति ॥ अथान्यपक्षः तत्राह।

**पिशाचादेरभावोपि भूतलज्ञानवेदने । अथैकज्ञानसंसर्गि वस्तुज्ञानं तदिष्यते ॥ ३९० ॥**

पिशाचो देवयोनिः स किलादृश्यः आदिशब्दाद्देशकालाद्यभावविप्रकृष्टग्रहः तस्याप्यभावोऽस्तु अपिर्व्यवहितसम्बन्धः

पिशाचो देवयोनिः स किलादृश्यः आदिशब्दाद्देशकालाद्यभावविप्रकृष्टग्रहः तस्याप्यभावोऽस्तु अपिर्व्यवहितसम्बन्धः स च दर्शितः भूतले ज्ञानं तस्य वेदने निश्चये अनेन पर्युदासविधिर्दर्शितः अथ एकज्ञानसंसर्गि वस्तुज्ञानं तदिष्यते, एक-स्मिन् ज्ञाने संसर्गो घटभूतलयोरिव प्रतिभासनं स विद्यते यत्र तदेकज्ञानसंसर्गि तत्र ज्ञानं तत्पर्युदासाश्रयेण अभावाख्यं प्रमाणं न सामान्येन प्रमाणमिष्यते ॥ अत्राह ।

**एकस्य कस्य संवित्तावित्यादि गदितं कथम् । ज्ञानं न वा प्रमाभावो मानमेतत्कथं मतम् ॥ ३९१ ॥**

यदुक्तं बौद्धं प्रति भवता एकज्ञानसंसर्गि वस्त्वन्तरोपलम्भात्मकमनुपलम्भमिच्छता, तद्यथा एकस्य पदार्थस्य कस्य गदितं क-कोऽसौ पदार्थ इति, संवित्तावित्यादिशब्दादद्चन्द्रं गम्यते नभः । सर्वशब्दविवेकश्च कश्चिन्निश्चीयते कथमिति पृच्छ्यते, गदितं कथं केन प्रकारेण तदुपपन्नं भवति भवतोपि तस्य दोषस्य तुल्यत्वात् भवतापि तत्र किञ्चित्परिहारमभिधानीयमिति अन्यथा स पक्षो नाभ्युपेय इति, किञ्च सात्मनोऽपरिणामो वेति पक्षे प्रमाभावो ज्ञानं न भवति तत्कथं प्रमाणं अन्यथा तत्रापूर्वार्थ-विज्ञानमिति ज्ञानग्रहणमनुपपन्नमेव स्यादिति ॥ ज्ञानं वेति वा शब्देन पर्युदासाश्रयेण ज्ञानं यदीष्यते तदा प्रमाणमप्रमाणं वा, यदि प्रमाणं तत्राह ।

**प्रमाभावोऽथ विज्ञानं प्रत्यक्षं हन्त तत्तथा । तेनैव वस्तु तद्ग्राह्यं प्रमेयाभावरूपकम् ॥ ३९२ ॥**

अथ मतं प्रमाणाभावो विज्ञानं पर्युदासवृत्त्या प्रत्यक्षं हन्त तत्तथा प्रत्यक्षमेव तत्तथा सति बौद्धैरतोऽनुमानेऽन्तर्भावो वर्णितः स च भवता दूषितो नाप्यागमेस्यावतारो वेदे तस्यापाठादिति उपमादीनां च अत्रैव निषेधादिति तेनैव वस्तु तद्ग्रा-

क्षं तेनैव कारणेन तस्याभावस्य प्राक्प्रं वस्तुवर्णितं भवता किम्भूतं प्रमेयाभावरूपकं प्रमेयाभावोपि पर्युदासवृत्त्या किन्तु वस्त्वन्तरे दृष्टे न खलु वस्त्वन्तराभावो भवति अतिप्रसङ्गादेकज्ञानसंसर्गि वस्त्वन्तरोपलम्भस्तु तव न सम्मतः अतः सर्वत्र विधिरेव न प्रतिषेध इति प्राप्तमिति ।

**एकवस्तुविनाशे हि सर्वस्यान्यस्य सम्भवः। किं नानुषज्यतेऽन्योन्याभावे हन्त समाश्रिते॥३९३**

एकस्य कस्यचिद्वस्तुनो नाशे स्वतोन्यतो वा हि यस्मात्सर्वस्याप्यन्यस्य तदभावरूपस्य सम्भव उत्पादः किं केन कारणेन नानुषज्यते न प्रसज्यते अपि तु प्रसज्यत एवान्योन्याभावे समाश्रिते इदमुक्तं भवति यदि घटः पटादेरशेषस्याप्यभावः अन्योन्यस्याभावे इत्येवं समाश्रिते तत एकस्य कस्याप्यभावे तेषां स अभावरूप आसीत्तथाचाभावस्याभावे भाव एव भावाभावयोरन्योन्यपरिहारस्थितिलक्षणत्वादेकाभावेऽपरस्य भाव एवेति ।

**शिरसोऽवयवा भिन्ना वृद्धिकाठिन्यवर्जिताः। अन्योन्याभाव एवायं किं मुधा भेदकल्पना ॥३९४**

शिरसः सम्बन्धिनो अवयवाः किम्भूताश्च वृद्धिश्च उपरिसर्पणं काठिन्यं च शृङ्गरूपतया ताभ्यां वर्जिताः । शशशृङ्गादिरूपेण अन्योन्याभाव एवायं किं मुधा भेदकल्पना अन्योन्याभाव एवान्तर्भावात्किं केन कारणेन मुधा निःफलायासमात्रफला भेदेन कल्पना भेदकल्पना सा किमिति ॥ समाप्तोऽभावप्रमाणविचारस्तत्समाप्तौ समाप्तः परिणामविचारः ॥ साम्प्रतं स्वदर्शनाभिप्रायेण प्रमाणनयकुनयान् विषयादिविभागतो दर्शयितुमाह ।

**प्रमाणविषयो वस्तु पर्यायो नयगोचरः । कुनयोऽविषयो ज्ञेयः पर्यायो न ह्यगोचरः ॥३९५॥**

प्रमाणं सम्यग्ज्ञानं तस्य विषयो गोचरो वस्त्वनेकात्मको भावः न तु सम्यग्ज्ञानमयथावस्थितं वस्तु प्रतिपद्यते स-

म्यग्ज्ञानताहानेरितरथा नामभात्रकरणमवशिष्यते, न चैकस्वभावं वस्तु एकान्तपक्षस्य प्रागेव निषिद्धत्वाद्यदि हि सर्वव्या-
वृत्तस्वभावा भावाः तदा अनुगतप्रत्ययाभावान्नानुमानोपमानादिसम्भवः। नापि शाब्दो व्यवहारः प्रवर्त्तेत सङ्केतकालव्यव-
हारकालानुवृत्तेर्व्यक्तेरिति प्रतिपादितम्। न चापोहाश्रयो व्यवहारो जात्याश्रितो वा भविष्यतीति वाच्यम्, तयोस्तत्रैव निषि-
द्धत्वादतः प्रमाणविषयो वस्तु पर्यायो वस्त्वंश इति यावन्नयो वक्ष्यमाणस्तस्य गोचरो विषयः। तथाद्यशुद्धनैगमो महासा-
मान्यावलम्बनो द्वितीयस्तु तद्भेदः व्यक्तेरवस्थां प्रतिपद्यते न खलु व्यक्तिमात्रादर्थक्रिया किन्तु तस्या अवस्थाविशेषात्,
नहि वाहदोहादौ बालावस्था प्रवर्त्तते न च सा व्यक्तिर्न भवति तस्मादवस्थाविशेष एवार्थक्रियाक्षम इति। संग्रहस्तु मन्यते
न सत्तामात्रादर्थसिद्धिर्नाप्यवस्थाया अनन्वयादवस्थायाः, सत्तायास्तु सर्वगतत्वेन प्रवृत्तिनिवृत्तिविषयत्वासम्भवात् तस्मा-
द्विशेषसामान्यमेवार्थक्रियासमर्थम्, नहि निराश्रया जातिस्तस्माद्गोत्वादिसामान्यग्राहकः संग्रहः। व्यवहारस्तु व्यक्तिं प्रतिपद्यते
तस्या एवार्थक्रियाभाग्त्वेरिति, न खलु व्यक्तेरन्यथा काचिदवस्था न च ततोऽपरा जातिरुपलम्भगोचरो तस्माद्व्यक्तिरेवार्थक्रिया-
क्षमा तत्रैव वस्तुतेति। ऋजुसूत्रस्तु मन्यते न खलु व्यक्तिरपि वर्त्तमानकालातिरेकिणी, अतीतानागतावस्थयोरनुत्पन्नविनष्ट-
त्वेनासत्त्वात्। शब्दस्तु तदेव ऋजुसूत्रकल्पितं वस्तु लिङ्गभेदेन भिन्नं मन्यते। यदि हि वस्तुभेदकं लिङ्गं न भवति तदा लिङ्ग-
भेदकल्पना न युक्ता सर्वलिङ्गविषयं सर्वं वस्तु स्यात्तथाच न वस्तुप्रतिबद्धाः शब्दाः स्युस्तथाच न नियतः शाब्दो व्यवहारः
स्यादिति तस्माल्लिङ्गभेदेन वस्तु भिद्यत इति। समभिरूढस्तु पर्यायाः शब्दान्तराणि तद्भेदे वस्तु भिद्यते, अन्यथा न वस्तुप्रति-
बद्धाः शब्दाः स्युः। एवम्भूतस्तु, उभउम्भपूरणे, कौ उम्भकुम्भः पृथिव्यां स्थितः पूरितश्च कुम्भो नान्यदा, कुनयो नया-
दुत्तीर्णः नयो हि वस्तुमन्यमानः स्वांशं न ततो भिन्नं नापि स्वांशमेव, किन्तु धर्मान्तरप्रतिक्षेपाप्रतिक्षेपाभ्यां तत्र शाब्दो व्यवहार
इति यदाह, "अन्यानेकपविज्ञानतुल्यवृत्तिर्नयो मतः"। कुनयास्तु निराश्रयधर्ममात्रग्राहिणो निर्विषया न खलु पर्यायिनिर्गमेन

पर्यायोऽवस्थानमासादयति। कुनयानां चैतावता कुनयत्वं वस्त्वंशं निराधारं मन्यन्ते। यदाह, "चक्खिदियं न फासं पच्चक्खइ नेव तं वियाणाइ रूवम् ॥ एगगयच्चियचिन्ता नयावि सविसयत्थपडिबद्धा ॥ कुनयाणं पुण विसओ न कोइ परमत्थओ जओ तेओ। ससिदुगसमविसयं चिय गेह्णंति न वत्थुणो धम्ममिति ॥" साम्प्रतममीषां परस्परं साधनविधिमाह।

## विभिन्ननयसमारूढवादिनां हि परस्परम्। विरुद्धव्याप्तताहेतोरन्वयासिद्धिरेव च ॥ ३९६ ॥

विभिन्नाः पृथगवस्थास्ते च ते नयाश्च तेषु समारूढास्तेच ते वादिनश्च तेषां वादिनां परस्परमन्योन्यं नैगमवादिनं प्रति संग्रहवादी इतरो वा इतरं प्रति यं हेतुं प्रयुङ्क्ते तस्य हेतोर्विरुद्धव्याप्तता साध्यस्य यो विरुद्धस्तेन व्याप्तो हेतुस्तद्भावो व्याप्तता, तथाहि नैगमवादिनः सामान्यात्मकमेव वस्तु तस्यैव द्वितीयभेदस्य व्यत्ययवस्थारूपं वस्तु नेतरत्कथमसता हेतुर्व्याप्येत ततः परमतेन विरुद्धेन स्वाभिप्रायेण स्वमतांशेन व्याप्तस्य परं प्रति विरुद्धता, न च तदा तस्य व्याप्तिः साधनीयेति वाच्यं हेतोरन्वयासिद्धेर्योयं हेतुः परेणाभिधीयते तस्य हेतोरसता नैव धर्मेण व्याप्तिः सिद्धा तन्मतेन तस्य वस्तुनोऽसिद्धेरिति। तथाहि सता साध्यधर्मेण सतो हेतोरनुगमनमनुगमो व्याप्तिरिति स चेतराभिप्रायेण नास्ति तत्कथं तेन व्याप्तिः सिध्यति ॥ यदा तु एकनयसमारूढवादिनां विप्रतिपत्ती परस्परं साधनप्रयोगस्तत्र का वार्त्तेत्याह।

## एकनयसमारूढवादिना तुल्यबुद्धितः। प्रमाभासः प्रमाणत्वमियर्त्ति भ्रान्ततावशात् ॥३९७॥

एकस्मिन्नैगमादौ नये समारूढवादिनां समाविष्टवादिनां तुल्यबुद्धितः समानाभिनिवेशात् यथा हि तैमिरिकोऽपरतैमिरिकायोपदिशति शशिद्वयं सोपि तथैव मन्यते एवमत्रापि वस्तुवृत्त्या नयः प्रमाणाभास एव स एव च तुल्यबुद्धितया प्रमाणत्वमियर्त्ति, कथमेतदिति चेत् भ्रान्ततावशात्तैमिरिकद्वयन्यायादिति ॥ अत एवाह।

प्रमाणाभाससंसाध्यां सिद्धिमिच्छन्नयो मतः। विपक्षक्षेपकृज्ज्ञेयः कुनयस्तु विपश्चिता ॥३९८

नयो धर्मिण्युदासीनः कुनयस्तु धर्मिणो विक्षेपे वर्त्तते अत आह । प्रमाणाभासं प्रमाणवदाभाति भ्रान्त्या तेन प्रमाणाभासं साधनम्, ततो वा तेनेति वा सम्यक् साध्या ताम्, सिद्धिं साध्यस्येति शेषः । प्रमाणाभासादिच्छन्साध्यसिद्धिं बोधो नयो मतः। पक्षो निराधारधर्मः, साधारधर्मो विपक्षः, तस्य क्षेपो निरासो निराकरणम्, तत्कर्तुशीलः, कुनयः ज्ञेयः अवसातव्यः विपश्चिता पण्डितेन ॥ ननु यद्येषां प्रमाणं नास्ति कथं साध्यसिद्धिरित्याह ।

स्थूलं वस्तु समाश्रित्य व्यवहारानुपाति यत्।प्रमाणयन्ति चान्योन्यं नानानयसमाश्रिताः॥३९९

स्थूलं सूक्ष्मबुद्धिगम्यविशेषेण रहितम्, वस्त्विवति लोकोपचारात्, तत्समाश्रित्याङ्गीकृत्य, किम्भूतम्, व्यवहारो लोकप्रवृत्तिः, तत्रानुपतति तत्रावश्यमुपतिष्ठतीति, यद्वस्तु तदाश्रित्य, प्रमाणमुपन्यसन्ति, अन्योन्यं परस्परम्, नाना भिन्नास्ते च ते नयाश्च तान् समाश्रिता, वादिन इति सम्बध्यते ॥

प्रमाणवादिना तस्माद्वाद एव विचारणा । साधनाभासमन्यैस्तु वादिभिरभियुज्यते ॥ ४००॥

सम्यग्दृश एव हि प्रमाणवादिनः, तेषां तु वादविचारः, जल्पे तु साधनाभासम्, मुख्यतः न प्रवृत्तितः लोकव्यवहारमाश्रित्य स्थूलवस्त्वाश्रयावन्वयव्यतिरेकौ स्तः साधनस्य साध्येन, तमाश्रित्य परवादिना सहाभिधीयते, अगथिलगथिलनृपाख्यानकक्रमेणेति ॥

तेनावधीरणाप्यत्र महता लक्ष्मशासने । परपक्षनिरासो हि साधनाभासतोऽप्यसौ ॥ ४०१॥

तेन कारणेन, अवधीरणा उपेक्षा, अपि न केवलं न प्रवृत्तिः कुर्वन्तं प्रत्यवधीरणापि, अत्र प्रमाणलक्षणे, निष्फलत्वादायासस्य, अत एव श्रीहरिभद्रसूरिपादैः श्रीमदभयदेवपादैश्च परपक्षनिरासे तैर्यतितमनेकान्तजयपताकायां तथा सम्मतिटीकायामिति । अत एव श्रीमन्महामल्लवादिपादैरपि नयचक्र एवादरो विहित इति न तैरपि प्रमाणलक्षणमाख्यातं परपक्षनिमर्थनसमर्थैरपि परपक्षनिरासादपि स्वपक्षस्य पारिशेष्यात्सिद्धिरिति, ततो यथा कथञ्चित्परपक्षनिरासः कार्यः, तेनैवोक्तम्, "जावगथावगवंसगलूसगेहेऊ इति" ॥ किञ्च ।

**मिथ्यात्वध्वान्तभास्वन्तो जैनास्सन्ति महाधियः। यानाश्रित्य वयं पादरेणुतुल्या न जातुचित् ॥**

मिथ्यात्वमेव ध्वान्तम्, तस्यैवायथावस्थितभावदर्शननिमित्तत्वात्, तस्य विनाशने भास्वन्त आदित्याः, जिनो देवता येषां ते जैनाः, सन्ति विद्यन्ते सम्प्रत्येव, महती धीर्येषां ते महाधियः । किम्भूतास्त इत्याह । यानाश्रित्य यानङ्गीकृत्य, प्राप्य, वयम्, पादरेणुतुल्याः चरणालग्नपांशुतुल्या, न जातुचित् न कदाचिदपि, तत्पादरेणवोऽस्माकं मण्डनतामुपयान्ति न समानतामिति ।

**तैरवधीरिते यत्तु प्रवृत्तिरावयोरिह । तत्र दुर्जनवाक्यानि प्रवृत्तेः सन्निबन्धनम् ॥ ४०३ ॥**

तैरेवंविधैर्जैनैः, अवधीरिते अस्मिन् शब्दप्रमाणलक्षणे, यत्तु यत्पुनः, आवयोर्मम श्रीबुद्धिसागराचार्यस्य च, प्रवृत्तिः, तत्र, दुर्जनवाक्यानि प्रवृत्तेः कारणं सन्निबन्धनं सम्यगनिमित्तमिति ॥ कीदृशानि दुर्जनवाक्यानि इत्याह ।

**शब्दलक्ष्म प्रमालक्ष्म यदेतेषां न विद्यते । नादिमन्तस्ततो ह्येते परलक्ष्मोपजीविनः ॥४०४॥**

शब्दलक्ष्म व्याकरणम्, श्वेतभिक्षूणां स्वीयं न विद्यते, तथा प्रमालक्ष्मापि प्रमाणलक्षणमपि, येषां स्वीयं न विद्यते ।

नादिमन्तो नैवादावेव एते सम्भूताः, किन्तु कुतोपि निमित्तादर्वाचीना एते जाता इति । ततो ह्येते, तस्मादित्युपसंहारः हिर्हे-तुपदसूचकः । किम्भूतास्ते इत्याह परलक्ष्मोपजीविनः बौद्धादिप्रणीतलक्षणमुपजीवितुं शीलाः, एतदिति हेतुपदम् । उक्तं च, "छव्वाससएहिं नउत्तरेहिं तइया सिद्धिं गयस्स वीरस्स । कंवलीयाणं दिट्ठी वल्लहिपुरीए समुप्पन्ना ॥" तस्मान्नायं मोक्षावहः पन्था इति, तथाच किञ्जातमित्याह ।

**श्रीबुद्धिसागराचार्यैर्वृत्तैर्व्याकरणं कृतम् । अस्माभिस्तु प्रमालक्ष्म वृद्धिमायातु साम्प्रतम् ॥ ४०५**

श्रीबुद्धिसागराचार्यैः, पाणिनिचन्द्रजैनेन्द्रविश्रान्तदुर्गटीकामवलोक्य, वृत्तबन्धैः धातुसूत्रगणोणादिवृत्तबन्धैः, कृतं व्याकरणं संस्कृतशब्दप्राकृतशब्दसिद्धये, अस्माभिस्तु प्रमालक्ष्म प्रमाणलक्षणम्, अत एव पूर्वाचार्यगौरवदर्शनार्थं वार्तिकरूपेण तत्रापि स्वाभिप्रायनिवेदनार्थं वृत्तिकरणेन च, ततः किम्, वृद्धिमायातु साम्प्रतमधुनेति ॥

॥ इति प्रमालक्ष्म समाप्तम् ॥

# ॥ प्रमाणमीमांसा ॥

अनन्तदर्शनज्ञानवीर्यानन्दमयात्मने ।
नमोऽर्हते कृपाक्लृप्तधर्म्मतीर्थाय तायिने ॥ १ ॥
बोधबीजमुपस्कर्तुं तत्त्वाभ्यासेन धीमताम् ।
जैनसिद्धान्तसूत्राणां स्वेषां वृत्तिर्विधीयते ॥ २ ॥

ननु यदि भवदीयानीमानि जैनसिद्धान्तसूत्राणि तर्हि भवतः पूर्वं कानि किमीयानि वा तान्यासन्निति, अत्यल्पमिदमन्वयुङ्क्थाः, पाणिनिपिङ्गलकणादाक्षपादादिभ्योऽपि पूर्वं कानि किमीयानि वा व्याकरणादिसूत्राणीत्येतदपि पर्यनुयुङ्क्ष्व, अनादय एवैता विद्याः संक्षेपविस्तरविवक्षया नवनवीभवन्ति तत्तत्कर्तृकाश्चोच्यन्ते किं नाश्रौषीर्नकदाचिदनीदृशं जगदिति । यदि वा प्रेक्ष्य स्ववाचकमुख्यविरचितानि सकलशास्त्रचूडामणिभूतानि तत्त्वार्थसूत्राणीति ॥ यद्येवमकलङ्कधर्मकीर्त्यादिवत् प्रकरणमेव किं नारभ्यते किमनया सूत्रकारत्वाहोपुरुषिकया, मैवं वोचः, भिन्नरुचिर्ह्ययं जनस्ततो नास्य स्वेच्छाप्रतिबन्धे लौकिकं राजकीयं वा शासनमस्तीति यत्किञ्चिदेतत् । तत्र वर्णसमूहात्मकैः पदैः पदसमूहात्मकैः सूत्रैः सूत्रसमूहात्मकैः

प्रकरणैः प्रकरणसमूहात्मकैराह्निकैराह्निकसमूहात्मकैः पञ्चभिरध्यायैः शास्त्रमेतदरचयदाचार्यः तस्य च प्रेक्षावत्प्रवृत्त्यङ्गमभिधेयमभिधातुमिदमादिसूत्रम् ॥

## ॥ अथ प्रमाणमीमांसा ॥ १-१-१ ॥

अथेत्यस्याधिकारार्थत्वाच्छास्त्रेणाधिक्रियमाणस्य प्रस्तूयमानस्य प्रमाणस्याभिधानात्सकलशास्त्रतात्पर्यव्याख्यानेन प्रेक्षावन्तो बोधिताः प्रवर्त्तिताश्च भवन्ति । आनन्तर्यार्थो वाऽथ शब्दः शब्दकाव्यछन्दोनुशासनेभ्योऽनन्तरं प्रमाणं मीमांस्यत इत्यर्थः । अनेन शब्दानुशासनादिभिरस्यैककर्तृकत्वमाह । अधिकारार्थस्य चाथशब्दस्यान्यार्थनीयमानकुसुमदामजलकुम्भादेर्दर्शनमिव श्रवणं मङ्गलायाऽपि कल्पत इति, मङ्गले च सति परिपन्थिविघ्नविघातादक्षेपेण शास्त्रसिद्धिरायुष्मच्छ्रोतृकता च भवति । परमेष्ठिनमस्कारादिकं तु मङ्गलं कृतमपि न निवेशितं लाघवार्थिना शास्त्रकारेणेति,

प्रकर्षेण संशयादिव्यवच्छेदेन मीयते परिच्छिद्यते वस्तुतत्त्वं येन तत्प्रमाणं प्रमायां साधकतमं, तस्य मीमांसोद्देशादिरूपेण पर्यालोचनम् । त्रयी हि शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा च, तत्र नामधेयमात्रकीर्त्तनमुद्देशः यथेदमेवसूत्रम्, उद्दिष्टस्यासाधारणधर्म्मवचनं लक्षणम् तद्द्वेधा सामान्यलक्षणं विशेषलक्षणं च, सामान्यलक्षणमनन्तरमेवसूत्रम्, विशेषलक्षणं विशदः प्रत्यक्षमिति । विभागस्तु विशेषलक्षणस्यैवाङ्गमिति न पृथगुच्यते । लक्षितस्येदमित्थं भवति नेत्थमिति न्यायतः परीक्षणं परीक्षा, यथा तृतीयसूत्रम् । पूजितविचारवचनश्च मीमांसाशब्दस्तेन न प्रमाणमात्रस्यैव विचारोऽत्राधिकृतः किन्तु तदेकदेशभूतानां दुर्नयनिराकरणद्वारेण परिशोधितमार्गाणां नयानामपि "प्रमाणनयैरधिगम" इति हि वाचक मुख्यः सकलपुरुषार्थेषु मूर्द्धाभिषिक्तस्य सोपायस्य सप्रतिपक्षस्य मोक्षस्य च, एवं हि पूजितो विचारो भवति प्रमाणमात्रविचारस्तु प्रतिपक्ष-

प्र० मी०
॥ १ ॥

निराकरणपर्यवसायी वाक्कलहमात्रं स्यात्, तद्विवक्षायां तु अथ प्रमाणपरीक्षेत्येव क्रियेत, तत् स्थितमेतत् प्रमाणनयपरिशोधित-प्रमेयमार्गं सोपायं समतिपक्षमोक्षं विवक्षितुं मीमांसाग्रहणमकार्याचार्येणेति ॥ १ ॥

तत्रप्रमाणसामान्यलक्षणमाह

## ॥ सम्यगर्थनिर्णयः प्रमाणम् ॥ १—१—२ ॥

प्रमाणमिति लक्ष्यनिर्देशः शेषं लक्षणम्, प्रसिद्धानुवादेन ह्यप्रसिद्धस्य विधानं लक्षणार्थः । तत्र यत्तदविवादेन प्रमाणमिति धर्म्मि प्रसिद्धं तस्य सम्यगर्थनिर्णयात्मकत्वं धर्मो विधीयते, अत्र प्रमाणत्वादितिहेतुः । नच धर्म्मिणो हेतुत्व-मनुपपन्नम्, भवति हि विशेषे धर्म्मिणि तत् सामान्यं हेतुर्यथाऽयं धूमः साग्निर्धूमत्वात् पूर्वोपलब्धधूमवत् । न च दृष्टान्त-मन्तरेण न गमकत्वम्, अन्तर्व्याप्त्यैव साध्यसिद्धेः सात्मकं जीवच्छरीरं प्राणादिमत्त्वादित्यादिवदिति दर्शयिष्यते । तत्र निर्णयः संशयाऽनध्यवसायाविकल्पत्वरहितं ज्ञानं ततो निर्णयपदेनाज्ञानरूपस्येन्द्रियसन्निकर्षादेर्ज्ञानरूपस्यापि संशयादेः प्रमा-णत्वनिषेधः । अर्यतेऽर्थ्यतेवाऽर्थो हेयोपादेयोपेक्षणीयलक्षणः हेयस्य हातुमुपादेयस्योपादातुमुपेक्षणीयस्योपेक्षितुमर्थ्यमानत्वात् न चानुपादेयत्वादुपेक्षणीयो हेय एवान्तर्भवति अहेयत्वादुपादेय एवान्तर्भावप्रसक्तेः उपेक्षणीय एव च मूर्द्धाभिषिक्तोऽर्थो योगिभिस्तस्यैवार्यमाणत्वात् अस्मदादीनामपि हेयोपादेयाभ्यां भूयानेवोपेक्षणीयोऽर्थः तन्नायमुपेक्षितुं क्षमः । अर्थस्य निर्णय इति कर्मणि षष्ठी निर्णीयमानत्वेन व्याप्यत्वादर्थस्य, अर्थग्रहणं च स्वनिर्णयव्यवच्छेदार्थं तस्य सतोऽप्यलक्षणत्वादिति वक्ष्यामः ॥ सम्यगित्यविपरीतार्थमव्ययं समञ्चतेर्वा रूपं तच्च निर्णयस्य विशेषणं तस्यैव सम्यक्त्वाऽसम्यक्त्वयोगेन विशेष्टु-मुचितत्वात् अर्थस्तु स्वतो न सम्यग्नाप्यसम्यगिति सम्भवव्यभिचारयोरभावान्नविशेषणीयः । तेन सम्यग् योऽर्थनिर्णय इति विशेषणाद्विपर्ययनिरासः । ततोऽतिव्याप्त्यव्याप्त्यसम्भवदोषविकलमिदं प्रमाणसामान्यलक्षणम् ॥ २ ॥

नन्वर्थनिर्णयवत्स्वनिर्णयोऽपि वृद्धैः प्रमाणलक्षणत्वेनोक्तः प्रमाणं स्वपरावभासीति स्वार्थव्यवसायात्मकं प्रमाणमिति च न चासावसन्, घटमहं जानामीत्यादौ कर्तृकर्मवज् ज्ञप्तेरप्यवभासमानत्वात् न चाप्रत्यक्षोपलम्भस्यार्थदृष्टिः प्रसिद्ध्यति न च ज्ञानान्तरात् तदुपलम्भसम्भावनं तस्यानुपलब्धस्य प्रस्तुतोपलम्भप्रत्यक्षीकाराभावात् उपलम्भान्तरसम्भावने चानवस्था अर्थोपलम्भात्तस्योपलम्भे अन्योन्याश्रयदोषः। एतेनार्थस्य सम्भवो नोपपद्यते न चैतज्ज्ञानं स्यात् इत्यर्थापत्त्यापि तदुपलम्भः प्रत्युक्तः। तस्यापि ज्ञापकत्वेऽनाज्ञाताया ज्ञापकत्वायोगात् अर्थापत्त्यन्तरात् तज्ज्ञानेऽनवस्थेतरेतराश्रयदोषापत्तेस्तदवस्थः परिभवः, तस्मादर्थोन्मुखतयेव स्वोन्मुखतयापि ज्ञानस्य प्रतिभासात् स्वनिर्णयात्मकत्वमप्यस्ति। नन्वनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गः, मैवं वोचः, ज्ञातुर्ज्ञातृत्वेनेवाऽनुभूतेरनुभूतित्वेनैवानुभवात्, न चानुभूतेरनुभाव्यत्वं दोषः अर्थापेक्षयाऽनुभूतित्वात्, स्वापेक्षयाऽनुभाव्यत्वात्, स्वपितृपुत्रापेक्षयैकस्य पितृत्वपुत्रत्ववद्विरोधाभावात्। न च स्वात्मनि क्रियाविरोधः, अनुभवसिद्धेऽर्थे विरोधासिद्धेः, अनुमानाच्च स्वसंवेदनसिद्धिः। तथाहि ज्ञानं प्रकाशमानमेवार्थं प्रकाशयति प्रकाशकत्वात्प्रदीपवत्। संवेदनस्य प्रकाशत्वात् प्रकाशकत्वमसिद्धमिति चेत्, न, अज्ञाननिरासादिद्वारेण प्रकाशकत्वोपपत्तेः, न च नेत्रादिभिरनैकान्तिकता, तेषां भावेन्द्रियरूपाणामेव प्रकाशकत्वात् भावेन्द्रियाणां च स्वसंवेदनरूपतैवेति न व्यभिचारः। तथा संवित् स्वप्रकाशा अर्थप्रतीतित्वात् यः स्वप्रकाशो न भवति नासावर्थप्रतीतिर्यथा घटः, तथा यज् ज्ञानं तदात्मबोधं प्रत्यनपेक्षितपरव्यापारं यथा गोचरान्तरग्राहिज्ञानप्राग्भाविगोचरान्तरग्राहिज्ञानप्रबन्धस्यान्त्यज्ञानं ज्ञानं च विवादाध्यासितं रूपादिज्ञानमिति, संवित् स्वप्रकाशे स्वावान्तरजातीयं नापेक्षते वस्तुत्वात् घटवत्। संवित्परप्रकाश्या वस्तुत्वाद् घटवदिति चेत्, न, अस्याप्रयोजकत्वात्, न खलु घटस्य वस्तुत्वात् परप्रकाश्यता अपितु बुद्धिव्यतिरिक्तत्वात् तस्मात् स्वनिर्णयोऽपि प्रमाणलक्षणमस्त्वित्याशङ्कायामाह

॥ स्वनिर्णयः सन्नप्यलक्षणमप्रमाणेऽपि भावात् ॥ १–१–३ ॥

सन्नपीति परोक्तमनुमोदते अयमर्थो नह्यस्तीत्येव सर्वं लक्षणं वाच्यं किन्तु यो धर्म्मो विपक्षाद्व्यावर्त्तते स्वनिर्णयस्त्वप्रमाणेऽपि संशयादौ वर्त्तते नहि काचित् ज्ञानमात्रा सास्ति या न स्वसंविदिता नाम ततो न स्वनिर्णयो लक्षणमुक्तोऽस्माभिर्वृद्धैस्तु परीक्षार्थमुपक्षिप्त इत्यदोषः ॥

ननु च परिछिन्नमर्थं परिछिन्दता प्रमाणेन पिष्टं पिष्टं स्यात् तथाच गृहीतग्राहिणां धारावाहिकज्ञानानामपि प्रामाण्यप्रसङ्गस्ततोऽपूर्वार्थनिर्णय इत्यस्तु लक्षणम् यथाहुः “ स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम् ” इति तथापूर्वार्थविज्ञानमिति च तत्राह

॥ ग्रहीष्यमाणग्राहिण इव गृहीतग्राहिणोऽपि नाप्रामाण्यम् ॥ १–१–४ ॥

अयमर्थो द्रव्यापेक्षया वा गृहीतग्राहित्वं विमतिषिध्येत पर्यायापेक्षया वा तत्र पर्यायापेक्षया धारावाहिकज्ञानानामपि गृहीतग्राहित्वं न सम्भवति क्षणिकत्वात् पर्यायाणाम्, तत्कथं तन्निवृत्त्यर्थं विशेषणमुपादीयते । अथ द्रव्यापेक्षया तदप्ययुक्तम्, द्रव्यस्य नित्यत्वादेकत्वेन गृहीतग्रहीष्यमाणावस्थयोर्न भेदः ततश्च कं विशेषमाश्रित्य ग्रहीष्यमाणग्राहिणः प्रामाण्यं न गृहीतग्राहिणः । अपिच अवग्रहेहादीनां गृहीतग्राहित्वेऽपि प्रामाण्यमिष्यत एव न चैषां भिन्नविषयत्वम्, एवं ह्यवगृहीतस्याऽनीहनादीहितस्यानिश्चयादसमञ्जसमापद्येत । न च पर्यायापेक्षयानधिगतविशेषाऽवसायादपूर्वार्थत्वं वाच्यम्, एवं हि न कस्यचिद् गृहीतग्राहित्वमित्युक्तप्रायम्, स्मृतेश्च प्रमाणत्वेनाभ्युपगतायाः गृहीतग्राहित्वमेव सतत्त्वम्, यैरपि स्मृतेरप्रामाण्यमिष्टं तैरप्यर्थादनुत्पाद एव हेतुत्वेनोक्तो न गृहीतग्राहित्वम् । यदाह “ न स्मृतेरप्रमाणत्वं गृहीतग्राहिताकृतम् । अपि त्वनर्थजन्यत्वं तदप्रामाण्यकारणम् ” इति ॥ ४ ॥

अथ प्रमाणलक्षणप्रतिक्षिप्तानां संशयानध्यवसायविपर्ययाणां लक्षणमाह

## ॥ अनुभयत्रोभयकोटिसंस्पर्शी प्रत्ययः संशयः ॥ १—१—५ ॥

अनुभयस्वभावे वस्तुनि उभयान्तपरिमर्शनशीलं ज्ञानं सर्वात्मना शेत इवात्मा यस्मिन् सति स संशयः। यथान्धकारे दूरादूर्ध्वाकारवस्तूपलम्भात् साधकबाधकप्रमाणाभावे सति स्थाणुर्वा पुरुषो वेति प्रत्ययः, अनुभयत्र ग्रहणमुभयरूपे वस्तुन्युभयकोटिसंस्पर्शेऽपि संशयत्वनिराकरणार्थम्, यथाऽस्ति च नास्ति च घटः नित्यश्चानित्यश्चात्मेत्यादि ॥ ५ ॥

## ॥ विशेषानुल्लेख्यनध्यवसायः ॥ १—१—६ ॥

दूरान्धकारादिवशादसाधारणधर्मावमर्शरहितः प्रत्ययोऽनिश्चयात्मकत्वादनध्यवसायः यथा किमेतदिति, यदप्यविकल्पकं प्रथमक्षणभावि परेषां प्रत्यक्षप्रमाणत्वेनाभिमतं तदप्यनध्यवसाय एव विशेषोल्लेखस्य तत्राप्यभावादिति ॥ ६ ॥

## ॥ अतस्मिंस्तदेवेति विपर्ययः ॥ १—१—७ ॥

यत् ज्ञाने प्रतिभासते तद्रूपरहिते वस्तुनि तदेवेति प्रत्ययो विपर्यासरूपत्वाद्विपर्ययः यथा धातुवैषम्यान्मधुरादिद्रव्येषु तिक्तादिप्रत्ययः तिमिरादिदोषादेकस्मिन्नपि चन्द्रे द्विचन्द्रादिप्रत्ययः नौयानादगच्छत्स्वपि वृक्षेषु गच्छत् प्रत्ययः आशु भ्रमणादलातादावचक्रेपि चक्रप्रत्ययः इत्यवसितं प्रमाणलक्षणम् ॥ ७ ॥

नन्वस्तूक्तलक्षणं प्रमाणं तत्प्रामाण्यं तु स्वतः परतो वा निश्चीयेत न तावत् स्वतः, तद्धि संविदितत्वात् ज्ञानमित्येव गृह्णीयान्न पुनः सम्यक्त्वलक्षणं प्रामाण्यं ज्ञानत्वमात्रं तु प्रमाणाभाससाधारणम्। अपिच स्वतः प्रामाण्ये सर्वेषामविप्रतिपत्तिप्रसङ्गः नापि परतः परं हि तद्गोचरगोचरं वा ज्ञानम् अभ्युपेतार्थक्रियानिर्भासं वा तद्गोचरनान्तरीयकार्थदर्शनं

प्र० मी०
॥ ३ ॥

वा तच्च सर्वं स्वतोऽनवधृतप्रामाण्यमव्यवस्थितं सत् कथं पूर्वप्रवर्त्तकज्ञानं व्यवस्थापयेत् स्वतो वाऽस्य प्रामाण्ये कोऽपराधः प्रवर्त्तकज्ञानस्य येन तस्यापि तन्न स्यात् न च प्रामाण्यं ज्ञायते स्वत इत्युक्तमेव परतस्त्वनवस्थेत्याशङ्क्याह

## प्रामाण्यनिश्चयः स्वतः परतो वा ॥ १–१–८ ॥

प्रामाण्यनिश्चयः क्वचित् स्वतो यथाऽभ्यासदशापन्ने स्वकरतलादिज्ञाने स्नानपानावगाहनोदन्योपशमादावर्थक्रियानिर्भासे वा प्रत्यक्षज्ञाने, नहि तत्र परीक्षाकांक्षाऽस्ति प्रेक्षावताम् , तथाहि जलज्ञानं ततो दाहपिपासार्त्तस्य तत्र प्रवृत्तिस्ततस्तत्प्राप्तिस्ततः स्नानपानादीनि ततो दाहोदन्योपशम इत्येतावतैव भवति कृती प्रमाता न पुनर्दाहोदन्योपशमज्ञानमपि परीक्षते इत्यस्य स्वतः प्रामाण्यम् । अनुमाने तु सर्वस्मिन्नपि सर्वथा निरस्तसमस्तव्यभिचाराशङ्के स्वत एव प्रामाण्यम् , अव्यभिचारिलिङ्गसमुत्थत्वात्, न लिङ्गाकारं ज्ञानं लिङ्गं विना न च लिङ्गं लिङ्गिनं विनेति । क्वचित् परतः प्रामाण्यनिश्चयो यथाऽनभ्यासदशापन्ने प्रत्यक्षे नहि तदर्थेन गृहीताऽव्यभिचारमिति तदेकदेशविषयात्संवादकात् ज्ञानान्तराद्वाऽर्थक्रियानिर्भासाद्वा नान्तरीयार्थदर्शनाद्वा तस्य प्रामाण्यं निश्चीयते तेषां च स्वतः प्रामाण्यनिश्चयान्नानवस्थादिदौःस्थ्यावकाशः, शाब्दे तु प्रमाणे दृष्टार्थेऽर्थाव्यभिचारस्य दुर्ज्ञानत्वात् संवादाद्यधीनः परतः प्रामाण्यनिश्चयः, अदृष्टार्थे तु दृष्टार्थग्रहोपरागनष्टमुष्ट्यादिप्रतिपादकानां संवादेन प्रामाण्यं निश्चित्य संवादमन्तरेणाप्याप्तोक्तत्वेनैव प्रामाण्यनिश्चय इति सर्वमुपपन्नम् । अर्थोपलब्धिहेतुः प्रमाणमिति नैयायिकाः तत्रार्थोपलब्धौ हेतुत्वं यदि निमित्तत्वमात्रं तदा तत्सर्वकारकसाधारणमिति कर्तृकर्मादेरपि प्रमाणत्वप्रसङ्गः, अथ कर्तृकर्मादिविलक्षणं करणं हेतुशब्देन विवक्षितं तर्हि तज्ज्ञानमेव युक्तं नेन्द्रियसन्निकर्षादि यस्मिन् हि सत्यर्थ उपलब्धो भवति स तत् करणं न चेन्द्रियसन्निकर्षसामग्र्यादौ सत्यपि ज्ञानाभावे स भवति साधकतमं हि करणमव्यवहितफलं

च तदिष्यते व्यवहितफलस्यापि करणत्वे दधिभोजनादेरपि तथाप्रसङ्गः तत्र ज्ञानादन्यत्र प्रमाणत्वम्, अन्यत्रोपचारात्। सम्यगनुभवसाधनं प्रमाणमित्यत्रापि साधनग्रहणात् कर्तृकर्म्मनिरासेन करणस्य प्रमाणत्वं सिध्यति तथाप्यव्यवहितफलत्वेन साधकतमत्वं ज्ञानस्यैवेति तदेव प्रमाणत्वेनेष्टव्यम्। प्रमाणमविसंवादिज्ञानमिति सौगताः तत्रापि यद्यविकल्पकं ज्ञानं तदा न तद्व्यवहारजननसमर्थं सांव्यवहारिकस्य चैतत्प्रमाणस्य लक्षणमिति च भवन्तः तत्कथं तस्य प्रामाण्यम्, उत्तरकालभाविनो व्यवहारजननसमर्थाद्विकल्पात् तस्य प्रामाण्ये ( कथं ) याचितकमण्डनन्यायः वरं च व्यवहारहेतोर्विकल्पस्यैव प्रामाण्यमभ्युपगन्तुम्, एवं हि परम्परापरिश्रमः परिहृतो भवति, विकल्पस्य चाप्रामाण्ये कथं तन्निमित्तो व्यवहारोऽविसंवादी दृष्ट विकल्पयोरर्थयोरेकीकरणेन तैमिरिकज्ञानवत् संवादाभ्युपगमे चोपचरितं संवादित्वं स्यात्, तस्मादनुपचरितमविसंवादित्वं प्रामाण्यस्य लक्षणमिच्छता निर्णयः प्रमाणमेष्टव्य इति ॥ ८ ॥

प्रमाणसामान्यलक्षणमुक्त्वा परीक्ष्य च विशेषलक्षणं वक्तुकामो विभागमन्तरेण तद्वचनस्याऽशक्यत्वाद्विभागप्रतिपादनार्थमाह

## ॥ प्रमाणं द्विधा ॥ १–१–९ ॥

सामान्यलक्षणसूत्रे प्रमाणग्रहणं परीक्षयान्तरितमिति न तदा परामृष्टं किन्तु साक्षादेवोक्तं प्रमाणमिति। द्विधा द्विप्रकारमेव विभागस्यावधारणफलत्वात् तेन प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकाः, प्रत्यक्षानुमानागमाः प्रमाणानीति वैशेषिकाः तान्येवेति साङ्ख्याः, सहोपमानेन चत्वारीति नैयायिकाः, सहार्थापत्त्या पञ्चेति प्राभाकराः, सहाभावेन षडिति भाट्टा इति न्यूनाधिकप्रमाणवादिनः प्रतिक्षिप्ताः। तत्प्रतिक्षेपश्च वक्ष्यते ॥ ९ ॥

तर्हि प्रमाणद्वैविध्यं किं तथा यथाहुः सौगताः प्रत्यक्षमनुमानं चेत्युतान्यथेत्याह

## प्रत्यक्षं च परोक्षं च ॥ १–१–१० ॥

अश्नुते अक्ष्णोति वा व्याप्नोति सकलद्रव्यक्षेत्रकालभावानित्यक्षो जीवः । अश्नुते विषयमित्यक्षमिन्द्रियं च प्रतिः प्रतिगतार्थः अक्षं प्रतिगतं तदाश्रितं अक्षाणि चेन्द्रियाणि तानि प्रतिगतमिन्द्रियाण्याश्रित्योज्जिहीते यज्ज्ञानं तत्प्रत्यक्षं वक्ष्यमाणलक्षणम् । अक्षेभ्यः परतो वर्त्तत इति परेणेन्द्रियादिना चोक्ष्यत इति परोक्षं वक्ष्यमाणलक्षणमेव, चकारः स्वविषये द्वयोस्तुल्यबलत्वख्यापनार्थः । नेन यदाहुः सकलप्रमाणज्येष्ठं प्रत्यक्षमिति तदपास्तम् । प्रत्यक्षमितिपूर्वकत्वादितरप्रमाणानां तस्य ज्येष्ठतेति चेत् न प्रत्यक्षस्यापि प्रमाणान्तरपूर्वकत्वोपलब्धेः लिङ्गादाप्तोपदेशाद्वा वह्न्यादिकमवगम्य प्रवृत्तस्य तद्विषय-प्रत्यक्षोत्पत्तेः ॥ १० ॥

न प्रत्यक्षादन्यत्प्रमाणमिति लौकायतिकाः तत्राह

## ॥ व्यवस्थान्यधीनिषेधानां सिद्धेः प्रत्यक्षेतरप्रमाणसिद्धिः ॥ १–१–११ ॥

प्रमाणाप्रमाणविभागस्य परबुद्धेरतीन्द्रियार्थनिषेधस्य च सिद्धिर्नानुमानादिप्रमाणं विना, चार्वाको हि काश्चि-ज्ज्ञानव्यक्तीः संवादित्वेनाव्यभिचारिणीरुपलभ्याऽन्याश्च विसंवादित्वेन व्यभिचारिणीः पुनः कालान्तरे तादृशीतराणां ज्ञानव्यक्तीनामवश्यं प्रमाणेतरते व्यवस्थापयेत्, न च सन्निहितार्थबलेनोत्पद्यमानं पूर्वापरपरामर्शशून्यं प्रत्यक्षं पूर्वापरकालभा-विनीनां ज्ञानव्यक्तीनां प्रामाण्याप्रामाण्यव्यवस्थापकं निमित्तमुपलक्षयितुं क्षमते, न चायं स्वप्रतीतिगोचराणामपि ज्ञानव्य-

क्तीनां परं प्रति प्रामाण्यमप्रामाण्यं वा व्यवस्थापयितुं प्रभवति तस्माद्यथादृष्टज्ञानव्यक्तिसाधर्म्यद्वारेणेदानीन्तनज्ञानव्यक्तीनां प्रामाण्याप्रामाण्यव्यवस्थापकं परप्रतिपादकं परोक्षान्तर्गतमनुमानरूपं प्रमाणान्तरमुपासीत । अपिच अप्रतिपित्सितमर्थं प्रतिपादयन्नायं लौकिको न परीक्षक इत्युन्मत्तवदुपेक्षणीयः स्यात्, न च प्रत्यक्षेण परचेतोवृत्तीनामधिगमोऽस्ति चेष्टाविशेषदर्शनात्तदवगमे च परोक्षस्य प्रामाण्यमनिच्छतोऽप्यायातम्, परलोकादिनिषेधश्च न प्रत्यक्षमात्रेण शक्यः कर्तुं सन्निहितमात्रविषयत्वात्तस्य परलोकादिकं चाप्रतिषिध्य नायं सुखेनास्ते प्रमाणान्तरं च नेच्छतीति डिम्भहेवाकः । किञ्च प्रत्यक्षस्याप्यर्थाव्यभिचारादेव प्रामाण्यं तच्चार्थप्रतिबद्धलिङ्गशब्दद्वारा समुन्मज्जतः परोक्षस्याप्यर्थाव्यभिचारादेव किं नेष्यते । व्यभिचारिणोऽपि परोक्षस्य दर्शनादप्रामाण्यमिति चेत्, प्रत्यक्षस्यापि तिमिरादिदोषादप्रामाण्यस्य दर्शनात् सर्वत्राऽप्रामाण्यप्रसङ्गः । प्रत्यक्षाभासं तदिति चेत्, इतरत्रापि तुल्यमेतदन्यत्र पक्षपातात् । धर्मकीर्त्तिरप्येतदाह "प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः । प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित् । अर्थस्यासम्भवे भावात् प्रत्यक्षेऽपि प्रमाणता । प्रतिबद्धस्वभावस्य तद्धेतुत्वे समं द्वयम्" । इति यथोक्तसङ्ख्यायोगेऽपि च परोक्षार्थविषयमनुमानमेव सौगतैरुपगम्यते तदयुक्तम्, शब्दादीनामपि प्रमाणत्वात् तेषां चानुमानेऽन्तर्भावयितुमशक्यत्वात् एकेन तु सर्वसङ्ग्राहिणा प्रमाणेन प्रमाणान्तरसङ्ग्रहे नायं दोषः तत्र यथेन्द्रियजमानसात्मसंवेदनयोगिज्ञानानां प्रत्यक्षेण सङ्ग्रहस्तथा स्मृतिप्रत्यभिज्ञानोहानुमानागमानां परोक्षेण सङ्ग्रहो लक्षणस्याविशेषात् । स्मृत्यादीनां च विशेषलक्षणानि स्वस्थान एव वक्ष्यन्ते, एवं परोक्षस्योपमानस्य प्रत्यभिज्ञाने अर्थापत्तेरनुमानेऽन्तर्भावोऽभिधास्यते ॥ ११ ॥

यत्तु प्रमाणमेव न भवति न तेनान्तर्भूतेन बहिर्भूतेन वा किंचित् प्रयोजनम्, यथाऽभावः, कथमस्याप्रामाण्यं निर्विषयत्वात् इति ब्रूमः, तदेव कथमिति चेत् ॥

## असिद्धिः पराजयः ॥ २—१—३२ ॥

वादिनः प्रतिवादिनो वा या स्वपक्षस्यासिद्धिः सा पराजयः सा च साधनाभासाभिधानात् सम्यक्साधनेऽपि वा परोक्तदूषणानुद्धरणाद्भवति ॥ ३२ ॥

ननु यद्यसिद्धिः पराजयः स तर्हि कीदृशो निग्रहो निग्रहान्ता हि कथा भवतीत्याह ।

## स निग्रहो वादिप्रतिवादिनोः ॥ २—१—३३ ॥

स पराजय एव वादिप्रतिवादिनोर्निग्रहो न वधबन्धादि अथवा स एव स्वपक्षासिद्धिरूपपराजयो निग्रहहेतुत्वान्निग्रहो नान्यो यथाहुः परे " विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमिति " ॥ ३३ ॥

तत्राह ।

## न विप्रतिपत्त्यप्रतिपत्तिमात्रम् ॥ २—१—३४ ॥

विपरीता कुत्सिता विगर्हणीया प्रतिपत्तिर्विप्रतिपत्तिः साधनाभासे साधनबुद्धिर्दूषणाभासे च दूषणबुद्धिः, अप्रतिपत्तिस्त्वारम्भविषयेऽनारम्भः, स च साधने दूषणं दूषणे चोद्धरणं तयोरकरणमप्रतिपत्तिः, द्विधा हि वादी पराजीयते यथा कर्त्तव्यमप्रतिपद्यमानो विपरीतं वा प्रतिपद्यमान इति विप्रतिपत्त्यप्रतिपत्ती एव विप्रतिपत्त्यप्रतिपत्तिमात्रं न पराजयहेतुः किन्तु स्वपक्षस्यासिद्धिरेवेति विप्रतिपत्त्यप्रतिपत्त्योश्च निग्रहस्थानत्वनिरासात्तद्भेदानामपि निग्रहस्थानत्वं निरस्तं ते च

द्वाविंशतिर्भवन्ति तद्यथा प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपः मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगो ऽपसिद्धान्तो हेत्वाभासश्चेति । अत्राननुभाषणमज्ञानमप्रतिभा विक्षेपः पर्यनुयोज्योपेक्षणमित्यप्रतिपत्तिप्रकाराः शेषा विप्रतिपत्तिभेदाः, तत्र प्रतिज्ञाहानेर्लक्षणं "प्रतिदृष्टान्तधर्म्मानुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिरिति" सूत्रम्, अस्य भाष्यकारीयं व्याख्यानं साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थितः प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः यथाऽनित्यः शब्दः ऐन्द्रियकत्वाद् घटवदित्युक्ते परः प्रत्यवतिष्ठते सामान्यमैन्द्रियकं नित्यं दृष्टं कस्मान्न तथा शब्दोऽपीत्येवं स्वप्रयुक्तस्य हेतोराभासतामवस्यन्नपि कथावसानमकृत्वा प्रतिज्ञात्यागं करोति यद्यैन्द्रियकं सामान्यं नित्यं कामं घटोपि नित्योऽस्त्विति स खल्वयं साधनस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन्निगमनान्तमेव पक्षं जहाति पक्षं च परित्यजन् प्रतिज्ञां जहातीत्युच्यते प्रतिज्ञाश्रयत्वात् पक्षस्येति, तदेतदसङ्गतमेव, साक्षाद्दृष्टान्तहानिरूपत्वात् तस्यास्तत्रैव धर्मपरित्यागात्, परम्परया तु हेतूपनयनिगमनानामपि त्यागो, दृष्टान्तासाधुत्वे तेषामप्यसाधुत्वात् तथाच प्रतिज्ञाहानेरेवेत्यसङ्गतमेव । वार्त्तिककारस्तु व्याचष्टे दृष्टश्चासावन्ते स्थितत्वादन्तश्चेति दृष्टान्तः सपक्षः प्रतिदृष्टान्तः प्रतिपक्षः प्रतिपक्षस्य धर्मं स्वपक्षेऽभ्यनुजानन् प्रतिज्ञां जहाति यदि सामान्यमैन्द्रियकं नित्यं शब्दोऽप्येवमस्त्विति, तदेतदपि व्याख्यानमसङ्गतम् इत्थमेव प्रतिज्ञाहानेरवधारयितुमशक्यत्वात् न खलु प्रतिपक्षस्य धर्मं स्वपक्षेऽभ्यनुजानत एव प्रतिज्ञात्यागो येनायमेक एव प्रकारः प्रतिज्ञाहानौ स्यात् अधिक्षेपादिभिराकुलीभावात् प्रकृत्या सभाभीरुत्वादन्यमनस्कत्वादेर्वा निमित्तत्वात् किञ्चित्साध्यत्वेन प्रतिज्ञाय तद्विपरीतं प्रतिजानानस्याप्युपलम्भात् पुरुषभ्रान्तेरनेककारणत्वोपपत्तिरिति १ । प्रतिज्ञातार्थप्रतिषेधे परेण कृते तत्रैव धर्मिणि धर्मान्तरं साधनीयमभिदधतः प्रतिज्ञान्तरं नाम निग्रहस्थानं भवति अनित्यः शब्दः ऐन्द्रियकत्वादित्युक्ते तथैव सामान्येन व्यभिचारे नोदिते यदि ब्रूयाद्युक्तं सामान्यमै-

न्द्रियकं नित्यं तद्धि सर्वगतमसर्वगतस्तु शब्द इति सोऽयमनित्यः शब्द इति पूर्वं प्रतिज्ञातः प्रतिज्ञान्तरमसर्वगतः शब्द इति कुर्वन् प्रतिज्ञान्तरेण निगृहीतो भवति, एतदपि प्रतिज्ञाहानिवन्न युक्तम्, तस्याप्यनेकनिमित्ततोपपत्तेः प्रतिज्ञाहानितश्चास्य कथं भेदः पक्षत्यागस्योभयत्राविशेषात् यथैव हि प्रतिदृष्टान्तधर्मस्य स्वदृष्टान्तेऽभ्यनुज्ञानात् पक्षत्यागस्तथा प्रतिज्ञान्तरादपि यथाच स्वपक्षसिद्ध्यर्थं प्रतिज्ञान्तरं विधीयते तथा शब्दानित्यत्वसिद्ध्यर्थं भ्रान्तिवशात्तच्छब्दोऽपि नित्योऽस्त्वित्यनुज्ञानं यथा चाभ्रान्तस्येदं विरुद्ध्यते तथा प्रतिज्ञान्तरमपि, निमित्तभेदाच्च तद्भेदेऽनिष्टनिग्रहस्थानान्तराणामप्यनुषङ्गः स्यात् तेषां च तत्रान्तर्भावे प्रतिज्ञान्तरस्यापि प्रतिज्ञाहानावन्तर्भावः स्यादिति २। प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधो नाम निग्रहस्थानं भवति यथा गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योऽर्थान्तरस्यानुपलब्धेरिति सोऽयं प्रतिज्ञाहेत्वोर्विरोधो यदि गुणव्यतिरिक्तं द्रव्यं कथं रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः कथं गुणव्यतिरिक्तं द्रव्यमिति तदयं प्रतिज्ञाविरुद्धाभिधानात्पराजीयते, तदेतदसङ्गतम्, यतो हेतुना प्रतिज्ञायाः प्रतिज्ञात्वे निरस्ते प्रकारान्तरतः प्रतिज्ञाहानिरेवेयमुक्ता स्यात् हेतुदोषो वा विरुद्धतालक्षणो न प्रतिज्ञादोष इति ३। पक्षसाधने परेण दूषिते तदुद्धरणाशक्त्या प्रतिज्ञामेव निह्नुवानस्य प्रतिज्ञासंन्यासो नाम निग्रहस्थानं भवति यथाऽनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते तथैव सामान्येनानैकान्तिकतायामुद्भावितायां यदि ब्रूयात्क एवमाहानित्यः शब्द इति प्रतिज्ञासंन्यासात्पराजितो भवतीति एतदपि प्रतिज्ञाहानितो न भिद्यते हेतोरनैकान्तिकत्वोपलम्भेनात्रापि प्रतिज्ञायाः परित्यागाविशेषात् ४। अविशेषाऽभिहिते हेतौ प्रतिषिद्धे तद्विशेषणमभिदधतो हेत्वन्तरं नाम निग्रहस्थानं भवति तस्मिन्नेव प्रयोगे तथैव सामान्यस्य व्यभिचारेण दूषिते जातिमत्त्वे सतीत्यादिविशेषणमुपाददानो हेत्वन्तरेण निगृहीतो भवति इदमप्यतिप्रसृतं यतोऽविशेषोक्ते दृष्टान्ते उपनये निगमने वा प्रतिषिद्धे विशेषमिच्छतो दृष्टान्ताद्यन्तरमपि निग्रहस्थानान्तरमनुषज्येत तत्राप्याक्षेपसमाधानानां समानत्वादिति ५। प्रकृतार्थादर्थान्तरं तदनौपयिकमभिदध-

तोऽर्थान्तरं नाम निग्रहस्थानं भवति यथाऽनित्यः शब्दः कृतकत्वादिति हेतुः हेतुरिति हिनोतेर्धातोस्तुप्रत्यये कृदन्तं पदं पदं च नामाख्यातनिपातोपसर्गा इति प्रत्ययनामादीनि व्याचक्षणोऽर्थान्तरेण निगृह्यते, एतदप्यर्थान्तरं निग्रहस्थानं समर्थे साधने दूषणे वा प्रोक्ते निग्रहाय कल्पेतासमर्थे वा न तावत्समर्थे स्वसाध्यं प्रसाध्य नृत्यतोऽपि दोषाभावाल्लोकवत् असमर्थेपि प्रतिवादिनः पक्षसिद्धौ तन्निग्रहाय स्यादसिद्धौ वा प्रथमपक्षे तत्पक्षसिद्धिरेवास्य निग्रहो नत्वतो निग्रहस्थानात् द्वितीयपक्षेऽप्यतो न निग्रहः पक्षसिद्धेरुभयोरप्यभावादिति ६। अभिधेयरहितवर्णानुपूर्वीप्रयोगमात्रं निरर्थकं नाम निग्रहस्थानं भवति यथा नित्यः शब्दः कचटतपानां गजडदबत्वात् घझढधभवदित्येतदपि सर्वथार्थशून्यत्वान्निग्रहाय कल्पेत साध्यानुपयोगाद्वा तत्राद्यविकल्पोऽयुक्तः सर्वथार्थशून्यशब्दस्यैवासम्भवात् वर्णक्रमनिर्देशस्याप्यनुकार्येणार्थेनार्थवत्त्वोपपत्तेः द्वितीयविकल्पे तु सर्वमेव निग्रहस्थानं निरर्थकं स्यात् साध्यसिद्धावनुपयोगित्वाविशेषात् किञ्चिद्विशेषमात्रेण भेदेन खात्कृतहस्तास्फालनकक्षापिट्टनादेरपि साध्यानुपयोगिनो निग्रहस्थानान्तरत्वानुषङ्ग इति ७। यत्साधनवाक्यं दूषणवाक्यं वा त्रिरभिहितमपि परिषत्प्रतिवादिभ्यां बोद्धुं न शक्यते तदविज्ञातार्थं नाम निग्रहस्थानं भवति। अत्रेदमुच्यते वादिना त्रिरभिहितमपि वाक्यं परिषत्प्रतिवादिभ्यां मन्दमतित्वादविज्ञातं गूढाभिधानतो वा द्रुतोच्चाराद्वा प्रथमपक्षे सत्साधनवादिनोऽप्येतन्निग्रहस्थानं स्यात् तत्राप्यनयोर्मन्दमतित्वेनाविज्ञातत्वसम्भवात् द्वितीयपक्षे तु यत्र वाक्यप्रयोगेऽपि तत्प्रसङ्गो गूढाभिधानतया परिषत्प्रतिवादिनोर्महाप्राज्ञयोरप्यविज्ञातत्वोपलम्भात् अथाभ्यामविज्ञातमप्येतद्वादी व्याचष्टे गूढोपन्यासमप्यात्मनः स एव व्याचष्टामव्याख्याने तु जयाभाव एवास्य न पुनर्निग्रहः परस्य पक्षसिद्धेरभावात् द्रुतोच्चारेप्यनयोः कथञ्चित् ज्ञानं सम्भवत्येव सिद्धान्तवेदित्वात् साध्यानुपयोगिनि तु वादिनः प्रलापमात्रे तयोरविज्ञानं नाविज्ञातार्थं वर्णक्रमनिर्देशवत् ततो नेदमविज्ञातार्थं निरर्थकाद्भिद्यत इति ८। पूर्वापरासङ्गतपदसमूहप्रयोगादप्रतिष्ठितवाक्यार्थमपार्थकं नाम निग्रहस्थानं

भवति यथा दश दाडिमानि षडपूपा इत्यादि, एतदपि निरर्थकान्नभिद्यते यथैव हि गजडदबादौ वर्णानां नैरर्थक्यं तथात्र पदानामिति यदि पुनः पदनैरर्थक्यं वर्णनैरर्थक्यादन्यत्वान्निग्रहस्थानान्तरं तर्हि वाक्यनैरर्थक्यस्याप्याभ्यामन्यत्वान्निग्रहस्थानान्तरत्वं स्यात् पदवत्पौर्वापर्येणाप्रयुज्यमानानां वाक्यानामप्यनेकधोपलम्भात् "शङ्खः कदल्यां कदली च भेर्यां तस्यां च भेर्यां सुमहद्विमानम्। तच्छङ्खभेरीकदलीविमानमुन्मत्तगंगप्रतिमं बभूव" इत्यादिवत्, यदि पुनः पदनैरर्थक्यमेव वाक्यनैरर्थक्यं पदसमुदायात्मकत्वात् तस्य, तर्हि वर्णनैरर्थक्यमेव पदनैरर्थक्यं स्याद्वर्णसमुदायात्मकत्वात् तस्य, वर्णानां सर्वत्र निरर्थकत्वात् पदस्यापि तत्प्रसङ्गश्चेत्तर्हि पदस्यापि निरर्थकत्वात् तत्समुदायात्मनो वाक्यस्यापि नैरर्थक्यानुषङ्गः, पदस्यार्थवत्त्वेन पदार्थापेक्षया तस्यापि तदस्तु प्रकृतिप्रत्ययादिवत् न खलु प्रकृतिः केवला पदं प्रत्ययो वा नाप्यनयोरनर्थकत्वम् अभिव्यक्तार्थाभावादनर्थकत्वे पदस्यापि तत्स्यात् यथैव हि प्रकृत्यर्थः प्रत्ययेनाभिव्यज्यते प्रत्ययार्थश्च प्रकृत्या तयोः केवलयोरप्रयोगात्तथा देवदत्तस्तिष्ठतीत्यादिप्रयोगे स्याद्यन्तपदार्थस्य त्याद्यन्तपदार्थस्य च स्त्याद्यन्तपदेनाभिव्यक्तेः केवलस्याप्रयोगः पदान्तरापेक्षस्य पदस्य सार्थकत्वं प्रकृत्यपेक्षस्य प्रत्ययस्य तदपेक्षस्य च प्रकृत्यादिवर्णस्य समानमिति ९। प्रतिज्ञाहेतूदाहरणोपनयनिगमनवचनक्रममुल्लङ्घ्यावयवविपर्यासेन प्रयुज्यमानमनुमानवाक्यमप्राप्तकालन्नाम निग्रहस्थानं भवति स्वप्रतिपत्तिवत्परप्रतिपत्तेर्जनने परार्थानुमाने क्रमस्याप्यङ्गत्वात् एतदप्यपेशलम्, प्रेक्षावतां प्रतिपत्तॄणामवयवक्रमनियमं विनाप्यर्थप्रतिपत्त्युपलम्भात् ननु यथापि शब्दाच्छ्रुताच्छब्दस्मरणं ततोऽर्थप्रत्यय इति शब्दादेवार्थप्रत्ययः परम्परया तथा प्रतिज्ञाद्यवयवव्युत्क्रमात् तत्क्रमस्मरणं ततो वाक्यार्थप्रत्ययो न पुनस्तद्व्युत्क्रमात्, इत्यप्यसारम्, एवंविधप्रतीत्यभावात् यस्माद्धि शब्दादुच्चरिताद्यत्रार्थे प्रतीतिः स एव तस्य वाचको नान्योऽन्यथा शब्दात्तत्क्रमाचापशब्दे तद्व्यतिक्रमे च स्मरणं ततोऽर्थप्रतीतिरित्यपि वक्तुं शक्येत, एवं शब्दान्वाख्यानवैयर्थ्यमिति चेत्, नैवं, वादिनोऽनिष्टमात्रापादनात् अप-

शब्देऽपि चान्वाख्यानस्योपलम्भात् संस्कृताच्छब्दात्सत्यात् धर्मोऽन्यस्मादधर्म इति नियमे चान्यधर्माधर्मोपायानुष्ठानवैयर्थ्यं धर्माधर्मयोश्चाप्रतिनियमप्रसङ्गोऽधार्मिके धार्मिके च तच्छब्दोपलम्भात् भवतु वा तत्क्रमादर्थप्रतीतिस्तथाप्यर्थप्रत्ययः क्रमेण स्थितो येन वाक्येन व्युत्क्रम्यते तन्निरर्थकं न त्वप्राप्तकालमिति १० । पञ्चावयवे वाक्ये प्रयोक्तव्ये तदन्यतमेनाप्यवयवेन हीनं न्यूनं नाम निग्रहस्थानं भवति साधनाभावे साध्यसिद्धेरभावात् प्रतिज्ञादीनां च पञ्चानामपि साधनत्वादित्यप्यसमीचीनं पञ्चावयवप्रयोगमन्तरेणापि साध्यसिद्धेरभिधानात् प्रतिज्ञाहेतुप्रयोगमन्तरेणैव तत्सिद्धेरभावात् अतस्ताद्धीनमेव न्यूनं निग्रहस्थानमिति ११ । एकेनैव हेतुनोदाहरणेनवाऽर्थे हेत्वन्तरमुदाहरणान्तरं वा वदतोऽधिकं नाम निग्रहस्थानं भवति निष्प्रयोजनाभिधानात्, एतदप्ययुक्तम्, तथाविधाद्वाक्यात्पक्षसिद्धौ पराजयायोगात्, कथं चैवं प्रमाणसम्प्लवोऽभ्युपगम्येताभ्युपगमे वाधिकाभिधानाय जायेत, प्रतिपत्तिदार्ढ्यसंवादसिद्धिप्रयोजनसद्भावान्न निग्रह इत्यन्यत्रापि समानम्। हेतुनोदाहरणेन चैकेन प्रसाधितेऽप्यर्थे द्वितीयस्य हेतोरुदाहरणस्य वा नानर्थक्यं तत्प्रयोजनसद्भावात् न चैवमनवस्था कस्यचित्कचिन्निराकाङ्क्षतोपपत्तेः प्रमाणान्तरवत्, कथं चास्य कृतकत्वादौ स्वार्थिकप्रत्ययस्य वचनं यत्कृतकं तदनित्यमिति व्याप्तौ यत्तद्वचनव्याप्तिपदप्रयोगादेव चार्थप्रतिपत्तौ वाक्यप्रयोगोऽधिकत्वान्निग्रहस्थानं न स्यात्। तथाविधस्याप्यस्य प्रतिपत्तिविशेषोपायत्वान्नेति चेत्, कथमनेकस्य हेतोरुदाहरणस्य वा तदुपायभूतस्य वचनं निग्रहाधिकरणं निरर्थकस्य तु वचनं निरर्थकत्वादेव निग्रहस्थानं नाधिकत्वादिति १२ । शब्दार्थयोः पुनर्वचनं पुनरुक्तं नाम निग्रहस्थानं भवत्यन्यत्रानुवादात् शब्दपुनरुक्तं नाम यत्र स एव शब्दः पुनरुच्चार्यते यथाऽनित्यः शब्दोऽनित्यः शब्द इति अर्थपुनरुक्तं यत्र सोऽर्थः प्रथममन्येन शब्देनोक्तः पुनः पर्यायान्तरेणोच्यते यथा नित्यः शब्दोऽविनाशी ध्वनिरिति, अनुवादे तु पौनरुक्तमदोषो यथा हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति । अत्रार्थपुनरुक्तमेवानुपपन्नं न शब्दपुनरुक्तमर्थभेदेन शब्दसाम्येऽप्यस्य सम्भवात् यथा

प्र० मी०
॥ ४१ ॥

"हसति हसति स्वामिन्युच्चैरुदत्यतिरोदिति, कृतपरिकरं स्वेदोद्गारि प्रधावति धावति । गुणसमुदितं दोषापेतं प्रणिन्दति निन्दति, धनलवपरिक्रीतं यन्त्रं प्रनृत्यति नृत्यति" १ इत्यादि । ततः स्पष्टार्थवाचकैस्तैरेवान्यैर्वा शब्दैः सभ्याः प्रतिपादनीयाः तदप्रतिपादकशब्दानां तु सकृत्पुनः पुनर्वाऽभिधानं निरर्थकं न तु पुनरुक्तमिति, यदप्यर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तमुक्तं यथाऽसत्सु मेघेषु वृष्टिर्न भवतीत्युक्तेऽर्थादापद्यते सत्सु भवतीति तत्कण्ठेन कथ्यमानं पुनरुक्तं भवति, अर्थगत्यर्थे हि शब्दप्रयोगे प्रतीतेऽर्थे किं तेनेति, एतदपि प्रतिपन्नार्थप्रतिपादकत्वेन वैयर्थ्यान्निग्रहस्थानं नान्यथा तथाचेदं निरर्थकान्न विशिष्यतेति १३ । पर्षदा विदितस्य वादिना त्रिरभिहितस्यापि यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानं भवति अप्रत्युच्चारयन्किमाश्रयं दूषणमभिदधीतेत्यत्रापि किं सर्वस्य वादिनोक्तस्याननुभाषणमुत (प्रयत्ना?)यन्नान्तरीयिका साध्यसिद्धिस्तस्येति । तत्राद्यः पक्षोऽयुक्तः परोक्तमशेषमप्रत्युच्चारयतोऽपि दूषणवचनाव्याघातात् यथा सर्वमनित्यं सत्त्वादित्युक्ते सत्त्वादित्ययं हेतुर्विरुद्ध इति हेतुमेवोच्चार्य विरुद्धतोद्भाव्यते क्षणक्षयाद्येकान्ते सर्वथार्थक्रियाविरोधात्सत्त्वानुपपत्तेरिति समर्थ्यते च तावता परोक्तहेतोर्दूषणात्किमन्योच्चारणेन अतो यन्नांतरीयिका साध्यसिद्धिस्तस्यैवाप्रत्युच्चारणमननुभाषणं प्रतिपत्तव्यम् । अथैवं दूषयितुमसमर्थः शास्त्रार्थपरिज्ञानविशेषविकलत्वात्सदायमुत्तराप्रतिपत्तेरेव तिरस्क्रियते न पुनरननुभाषणादिति १४ । पर्षदा विज्ञातस्यापि वादिवाक्यार्थस्य प्रतिवादिनो यदज्ञानं तदज्ञानं नाम निग्रहस्थानं भवति अविदितोत्तरविषयो हि कोत्तरं ब्रूयात् न चाननुभाषणमेवेदं ज्ञातेऽपि वस्तुन्यनुभाषणासामर्थ्यदर्शनात्, एतदप्यसाम्प्रतम्, प्रतिज्ञाहान्यादिनिग्रहस्थानानां भेदभावानुषङ्गात् तत्राप्यज्ञानस्यैव सम्भवात् तेषां तत्प्रभेदत्वे वा निग्रहस्थानप्रतिनियमाभावप्रसङ्गः परोक्तस्यार्थाज्ञानादिभेदेन निग्रहस्थानानेकत्वप्रसङ्गात् १५ । परपक्षे गृहीतेऽप्यनुभाषितेऽपि तस्मिन्नुत्तराप्रतिपत्तिरप्रतिभा नाम निग्रहस्थानं भवति एषाप्यज्ञानान्न भिद्यते १६ । कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपो नाम निग्रहस्थानं भवति सिसाधयिषितस्यार्थस्याशक्यसाध-

नतामवसाय कथां विच्छिनत्तीदं मे करणीयं परिहीयते पीनसेन कण्ठ उपरुद्ध इत्याद्यभिधाय कथां विच्छिन्दन् विक्षेपेण पराजीयते एतदप्यज्ञानतो नार्थान्तरमिति १७। स्वपक्षे परापादितदोषमनुद्धृत्य तमेव परपक्षे प्रतीपमापादयतो मतानुज्ञा नाम निग्रहस्थानं भवति चौरो भवान् पुरुषत्वात्प्रसिद्धचौरवदित्युक्ते भवानपि चोरः पुरुषत्वादिति ब्रुवन्नात्मनः परापादितं चौरत्वदोषमभ्युपगतवान् भवतीति मतानुज्ञया निगृह्यते इदमप्यज्ञानान्न भिद्यते। अनैकान्तिकता चात्र हेतोः स ह्यात्मीयहेतोरात्मीयेनैवानैकान्तिकतां दृष्ट्वा प्राह भवत्पक्षेऽप्ययं दोषः समानस्त्वमपि पुरुषो भवसीत्यनैकान्तिकत्वमेवोद्भावयतीति १८। निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानं भवति, पर्यनुयोज्यो नाम निग्रहोपपत्त्यावश्यं नोदनीय इदं ते निग्रहस्थानमुपनतमतो निगृहीतोऽसीत्येवं वचनीयस्तमुपेक्ष्य न निगृह्णाति यः स पर्यनुयोज्योपेक्षणे निगृह्यते एतच्च कस्य निग्रह इति अनुयुक्तया परिषदोद्भावनीयं न त्वसावात्मनो दोषं विवृणुयादहं निग्राह्यस्त्वयोपेक्षित इति एतदप्यज्ञानान्न भिद्यते १९। अनिग्रहस्थाने निग्रहस्थानानुयोगो निरनुयोज्यानुयोगो नाम निग्रहस्थानं भवति, उपपन्नवादिनमप्रमादिनमनिग्रहार्हमपि निगृहीतोऽसीति यो ब्रूयात्स एवाभूतदोषोद्भावनान्निगृह्यते एतदपि नाज्ञानाद्व्यतिरिच्यते २०। सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तो नाम निग्रहस्थानं भवति, यः प्रथमं कञ्चित् सिद्धान्तमभ्युपगम्य कथामुपक्रमते तत्र च सिसाधयिषितार्थसाधनाय परोपालम्भाय वा सिद्धान्तविरुद्धमभिधत्ते सोऽपसिद्धान्तेन निगृह्यते एतदपि प्रतिवादिनः प्रतिपक्षसाधने सत्येव निग्रहस्थानं नान्यथेति २१। हेत्वाभासाश्च यथोक्ता असिद्धविरुद्धादयो निग्रहस्थानम्, अत्रापि विरुद्धहेतूद्भावनेन प्रतिपक्षसिद्धेर्निग्रहाधिकरणत्वं युक्तमसिद्धाद्युद्भावने तु प्रतिवादिना प्रतिपक्षसाधने कृते तद्युक्तं नान्यथेति २२॥ तदेवमक्षपादोपदिष्टं पराजयाधिकरणं परीक्ष्य सौगताभिमतं तत्परीक्ष्यते॥ नाप्यसाधनाङ्गवचनादोषोद्भावने स्वपक्षस्यासिद्धिरेव पराजयो नासाधनाङ्गवचनमदोषोद्भावनं च, यथाह धर्मकीर्तिः, "असाधनाङ्गवचनमदोषोद्भावनं द्वयोः निग्रहस्थानमन्यत्तु न युक्तमिति नेष्यते" अत्र

हि स्वपक्षं साधयन्वादिप्रतिवादिनोरन्यतरोऽसाधनाङ्गवचनाददोषोद्भावनाद्वा परं निगृह्णाति, प्रथमपक्षे स्वपक्षसिद्ध्यैवास्य पराजयादन्योद्भावनं व्यर्थम्, द्वितीयपक्षे साधनाङ्गवचनाद्युद्भावनेपि न कस्यचिज्जयः पक्षसिद्धेरुभयोरभावात् । यच्चास्य व्याख्यानं साधनं सिद्धिस्तदङ्गं त्रिरूपं लिङ्गं तस्यावचनं तूष्णीम्भावो यत्किञ्चिद्भाषणं वा साधनस्य वा त्रिरूपलिङ्गस्याङ्गं समर्थनं विपक्षे बाधकप्रमाणोपदर्शनरूपं तस्यावचनं वादिनो निग्रहस्थानमिति तत्पञ्चावयवप्रयोगवादिनोपि समानम्, शक्यं हि तेनाप्येवं वक्तुं सिद्ध्यङ्गस्य पञ्चावयवप्रयोगस्यावचनात्सौगतस्य वादिनो निग्रहः । ननु चास्य तद्वचनेऽपि निग्रहः प्रतिज्ञा-निगमनयोः पक्षधर्मोपक्षधर्मोपसंहारसामर्थ्येन गम्यमानत्वाद्गम्यमानयोश्च वचने पुनरुक्तत्वानुषङ्गात् तत्प्रयोगेऽपि हेतुप्रयो-गमन्तरेण साध्यार्थाप्रसिद्धेरित्यप्यसत्, पक्षधर्मोपसंहारस्याप्येवं वचनानुषङ्गात् । अथ सामर्थ्याद्गम्यमानस्यापि यत्सत्त-त्सर्वं क्षणिकं यथा घटः संश्च शब्द इति पक्षधर्मोपसंहारस्य वचनहेतोरपक्षधर्मत्वे त्वसिद्धत्वव्यवच्छेदार्थम्, तर्हि साध्याधारस-न्देहापनोदार्थं गम्यमानाया अपि प्रतिज्ञायाः प्रतिज्ञाहेतूदाहरणोपनयानामेकार्थप्रतिप्रदर्शनार्थं निगमनस्य वचनं किं न स्यात् नहि प्रतिज्ञादीनामेकार्थत्वोपदर्शनमन्तरेण सङ्गतत्वं घटते भिन्नविषयप्रतिज्ञादिवत् । ननु प्रतिज्ञातः साध्यसिद्धौ हेत्वादिवचन-मनर्थकमेव स्यात् अन्यथा नास्याः साधनाङ्गतेति चेत्, तर्हि भवतोपि हेतुतः साध्यसिद्धौ दृष्टान्तोऽनर्थकः स्यात्, अन्यथा नास्य साधनाङ्गतेति समानम् । ननु साध्यसाधनयोर्व्याप्तिप्रदर्शनार्थत्वात् नानर्थको दृष्टान्तस्तत्र तदप्रदर्शने हेतोरगमकत्वादित्यप्ययुक्तं सर्वानित्यत्वसाधने सत्त्वादेर्दृष्टान्तासम्भवतोऽगमकत्वानुषङ्गात् विपक्षव्यावृत्त्या सत्त्वादेर्गमकत्वे वा सर्वत्रापि हेतोस्तथैव गमकत्व-प्रसङ्गात् दृष्टान्तोऽनर्थक एव स्यात् विपक्षव्यावृत्त्या च हेतुं समर्थयन् कथं प्रतिज्ञां प्रतिक्षिपेत् तस्याश्चानभिधाने क्व हेतुः साध्यं वा वर्त्तते । गम्यमाने प्रतिज्ञाविषय एवेति चेत्, तर्हि गम्यमानस्यैव हेतोरपि समर्थनं स्यान्न तूक्तस्य, अथ गम्यमानस्यापि हेतोर्म-न्दमतिप्रतिपत्त्यर्थं वचनम्, तथा प्रतिज्ञावचने कोऽपरितोषः । यच्चेदमसाधनाङ्गमित्यस्य व्याख्यानान्तरं साधर्म्येण वचने वैधर्म्यव-

चनं वैधर्म्येण च प्रयोगे साधर्म्यवचनं गम्यमानत्वात्पुनरुक्तमतो न साधनाङ्गमित्यप्यसाम्प्रतम्, यतः सम्यक्साधनसामर्थ्येन स्व-
पक्षं साधयतो वादिनो निग्रहः स्यादसाधयतो वा प्रथमपक्षे न साध्यसिद्ध्यप्रतिबन्धिवचनाधिक्योपालम्भमात्रेणास्य निग्रहोऽ-
विरोधात्। नन्वेवं नाटकादिघोषणतोऽप्यस्य निग्रहो न स्यात्, सत्यमेतत्, स्वसाध्यं प्रसाध्य नृत्यतोऽपि दोषाभावाल्लोकवत्, अन्य-
था ताम्बूलभक्षणभ्रूक्षेपखात्कृतहस्तास्फालनादिभ्योऽपि सत्यसाधनवादिनोऽपि निग्रहः स्यात्। अथ स्वपक्षं प्रसाधयतोऽस्य
ततो निग्रहः। नन्वत्रापि किं प्रतिवादिना स्वपक्षे साधिते वादिनो वचनाधिक्योपालम्भो निग्रहो लक्ष्येतासाधिते वा, प्रथमपक्षे
स्वपक्षसिद्ध्यैवास्य निग्रहाद्वचनाधिक्योद्भावनमनर्थकं तस्मिन् सत्यपि पक्षसिद्धिमन्तरेण जयायोगात्, द्वितीयपक्षे तु युगपद्वा-
दिप्रतिवादिनोः पराजयप्रसङ्गो वा स्यात् स्वपक्षसिद्धेरभावाविशेषात्। ननु न स्वपक्षसिद्ध्यसिद्धिनिबन्धनौ जयपराजयौ
तयोर्ज्ञानाज्ञाननिबन्धनत्वात्, साधनवादिना हि साधुसाधनं ज्ञात्वा वक्तव्यं दूषणवादिना च दूषणं तत्र साधर्म्यवचनाद्वाऽर्थस्य
प्रतिपत्तौ तदुभयवचने वादिनः प्रतिवादिना सभायामसाधनाङ्गवचनस्योद्भावनात्साधुसाधनाज्ञानासिद्धेः पराजयः प्रतिवादि-
नस्तु तद्दूषणज्ञाननिर्णयाज्जयः स्यात्, इत्यप्यविचारितरमणीयम्, यतः स प्रतिवादी सत्साधनवादिनः साधनाभासवादिनो
वा वचनाधिक्यदोषमुद्भावयेत्, तत्राद्यपक्षे वादिनः कथं साधुसाधनाज्ञानं तद्वचनेयत्ताज्ञानस्यैवाभावात्, द्वितीयपक्षे तु न
प्रतिवादिनो दूषणज्ञानमवतिष्ठते साधनाभासस्यानुद्भावनात्तद्वचनाधिक्यदोषस्य ज्ञानात्, दूषणज्ञोऽसाविति चेत् साधनाभा-
साज्ञानाद्दूषणज्ञोऽपीति नैकान्ततो जयेत् तद्दोषोद्भावनलक्षणस्य पराजयस्यापि निवारयितुमशक्तेः, अथ वचनाधिक्यदोषो-
दोषोद्भावनादेव प्रतिवादिनो जयसिद्धौ साधनाभासोद्भावनमनर्थकम्। नन्वेवं साधनाभासानुद्भावनात्तस्य पराजयसिद्धौ
वचनाधिक्योद्भावनं कथं जयाय प्रकल्प्येत अथ वचनाधिक्यं साधनाभासं चोद्भावयतः प्रतिवादिनो जयति कथमेवं साध-
र्म्यवचने वैधर्म्यवचनं वैधर्म्यवचने वा साधर्म्यवचनं पराजयाय प्रभवेत् कथं चैवं वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहवैयर्थ्यं

न स्यात् कश्चिदेकत्रापि पक्षे साधनसामर्थ्यज्ञानाज्ञानयोः सम्भवात् न खलु शब्दादौ नित्यत्वस्याऽनित्यत्वस्य वा परीक्षायामेकस्य साधनसामर्थ्ये ज्ञानमन्यस्य चाज्ञानं जयस्य पराजयस्य वा निबन्धनं न भवति, युगपत्साधनासामर्थ्यज्ञाने च वादिप्रतिवादिनोः कस्य जयः पराजयो वा स्यादविशेषात्, न कस्यचिदिति चेत् तर्हि साधनवादिनो वचनाधिक्यकारिणः साधनसामर्थ्याज्ञानसिद्धेः प्रतिवादिनश्च वचनाधिक्यदोषोद्भावनात्तद्दोषमात्रज्ञानसिद्धेर्न कस्यचिज्जयः पराजयो वा स्यात्, नहि यो यद्दोषं वेत्ति स तद्गुणमपि कुतश्चिन्मारणशक्तौ वेदनेऽपि विष(य?) द्रव्यस्य कुष्ठापनयनशक्तौ संवेदनानुदयात् तन्न तत्सामर्थ्यज्ञानाज्ञाननिबन्धनौ जयपराजयौ व्यवस्थापयितुं शक्यौ यथोक्तदोषानुषङ्गात् स्वपक्षसिद्ध्यसिद्धिनिबन्धनौ तु तौ निरवद्यौ पक्षप्रतिपक्षपरिग्रहवैयर्थ्याभावात् कस्यचित् कुतश्चित्स्वपक्षसिद्धौ निश्चितायां परस्य तत्सिद्ध्यभावतः सकृज्जयपराजयप्रसङ्गात् यच्चेदमदोषोद्भावनमित्यस्य व्याख्यानं प्रसज्यप्रतिषेधे दोषोद्भावनाभावमात्रमदोषोद्भावनं पर्युदासे तु दोषाभासानामन्यदोषाणां चोद्भावनं प्रतिवादिनो निग्रहस्थानमिति तद्वादिना दोषवति साधने प्रयुक्ते सत्यनुमतमेव यदि वादी स्वपक्षं साधयेन्नान्यथा, वचनाधिक्यं तु दोषः प्रागेव प्रतिविहितो यथैव हि पञ्चावयवप्रयोगे वचनाधिक्यं यथा निग्रहस्थानं तथा त्र्यवयवप्रयोगे न्यूनतापि स्याद्विशेषाभावात् प्रतिज्ञादीनि हि पञ्चाप्यनुमानं प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इत्यभिधानात् तेषां मध्येऽन्यतमस्याप्यभिधाने न्यूनताख्यो दोषोऽनुषज्यत एव हीनमन्यतमेनापि न्यूनमिति वचनात् ततो जयेतरव्यवस्थायां नान्यन्निमित्तमुक्तान्निमित्तादित्यलम् प्रसङ्गेन, अयं च प्रागुक्तश्चतुरङ्गो वादः कदाचित्पत्रालम्बनमप्यपेक्षतेऽतस्तल्लक्षणमत्रावश्याभिधातव्यं यतो नाविज्ञातस्वरूपस्यावलम्बनं जयाय प्रभवति न चाविज्ञातस्वरूपं परपत्रं भेत्तुं शक्यमित्याहुः ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायाः प्रमाणमीमांसायास्तद्वृत्तेश्च द्वितीयस्याध्यायस्य प्रथममाह्निकं समाप्तम् ॥

प्र० मी०
॥ ४४ ॥

पदवाक्यप्रमाणपारावारपारीणलोकानुग्रहकृतानेकग्रन्थमहामहोपाध्यायन्याय-
विशारदन्यायाचार्यश्रीयशोविजयगणिकृतं भाषारहस्यं सम्पूर्णम्.

पोरवाडवणिग्वंशावतंसभगूभाइतनुजनुषा धर्माचरणधुरीणश्री-
मनसुखभाइश्रेष्ठिवरेण मुद्रापितम्

धी "सीटी" प्रीन्टींग प्रेस ढालगरवाडा—अमदावाद.

पदवाक्यप्रमाणपारावारपारीणलोकानुग्रहकृतानेकग्रन्थाप्रतिमप्रभावाचार्य-

वर्यश्रीहरिभद्रसूरिकृताऽनेकान्तजयपताका प्रारभ्यते.

॥ श्रीः ॥

# ॥ अनेकान्तजयपताका ॥

॥ ॐ नमः सर्वज्ञाय ॥ जयति विनिर्जितरागः सर्वज्ञस्त्रिदशनाथकृतपूजः । सद्भूतवस्तुवादी शिवगतिनाथो महावीरः ॥ १ ॥ य इहानिन्द्यो मार्गो विशेषतः पूर्वगुरुभिराचरितः । तत्र प्रवर्तितव्यं पुंसा न्यायः सतामेषः ॥ २ ॥ यद्यपि न तथाभूता शक्तिः प्राक्कर्मदोषतस्तदपि । शक्त्यनुरूपमुपायो न यतस्तत्प्राप्तयेऽप्यन्यः ॥ ३ ॥ सत्यपि गुणवत्येव तु स चान्यभावेऽपि पण्डितैर्गदितः । यत्रैव यस्य शक्तिः सात्म्यं च विशेषतस्तेषाम् ॥ ४ ॥ स तमाराधयितुमलं यस्मादाराध्य चैनमाप्नोति । शक्त्यन्तरं ह्युपायान्तरसाधकमुत्तमं नियमात् ॥ ५ ॥ युग्मम् ॥ तस्मान्ममापि जाता शठोक्तिभिर्मोहितान् जडान् वीक्ष्य । प्रकरणकरणसमीहा पूर्वनिमित्तात्कृपातश्च ॥ ६ ॥ जिनवचनश्रवणान्नः शक्तिरपि न नास्ति तत्र तस्यैव । सद्बोधहेतुभावात्तुच्छत्वाद्वा शठोक्तीनाम् ॥ ७ ॥ तुच्छत्वं पुनरासां प्रदर्शितं पूर्वसूरिभिर्बहुधा । न्यक्षेण सूक्ष्मयुक्तिभिरतिगम्भीरं स्वशास्त्रेषु ॥ ८ ॥ तत्तु शठोक्तिविमूढा न जडास्सञ्जानते यतस्तेन । सन्दर्श्यते समासस्थूरोक्तिशठोक्त्यपाकरणैः ॥ ९ ॥ प्रारभ्यते तत इदं सम्यगनेकान्तजयपताकाख्यम् । प्रकरणमुक्तगुणयुतं जडावबोधाय धर्मफलम् ॥ १० ॥

इह च नानुपन्यस्तानां शठोक्तीनामपाकरणानीति ता एवोपन्यस्यन्ते, तत्र शठाः सदसन्नित्यानित्याद्यनेकरूपं वस्तु प्रतिनियतादिसंवेदनानुभवेनान्यथा तदनुपपत्तेः अनुभवन्तोऽपि वस्तुस्थित्याऽनादिकर्मसामर्थ्यदोषतो भवसमुद्रनैर्गुण्यमिव न

प्रतिपद्यन्ते अपायहेत्वसदभिनिवेशाध्मातमानसाः प्रत्यवतिष्ठन्ते च, कथमेकमेव घटादिरूपं वस्तु सच्चासच्च भवति, तथाहि सत्त्वमसत्त्वपरिहारेण व्यवस्थितमसत्त्वमपि सत्त्वपरिहारेणान्यथा तयोरविशेषः स्यात् ततश्च तद्यदि सत्कथमसत्, अथासत्कथं सदिति, एकत्र सदसत्त्वयोर्विरोधात् । तथा चोक्तं, "यस्मात् सत्त्वमसत्त्वं च विरुद्धं हि मिथो द्वयम् । वस्त्वेकं सदसद्रूपं तस्मात् खलु न युज्यते ॥" किं च सदसद्रूपं वस्त्वभ्युपगच्छता सत्त्वमसत्त्वं च वस्तुधर्मतयाभ्युपगतं भवति, ततश्चात्रापि वक्तव्यं धर्मधर्मिणोः किं तावद्भेदः आहोस्विदभेदः आहोस्विद् भेदाभेद इति। तत्र यदि तावद्भेदः, ततः सदसत्त्वयोर्भिन्नत्वात् कथमेकं सदसद्रूपमिति। अथाभेदस्ततः सदसत्त्वयोरेकत्वमेकस्माद्धर्मिणोऽभिन्नत्वात् तत्स्वरूपवत् अतोऽपि कथमेकं सदसद्रूपमिति, धर्मिणो वा भेदः, सदसत्त्वयोरभिन्नत्वात् तत्स्वात्मवदित्थमपि कथमेकमुभयरूपम् । अथ भेदाभेदः अत्रापि येनाकारेण भेदस्तेन भेद एव येन चाभेदस्तेनाभेद एव तदेवमपि नैकमुभयरूपम् । अथ येनैवाकारेण भेदस्तेनैवाभेदः येनैव चाभेदस्तेनैव भेद इति, एतदप्यचारु, विरोधात्, तथाहि यदि येनाकारेण भेदः कथं तेनैवाभेदः अथाभेदः कथं भेद इति । अथ येनाप्याकारेण भेदस्तेनापि भेदश्चाभेदश्च येनापि चाभेदस्तेनाप्यभेदो भेदश्च, अत्रापि येनाकारेण भेदस्तेन भेद एव येन चाभेदस्तेनाभेद एवेति तदेवावर्तते । किञ्च भेदाभेदमभ्युपगच्छता अवश्यमेवेदमङ्गीकर्तव्यम्, इह धर्मधर्मिणोर्धर्मधर्मितया भेदः स्वभावतः पुनरभेदः, स्वभावतोऽपि हि तयोर्भेदेऽङ्गीक्रियमाणे परस्परतः प्रविभक्तरूपं पदार्थद्वयमेवाङ्गीकृतं स्यान्न पुनरेकं द्विरूपमिति, तदत्रापि निरूप्यते, न ह्यनासादितस्वभावभेदयोर्धर्मधर्मिणोर्धर्मधर्मितयापि भेदो युज्यते, तथाहि यदि यो धर्मस्य स्वभावः स एव धर्मिणोऽपि, एवं सत्यसौ धर्मी धर्म एव स्यात् तत्स्वभावत्वाद्धर्मस्वरूपवत्, धर्मो वा धर्मिस्वभावाव्यतिरिच्यमानमूर्तिर्धर्मिमात्रमेव स्यादिति, ततश्चैवं धर्मधर्मिणौ स्वभावभेदानासादनेनाप्रतिलब्धभेदौ कथं भेदनिमित्तं भवत इति । न च स्वभावतोऽपि तयोर्भेदाभेदकल्पना युक्ता, पूर्वोक्तदोषानतिवृत्तेः । तथा

चोक्तम्, " भेदो वा स्याद्भेदो वा द्वयं वा धर्मधर्मिणोः । भेदे नैकमनेकं स्यात् अभेदेऽपि न युज्यते ॥ १ ॥ द्वयपक्षोऽपि चायुक्तो विकल्पानुपपत्तितः । तेनानेकान्तवादोऽयमज्ञैः समुपकल्पितः ॥ २ ॥ " किञ्च संविन्निष्ठा विषयव्यवस्थितयः न च सदसद्रूपं वस्तु संवेद्यते उभयरूपस्य संवेदनाभावात्, तथाहि नाक्षजे विज्ञाने सदसत्त्वे प्रतिभासेते, असत्त्वस्यारूपत्वाद्रूपत्वे चासत्त्वविरोधात्, तथानुभवाभावाच्च । न च कार्यद्वारेणापि सदसद्रूपं वस्तु प्रतिपत्तुं शक्यते, यतो नोभयरूपं कार्यमुपलभ्यते, न च तत्कार्यकरणे प्रवर्त्तमानं केनचिदाकारेण करोति केनचित् न करोति, एकस्य करणाकरणविरोधात्, सर्वात्मना च करणे तद्भावरूपमेव स्यात्, तथाहि नाभावः कस्यचित् कारणं भवितुमर्हति अभावत्वविरोधात्, तत्कारणत्वे च विश्वमदरिद्रं स्यात् तत एव कटककुण्डलाद्युत्पत्तेः, न च तस्मान्निरुपाख्यतयाऽविशिष्टात् कस्यचिदेव भावो न सर्वस्येति वक्तुं युज्यते, हेत्वभावात्, अतः श्रद्धागम्यमेवेदं सदसद्रूपं वस्त्विति । तथा चोक्तम्, " न च प्रत्यक्षसंवेद्यं कार्यतोऽपि न गम्यते । श्रद्धागम्यं यदि परं वस्त्वेकमुभयात्मकम् ॥ " एतेन नित्यानित्यमपि प्रत्युक्तमवगन्तव्यम्, विरोधादेव, तथाह्यप्रच्युतानुत्पन्नस्थिरैकस्वभावं नित्यमाख्यायते प्रकृत्यैकक्षणस्थितिधर्मकं चानित्यमिति, ततश्च तद्यदि नित्यं कथमनित्यं अनित्यं चेत्कथं नित्यमिति ॥ स्यादारेका नहि कूटस्थनित्यतया नित्यं द्रव्यमभ्युपगम्यतेऽस्माभिः, परिणामानित्यताभ्युपगमात्, किन्तु पूर्वोत्तरक्षणप्रविभागेन प्रबन्धवृत्त्या, न ह्यस्य पर्यायाणामिवोच्छेदस्तद्रूपेण तथाऽप्रतीतेः, पर्याया एव हि पर्यायरूपेण निरुध्यन्ते न तु द्रव्यमिति नित्यमभ्युपगम्यते, इयमप्ययुक्ता यस्मादेपाप्यत्र नित्यता न सम्भवति, पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेः, तथाहि न पर्यायव्यतिरिक्तं द्रव्यमस्ति तथानुभवाभावात्, व्यतिरिक्तभावे चानेकरूपैकवस्तुवादहानिप्रसङ्गः । तथा चोक्तम्, " पर्यायाभेदतोऽनित्यं द्रव्यं स्यात् तत्स्वरूपवत् । स्याद्वादविनिवृत्तिश्च नानात्वे सम्प्रसज्यते ॥ " व्यतिरिक्ताव्यतिरिक्तपक्षस्तु विरोधाघ्रातत्वात् न्यायबहिर्भूतत्वादनुद्घोष्य एवेति । एतेन सामान्यविशेषरूपमपि

प्रतिक्षिप्तमवगन्तव्यम्, तथाह्येकादिधर्मकं सामान्यमनेकादिधर्मका विशेषास्तनश्च तद्यदि सामान्यरूपं कथं विशेषरूपं, विशेषरूपं चेत्कथं सामान्यरूपमिति विरोधात् । किञ्च सामान्यविशेषोभयरूपत्वे सति वस्तुनः सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्गः, तथाहि विषमोदकक्षीरकर्कादिव्यक्त्यभिन्नं नानास्वभावमेकं सामान्यं वर्त्तते ततश्च न विषं विषमेव मोदकाद्यभिन्नसामान्याव्यतिरेकान्नापि मोदको मोदक एव विषाभिन्नसामान्याभेदात्, किं तर्हि, उभयमप्युभयरूपं, ततश्च विषार्थी विषे प्रवर्तेत मोदके च, एवं मोदकार्थ्यपि मोदके प्रवर्तेत विषे च, लोकश्च विषार्थी विष एव प्रवर्तते न मोदके मोदकार्थ्यपि मोदक एव न विष इत्यस्य नियमस्योच्छेदः स्यात्, तथा विषे भक्षिते मोदकोऽपि भक्षितः स्यात् मोदके च भक्षिते विषमपि भक्षितं स्यात्, तथा च प्रतीतिविरोधः, एवं क्षीरकर्कादिष्वपि योज्यम् । स्यादेतत् विषादिषु विशेषरूपताप्यस्त्येव सा तदर्थिनो नियमेन प्रवृत्तेर्बीजं तद्भक्षणे च नान्यभक्षणं स्यादिति । एतदप्ययुक्तम् । विकल्पानुपपत्तेः, विशेषरूपता हि सामान्याद्व्यतिरिक्ता वा स्यादव्यतिरिक्ता वा, अव्यतिरिक्तत्वे तत्स्वरूपवन्न तस्यास्तत्त्वम्, व्यतिरिक्तत्वे च तदर्थिप्रवृत्तिविषयत्वात् तस्या एव वस्तुता । व्यतिरिक्ताव्यतिरिक्तेति चेत्, नन्वेवं विरोध इति त्यज्यतामुभयरूपवस्तुवादाभिमानः । तथा चोक्तम्, "प्रवृत्तिनियमो न स्याद्विषादिषु तदर्थिनः । मोदकाद्यपृथग्भूतसामान्याभेदवृत्तिषु ॥ १ ॥ भेदे चोभयरूपैकवस्तुवादो न युज्यते । भेदाभेदविकल्पस्तु विरोधेनैव बाधितः ॥ २ ॥ विशेषरूपं यत्तेषु तत्प्रवृत्तेर्नियामकम् । साध्वेतत्किन्तु वस्तुत्वं तस्यैवेत्थं प्रसज्यते ॥ ३ ॥" तथा परेणाप्युक्तम्, "सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः । चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ॥" तथाह्युष्ट्रोऽपि स्यात् दधि नापि स एवोष्ट्रो येनान्योऽपि स्यादुष्ट्रः, तथा दध्यपि स्यादुष्ट्रो नापि तदेव दधि येनान्यदपि स्याद् दधि, तदेवमनयोरेकस्यापि कस्यचित् तद्रूपाभावस्याभावात् स्वरूपस्य वाऽतद्भाविनः स्वानियतस्याभावात् न कश्चिद्विशेष इति, ततश्च दधि खादेति चोदित उष्ट्रमपि खादेत् ॥ "अथास्त्यतिशयः कश्चिद्येन

भेदेन वर्तते । स एव दधि सोऽन्यत्र नास्तीत्यनुभयं परम् ॥ अथानयोः कश्चिदतिशयोऽस्ति येनायं तथा चोदितः क्षीरविकार एव प्रवर्तते नान्यत्र, एवं तर्हि स एवातिशयोऽर्थक्रियार्थिप्रवृत्तिविषयो दधि, तत्फलविशेषोपादानभावलक्षितस्वभावं हि वस्तु दधीति, स च तादृशः स्वभावोऽन्यत्र नास्ति प्रवृत्त्यभावादर्थिनः, तस्मान्नोभयरूपमित्येकान्तवादः । किञ्च सर्ववस्तुशबलवादिनः क्वचिदन्याऽसंसृष्टाकारबुद्ध्यसिद्धेस्तथा वाचकाभावात् संहारवादानुपपत्तिः, तत्सिद्धौ वा तत एव तत्स्वभावभेदात् तदेकरूपतैवेति । तथा चोक्तम्, " सर्वात्मत्वे च भावानां भिन्नौ स्यातां न धीध्वनी । भेदसंहारवादस्य तदभावादसम्भवः ॥ " सोऽयमनेकान्तवादी क्वचिदप्येकमाकारं प्रतिनियतमपश्यन्विभागाभावाद्भावानां कथमसंसृष्टान्याकारवत्या बुद्ध्याऽधिबुध्येतार्थानभिलपेद्वा, ततो भेदाग्रहणात्, तत्संहारवादो न स्यात् स्यादुष्ट्रो दधि स्यान्नेति, अथ पुनरसंसृष्टावाकारौ प्रतिपद्य संहरेत् एकरूपसंसर्गिण्या बुद्धेः क्वचित्प्रतिनियमात् तत्प्रतिभासभेदकृत एव तयो रूपयोः स्वभावभेदोऽपि स्यादेकानेकव्यवस्थितेः प्रतिभासविषयत्वात्, तथा च नैकस्तदुभयरूपः स्यादिति मिथ्यावाद एषः । एवमभिलाप्याऽनभिलाप्यमपि विरोधबाधितत्वादेवानुद्घोष्यम् । तथाहि अभिलप्यते यत्तदभिलाप्यम् एतद्विलक्षणं चानभिलाप्यमिति। ततश्च यदि तदभिलाप्यं न तर्ह्यनभिलाप्यं;अनभिलाप्यं चेत् न तर्ह्यभिलाप्यमिति, एकस्यानेकविरुद्धधर्मानुगमाभावात् । किञ्च विरोधिधर्माध्यासितस्वरूपत्वाद्वस्तुनोऽनेकान्तवादिनो मुक्त्यभावप्रसङ्गः । तथाहितदात्माङ्गनाभवनमणिकनकधनधान्यादिकमनात्मकमनित्यमशुचि दुःखमिति कथंचित् विज्ञाय भावतस्तथैव भावयतो वस्तुतस्तत्राभिष्वङ्गास्पदाभावाद्भावनाप्रकर्षविशेषतो वैराग्यमुपजायते ततो मुक्तिः, तथाह्यात्मात्मीयदर्शनमेव मोहस्तत्पूर्वक एव आत्मात्मीयस्नेहो रागस्तत्पूर्विकैवानुरागविषयोपरोधिनि प्रतिहतिर्द्वेष इति कृत्वा, यदा तु तदात्माङ्गनादिकं सात्मकाद्यपि तदा यथोक्तभावनाभावाद्भावेऽपि मिथ्यारूपत्वात् वैराग्याभावस्तदभावाच्च मुक्त्यभाव इति । स्यादेतत्किमनेनेत्थमसम्भविना मुग्धविस्मयक-

IV

V

VI

रेण भावनावादेन, कृत्स्नकर्मक्षयान्मोक्षः, स च कायसन्तापलक्षणेन तपसा प्रागुपात्तकर्मनिर्जरणतोऽनागतस्य चाकरणेनेति, एतदप्यसत्, कायसन्तापस्य कर्मफलत्वात् नारकादिकायसन्तापवचत्त्वतस्तपस्त्वायोगात्, न स्वेच्छाप्रतिपत्त्या तपस्त्वम्, स्वेच्छाप्रतिपत्तिमद्राज्यसुखदेरपि तपस्त्वप्रसङ्गात्, अभ्युपगमे च प्रतीत्यादिविरोधः । तथाविधराज्यादिसुखभोगे प्रमादतोऽपरबन्ध इति चेत्, स कायसन्तापेन त्वार्तध्यानादपि तुल्यः । चित्रशक्तिकं च कर्म, तुच्छभोगमहाभोगकायसन्तापव्याध्यारोग्यादिचित्रफलदर्शनात्, तन्न कायसन्तापमात्रं चित्रशक्तिकस्यास्य क्षय उपपद्यते, अतिप्रसङ्गात्, आल्हादादपि तत्क्षयापत्तेः । दुःख्येव चैवं तपस्वी स्यात्, न चैतदुपपन्नम्, अभ्युपगमादिविरोधात्, अतपस्विनश्चैवं योगिनः स्युः, कायसन्तापाभावात्, न चैतदपि न्याय्यम्, अभ्युपगमादिविरोधादेव । अथ न कायसन्तापस्तप इति, अपि त्वन्यदेव, हन्तैवमपि न तदेकरूपं चित्रशक्तिकस्य कर्मणः क्षयायालम्, अन्यतमशक्तितोऽभावात् सर्वशक्तिविरोधासिद्धेः । अथ तपः कर्मशक्तिसङ्करक्षयकारीत्येकरूपादपि ततः क्षयः, ननु चैवमपि कथञ्चित्सुखेनैवाल्पेऽपि कर्मणि क्षीणे तदशेषक्षयापत्तिः, तत्साङ्कर्यान्यथानुपपत्तेः, तद्भावेनैव तत्क्षयाङ्गीकरणात् तदक्षये साङ्कर्यायसिद्धिरिति तपः कर्मक्षयवादोऽप्यबुधजनमनोहर एवेत्यपकर्णयितव्यः । न चास्मिन् सत्यपि मोक्षसौविहित्यम्, अनेकान्तोपद्रवानिवृत्तेः । तथाहि मुक्तोऽपि न मुक्त एवानेकान्तवादहानेः अपि त्वमुक्तोऽपीति नेदमपुष्कलमुपादेयफलप्रकर्षः तदन्यसाधारणत्वात्, इत्थं सापवादस्य संसारिष्वपि भावात्, तथाहि न वः संसार्यपि सर्वथा संसार्येव, एकान्तवादापत्तेः, अपि त्वसंसार्यपीति नेदमकृत्स्नं हेयानर्थोत्कर्ष इति यत्किञ्चिदेतत् । किञ्चानेकान्तवादिनो मानमपि न मानमेव, स्यात् मानमिति तत्त्वनीतेः, इत्थं तदाभासमपि, ततश्चैवं तदतदात्मके प्रमाणप्रमेयरूपे सर्वस्मिन्नेवास्मिन् वस्तुतत्त्वे विरोधभाजि अस्य तदतद्वादिनो निष्कलङ्कमतिसमुत्प्रेक्षितसन्न्यायानुसारतः सर्वमेव प्रमाणादि प्रतिनियतं न घटत इत्यलमत्रातिनिर्बन्धेन । (तथा चोक्तम्, "यः पश्यत्यात्मानं

अ०ज० पताका० ॥ ३ ॥

तत्रास्याहमिति शाश्वतः स्नेहः । स्नेहात् सुखेषु तृष्यति तृष्णादोषांस्तिरस्कुरुते ॥ १ ॥ गुणदर्शी परितृष्यन् ममेति तत्सा-
धनान्युपादत्ते । तेनात्माभिनिवेशो यावत्तावत् स संसारे ॥ २ ॥ आत्मनि सति परसंज्ञा स्वपरविभागात् परिग्रहद्वेषौ ।
अनयोः सम्प्रतिबद्धाः सर्वे दोषाः प्रजायन्ते ॥ ३ ॥ कर्मक्षयाद्विमोक्षः स च तपसस्तच्च कायसन्तापः । कर्मफलत्वान्ना-
रकदुःखमिव कथं तपस्तत्स्यात् ॥ ४ ॥ न स्वेच्छाप्रतिपत्त्या विशिष्टसुखभावतुल्यवृत्तित्वात् । इष्टौ प्रतीतिकोपस्तदन्यबन्धो
द्वयेऽपि समः ॥ ५ ॥ चित्रं च कर्मकार्यात् सङ्क्लेशादेव तत्क्षयोऽयुक्तः । दुःख्येव तपस्वीति च तदभावो योगिना
चैव ॥ ६ ॥ अन्यदपि चैकरूपं तच्चित्रक्षयनिबन्धनं न स्यात् । तच्छक्तिसङ्करक्षयकारीत्यपि वचनमात्रं तु ॥ ७ ॥ अक्लेशात्
स्तोकेऽपि क्षीणे सर्वक्षयप्रसङ्गो यत् । साङ्कर्यादेर्न्यायात् तद्भेदो ह्यन्यथा नियमात् ॥ ८ ॥ मुक्तो न मुक्त एव हि संसार्यपि
सर्वथा न संसारी । मानमपि मानमेव हि, हेत्वाभासोऽप्यसावेव ॥ ९ ॥ एवं सप्रतिपक्षे सर्वस्मिन्नेव वस्तुतत्त्वे ऽस्मिन् ।
स्याद्वादिनः सुनीत्या न युज्यते सर्वमेवेह ॥ १० ॥" इत्यादि ।) तदेवमेते मन्दमतयो दुस्तर्कोपहतास्तीर्थ्याः स्वयं नष्टाः
परानपि नाशयन्ति मन्दमतीनतः प्रतिविधीयते । तत्र यत्तावदुक्तं "कथमेकमेव घटादिरूपं वस्तु सच्चासच्च भवति," तदेतदा-
गोपालाङ्गनादिप्रसिद्धमनाशङ्कनीयमेव, यतस्तत्स्वद्रव्यक्षेत्रकालभावरूपेण सद्वर्तते परद्रव्यक्षेत्रकालभावरूपेण चासत् ततश्च
सच्चासच्च भवत्यन्यथा तदभावप्रसङ्गात् । तथाहि यदि तद्यथा स्वद्रव्यक्षेत्रकालभावरूपेण सदेवं परद्रव्यादिरूपेणापि स्यात्,
ततश्च तद्घटवस्त्वेव न स्यात्, परद्रव्यादिरूपेणापि सत्त्वात् तदन्यस्वात्मवत्, तथा यदि यथा परद्रव्यक्षेत्रकालभावरूपेणासदेवं
स्वद्रव्यादिरूपेणापि स्यात् इत्थमपि तद्घटवस्त्वेव न स्यात् स्वद्रव्यादिरूपेणाप्यसत्त्वात् खरविषाणवदित्येवं तदभावप्रसङ्गात्
सदसद्रूपं तदङ्गीकर्तव्यमिति । तथा च तद्द्रव्यतः पार्थिवत्वेन सत् नावादित्वेन, तथा क्षेत्रत इहत्यत्वेन न पाटलिपुत्रकादित्वेन,
तथा कालतो घटकालत्वेन न मृत्पिण्डादिकालत्वेन, तथा भावतः श्यामत्वेन न रक्तत्वादिनेति, अन्यथेतररूपापत्त्या तत्स्व-

रूपहानिप्रसङ्ग इति । द्रव्याद्यात्मकत्वं च घटस्य तैर्विनाऽभावात्, तथाहि न मृदादि द्रव्यमात्रमेव तथाविधक्षेत्राननुविद्धं ऋते तत्कालभावितां कृष्णादिभावशून्यं घटस्तथानुपलम्भात्, तत्तदन्यतममात्रत्वे तदितरवैकल्येन तत्स्वरूपानुपपत्तेः, विविक्तानामसम्भवात् सम्भवे ऽपि तन्मात्रत्वेन तद्द्रव्यत्वादिबुद्धिहेतुत्वतो घटबुद्ध्यभावप्रसङ्गः । न च पार्थिवद्रव्यत्वादिबुद्धिरेव घटबुद्धिस्तथाऽप्रतीतेरिति निर्लोठयिष्यामः । स्यादेतत्, स्वद्रव्यादिसत्त्वमेव परद्रव्याद्यसत्त्वं, तथा च घटवस्तुनः पार्थिवद्रव्यसत्त्वमेव अबादिद्रव्यासत्त्वं, इह क्षेत्रसत्त्वमेव पाटलिपुत्राद्यसत्त्वं, घटकालसत्त्वमेव मृत्पिण्डकालाद्यसत्त्वं, श्यामत्वसत्त्वमेव रक्तत्वाद्यसत्त्वमिति यथोक्तदोषानुपपत्तिरेव, एतदप्यसारम्, इत्थमपि कल्पनायां तदवस्तुत्वप्रसङ्गात् । तथाहि यदि पार्थिवद्रव्यसत्त्वमेवाबादिद्रव्यासत्त्वं, एवं तर्हि यथा तत्पार्थिवद्रव्यत्वेन सत् एवमबादिद्रव्यत्वेनापि स्यात् तत्सत्त्वाव्यतिरिक्तत्वात् तदितरासत्त्वस्य, यथा वाऽबादिद्रव्यत्वेनासत् तथा पार्थिवद्रव्यत्वेनापि स्यात् तदसत्त्वाव्यतिरिक्तत्वात् तत्सत्त्वस्य । एवं क्षेत्रादिष्वपि वाच्यम्, ततश्च तदितररूपापत्त्यादिना अवस्तुत्वप्रसङ्गः । आह कथं पार्थिवद्रव्यसत्त्वाद्यव्यतिरिक्तत्वेऽप्यबाद्यसत्त्वस्य पार्थिवद्रव्यसत्त्वादेरबाद्यात्मकत्वम् । उच्यते, तस्य सत्त्वाव्यतिरिक्ततया तद्रूपतापत्तेः न ह्यबाद्यसत्त्वमबादिसत्त्वरूपतापत्तिमन्तरेणासत्तां जहाति तत्तत्त्वानिवृत्तेः, तत्त्वतस्तदव्यतिरिक्तत्वाभावात् । तत्सत्त्वरूपतापत्तिरेव तत्तत्त्वानिवृत्तिरिति चेत्, न, युक्त्यनुपपत्तेः, पार्थिवद्रव्यसत्त्वादेरपि तदितरासत्त्वस्वभावत्वात् तथाप्रतीतेः, न च तदितरासत्त्वनिवृत्तौ तदभावेनास्येत्थं स्वभावत्वं युक्तम्, न ह्यसति चेतनात्वेऽणुश्चैतनास्वभावो नाम । एतेन पार्थिवद्रव्यसत्त्वादेः सत्त्वविशेषत्वात् तदतिरिक्तत्वेऽप्यबाद्यसत्त्वस्य पार्थिवद्रव्यसत्त्वादित्वमेवेत्येतदपि प्रत्युक्तमिति सूक्ष्मधिया भावनीयम् । अथोच्येत नहि नः किञ्चिदबाद्यसत्त्वं निरुपाख्यं नामास्ति यदपेक्षयाऽव्यतिरिक्तविकल्पोपन्यासेनावस्तुत्वापत्त्यात्मनो न्यायाभिज्ञता ख्याप्यते, अपि तु पार्थिवद्रव्यसत्त्वमेव विशिष्टमेकस्वभावमबाद्यसत्त्वमुच्यते, ततश्च यथोक्तदोषाभावाद् व्यर्थो विकल्पोपन्यासपरिश्रमः ।

एवं शेषेष्वपि भावनीयमिति, अहो दारुणो मोहः स्ववाचापि प्रतिपादयन्ननेकान्तं न प्रतिपद्यते, तथा च पार्थिवद्रव्यसत्त्वमेव विशिष्टमबाध्यसत्त्वमिति वक्ति न च सदसद्रूपं वस्तु प्रतिपद्यत इत्यपूर्वो विभ्रमः, नहि स्वपरसत्ताभावाभावोभयरूपतां विहाय वस्तुनो विशिष्टतैव सम्भवति । न च तथैनैव स्वभावेन पार्थिवद्रव्यत्वेन सद्वर्तते तेनैवाबादिद्रव्यत्वेनासत्, अभिन्ननिमित्तत्वे सत्येकत्र सदसत्त्वयोर्विरोधात्, तथाहि तेनैव स्वभावेन सच्चासच्चेति विरुद्धमेतत् । किञ्च सर्वथैकस्वभावत्वे तदेवाबाध्यसत्त्वमुच्यत इत्येतदप्ययुक्तम्, भिन्नप्रवृत्तिनिमित्तानुपपत्तेः, एकान्तैकस्वभावतायां हि तत्र स्वसत्ताऽसत्त्ववदबाध्यसत्त्वान्तराभावात्, न च भिन्नप्रवृत्तिनिमित्तमन्तरेण शब्दान्तरप्रवृत्तिर्न्याय्या, अतिप्रसङ्गात् इन्द्रशक्रपुरन्दरादिशब्दानामपीन्दनशकनपूर्दारणादिभिन्नप्रवृत्तिनिमित्तत्वात् । द्रव्येऽपर्यायशब्दवत् भिन्नप्रवृत्तिनिमित्तव्यतिरेकेणापि शब्दान्तरप्रवृत्तेरदोष इति चेत्, न, भिन्नप्रवृत्तिनिमित्तव्यतिरेकासिद्धेः, द्रव्यस्यानेकशक्तिसमन्वितत्वात्, शक्तिशक्तिमतोश्च भेदाभेदसंवित्तेः, अभ्यन्तरीकृतपर्याय एव शाब्दन्यायात् प्राधान्यतो द्रव्ये द्रव्यशब्दप्रवृत्तेः, तथाहि द्रवति गच्छति तांस्तान् पर्यायान् क्षरति चेति द्रव्यं तद्वच्च पर्येति द्रव्यात्मनेत्यपर्यायस्तदिति भिन्नं प्रवृत्तिनिमित्तम् । अबाध्यसत्त्वस्वभावमेव पार्थिवद्रव्यसत्त्वमिति चेत्, इष्टस्तर्हि तदनुवेधः पार्थिवद्रव्यसत्त्वमबाध्यसत्त्वस्वभावमबाध्यसत्त्वधर्मकं ननु स्वसत्त्वमात्रमिति, समाश्रितस्तर्हि मदीयोऽभ्युपगमः । स्वो भावः स्वभाव इति पार्थिवद्रव्यस्यैवात्मीया सत्ता अबाध्यसत्त्वं न धर्मान्तरमित्येकस्वभावतैवेति चेत्, न, ततः सदसत्प्रत्ययासिद्धेर्द्वयनिमित्ताभावात् अस्य चानुभवसिद्धत्वात् । तदेव तदितरविविक्तताविशिष्टं सत् सदसत्प्रत्ययनिमित्तमिति चेत्, न, विचाराक्षमत्वात्, तदितरविविक्ततायास्तदव्यतिरेकेण वस्तुतस्तन्मात्रत्वात् ततश्च सर्वथाभिन्ननिमित्तत्वे सदसत्प्रत्ययानुपपत्तिरन्यथा हेतुभेदेन फलभेदाभ्युपगमाविरोधः । तत्तदुभयजननैकस्वभावमिति चेत्, न, उभयोरुभयरूपतापत्तेः । असङ्कीर्णोभयजननैकस्वभावमिति चेत्, न, युक्त्यनुपपत्तेः असङ्कीर्णोभयभावे बलात् तत्स्वभावभेदप्रसङ्गात्, तथाहि । यतः

(स्वभावतो जातमेकं नान्यत् ततो भवेत् । कृत्स्नं प्रतीत्य तं भूतिभावत्वात् तत्स्वरूपवत् ॥१॥ अन्यच्चैवं विधं चेति यदि स्यात्किं विरुध्यते । तत्स्वभावस्य कार्त्स्न्येन हेतुत्वं प्रथमं प्रति ॥ २ ॥ कार्त्स्न्येन तस्य हेतुत्वे तत्र वीर्योपयोगतः । कुतोऽन्यभावो भावे वा सर्वतद्वीर्यतोऽभवः ॥ ३ ॥ सर्वतद्वीर्यतद्भावे सेतिकाजन्यतृप्तिवत् । तत एव न सान्यस्य तद्देशादन्यथा तु सा ॥४॥ कार्त्स्न्येनैवास्य तत्कर्तृ वीर्यं तस्यैव किन्तु न । युक्तस्ततोऽन्यभावोऽपि सेतिकाज्ञाततो नहि ॥ ५ ॥ नावधारणसामर्थ्याद्वस्तु तादात्म्यमुज्झति । उक्तावधारणेऽप्येकतृप्तये ह्युक्तसेतिका ॥ ६ ॥ नाकारणं यतः कार्यं नान्यकारणकारणम् । अन्यथा न व्यवस्था स्यात् कार्यकारणयोः क्वचित् ॥ ७ ॥ ततश्च कार्यनानात्वं सर्वथा कारणैकताम् । बाधतेऽनेकतायां च स्थितानेकस्वभावता ॥ ८ ॥ एतेनैकस्वभावोऽपि तत्स्वभावत्वतः परैः । य इष्टोऽनेकफलकृद्भावः सोऽपि निराकृतः ॥ ९ ॥ एको ह्यनेकजननस्वभावस्तद्विचित्रताम् । ऋते न युज्यते यस्मादुक्तदोषप्रसङ्गतः ॥ १० ॥ तथा दर्शनतोऽप्यस्य तत्स्वभावत्वकल्पना । अत एव स्थिरत्वादिसिद्धिसङ्गादसङ्गता ॥ ११ ॥ युक्त्या न युज्यते स्थैर्यं कया चैकस्वभावतः । नानाकार्यसमुत्पादः स्वात्मना चिन्त्यतामिदम् ॥ १२ ॥ यथाऽनेकस्वभावं तत्सर्वेषां सर्वदर्शिनाम् । करोत्यनेकं विज्ञानमिदमित्थं कथं न ते ॥ १३ ॥ स्वरूपमेव सर्वेषां सर्वज्ञानां तथाविधम् । विज्ञानं ननु तत्तेन तत्त्वतः क्रियते यतः ॥ १४ ॥ अतीतादेरसत्त्वेन न स्यात् ग्रहणमन्यथा । तस्यापि ज्ञानकर्तृत्वेऽतीतत्वादिविरोधतः ॥ १५ ॥) " न च पार्थिवद्रव्यसत्त्वप्रत्यय एवाबाद्यसत्त्वप्रत्ययः, तथाऽप्रतीतेः । असतोऽनुपाख्यत्वेन प्रत्ययहेतुत्वानुपपत्तिरिति चेत्, न, सदनुवेधेन सर्वथानुपाख्यत्वासिद्धेः, असत्प्रत्ययाविरोधाच्च, असदननुविद्धस्य च सतस्तन्मात्रत्वाद्विशेषानुपपत्तेरितरेतरानुवेध इति कुत एकस्वभावत्वसिद्धिः । स्यादेतत्तत्राबादिद्रव्यासत्त्वस्य परिकल्पितत्वात् यथोक्तदोषाभाव इति, सोऽयं गड्डुप्रवेशेऽक्षितारकाविनिर्गमन्यायः, तथाहि तत्राबादिद्रव्यासत्त्वस्य परिकल्पितत्वात् स्वसत्त्वासत्त्ववदसत्त्वात् तद्रूपेणाप्यस्तित्वप्रसङ्गोऽनिष्टं चैत-

द्धिति । स्यादेतत्पार्थिवद्रव्यसत्त्वव्यतिरिक्तमबाधसत्त्वं परिकल्पितं पार्थिवद्रव्यसत्त्वमेव पुनरबाधसत्त्वस्वभावमिष्यत एवेत्य-सोऽनपराध इति, अहो तुरन्तः स्वदर्शनानुरागः मत्युक्तमपि नावधारयति, यतो न च तथैव स्वभावेन पार्थिवद्रव्यत्वेन सत्तेनैवाबादिद्रव्यत्वेनासदित्यादि तदेवावर्त्तत इत्यलं स्वदर्शनानुरागाकृष्टचेतसा सह प्रसङ्गेनेति । अपरस्त्वाह सदसद्रूपं वस्त्वित्यत्रासत्पक्षे प्रसज्य प्रतिषेधो वा स्यात् पर्युदासो वा किञ्चात उभयथापि दोषः, तथाहि यदि सत्र भवतीत्यसत् साभि-धृतिमात्रं निरुपाख्यमसत् ततश्च तस्य प्रमाणगोचरातीतत्वाद्वस्तुधर्मत्वानुपपत्तिः अभ्युपगमे वा वस्तुन एव निरुपाख्यत्वप्र-सङ्गः, तथाहि न निरुपाख्यस्वभावं सोपाख्यं भवितुमर्हति । अथ सतोऽन्यदसत्सदन्तरमेवासदिति, एवमपि तस्य सदात्म-कत्वादेव सदसद्रूपत्वानुपपत्तिः, तथाहि न सत्सदन्तरात्मकमिति स चेतसो वक्तुं युज्यते, इत्येतदप्ययुक्तम्, भगवदर्हन्मता-परिज्ञानात् भगवदर्हन्मतं हि वस्त्वेव सदसद्रूपतयोभयात्मकं न सत्त्वाननुविद्धमसत्त्वं नाम तत्र यदपेक्षयैतदुभयरूपमिति । उक्तं च वादिमुख्येन, स्वपरसत्त्वव्युदासोपादानापोह्यं हि वस्तुनो वस्तुत्वम्, अतो यद्यपि सत्र भवतीत्यसत्तथापि परद्रव्यादिरू-पेण सतः प्रतिषेधात् तस्य च तत्रासत्त्वात् तत्स्वरूपसत्त्वानुवेधात् न निरुपाख्यमेव तदिति प्रसज्यप्रतिषेधपक्षोदितदोषाभावः, पर्युदासप्रतिषेधपक्षदोषस्त्वत्र व्यतिकरेऽनभ्युपगमादेव न नः क्षतिमावहति( एतदुक्तं भवति वस्त्वेव तत्सदसदात्मकं न तत्र स्वरूपसत्त्वपृथग्भूतं पररूपासत्त्वम्, न च पररूपासत्त्वासंपृक्तं स्वरूपसत्त्वम्, न चानयोरेकत्वमेव, अविगानतः सम्यगुभ-योपलब्धेः, न च नानात्वमेव, तद्व्यवस्थायोगात्, तथानुपलब्धेरित्यन्योन्यानुविद्धं भेदाभेदवृत्ति तत्स्वभावं विशिष्टमुभयमेव तत्, अन्यथा वस्तूनां वैशिष्ट्यानुपपत्तिरिति ) एतेन अबादेर्नियतदेशस्वरूपव्यतिरेकेण सर्वत्रासत्त्वात् तस्य च पार्थिवद्रव्य-सत्त्वेनानुवेधाभ्युपगमात् तद्व्याप्तेरस्य प्रायो विभुत्वप्रसङ्ग इत्येतदपि कुशाग्रीयबुद्धिपरिचोदितं परिहृतमवगन्तव्यम्, "वस्त्वेव तत्सदसदात्मकमित्यादिग्रन्थस्यान्यथा भावार्थायोगात् । अथवा विश्वजगदन्तर्गतानां सकलवस्तुसत्त्वानामेव तदसत्त्वानुवेधः,

अन्यथा स्वस्वरूपवत्तेषु तत्सत्त्वापत्तिः । न च वस्त्वन्तरेणाप्यनुवेध इष्यत इति न विभुत्वप्रसङ्गः । न च तदसत्त्वेनाननुवेधः तस्य, तदन्यानात्मकेनानुवेधात् । न चेत्थं तत्सदेशतापत्तिः, तदन्येषामेव तत्त्वनोऽतदात्मकत्वात्, न चात एव तत्सद्रूपतैव, असद्बुद्ध्यावगमात् । न चातदनुवेधतस्तथा तदसत्त्वप्रतीतिहेतुता, अन्यगतनिजासत्त्वेन व्यभिचारात् । तथाहि नान्यगतं तदसत्त्वं तत्रासत्त्वप्रतीतिकारणम् तेनाननुवेधादिति, एवमन्यदपि कुचोद्यमनया दिशा परिहर्त्तव्यमिति । ततश्चैवं न सर्वथा सत्त्वमसत्त्वपरिहारेण व्यवस्थितम् न चासत्त्वं सत्त्वपरिहारेण, न चानयोरविशेष एव भिन्ननिमित्तत्वात् । तथाहि स्वद्रव्यादिरूपेण सत् परद्रव्यादिरूपेण चासदित्युक्तं ततश्च यत एव सत् अत एवासत् परद्रव्यादिरूपासत्त्वे सति स्वद्रव्यादिरूपेण सत्त्वात् यत एव चासत् अत एव सत् स्वद्रव्यादिरूपसत्त्वे सति परद्रव्यादिरूपेणासत्त्वात् । अत एव चैकत्र सदसत्त्वयोः विरोधोऽपि न सम्भवति, भिन्ननिमित्तत्वात्, स्वद्रव्यपरद्रव्यादीनां सदसद्धेतुत्वात्, अनुभवसिद्धत्वाच्च, तथाहि स्वपररूपानुवृत्तव्यावृत्तरूपमेव तद्वस्त्वनुभूयते । स्यादाशङ्का स्वरूपाव्यावृत्तिरेव पररूपव्यावृत्तिरित्येषाप्ययुक्ता, विहितोत्तरत्वात् । यस्मादेवं तस्मात् समुत्सारितपक्षपातैर्न्यायविद्भिर्युक्तियुक्तत्वात् सदसद्रूपं वस्त्वङ्गीकर्त्तव्यमिति, आह च । "यस्मात्सत्त्वमसत्त्वं च न विरुद्धं मिथोद्वयम् । वस्त्वेकं सदसद्रूपं ननु तत्किं न युज्यते ॥ १ ॥" यदप्युक्तं सदसद्रूपं वस्त्वभ्युपगच्छता सत्त्वमसत्त्वं च वस्तुधर्मतयाभ्युपगतं भवतीत्येतदिष्यत एव यत्पुनरिदमुक्तं ततश्चात्रापि वक्तव्यं धर्मधर्मिणोः किं तावद्भेद इत्याद्यत्रापि सर्वथा भेदपक्षोदितोऽभेदपक्षोदितश्च दोषोऽनभ्युपगमतिरस्कृतत्वादेव न नः क्षतिमावहति, भेदाभेदपक्षस्त्वभ्युपगम्यत एव । आह नन्वत्रापि येनाकारेण भेदस्तेन भेद एवेत्यादिदूषणमुक्तम्, उक्तमिदमयुक्तं तूक्तम्, भेदाभेदपक्षे तदसम्भवात्, असम्भवश्चान्योऽन्यव्याप्तिभावेनास्य जात्यन्तरात्मकत्वात्, केवलभेदाभेदानुपपत्तेः, ततश्च येनाकारेण भेदस्तेन भेद एव येन चाभेदस्तेनाभेद एवेत्यत्यन्तपरित्यक्तानेकान्तवादविषयमेतत्, अभेदाऽननुविद्धस्य केवलभेदस्यासिद्धेः भेदाऽननुविद्धस्य चाभेदस्येति । यच्चोक्तमथ

येनैवाकारेण भेदस्तेनैवाभेद इत्यादि तदप्यनेकान्तवादानाकर्णनमूचकम् यतो नह्येकेनैवाकारेण भेदाभेदावित्यनेकान्तनीतिः, सर्वथैकनिमित्तत्वे भेदाभेदद्वयानुपपत्तेः, किन्त्वेकधर्मिप्रतिबद्धत्वेऽपि धर्माणां मिथो भेदाद्धर्मिधर्मभावेन भेदः, अन्यथाऽन्यतररूपापत्त्या तद्भावानुपपत्तिः, प्रतीतिबाधिता चेयं । मिथो भेदेऽपि चाशेषधर्माणां धर्मिणा व्याप्तेर्विशिष्टान्योन्यानुवेधतोऽभेदः, अन्यथा तस्येति सञ्ज्ञायोगात्, तद्धर्मिधर्मस्वभावत्वसङ्गस्यापि धर्मेभ्योऽन्यत्वे धर्मिणोऽसम्भवात्, ततश्च धर्माणामभ्यन्तरीकृतधर्मिस्वरूपत्वात् धर्मिणोऽपि चाभ्यन्तरीकृतधर्मस्वरूपत्वात् भेदाभेद इति । ✓प्रतीतिसचिवनिमित्तभेदे सति विरोधादित्यपि यदुक्तं तदुक्तिमात्रमेव, तथाहि यदि येनाकारेण भेदः कथं तेनैवाभेदः अथाभेदः कथं भेद इत्यस्य वचनस्योक्तवद्व्यपेतविषयत्वात् प्रकारान्तरेणभेदाभेदसिद्धेः । सर्वथा भेदाभेदवादिनस्तु तदसत्त्वापत्तिलक्षणो विरोधोऽपरिहार्य एव, तथाह्येकान्तत एव धर्मधर्मिणोर्भेदे धर्मिणो निःस्वभावत्वापत्तिः स्वभावस्य धर्मत्वात् तस्य च ततोऽन्यत्वादिति । स्वो भावः स्वभावस्तस्यैवात्मीया सत्तेति शब्दार्थे न निःस्वभावत्वापत्तिरिति चेत्, न, ज्ञेयत्वादिधर्माननुवेधे तदनवगतेः, तथापि तत्कल्पनेऽतिप्रसङ्ग इति । धर्माणामपि तदभावे निराश्रयत्वात् केवलानां ग्रहणानुपपत्तेस्तदितरानुवेधादभाव एवेति तदसत्त्वापत्तिः । एकान्ताभेदेऽप्यन्यतराभावतस्तन्नान्तरीयकत्वात् तद्व्यतिरेकेण तत्स्वरूपानुपपत्तेर्निर्बीजकल्पनासम्भवात्, अतिप्रसङ्गव्याहतेः । अन्यतरभावस्यैवान्यतरकल्पनाबीजत्वायोगात्, एकान्तैकस्वभावत्वहानेः, तथाविधैकस्वभावत्वस्य न्यायविरुद्धत्वात्, शक्तिभेदमन्तरेण कार्यभेदासिद्धेः, तदितरव्यावृत्तेरपि तत्त्वतस्तद्व्यतिरेकात्, तद्भेदे च तद्भेदोपपत्तेः, अभिधानभेदतो धर्मसिद्धिप्रसङ्गादन्यतरस्याप्यभाव एवेति तदसत्त्वापत्तिरेव । ✓एतेन "अथ येनाप्याकारेण भेदस्तेनापि भेदश्चाभेदश्चे"त्याद्यपि निराकृतमेव । अन्योऽन्यव्याप्तितो जात्यन्तरात्मकत्वेन भेदाभेदपक्षे तदसंभवात्केवलाकारानुपपत्तेः इतरेतरानुविद्धस्य च प्रश्नानर्हत्वादिति । ✓यच्चोक्तं, किं च भेदाभेदमभ्युपगच्छता अवश्यमेवेदमंगीकर्त्तव्य-

मिह धर्मधर्मिणोः धर्मधर्मितया भेदः स्वभावतः पुनरभेद इत्यादि, तदप्येकधर्मिप्रतिबद्धत्वेऽपि धर्माणां मिथोभेदात् धर्मधर्मिभावेन भेदः मिथो भेदेऽपि चाशेषधर्माणां धर्मिणा व्याप्तेर्विशिष्टान्योऽन्यानुवेधतोऽभेद इत्यादिना प्रत्युक्तम्, प्रकारान्तरेण भेदाभेदसिद्धेः। तथा चोक्तं। "नाभेदो भेदरहितो भेदो वाऽभेदवर्जितः। केवलोऽस्ति यतस्तेन कुतस्तत्र विकल्पनम् ॥ ॥ १ ॥ येनाकारेण भेदः किं तेनासावेव किं द्वयम्। असत्त्वात् केवलस्येह सतश्च कथितत्वतः ॥ २ ॥ यतश्च तत्प्रमाणेन गम्यते ह्युभयात्मकम्। अतोऽपि जातिमात्रं तदनवस्थादिदूषणम् ॥ ३ ॥ एवं ह्युभयदोषादिदोषा अपि न दूषणम्। सम्यग्जात्यन्तरत्वेन भेदाभेदप्रसिद्धितः ॥ ४ ॥ तेनानेकान्तवादोऽयमज्ञैः समुपकल्पितः। न युज्यते वचो वक्तुमिति न्यायानुसारिणः ॥ ५ ॥" अपरस्त्वाह सदसद्रूपं वस्त्वित्यत्र कथं धर्मधर्मिभावः, कथं च न स्यात्, सदसत्त्वयोर्धर्मत्वे तद्व्यतिरिक्तस्य वस्तुनोऽभावाद्धर्म्यसिद्धेः तद्धर्मिभावे वा वस्तुत्वेन तद्व्यतिरिक्तधर्मानुपपत्तेरिति। अत्रोच्यते, सदसत्त्वयोर्द्धर्मत्वे तत्समानपरिणामस्य वस्तुत्वाभिधानस्य धर्मित्वप्रतिज्ञानात् तस्य च कथंचित्सदसत्त्वाभ्यामन्यत्वाद्धर्मधर्मिभावः, तथाहि कथंचित्सदसत्त्वाभ्यामन्य एव तत्साधारणात्मा वस्तुत्वपरिणामस्तथानुभवसिद्धत्वात् वस्त्वित्येकरूपतया प्रतीतेः। न चेयं तदुभयमात्रनिबन्धनैव, प्रतिभासभेदात्, एवमपि तन्निबन्धनत्वाभ्युपगमेऽतिप्रसङ्गात्, रूपमात्रादेव तद्रसादिप्रतीतिसिद्धेः। न चैतदतन्त्रानुपाति, तुल्यांशस्य द्रव्यत्वाभ्युपगमात्, अस्य च तद्भावोपपत्तेरिति, तद्धर्मिभावेऽपि वस्तुत्वेन चेतनत्वाचेतनत्वमूर्त्तत्वामूर्त्तत्वज्ञेयत्वप्रमेयत्वादिधर्मसिद्धेर्द्धर्मधर्मिभावोपपत्तिरेव, न च सदसती एव चेतनत्वादि, तन्मात्रतत्त्वे सर्वत्र तद्भावप्रसङ्गात् साङ्कर्येण चेतनत्वाद्यभावः, न च विशिष्टे सदसती एव, तत् भेदकमन्तरेण विशिष्टत्वासिद्धेः तन्मात्रत्वाविशेषादिति कथंचित्तदतिरिक्तचेतनत्वादिसिद्धिरन्यथा तज्ज्ञानायोगात् ( निर्विषयत्वात् इति प्रत्यन्तरे ) शक्तिभेदमन्तरेणैकतोऽनेककार्यासिद्धेरिति। एवमितरेतरानुविद्धतुल्येतराऽनेकान्तात्मकत्वे वस्तुनः प्रतिपत्त्यनुरोधतस्तथा धर्मधर्मिभावो न विरुद्ध्यत इति।

अ०ज० पताका० ॥ ७ ॥

यदप्युक्तं संविन्निष्ठा विषयव्यवस्थितयः न च सदसद्रूपं वस्तु संवेद्यते उभयरूपस्य संवेदनस्याभावादित्यादि, तदप्यसाम्प्रतम्, उभयरूपस्य संवेदनस्यापि च वस्तुत्वात् तथा युक्तिसिद्धेश्च । तथाहि संवेदनं पुरोऽवस्थिते घटादौ तद्भावेतराभावाध्यवसायरूपमेवोपजायते तद्भावमात्रस्येतराभावाननुविद्धस्याभावापत्तितस्तदनुवेधे सति वस्तुनि सन्मात्रप्रतिभास्येव तत्त्वतस्तत्प्रतिभासि सम्पूर्णार्थाऽप्रतिभासनान्नरसिंहे सिंहसंवेदनवत्, न चैतदुभयप्रतिभासि न संवेद्यते, तदन्यविविक्तताविशिष्टस्यैव संवित्तेस्तदन्यविविक्तता चाभाव इति सूक्ष्मधिया भावनीयम् । तदेवासहायं तदन्यविविक्तमिति चेत्, को वा किमाह किन्तु तदेवासहायत्वं सहायाभावं भेदकमन्तरेण ससहायस्यैव न युज्यत इति ब्रूमः । असहायं च घटोऽयं न पटादीति क्षयोपशमानुरूपमपरित्यक्तान्योऽन्यगर्भं संवेदनमाविद्वदंगनादि-प्रतीतमित्यविषयोऽयं विवादस्य, न चैतदनर्थजम्, तद्भावभावित्वोपलब्धेः तदन्यस्य तु तदाभासत्वात् तस्यापि च कदाचित्तथाविधानुभवनिबन्धनत्वेनानिमित्तत्वायोगादिति । अत्राह । अस्त्येतदुभयविधं संवेदनं नास्यापह्नुतिरास्थीयते किन्त्वेतदपास्तकल्पनानुबन्धेन संवेदनेनैकस्वभाव एवात्रबुद्धे बोध्ये तदनुभवसामर्थ्यसमुत्थापितं विकल्पद्वयं न पुनर्भावा-भावात्मकवस्तुप्रभवमिति न सूक्ष्मधिय आस्थामनोरथं पूरयंति यतोऽभावस्य कृत्यक्रियासूपरतव्यापारतयाऽभावत्वम् यद्यसावपि कार्यक्रियासु कक्षां बध्नीयात् को भावादभावस्य भवता विशेषो दर्शितः स्यादतो व्युपरतेऽक्षव्यापारेऽर्थ परिच्छेदानुभवसंस्कारप्रसूतो नास्तिताविकल्पः स्वातन्त्र्यं परिहरतीति । अत्रोच्यते, तदनुभवसामर्थ्यसमुत्थापितं विकल्प-द्वयमित्यनवद्यमेव, किन्तु न तद्द्वयनिमित्तस्वभावतामन्तरेणास्मात् द्वयप्रसूतिः, हेत्वभेदेपि फलभेदाभ्युपगमेऽभ्युपगम-विरोधात् । उपादानहेत्वभेदे सति सविरोधो, न च तत्सामर्थ्यमुपादानमस्य, अहेतुकं तर्ह्येतत्सौत्रान्तिकपक्षे, तदपरस्या-भावात् तस्यैव वासनादित्वात्, न च तत्त्वतस्तन्नीतावुपादानेतरहेत्वोर्भेदसिद्धिः, हेतुलक्षणाविशेषात्, विशिष्टलक्षणायोगाच्च ।

न चासाधारणादिहेतुतया तत्सिद्धिः, आद्यस्यासंभवात् एकस्यैवानेककार्यकृत्त्वात् सर्वबुद्धैर्ज्ञैतेः, अन्यथा तद्तत्त्वप्रसंगः । स्वभावभेदमन्तरेण चाधिकृतसामर्थ्यस्यापि तदुभयनिमित्तत्वानुपपत्तेः तदेकत्वापत्तिः । तथाहि येन स्वभावेन तदेकस्य निमित्तं तेनैवापरस्येति तद्वत्तदितरस्यापि तत्त्वम्, तत्तत्त्वान्यथायोगात्, तदुभयनिमित्तत्वैकस्वभावत्वे चित्रतया तद्भेद-सिद्धेरिति भावाभावात्मकवस्तुप्रभवमेव तद्विकल्पद्वयम्, पारम्पर्येण तन्निमित्तत्वात् अतोऽत्यन्तसूक्ष्मधियः किं नास्था-मनोरथं पूरयन्तीति वाच्यम् । यदपि चोक्तं यतोऽभावस्य कृत्यक्रियासूपरतव्यापारतयाऽभावत्वमिति, एतदपि न नो बाधायै, पररूपेणार्थक्रियाकरणात् तद्रूपस्य च तत्राभावात् । ततश्च यद्यसावपि कार्यक्रियासु कक्षां बध्नीयात् को भावाद्-भावस्य भवता विशेषो दर्शितः स्यादिति, एतदप्यत्रानवकाशमेव, तथा कार्यक्रियाऽकरणादिति । अतो व्युपरतेऽध्यक्षव्या-पारे ऽर्थपरिच्छेदानुभवसंस्कारप्रभूतो नास्तिताविकल्पस्तत्प्रभूतत्वादेव कथं स्वातन्त्र्यं परिहरतीति चिन्तनीयम् । अन्यथा-भूतेऽर्थे तथापरिच्छेदानुभवसंस्कारानुपपत्तेः, अतथाभूताच्च ततो न नास्तिताविकल्पप्रसूतिरिति भावनीयम् । एतेन यदि प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव लब्धप्रतिष्ठं तासामेवावगमो युक्तस्तत्र व्यापारसम्भवात् अव्यापारेऽपि परिच्छेदे रूपप्रवृत्तेऽपि रसावसायोऽशक्यपरिहारः समापद्येतेति यदुच्यते परैस्तदपि प्रतिक्षिप्तमिति, पदार्थमात्राणा-मेवोक्तवद्भावाभावात्मकत्वात्, अन्यथा तन्मात्रतानुपपत्तेः, इतरेतराभावात्मकत्वे तत्तद्भावसिद्धेः । ततश्च प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव लब्धप्रतिष्ठं तासामेवावगमो युक्तस्तत्र व्यापारसम्भवादित्यत्राविसंवाद एव, किन्तु यथावस्थितानामवगमे कथमेकरूपतावगमस्येति चिन्तनीयम् । अभावे व्यापाराभावादिति चेत्, न, भावानुविद्धत्वेन तस्य व्यापाराभावासिद्धेर्यथा-वस्थितार्थप्रकाशनस्वभावत्वात्, तासां च तथावस्थितत्वात्, अन्यथा तद्ग्रहणायोगात् । एवं चाव्यापारेऽपि परिच्छेदे रूपप्रवृत्तेऽपि रसावसायोऽशक्यपरिहारः सम्पद्येतेत्येतदुक्तिमात्रम्, अभिमतविषये व्यापारस्य दर्शितत्वात् । न चैवमन-

अ० ज० पताका० ॥ ८ ॥

भिमते रसादावसौ, तस्य तत्प्रकाशनस्वभावत्वासिद्धेरिति न तत्र रसावसायापत्तिरेव कुतोऽस्याशक्यपरिहारतेति । अतो भावमात्रस्यैवाभावत्वानुपपत्तेः, लोकानुभवयुक्तिविरोधात्, अन्यविवेकविशिष्टतायाश्च परपक्षेऽयोगात्, तुच्छत्वेन तस्य तत्र सम्बन्धानुपपत्तेः, तादात्म्यतदुत्पत्त्यभावात्, विवेकस्य वस्तुताशक्तेः, अप्रतिबद्धस्य च विशेषणत्वायोगात् अतिप्रसङ्गात्, उभयरूपमेव तदिति प्रतिपत्तव्यम्, अन्यथा तदनुपपत्तेरिति । आहैवमप्यस्तिनास्तीति विकल्पौ स्वस्वरूपनियतौ न युज्येते तत्त्वतः शबलवस्तुबलोत्पत्तेरिति, उच्यते, को वा किमाह, किन्तु नेमौ स्वस्वरूपनियतावेव क्षयोपशमभेदात् प्रधानोपसर्जनभावत इतरेतराक्षेपेण प्रवृत्तेरिति । उक्तं च, " अयमस्तीति यो ह्येष भावे भवति निश्चयः । नैष वस्त्वन्तराभावसंवित्त्यनुगमादृते ॥ १ ॥ नास्तीत्यपि च संवित्तिर्न वस्त्वनुगमं विना । ज्ञानं न जायते किंचिदुपष्टम्भनवर्जितम् ॥ २ ॥ " इति । एतेन यौगपद्यमपि प्रत्युक्तम्, क्षयोपशमवैचित्र्यादिति । यच्चोक्तं न च कार्यद्वारेणापि सदसद्रूपं वस्तु प्रतिपत्तुं शक्यते यतो नोभयरूपं कार्यमुपलभ्यत इत्यादि । एतदप्यनवकाशम्, वस्तुस्थित्योभयरूपस्योपलम्भस्य साधितत्वात् । न च तत् कार्यकरणे प्रवर्त्तमानं केनचिदाकारेण करोति केनचित् न करोति एकस्य करणाकरणविरोधादित्याद्यप्यसारम्, विरोधासिद्धेः । तथाहि पर्यायात्मना करोति द्रव्यात्मना न करोतीति कुत एवास्य करणाकरणविरोध इति । अथवा स्वकार्यकर्तृत्वेन करोति कार्यान्तराकर्तृत्वेन न करोति, अतः केनचिदाकारेण करोति केनचित् न करोतीति कोऽत्र विरोधः । न च स्वकार्यकर्तृत्वमेव कार्यान्तराकर्तृत्वम्, यदि स्यात् यथा स्वकार्यं करोति एवं कार्यान्तरमपि कुर्यात् कर्तृत्वानन्यत्वादकर्तृत्वस्य विपर्ययो वा ततश्चाकारणत्वमिति । स्यादेतत्, किं हि नाम कार्यान्तराकर्तृत्वमन्यत् यदाश्रित्याऽनन्यत्वयुक्त्यनुसारेणाकारणत्वं प्रतिपाद्यते, किन्तु स्वकार्यकर्तृत्वमेवैकस्वभावं कार्यान्तराकर्तृत्वमिति, हन्त तर्हि, येनैव स्वभावेन करोति तेनैव न करोतीत्येतदापन्नमेवं चाभिन्ननिमित्तत्वे सत्येकत्रकर्तृत्वाकर्तृत्वयोर्विरोध इति, तथाहि तेनैव स्वभावेन करोति न करोति चेति व्याहत-

मेतत् । एकस्वभावस्यैकत्रैवोपयोगात् । कार्यान्तराकर्तृत्वं तत्र परिकल्पितमिति चेत्, एतदप्यमनोहरम्, कुतः, कार्यान्तराकर्तृत्वस्य तत्र परिकल्पितत्वाद्वस्तुतोऽसत्त्वात् तद्भावापत्त्या कार्यान्तरभावप्रसङ्गात् । अथाशङ्का स्वकार्यकर्तृत्वव्यतिरिक्तं कार्यान्तराकर्तृत्वं परिकल्पितं स्वकार्यकर्तृत्वमेव पुनः कार्यान्तराकर्तृत्वस्वभावमभ्युपगम्यत इति, एषाप्ययुक्ता, दत्तोत्तरत्वात्, तथाहि येनैव स्वभावेन करोति तेनैव न करोतीत्येतदापन्नमित्यादि तदेवावर्तते । अनेनैव सर्वात्मना च करणे तद्भावरूपमेव स्यादित्यादि प्रतिक्षिप्तम्, अभावस्य वस्तुधर्मत्वात्, कथञ्चिदव्यतिरेकात् कार्यान्तराकारणत्वादिति । तस्माद्व्यवस्थितमेतत्सदसद्रूपं वस्तु । तथा चोक्तम् । "यस्मात् प्रत्यक्षसंवेद्यं कार्यतोऽप्यवगम्यते । तस्मादवश्यमेष्टव्यं वस्त्वेकमुभयात्मकम् ॥" इति । अपरस्त्वाह ननु च वस्तुनः स्वरूपेण सत्त्वं पररूपेण चासत्त्वमित्येतदिष्यत एवेति सिद्धसाध्यता, एतदप्ययुक्तम्, स्वमतविरोधात् । तथाह्येवमिच्छता वस्तुन एव सत्त्वमसत्त्वं च धर्मावित्येष्टव्यं, वक्तव्यं च धर्मधर्मिणोरन्यत्वमनन्यत्वमन्यानन्यत्वं चेति, किञ्चातः, यद्यन्यत्वमवस्तुत्वादिप्रसङ्गः, कथं, इह च वस्तुधर्मव्यतिरिक्तं तच्च स्वरूपेण सत्पररूपेण चासदित्यभ्युपगमाद्धर्माणां च परत्वात् तद्रूपेणाऽसत्त्वादवस्तुत्वप्रसङ्गः । न च तत्र प्रक्रान्तधर्मव्यतिरिक्तमपि स्वरूपेण सत् पररूपेण चासत्; अत्यन्ताभावप्रसङ्गादित्युक्तदोषापत्तिरेव । नापत्तिः, तस्य यथोदितत्वानुपपत्तेः । अथ कीदृक्तादिति कथनीयम् । अव्यपदेशार्हमिति चेत्, न, स्ववचनविरोधात्, अधिकृतव्यपदेशेन व्यपदेशात्, अन्यथा अव्यपदेशार्हमिति शब्दाप्रवृत्तेः । सच्छब्दादिव्यपदेशार्हं न भवतीति चेत्, किमत्र क्षुण्णमिति वाच्यम्, यतो न तत्सन्नाप्यसदिति चेत्, सदसत्तर्हि नियमतः, एतदपि नैव तत्त्वत इति चेत्, किं तदन्यदन्यतोऽतिरिक्तम्, तथाविधबुद्धिग्राह्यमिति चेत्, तत्रापि बुद्धिरिति न्यायातीतमेतत् । तथाहि तन्न सन्नासन्नसदसद् बुद्धिगोचरश्चेत्यद्भुतमेतत्, स्वकार्यसत्त्वाभ्युपगमे च व्यर्थोऽपरयोगकल्पना, नियतरूपादितया च स्वपररूपसत्त्वासत्त्वदोषोऽनिवारितप्रसर एवेति यत्किञ्चिदेतत् । एवं धर्माणामपि वस्तुव्यतिरिक्तत्वात् स्वरूपेण

सत्त्वं पररूपेणासत्त्वमिति धर्मान्तरप्राप्तिः, तत्राप्ययमेव न्याय इत्यनिष्ठा, स्यादेतन्न धर्माणां धर्मान्तरमिष्यते अपि तु त एव स्वरूपेण सन्ति पररूपेण च न सन्तीति न तद्विलक्षणे सदसत्त्वे इत्येतदप्यसमीचीनम्, वस्तुन्यपि समानत्वात्। अङ्गीकरणे च धर्माभावप्रसङ्गेनाभ्युपगमविरोधात्, तद्भावेऽपि तस्येति सम्बन्धानुपपत्तेः। समवायभावात् कथमनुपपत्तिरिति चेत्, न, तस्यासिद्धत्वात् पदार्थान्तरत्वेन समवायिकल्पत्वात्, अन्यसमवायव्यतिरेकेण तत्सम्बन्धानुपपत्तेः। अभ्युपगमे च तत्राप्ययमेव वृत्तान्त इत्यनवस्था। स्वसमवायिसम्बन्धकस्वभावद्वयाङ्गीकरणे च ततस्तस्य व्यतिरिक्तेतरविकल्पदोषाशनिरविवारितप्रसरः। स इह प्रत्ययगम्य इति चेत्, न, तस्येह समवायिषु समवाय इति व्यभिचारोपलब्धेः। प्रतिनियतधर्मिधर्मस्वभावस्तत्सम्बन्ध इति चेत्, न, तत्स्वभावस्यापि धर्मत्वाद्धर्म्यात्मभूतत्वानुपपत्तितो वाङ्मात्रत्वात्, आत्मभूतत्वे च भेदाभ्युपगमविरोधः। अथानन्यत्वं तयोः, तद्व्यवस्थायोगः अन्योन्यात्मकत्वेनेतरानिराकरणात्, अनिराकरणेऽपि सदसत्त्वयोरेकत्वेन तद्यथा स्वरूपेण सदेवं पररूपेणापि स्यादित्याद्युक्तम्, असम्भविनौ च निराधारौ धर्माविति यत्किञ्चिदेतत्। अथान्यानन्यत्वम्, अतोऽनेकान्तवादाभ्युपगमादेकान्तवादिनः स्वमतविरोध इत्यलं प्रसङ्गेन ॥ इति प्रथमपरिच्छेदः ॥

✓यच्चोक्तं एतेन नित्यानित्यमपि प्रत्युक्तमवगन्तव्यं विरोधादेवेत्यादि तदपि न सम्यक्, प्रमाणतस्तथावगमात्, तथाह्यध्यक्षेण नित्यानित्यमेव तदवगम्यते, अन्यथा तदवगमाभावप्रसङ्गात्, तथा च यदि तदप्रच्युतानुत्पन्नस्थिरैकस्वभावं सर्वथा नित्यमभ्युपगम्यते एवं तर्हि, तत् विज्ञानजननस्वभावं वा स्यात्, अजननस्वभावं वा। यद्याद्यः पक्षः, एवं सति सर्वत्र सर्वदा सर्वेषां तद्विज्ञानप्रसङ्गः तस्यैकस्वभावत्वान्न चैतदेवं, क्वचित् कदाचित् कस्यचिदेव तद्विज्ञानभावात्। न च सर्वथैकस्वभावस्य देशादिकृतो विशेष इति कल्पना युज्यते, तद्भावेऽनित्यत्वप्रसङ्गात्। सहकारिणमपेक्ष्य जनयतीति चेत्, न, एकान्तनित्यस्यापेक्षाऽयोगात्। तथाहि सहकारिणा तस्य कश्चिद्विशेषः क्रियते नवेति वाच्यम्, यदि क्रियते, स किम-

र्थान्तरभूतोऽनर्थान्तरभूतो वेति, यद्यर्थान्तरभूतस्तस्य किमायातम् । स तस्य विशेषकारक इति चेत्, न, अनवस्थाप्रसङ्गात् । तथाहि स विशेषस्ततो भिन्नोऽभिन्नो वेति तदेवावर्तत इत्यनवस्था, अथानर्थान्तरभूतः स, विद्यमानोऽविद्यमानो वा, यदि विद्यमानः कथं क्रियते करणे वाऽनवस्थाप्रसङ्गः, सकृत्करणेऽपि विद्यमानत्वाविशेषेण भूयोभूयः करणमित्यनवस्था । अथाविद्यमानः, व्याहतमेतत्ततोऽनर्थान्तरभूतोऽविद्यमानश्चेति । करणे वाऽनित्यत्वापत्तिरिति, तथाहि तस्मिन्क्रियमाणे पदार्थ एव कृतः स्यात् तदव्यतिरिक्तत्वात् तस्य । अथ माभूदयं दोषो न क्रियत इत्याश्रीयते, न तर्हि स तस्य सहकारी, अकिञ्चित्करत्वात्, अकिञ्चित्करत्वेऽपि सहकारित्वेऽतिप्रसङ्गः, तथाहि यदि कञ्चनविशेषमकुर्वन्नपि स तस्य सहकार्यभ्युपगम्यते सर्वभावानामेव तत्सहकारित्वप्रसङ्गः, तद्विशेषाकरणेनाविशेषादिति व्यर्था सहकारिकल्पना । अथोच्येतैवंभूत एव तस्य वस्तुनः स्वभावो येन विशेषाकारकमपि प्रतिनियतमेव सहकारिणमपेक्ष्य कार्यं जनयतीति एतदपि मनोरथमात्रम्, विकल्पानुपपत्तेः, तद्धि यदाभीष्टसहकारिसन्निधौ कार्यं जनयति तदाऽस्यानन्तरोदितसहकार्यपेक्षालक्षणः स्वभावो निवर्तते नवेति वाच्यम्, यदि निवर्तते अनित्यत्वप्रसङ्गः, स्वभावनिवृत्तौ स्वभाविनोऽपि तदव्यतिरेकेण तद्वदेव निवृत्तेः, अथ न निवर्तते, कार्याजननप्रसङ्गस्तत्स्वभावानिवृत्तेः पूर्ववत्, तथाहि य एव तस्य कार्याजननकाले स्वभावः जननकालेऽपि स एवेति कथं जनयति कथं वा न पूर्वमपीति चिन्त्यम् । तेन सह जननस्वभावत्वात् तद्भावे जनयति तदभावाच्च न पूर्वमपीति चेत्, न, अविचारितरमणीयत्वात्, तेन सह तज्जननस्वभावत्वस्यापि नित्यत्वे सति सदा तज्जननप्रसङ्गात्, अन्यथाविकृतस्वभावस्य नित्यत्वानुपपत्तेः । तथाहि यदि सदा तेन सह तज्जननस्वभावं किं न जनयति, अजनयद्वा कथं सदा तत्स्वभावमिति । ततश्च यदा यद्भवति तदा तेन सह तज्जननस्वभावं न तु सदेत्यवश्यमङ्गीकर्तव्यम्, अन्यथा सदा तस्यापि भावापत्तिः सदा तेन सह तज्जननस्वभावत्वादिति, एवं च

अ० ज०
पताका०
॥ १० ॥

स्वभावभेदे कथमेकान्तनित्यतेति चिन्त्यम् । स्यादेतन्न तत्र स्वभावभेदः आकालमपि तस्य तथैकस्वभावत्वात्, तथाह्याकालमविचलितस्वभावमेवेदमित्थंविधं येन तत एव तत्सहकारिसन्निधावेव तदैव तदैव तस्यैव तस्यैवावस्थासंवेदनादेर्भावः, तथा च सति तदनिवृत्तावपि न पूर्ववत्तद्भावः, तस्य सहकारिणस्तदैवाभावाभावात्, न च पूर्वमपि भावः, तस्यैवाभावात्, न च तदुदयेऽपि तन्निवृत्तिः, तथास्वभावत्वात् । न च पुनस्तस्यैव करणम्, तथास्वभावत्वादेव, किमेतदेवं, अचिन्त्योऽपर्यनुयोगार्हः स्वभाव इति । अहो दुरन्तः स्वदर्शनानुरागः एवमपि मिथो विरुद्धं भावयति तदुदयेऽपि तन्निबन्धनस्य सतो न तस्य निवृत्तिः, अविकलतथात्वे च न पुनस्तस्यैव करणमिति व्याहतम् । यद्यनिवृत्तिः कथमकरणं, अकरणं चेत् कथमनिवृत्तिः, यदेव तत्कृतं न च भूयः करिष्यति तदेव तदैव तत्करणस्वभावो जरयेव यौवनं तदकरणस्वभावेनापनीतः, अन्यथा तद्भावेन बलात् तत्फलप्रसङ्गः, न ह्यग्निरनपगते दहनस्वभावे न दहति स्वभावापगमे च नियतमनित्यता, तथाप्येकदाह्यदहने तद्दहनादाह्यान्तरदहनाच्चादोष इति चेत्, न, सर्वथा स्वभावभेदमन्तरेणोक्तानुपपत्तेः, न च येनैव स्वभावेनैकं दाह्यं दहति तेनैव दाह्यान्तरम्, तस्य तथा तदनियतत्वे दाह्यान्तरवत्तदा तद्दहनप्रसङ्गात्, नियतत्वे च तद्दहनादहनयोरन्यत्र तदसिद्धेः स्थितः कथञ्चित्स्वभावभेद इति, आकालमपि तस्य तथैकस्वभावत्वमनेककार्यभावादेर्न सन्न्यायसङ्गतमिति सूक्ष्मधिया भावनीयम्, इत्येवं तावदेकान्तनित्यपक्षे विज्ञानादिकार्यायोगात् तदवगमाभाव इति । अथापि प्रकृत्यैकक्षणस्थितिधर्मकमेकान्तानित्यमभ्युपगम्यते, एवमपि विज्ञानादिकार्यायोगात् तदवगमाभाव एव तदभावभाविनो विज्ञानस्य तत्कार्यत्वानिश्चयात्, न च सर्वथैकक्षणस्थितिधर्मकः सन्नेव युक्तः, द्वितीयादिक्षणास्थित्यभावे सति तत्क्षणस्थितिधर्मकत्वायोगेन तदन्यत्वादिविकल्पानुपपत्तेः । स्यादेतत् द्वितीयादिक्षणास्थितौ प्रथमक्षणस्थितेरभावाद्भावे वा तदनुपपत्तेः प्रतियोग्यभावात् तदन्यत्वादिविकल्पानुपपत्तिः, तथाहि द्वितीयक्षणे तदेव न भवतीति, उक्तं

च, "न तत्र किञ्चिद्भवति न भवत्येव केवलमिति । नन्वेवमपिभवनादूर्ध्वमभवनात् तत्कादाचित्कत्वतस्तदुत्पत्तेरत एव नाशाद्भवनोन्मज्जनप्रसङ्गः ।"स्यादेतन्न भवतीति भवनक्रियाप्रतिषेधमात्रमहेतुकमदस्तत्कथमस्य कादाचित्कत्वादि । उच्यते भवनकादाचित्कतया तत्पूर्वकत्वेन तद्धेतुत्वोपपत्तेः, अन्यथा भवनेऽप्युत्पत्त्याद्यभावस्तस्याप्यभवनक्रियाप्रतिषेधमात्रत्वात् उभयत्र तदतिरिक्तक्रियाऽभावात्, सत्स्वभावादिजन्याजनकत्वेन हेत्वयोगतो ऽहेतुकत्वोपपत्तेश्च, न चायं भवनक्रियाप्रतिषेधो ज्यायान्, विकल्पानुपपत्तेः स हि भवनस्वभावस्याभवनस्वभावस्य वा क्रियेत, न तावद्भवनस्वभावस्याशक्यत्वात्, अन्यथा भवनस्वभावत्वविरोधात्, अभवनस्वभावभवनक्रियाप्रतिषेधे तु प्रयासवैयर्थ्यं भवनापत्तिर्वेत्येवं च तदेव न भवतीति वाङ्मात्रमेतत्, शब्दार्थानुपपत्तेश्च । तथाहि तदेवेति भवनस्वभावं परामृश्य न भवतीत्यभिदधतः शब्दार्थविरोधः । यदा न भवति न तदा भवनस्वभावमिति चेत्, अभवनस्वभावं तर्हि न भवतीति तदेवेति न शोभन उपन्यासः । तत्क्षणभवनस्वभावमिति चेत्, कथं द्वितीयक्षणे न भवति । एकक्षणभवनस्वभावमिति चेत्, न ह्यसावपि नैकः । तदेकक्षणभवनस्वभावमिति चेत्, नासौ तदतिरेकेण कश्चिदिति निबन्धनाभावतो यत्किञ्चिदेतत् । एवं च तदतिरिक्तोत्पत्त्यभावादविशिष्टभवनानन्तरमभवनमिति प्राप्तं तथा च सति क्षणिकत्वेऽप्यनिश्चयः तत्कादाचित्कतया तु तदुत्पत्त्याद्यपरिहृतमेव । न नश्वरमभवनं तुच्छत्वादिति चेत्, भवनेऽप्यतुच्छतया समानमेतत्, न समानम् तस्याभवनविरोधात्, अभवनस्य भवने को विरोधो, नीरूपस्य सरूपतापत्तिरिति चेत्, सरूपस्य कथं नीरूपतापत्तिरिति वाच्यम्, स्वहेतोस्तत्स्वभावभावादिति चेत्, अभवनस्यैवं स्वभावभवनेऽपि को दोषः । हेत्वभावनिःस्वभावते इति चेत्, न, तद्भवनस्यैव तद्धेतुत्वात् तद्भावभावित्वात् भावाभवनस्याभावभवनात् तुच्छतया तद्भावसिद्धेः, अन्यथा तन्नाशायोगादिति । न च तन्निःस्वभावमेव, तुच्छज्ञेयस्वभावत्वात्, अन्यथा तज्ज्ञानानुपपत्तेः तदेव न भवतीत्यज्ञातोक्तप्रसङ्गात् तज्ज्ञानेऽभवनाज्ञानात् कालभेदेन तदतत्त्वादिति । तस्यैव क्ष-

णादूर्ध्वमभवनस्वभावत्वात् प्रत्यक्षेण तथा ग्रहणात् यथार्थे तत्प्रवृत्तेः अभवनज्ञानादुक्तदोषाभाव इति चेत्, न, विहितोत्तरत्वात् कालभेदेन तदतत्वादन्यथा तदनुपपत्तेः भाविनश्चेन्द्रियेणाग्रहणात् अतिप्रसङ्गात् नीरूपत्वाच्च, न चानेन कश्चिद्भवनवदभवनग्रहः, तथा निश्चयाभावात्। न च निरंशानुभवभावेऽपि विभ्रमात् तदभावः, भवननिश्चयस्याप्यभावापत्तेः। न च तन्निबन्धनानुभवे न विभ्रमः, तस्यैव तत्त्वात्। न चैकस्य कचिद्विभ्रमः कचिन्नेति, एकत्वविरोधात्। न चान्ते अभवननिश्चयात्तद्गतिः, तत्रापि तदयोगात्, न च कपालभवननिश्चय एव घटाभवननिश्चयः, तदभवनस्य निरुपाख्यत्वात्, न च तद्द्वारेण, तेन तस्य प्रतिबन्धासिद्धेः, न च तदभवनधर्मकमेव कपालभवनम्, अनभ्युपगमादिति, तत्तुच्छत्वेऽपि नश्वरत्वादिसिद्धिः। उत्पादादिमत्वे भवनाभवनयोरभेद इति चेत्, न, तुच्छेतरत्वविशेषात् निवृत्तिभेदात् ग्रहणनानात्वादिति कुतोऽस्य क्षणस्थितिधर्मकत्वमेव क्षणान्तरेऽपि स्थित्यापत्तेरित्यलं विस्तरेण, तदेवमिहापि विज्ञानादिकार्यायोग इति स्थितम्। नित्यानित्यं पुनः कथञ्चिदवस्थितत्वादनेकस्वभावत्वान्निबन्धनोपपत्तेर्जनयति विज्ञानादिकमित्यवगम्यते। नित्यानित्यत्वं च वस्तुनो द्रव्यपर्यायोभयरूपत्वादनुवृत्तव्यावृत्ताकारसंवेदनग्राह्यत्वात् प्रत्यक्षसिद्धमेवेति। तथाहि मृत्पिण्डशिवकस्थासघटकपालादिष्वविशेषेण सर्वत्रानुवृत्तो मृदन्वयः संवेद्यते प्रतिभेदं च पर्यायव्यावृत्तिस्तथा च न यथाप्रतिभासं मृत्पिण्डादिसंवेदनं तथाप्रतिभासमेव शिवकादिषु, आकारभेदानुभवात्, न च यथाप्रतिभासभेदं तद्विजातीयेषूदकदहनपवनादिषु तथाप्रतिभासभेदमेव शिवकादिषु, मृदन्वयानुभवात्। न चास्य स्वसंवेद्यस्यापि संवेदनस्यापह्नवः कर्तुं युज्यते, प्रतीतिविरोधात्. न च निराकारमेव संवेदनम्, अर्थान्तरस्येव ततो विवक्षितार्थापरिच्छेदात्। न ह्यर्थाकारानुभवव्यतिरेकेणापरोऽर्थपरिच्छेद इति, अतिप्रसङ्गात्, सर्वस्य सर्वार्थपरिच्छेत्तृत्वापत्तेश्च। प्रदीपवत्प्रतिनियतार्थप्रकाशकस्वभावत्वात् तस्यायमदोष इति चेत्, न, तद्धर्मातिक्रमात्, तदवगुण्ठितपदार्थस्यापरेणाप्रतीतेः तथानुभवाभावात् तस्यापि च ज्ञानत्वेनोक्तदोषानतिवृत्तेः। प्रका-

शकं ग्राहकमेवेति चेत्, अतदाकारं कथं तद्ग्राहकमिति वाच्यम्, किमत्रोच्यते तस्यार्थाकारतानुपपत्तेः, अर्थात् तस्य व्यतिरिक्तेतरविकल्पायोगेन तत्रासम्भवात्, व्यतिरिक्तत्वे, नासावर्थस्य सङ्गानुपपत्तेः, अव्यतिरिक्तत्वे तु, न संवेदने, अर्थात्मकत्वात्, अर्थतुल्याकारताया अप्यमूर्त्तस्योपरञ्जकयोगाभावेनाभावादिति यत्किञ्चिदेतत्, अभिप्रायापरिज्ञानात्, संवेदनार्थग्रहणपरिणामस्यार्थाकारताभ्युपगमात्, तथा चोक्तदोषानुपपत्तेः, तस्यैव तथारूपत्वादिति । उक्तं च वादिमुख्येन, न विषयग्रहणपरिणामादृतेऽपरः संवेदने विषयप्रतिभासो युज्यते, युक्त्ययोगादिति । न चेदं संवेदनं भ्रान्तमिति शक्यते वक्तुम्, देशकालनरावस्थाऽभेदेन प्रवृत्तेः, तथाहि देशान्तरे कालान्तरे नरान्तरेऽवस्थान्तरे च मृत्पिण्डादिषु यथोक्तलक्षणमेव संवेदनं प्रवर्तते, न चार्थप्रभवमविसंवादिसंवेदनं विहाय जातिविकल्पेभ्यः पदार्थव्यवस्था युज्यते, प्रतीतिबाधितत्वेन तेषामनादेयत्वात् न चैकान्तनित्येषु यथोक्तसंवेदनसम्भवः, व्यावृत्ताकारनिबन्धनस्य पर्यायभेदस्याभावात्, अन्यथैकान्तनित्यत्वानुपपत्तेः। तथा चोक्तम्, "भावेष्वेकान्तनित्येषु नान्वयव्यतिरेकवत्। संवेदनं भवेद्धर्मभेदाभावादिह स्फुटम्" इत्यादि । तथैकान्तनश्वरेष्वपि नाधिकृतसंवेदनभावो युज्यते, अनुवृत्ताकारनिबन्धनस्य द्रव्यान्वयस्याभावात्। न च निरन्वयनश्वरवादिनस्ततस्ततसदृशान्यप्रभवसम्भवति, सर्वथा हेतुनिवृत्तावहेतुकत्वप्रसङ्गादन्यथाऽन्वयसिद्धेरिति । उक्तं च, "सर्वथा कारणोच्छेदाद्भवेत्कार्यमहेतुकम् । तच्छक्त्यवयवाधारस्वभावानामनन्वयात्" इत्यादि । न चास्य संवेदनस्य बाधकः प्रत्ययोऽस्ति, कदाचिदप्यनुपलब्धेः, न च योगिप्रत्ययो बाधक इति युज्यते वक्तुम्, प्रमाणाभावात्, उक्तं च, "नित्यं योगी विजानाति क्षणिकं नेति का प्रमा। देशनाया विनेयानुगुण्येनापि प्रवृत्तित" इत्यादि। तस्मादन्वयाविनाभूतो व्यतिरेकः व्यतिरेकाविनाभूतश्चान्वय इति वस्तुस्वभावः। तथा चोक्तम्, "नान्वयस्तद्विभेदत्वान्न भेदोऽन्वयवृत्तितः। मृद्भेदद्वयसंसर्गवृत्ति जात्यन्तरं हि तत्"। तस्मात् तद्यत एव नित्यमत एवानित्यं द्रव्यात्मना नित्यत्वात् तस्य चाभ्यन्तरीकृतपर्यायत्वाद्यत एव चानित्यमत एव नित्यं पर्यायात्मनाऽनित्यत्वात् तस्य चाभ्यन्तरी-

कृतद्रव्यत्वादुभयरूपस्य चानुभवसिद्धत्वात् एकान्तभिन्नस्य चोभयस्याभावात् तथानुपलब्धेः । उक्तं च, "द्रव्यं पर्यायवियुतं पर्याया द्रव्यवर्जिताः । क्व कदा केन किंरूपा दृष्टा मानेन केन वा" इत्यादि । स्यादेतत्पर्यायनिवृत्तौ द्रव्यनिवृत्तिर्भवति किं वा नेति, किञ्चातः यदि भवत्यनित्यमेव तत् निवृत्तिमत्त्वात् पर्यायस्वात्मवत्, अथ न भवति हन्त तर्हि द्रव्यपर्याययोर्भेदप्रसङ्गः, तथाहि पर्यायेभ्योऽन्यत् द्रव्यं तन्निवृत्तावपि तस्यानिवृत्तेः, क्रमेलकादिव कर्क इति। एतदप्ययुक्तम्, कथञ्चिन्निवृत्तिभावात्, तत्त्वानिवृत्तेः, सम्बन्धबीजभावात् अनुभवसिद्धश्चायम्, तथाहि द्रव्यपर्यायोभयरूपं वस्तु इतरेतरविनिर्मुक्तस्योभयस्याग्रहणात् युक्त्यनुपपत्तेश्च अनुपपत्तिश्चोर्ध्वाद्याकाररहितस्य मृद्द्रव्यस्याऽसम्भवादूर्ध्वाद्याकारस्यापि मृद्द्रव्यरहितस्य, नहि मुकुलितार्धमुकुलिताद्याकारशून्यं वियत्कुसुमद्रव्यमस्ति न चाद्रव्यास्तन्मुकुलितत्वादय इत्यन्योन्यानुविद्धोभयरूपवस्तुसिद्धिः । अत एव घटपर्यायनिवृत्तौ कपालकालेऽपि तद्बुद्ध्या मृदनुभूयते मृन्निवृत्तौ चोर्ध्वादिपर्यायवन्नानुभूयेत । मृदनिवृत्तावप्यूर्ध्वादिनिवृत्तित एव तद्भेदसिद्धिरिति चेत्, न, ऊर्ध्वादेः मृदः सर्वथा भेदासिद्धेः तत्स्वरूपाननुविद्धस्यानुपलम्भात् । क्षीरोदकादिभिर्व्यभिचार इति चेत्, न, तेषां पूर्वं पश्चाच्च भेदेनापि सिद्धेः, भिन्नोपादानत्वेन च तन्निवृत्तावपि पृथग्मृदस्तद्विकारापत्तेश्च । कपालाद्याकार एव तद्विकार इति चेत्, न, तस्यापि मृदः सर्वथा भेदासिद्धेः । अत एव कथंचित् ऊर्ध्वादिनिवृत्तिस्तदात्मभूतकपालाद्याकारनिवृत्तेः, मृदोऽपि च निवृत्तिस्तथाविधोर्ध्वाद्यपृथग्भवनात्मस्वभावनिवृत्तेः, इति सर्वत्रैव तद्भेदाभेदनान्तरीयकः शबलवस्तुव्यवस्थाकारी सकलप्रमात्रभ्रान्तसंवेदननिबन्धनः कथञ्चिन्निवृत्तिभावः सुयुक्तियुक्त इति त्यक्त्वा परोदित इति मात्सर्यं तत्त्वव्यवस्थाहेतुरित्याश्रित्य महागुणं भाव्यतामेष इति ॥ न चासौ कपालमृद् घटमृदः सर्वथाऽन्यैव, तदत्यन्तभेदे तस्या अमृत्त्वप्रसङ्गात् । यथोदकं न मृत्ततोऽत्यन्तभेदादेवमसावपि स्यात् तस्याविशेषादिति । स्यादतत्स्वभावेभ्यो व्यावृत्तत्वात् कपालपदार्थस्य मृत्स्वभावता नोदकस्य तेभ्यो व्यावृत्त्यभावादि-

त्यप्यसमीक्षिताभिधानम्, वस्तुनोऽसजातीयेतरव्यावृत्तान्यावृत्तोभयस्वभावापत्तेः, तथाह्यमृत्स्वभावेभ्य एवोदकादिभ्यो व्यावृत्तिस्वभाव एव सति कपालपदार्थः स्यात् न तु मृत्पिण्डशिवकघटादिभ्यो मृत्स्वभावेभ्योऽपि, तद्व्यावृत्त्यावमृत्स्वभावत्वप्रसङ्गात्। यथैवामृत्स्वभावेभ्यो व्यावृत्तस्सन् मृत्स्वभावो भवत्येवं मृत्स्वभावेभ्योऽपि व्यावृत्तोऽमृत्स्वभावः स्यान्न्यायानुगतमेतदन्यथाऽमृत्स्वभावव्यावृत्तावपि मृत्स्वभावत्वानुपपत्तेः। स्यादेतद्वस्तुतः सजातीयेतरव्यावृत्तस्वरूपत्वात् प्रतिनियतैकस्वभावत्वात् सर्वभावानां यथोक्तदोषाभावः तथा च यथैवासौ कपालभाव उदकादिभ्यो व्यावृत्तः सन् मृत्स्वभावः एवं घटादिभ्योऽपि तस्यैकस्वभावत्वात्तेनैव रूपेण व्यावृत्तत्वादित्येतदप्ययुक्तम्, अनुभवविरुद्धत्वात्, तथाहि यदि स येनैव स्वभावेनामृत्स्वभावेभ्यो व्यावृत्तस्तेनैव मृत्स्वभावेभ्योऽपि, हन्त तर्हि यथैवामृत्स्वभावभावैकान्तविभिन्नावभासहेतुस्तथाव्यावृत्तेः एवं मृत्स्वभावापेक्षयापि स्यात् तदत्यन्तविलक्षणबुद्धिजननस्वभावव्यावृत्त्यन्यथानुपपत्तेः, न च भवति, मृत्स्वभावस्य तत्रानुभूयमानत्वात् प्रतिनियतैकस्वभावानुभवनिबन्धनाभ्युपगमे च पर्यायतः समानपरिणाम एवाभ्युपगत इति न *काचिन्नो बाधेति, अतो न चासौ कपालमृद् घटमृदः सर्वथाऽन्यैव तदत्यन्तभेदे तस्याः अमृत्त्वप्रसङ्गादिति स्थितम्। तत्तन्मृत्त्वेनान्वयः साधयितुमिष्टः एतच्च मृत्त्वमधिकृतघटमृदोऽत्यन्तभिन्नायामपि घटान्तरकपालमृदि विद्यत एवेति व्यभिचारि तत्कथं न बाधेति। अत्रोच्यते, अधिकृतघटमृद एव स्वकपालमृत्त्वात् एकवस्तुसन्तानत्वात् सतः सर्वथा असत्त्वानापत्तेस्तदुत्पत्त्यादिदोषप्रसङ्गादिति, नैवासौ कपालमृद् घटमृदः सर्वथा अन्यैव तस्या एव तथाभावात्, अन्यथाऽबीजत्वेन कपालानुपपत्तेः असत एव सत्तायोगादतिप्रसङ्गादिति। न चैवं घटान्तरकपालमृदधिकृतघटमृदात्मिका, अतत्पूर्वकत्वात् सदन्तरस्य सदन्तरत्वाविरोधात् तद्भावेनेतरोच्छेदापत्तेः, तद्वदितरस्यातदुपादानत्वप्रसङ्गात् अहेतुकत्वापत्तेः युक्त्य-

* कदाचिदिति प्रत्यन्तरे.

नुभवविरोधात् । मृत्समानपरिणामा तु भवति तथाप्रतीतेः । न चैतावदन्वयलक्षणम्§ अपित्वनेकस्वभावे वस्तुनि तत्तन्मृत्त्वमेतच्च तद्रूपशक्तिपरिणामादिसङ्गतं तत्तथाभावाध्यवसायहेतुरविगानप्रतीयमानं विशिष्टमेवेति नात्यन्तभिन्नायां मृदि वर्त्तत इति बाधाभावः । एवमन्वयव्यतिरेकवद्वस्तुसिद्धौ यदपि परैश्चोद्यते तथापि तत्र किञ्चिन्निवर्त्तत एवापरं तिष्ठत्येवेति तद्भेदापत्त्याऽनेकान्तवादहानादि, तदपि परिहृतमेव, केवलोभयासिद्धेः वस्तुन एव शबलरूपत्वात् निवर्त्तमानस्य कथञ्चिदनिवर्त्तमानाव्यतिरिक्तस्वभावत्वात् तत्तदनुभवसिद्धेः तदेतदित्यवगमात्, न तदवेदिनोऽक्षयोपशमात्, अनिवर्त्तमानस्यापि कथञ्चिन्निवर्त्तमानाव्यतिरिक्तस्वभावत्वात् स्वभावस्य चापर्यनुयोगात् न्याययुक्तत्वादन्यथा वस्त्वनुपपत्ते- रिति, न चेह किञ्चिन्न निवर्त्तते एकान्तानिवृत्तौ तद्विलक्षणबुद्ध्यभावतः कपालप्रतिपत्त्यसिद्धेः विशेषाभावात् तस्यामच्युता- नुत्पन्नस्थिरैकस्वभावत्वात्, न चोर्ध्वाद्याकार एव कपालाद्याकारः, प्रतीत्यादिभेदतस्तद्भेदसिद्धेः, न चासन्ताविमौ, तथा- प्रतिपत्तेः, न च द्विचन्द्रादिप्रतिपत्तिवद्भ्रान्तेयम्, अविगानतस्तद्भावात्, न च चित्रे निम्नोन्नतप्रतिपत्त्या व्यभिचारः, तत्र समस्पर्शज्ञानबाधकोपलब्धेः । न चैवमस्यास्तत्सिद्धिः, तथानुभावाभावात् । न च दोषक्षये तद्भावे तत्तुल्यता, तद्भाव प्रमाणाभावात्, न च योगिज्ञानंप्रमाणमत्र, तत एव हेतोः, न च तथाविधस्तदुपदेश एव प्रमाणम्, तस्याप्याकारशून्यत्वे तदसम्भवात्, न चासत्यपीष्टा भ्रान्तिप्रतिपत्तिः, क्वचिददर्शनात्, अन्तरुपप्लवसमुद्भवाया अपि तद्द्रष्टुस्तदध्यारोपेण प्रवृत्तेः । न चाजन्मानुपलब्धपीतभावकामलिशङ्खपीतप्रतिपत्त्या व्यभिचारः, तद्भावजन्मान्तरोपलब्धिबलेन तत्प्रवृत्तेरन्यथा- तिप्रसङ्गादिति अनुपचरिताकारसिद्ध्या पर्यायसिद्धिरिति । एतेन "स्याद्वादरेका नहि कूटस्थनित्यतये"त्यादि यदाशङ्क्योक्तं "पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धे"रित्यादि, तदपि प्रतिक्षिप्तमेवावगन्तव्यम्, कथञ्चिद्व्यतिरेकसिद्धेरिति, तथा हि, "अ-

§ निमित्तमितिप्रत्यन्तरे.

न्योऽन्यव्याप्तिभावेन द्रव्यपर्याययोः कथम् । भेदाभेदो विरुद्धः स्यात् तद्भावानुपपत्तितः ॥ १ ॥ नान्योऽन्यव्याप्तिरेका-
न्तभेदेऽभेदे च युज्यते । अतिप्रसङ्गाचैक्याच्च शब्दार्थानुपपत्तितः ॥ २ ॥ अन्योऽन्यमितियद्भेदं व्याप्तिश्चाह विपर्ययम् ।
भेदाभेदे द्वयोस्तस्मादन्योन्यव्याप्तिसम्भवः ॥ ३ ॥ एवं शवलरूपेऽस्मिन् व्यावृत्त्यनुगमावपि । स्याद्वादनीतितः सिद्धौ
यथानुभवसुस्थितौ ॥ ४ ॥ इत्थं प्रमाणसिद्धेऽस्मिन् विरोधोद्भावनं नृणाम् । व्यसनं धीजडत्वं वा प्रकाशयति केवलम् ”
॥ ५ ॥ इत्यलं विस्तरेण ॥ नित्यानित्यवस्त्वधिकारः समाप्तः ॥ इति द्वितीयः ॥

✓यच्चोक्तमेतेन सामान्यविशेषरूपमपि प्रतिक्षिप्तमवगन्तव्यमित्यादि तदप्ययुक्तम् , सामान्यविशेषरूपस्य वस्तु-
नोऽनुभवसिद्धत्वात् , तथा हि घटादिषु घटो घट इति सामान्याकारा बुद्धिरुत्पद्यते मार्त्तिकस्ताम्रो राजत इति विशेषाकारा
च पटादिर्वा न भवतीति । न चार्थसद्भावोऽर्थसद्भावादेव निश्चीयते, सर्वसत्त्वानां सर्वज्ञत्वप्रसङ्गात् सर्वार्थानामेव सद्भावस्या-
विशेषात् , किं तर्ह्यर्थज्ञानसद्भावात् ज्ञानं च सामान्यविशेषाकारमेवोपजायते इत्यतोऽनुभवसिद्धत्वात् सामान्यविशेषरूपं
वस्त्विति ।✓न चैतद्विज्ञानं भ्रान्तमिति युज्यते, घटादिसन्निधावविकलतदन्यकारणानां सर्वेषामेवाविशेषेणोपजायमानत्वात् ।
भ्रान्तमेतद्विकल्पत्वादिति चेत् , अभ्रान्तं तर्हि कीदृशमिति वाच्यम् , । निर्विकल्पकमिति चेत् , न, तस्यापि निर्विकल्पक-
त्वेन भ्रान्ततापत्तेः । अर्थसामर्थ्यजन्यत्वादनापत्तिरिति चेत् , न, अस्य सविकल्पेऽपि तुल्यत्वात् । कचिद्व्यभिचारदर्शनाद-
तुल्यत्वमिति चेत् , न, तस्य निर्विकल्पकेऽपि भावात् । न तन्नः प्रमाणं तदाभासत्वादिति चेत् , विकल्पकेऽपि तुल्यः परि-
हारः, अर्थधर्मातिरिक्तशब्दभावतोऽस्यार्थसामर्थ्यजन्यत्वानुपपत्तिरिति चेत् , न, बोधनियतार्थतादिभिर्व्यभिचारात् । न
तेऽर्थादन्यतो भावादिति चेत् , शब्दोऽपि तद्योग्यद्रव्येभ्य इति समानः समाधिः । न चैतदभ्युपगममात्रम् , तावत्सङ्घात-
जस्यैव तथार्थग्रहणस्वभावत्वात् अविगानतस्तथाऽनुभवसिद्धेः एवमेव व्यवहारदर्शनादिति, तथाह्येतदिन्द्रियद्वारानुसार्येव

विज्ञानमाविष्टाभिलापमाहिरहिरिति योजकं दर्शकं च धारावाहि तथा व्यवहारबीजं प्रतिमाण्यनुभवसिद्धमेव, न चेहान्यदेव दर्शनमन्य एव च विकल्पः, विकल्पेनादर्शनात् दर्शनेन चाविकल्पनात् तयोरसहवृत्तेरुपादानादिभावादित्यत एकमेवेदमिति । स्यादेतत्, सविकल्पाविकल्पयोर्विज्ञानयोः स्वभावभेदेऽपि प्रतिभासभेदेन युगपद्वृत्तेर्विमूढः प्रतिपत्ता तमपश्यन्नैक्यं व्यवस्यति न तु तथा तत्, अन्यत्रानयोर्यौगपद्येऽपि भेददर्शनात् अतीताद्यर्थगतविकल्पेनापि इन्द्रियज्ञानतो रूपादिग्रहणसिद्धेः, न च स विकल्पो रूपाद्येव गृह्णातीति शक्यं कल्पयितुम्, तस्यातीताद्यर्थाभिधायकत्वत्यागतो वर्त्तमानार्थयोजनेन प्रवृत्तिप्राप्तेः, नापि वर्त्तमानार्थाभिधानसंसर्गी तदाऽपरो विकल्पः समस्ति, द्वयोर्विकल्पयोः सममप्रवृत्तेः, अविगानेन तथानुभवाभावात्, अतोऽत्र प्रत्युत्पन्नविषयग्रहणकाले दृश्यमानार्थनामाग्रहः स्पष्ट एव, तन्नामग्रहणसम्भूता च कल्पना तन्नामग्रहाभावे कल्पनाऽभाव इति सिद्धमविकल्पकमिन्द्रियज्ञानमतोऽन्य एव च विकल्प इति न क्वचिदनयोरैक्यम्, न्यायानुपपत्तेः, भिन्नजातीयत्वादिति । इतश्चैतदेवम्, अन्यथा स्वाभिधानविशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति प्राप्तम् । अस्त्वेवमपि को दोष इति चेत्, निवृत्तेदानीमिन्द्रियज्ञानवार्त्ता, अभिधानविशेषस्मृतेरयोगात्, सति ह्यर्थदर्शनेऽर्थसन्निधौ दृष्टे शब्दे ततः स्मृतिः स्यात् अग्निधूमवत् न चायमशब्दमर्थं पश्यति अपश्यंश्च न शब्दविशेषमनुस्मरति अननुस्मरन्न योजयति अयोजयन्न प्रत्येतीत्यायातमान्ध्यमशेषस्य जगतः । अभिपतन्नेवार्थः प्रबोधयत्यान्तरं संस्कारं तेन स्मृतिर्नार्थदर्शनादिति चेत्, न, तत्सम्बन्धस्यास्वाभाविकत्वात् समयादर्शनेऽभावात् पुरुषेच्छातोऽर्थानां स्वभावापरावृत्तेर्न समयकालोत्पत्तिः, स्वभावस्य परावृत्तौ च तस्य तादात्म्यादन्यस्यासमयदर्शिनोऽपि स्यात्, नहि प्रतिपुरुषमर्थानामात्मभेदो, नैरात्म्यप्रसङ्गात् आत्मस्थितेरभावात्, तस्मादयमशब्दसंयोजनमेवार्थं पश्यति दर्शनादिति । किञ्च विकल्पात्मकत्वेऽस्य निश्चयात्मकमिदमित्यनेकप्रमाणवादहानिस्तेनैव वस्तुनो निश्चयात् नित्यत्वादौ भ्रान्त्यनुपपत्तेः । अनेकधर्मके वस्तुन्यन्यतरधर्मनिश्चयात् तदन्यनिश्चयाय

प्रमाणान्तरसाफल्यमिति चेत्, न, एकधर्मविशिष्टस्यापि निश्चये सर्वधर्मवत्तया निश्चयात्, प्रमाणान्तरस्य निश्चितमेव विषयीकुर्वतः स्मृतिरूपानतिक्रमात् एकधर्मद्वारेणापि तद्वतो निश्चयात्मना प्रत्यक्षेण विषयीकरणे सकलधर्मोपकारकशक्त्यभिन्नात्मनो निश्चयात्, न ह्यन्य एवान्योपकारको नाम ततो यदेवास्यैकोपकारकत्वेन निश्चयनं तदेव तदन्योपकारकत्वेनापि न चासत्युपकार्योपकारकभावे तद्व्यवस्थातिप्रसङ्गतो युक्ता न चोपकारिकाः शक्तयस्ततो भेदमनुभवन्ति, असत्युपकारेऽस्येमाः शक्तय इति सम्बन्धायोगात् आधाराधेयभावस्यापि तन्निबन्धनत्वात्, अन्यथा कल्पनामात्रं स्यात्। तथा च शक्तीनामनवस्था, ततः स्वात्मैवास्याशेषधर्मोपकारिकाः शक्तयः, तस्य सर्वधर्मोपकारकत्वेन निश्चये तदुपकार्या अपि धर्मा निश्चिता एव, तन्निश्चयानन्तरीयकत्वादुपकारकनिश्चयस्य, नहि ये यदपेक्ष्यास्थितयस्ते तदनिश्चये तथा निश्चीयन्ते स्वस्वामित्ववदित्येवमपि सविकल्पकप्रत्यक्षानुपपत्तिरिति। अत्रोच्यते। यदुक्तं सविकल्पाविकल्पयोर्विज्ञानयोः स्वभावभेदेऽपि प्रतिभासभेदेन युगपद्वृत्तेरित्यादि तदयुक्तम्, एकविषययोः सविकल्पाविकल्पयोर्युगपद्वृत्त्यासिद्धेः तदविकल्पपूर्वकत्वात् तद्विकल्पस्य, अन्यथाऽस्याहेतुकत्वापत्तिः, तथा च सदासदसत्त्वप्रसङ्गः। सोऽपि तत्पूर्वक एवेति चेत्, कथमनयोर्युगपद्वृत्तिः, प्रबन्धापेक्षयेति चेत्,

कथमाद्याविकल्पादुभयजन्म। तत्तत्स्वभावत्वादिति चेत्, कथं कारणभेदो भेदहेतुः। यदि न ततः को दोष इति चेत्, प्रधानादीनामनिषेधप्रसङ्गः। ते तथा भावजनका इति चेत्, ततः को दोष इति वाच्यम्, नैकस्मादनेकजन्म इति चेत्, कथं न, तत्तत्स्वभावत्वेन, सङ्क्रान्त्या तदयुक्तेरिति चेत्, तदभावे तद्युक्तिरित्यद्भुतम्। ततोऽसद्भावादनद्भुतमिति चेत्, तत्तथाभावतोऽभवदसद्भवतीत्यद्भुतमेवेति परिभाव्यतामेतत्। न चानयोः स्वभावभेद एव, तत्त्वत एकविषयत्वात् विकल्पस्यापि पारम्पर्येण तद्वस्त्वालम्बनत्वात् तदुत्थज्ञानोपादानत्वात् तत्स्वभावानुकारातिरेकेण तदुपादानत्वायोगात्, न च तदतीतमित्यनालम्बनम्, अविकल्पस्यालम्बनत्वात्, न च तद्भावकाले तद्भावः, तदसदुदयाभ्युपगमात्, न चैवमपि न

तदतीतता, सदा तदसत्त्वेन तदुपपत्तेः, न च तदाकारतादिना भेदः, द्वयोरपि तदाकारतासिद्धेः, तस्य प्रतिभावनियमात्, बोधामूर्त्तत्वरूपतया तत्तुल्याकारताऽयोगात्, स्वाकारस्य तु विकल्पेऽपि भावात्, तस्यापि तन्निश्चयात्मकत्वेन तदनुगुणत्वादिति व्यवहारतः स्वभावभेदाभावः । यच्चोक्तं विमूढः प्रतिपत्ता तमपश्यन्नैक्यं व्यवस्यति न तु तथा तदित्येतदप्ययुक्तम्, अनालोचिताभिधानत्वात् विचाराक्षमत्वात्, तथा हि कः पुनरत्र प्रतिपत्ता यस्य तत्स्वभावभेदादर्शनाद्विमोह ऐक्यव्यवसायो वा, न तावदेक उभयद्रष्टा, अनभ्युपगमात्, न च सविकल्पाविकल्पे विज्ञाने एव, तयोर्विमोहासिद्धेः, स्वसंवेदनरूपत्वेन स्वस्वभावदर्शनात् इत्थमपि विमोहे तदनुच्छेदापत्तिः उपायाभावात् । न चानयोरैक्यव्यवसायो, मिथो भेदाभ्युपगमात् स्वविषयनियतत्वेन तथाप्रतिभासानुपपत्तेः, एवमपि तदभ्युपगमेऽतिप्रसङ्गात् । स्यादेतदैक्यव्यवसायस्तदपरो विकल्प एव व्यवसायस्य परिच्छेदात्मकत्वात्, स किं विषय इति वाच्यम्, तदुभयविषय इति चेत्, कथमतत्प्रतिभासी तद्विषयः तत्प्रतिभासित्वे वा कथमैक्यं व्यवस्यति, न चात्यन्तभिन्नयोस्तथाव्यवसाये निमित्तम् । भ्रान्त एवायमिति चेत्, तदन्यैवंविधभावे कथं नेतरयोर्भेदव्यवसायः । व्यवसाय एवेति चेत्, न, तथा युक्त्यनुभवाभावेन वाङ्मात्रत्वात् । एतेनान्यत्रानयोर्यौगपद्येऽपि भेददर्शनादित्यादि प्रत्युक्तम्, तत्त्वतस्तुल्ययोगक्षेमत्वात् । किं चाऽनयोर्भिन्नविषयत्वेन तथापि जन्मायुक्तम्, अन्यदर्शनस्यान्यविकल्पानिमित्तत्वात् निमित्तत्वे चातिप्रसङ्गात्, नीलदर्शनादपि पीतादिविकल्पापत्तेः तदभावप्रसङ्गात्, निश्चयबलाद्धि तद्भावसिद्धिः स चेत् अन्यदर्शनादप्यन्यविषयोऽप्रामाणिकान्यसत्त्वेति विश्वस्य नीलमात्रत्वापत्तिः । भिन्नदर्शनविषयाः पीतादय इति चेत्, न, तेषामनिश्चयात्मकत्वेन तथातानधिगतेः, न च तन्निश्चयात् तदधिगतिर्युक्ता, तस्यान्यतोऽपि भावेन तत्प्रतिबन्धासिद्धेः । स पारम्पर्येण तद्दर्शनसामर्थ्योद्भूत एव सदाऽतद्दर्शिनोऽभावादिति चेत्, नेत्थं सर्वत्रानाश्वासेनाऽसमञ्जसत्वापत्तेः, सन्निहितार्थदर्शनबलोत्पन्ननिश्चयादपि पारम्पर्येणार्थान्तरदर्शनशक्तिजत्वारेकातः प्रवृत्त्या-

घयोगात्, समानविषययोः पुनरनयोर्भावस्तथाभवन्नपि न नो बाधायै, अक्रमेणाप्रवृत्तेः। एवं चातीताद्यर्थगतविकल्पेनापीन्द्रियज्ञानतो रूपादिग्रहणसिद्धेरित्यादि यावद्भिन्नजातीयत्वादित्येतद्व्युदस्तमवसेयम्। अक्रमप्रवृत्तावतीतादिविकल्परूपादिग्रहणयोरस्य साफल्योपपत्तेः, अन्यथा वाङ्मात्रत्वात्। आह, यद्यत्र क्रमः कथं न सँल्लक्ष्यत इति, उच्यते, उत्पलपत्रशतव्यतिभेदवत्कालसौक्ष्म्यात् छद्मस्थममातुरनाभोगवहुलत्वात् अदृष्टप्रतिबन्धात् वस्तुनोऽनेकधर्मत्वात् यथाक्षयोपशममवबोधप्रवृत्तेः तस्य च तत्तद्धेतुभेदतो वैचित्र्यादिति। आह यदि कालसौक्ष्म्यादत्र क्रमालक्षणमेवं तर्हि सर इत्येवमादिकयोर्वर्णयोरुच्चारणे नितरां कालसौक्ष्म्यमित्यक्रमग्रहणं स्यात्, तथा च क्रमालक्षणात् श्रुतिभेदो न भवेत् यथा सरो रस इति, इतश्च न भवेत् युगपद्गोचरीभूतविषयेन्द्रियवतोऽविच्छेदेन सर्वोपलब्धौ क्रमपक्षेऽप्यक्रमस्यैव दर्शनात्, स हि वंशादिवादयितृरूपं पश्यति, तदैव ततः शब्दं शृणोति, नीलोत्पलादिगन्धं जिघ्रति, कर्पूरादेरसमास्वादयति, आसनादिस्पर्शं स्पृशति, चिन्तयति च किञ्चिदिति तत्त्वतोऽस्यानवरतं सर्वपरिच्छित्तिः। एवं यावदत्राप्ययुगपत्पक्षेऽपि समाश्रीयमाणे पञ्चभिर्विज्ञानैर्व्यवधानेऽपि क्रमभाविसत्तेपामेकैकं विज्ञानमवच्छिन्नमिव प्रतिभाति तथाऽनुभूतेः। यद्येतदेवं तदा कथमन्यविज्ञानावृत्तौ वर्णयोर्न सकृच्छ्रुतिरित्यविच्छिन्नमेकघनीभूतायतवर्णाकारं दर्शनं न भवति, न च भवति, तथाऽप्रतीतेः इति, यत्र क्रमस्तत्र कालसौक्ष्मेऽप्युपलभ्यत एव न च प्रतीतिं विहाय पदार्थतत्त्वव्यवस्थापनोपाय इति यथाप्रत्ययं युगपद्विज्ञानप्रवृत्तिर्न्यायविदाङ्गीकर्त्तव्या अन्यथोक्तवत् न्यायोच्छेदप्रसङ्गादिति। अत्रोच्यते यत्किञ्चिदेतत् वर्णयोः सावयवत्वेनोक्तदोषानुपपत्तेः, सरादयो हि वर्णाः सावयवत्वेनानेकक्षणलब्धवृत्तयः, तथोपलब्धितस्तत्तत्स्वभावत्वात्, अन्यथा तदनुपपत्तेः, न क्षणिकज्ञानग्राह्याः, तस्य परमाणुव्यतिक्रान्तिमात्रत्वेनात्यन्तसूक्ष्मत्वात्, तदनुभवस्य तत्त्वेनैवार्वाग्दर्शिनाऽनुपलक्षणात् तथाऽप्रतीतेः, इति पूर्ववर्णज्ञानेनोत्तरवर्णज्ञानस्य मिश्रणाभावात् उभयोः प्रदीर्घस्थूरोपयोगरूपत्वात् तथा आलम्बनजातिभेदात् तत्तत्स्वाभाव्यात् तथा

अ०ज०
पताका०
॥ १६ ॥

क्षयोपशमयोगात् दृढानुभवसिद्धेः अविगानेन तथावेदनात् कोटिसङ्ख्याप्रयोजकत्वात् तद्वीर्यतिरस्करणात् इत्थमपि तदापादनेऽतिप्रसङ्गात् नीलपीतज्ञानयोरपि तद्भावेन क्वचिन्मिश्रणप्रसङ्गादिति । कथं सकारादाविवाविच्छिन्नमेकघनीभूतायतवर्णाकारं दर्शनं भवेत्, सकारादौ तु कालादिभेदेऽपि प्रभूततरधर्मप्रत्यासत्तेर्भवति, तथानुभवादिति । एतेनालातचक्रादिदर्शनं प्रत्युक्तम्, प्रत्यवयवं प्रदीर्घस्थूरोपयोगादिविपर्ययात्, अन्यथा तत्रापि तथादर्शनानुपपत्तेः । न चैवं सर्वं क्रमोपलम्भनिबन्धनं सविकल्पाविकल्पयोः, अविकल्पे क्षणिकत्वेन जात्यादिभेदेऽपीहादेस्तदितरवैकल्यादिति, या च युगपद्गोचरीभूतविषयेन्द्रियवतो अविच्छेदेन सर्वोपलब्धिरुक्ता साऽसिद्धा द्रव्येन्द्रियाविषययोगेऽप्यर्वाग्दर्शिनः प्रतिबन्धकसामर्थ्येन तावतां विज्ञानानां एकदाऽनुदयात् तथाऽननुभूतेः प्रतीत्यभावात् युक्त्यनुपपत्तेः उपादानायोगात् एकोपादानतोऽनेकासिद्धेः भिन्नोपादानत्वे तदत्यन्तभेदेनानुसन्धानायोगात् अस्य चानुभवसिद्धत्वात्, एवं च क्रमपक्षेऽप्यक्रमस्यैव दर्शनादित्ययुक्तम्, तथाननुभवात् एकदैकज्ञानसंवेदनात् कालसौक्ष्म्यविभ्रमतस्तथाप्रतीतेः । किञ्च कुतोऽयममीषामत्यन्तभेदे युगपत्सर्वानुभव इत्यवगमः न च तेभ्य एव, प्रत्यर्थनियतत्वात् इतरेतरानवगमात्, अवगमे, स्वरूपहानिप्रसङ्गात्, ज्ञानान्तरालम्बनत्वापत्तेः, तस्यापि चायोगात्, युगपद्भावात् प्रतिबन्धविरहात् इतरेतरालम्बनत्वानुपपत्तेः, युक्तिभिरयोगात्, स्वभावभेदप्रसङ्गात्, तथा च तदयोगादिति, न चान्यतः, एकस्य तदालम्बनत्वाभावात् तेषां भिन्नजातीयत्वात् । अत एवैकाकरणात् अतदुत्पन्नात् तत्परिच्छित्त्यसिद्धेः तदाकारत्वायोगात्, योगेऽपि मेचकरूपतापत्तेः तत्सारूप्याभावात् तेषामसङ्कीर्णत्वात् एवमप्यवगमेऽतिप्रसङ्गात् तत एव सर्वार्थावगमापत्तेः तथाऽनुभवाभावाच्चेत्यनवगताभिधानमेतद्यदुत युगपत्सर्वानुभव इति । चित्रज्ञानवत्परामर्शविकल्पात् तदवगम इति चेत्, न, अस्याप्ययोगात् । तथानुभवसिद्धत्वात् कथमयोग इति चेत्, स्वकृतान्तप्रकोपात् । कथमत्र तत्प्रकोप इति चेत्, यथोक्तं प्राक्, परामर्शविकल्पोऽन्य एवेति चेत्, न, ततस्तदवगम इति

यत्किञ्चिदेतत् । क्रमानुभवोऽपि कथं गम्यत इति चेत्, अन्वयिन्यात्मनि सुखेनैव तस्यैव तथाभावात् चित्रस्वभावत्वात् बोधान्वयोपपत्तेः तदावरणविगमात् क्रमानुभवाविरोधात् तथामनोवृत्तेरिति न युगपत्सर्वथा सविकल्पाविकल्पज्ञानभावः । परमाप्तवचनविरुद्धश्चायम्, अस्थानमेतत् यत् द्वे चित्ते युगपदुत्पद्येयातामिति वचनप्रामाण्यात् । अन्यार्थमेतदिति चेत्, कोऽस्यार्थ इति वाच्यम्, भिन्नजातीये नेति चेत्, न, अधिकृतज्ञानयोरपि तत्त्वात्, भिन्नालम्बने नेति चेत्, न, तयोरपि त्वन्मते भावात्, कथं पुनर्भात्र इति चेत्, रसादिगतचित्तस्यापि रूपदर्शनाभ्युपगमात्, न चाविकल्पके नेति, पञ्चानां प्ररूपणात्, न चात एव न द्वे, छलमात्रत्वात्, न चेहैव न्याय्यो भरः, अस्थानप्रयासत्वात्, न च नास्थानप्रयासः, द्वयोरुपलक्षणत्वात्, अन्यथा यत्र पञ्च न तत्र द्वे इत्यतिकौशलमाप्तस्य त्र्यादीनामपि प्रतिषेधापत्तेः । स्यादेतदलमनेन वाग्जालेन सविकल्पे नोत्पद्येते इति वचनार्थात्, न, अत्र प्रमाणाभावात् तद्विवक्षाया अप्रत्यक्षत्वात् बाधकवचनाभावात् भावेऽपि तदर्थनिश्चयायोगात् विनेयानुगुण्यतोऽन्यथापि तद्वचनप्रवृत्तेः । साभिप्रायिक्येवेति चेत्, कस्तस्याभिप्राय इति क एतद्वेद, यो युक्तिबाधितो न स स इति चेत्, कः पुनरसौ भवतोऽभिप्रेतः । विकल्पद्वयायुगपद्भाव इति चेत्, का खल्वन्यथा युक्तिबाधेति कथनीयम् । तथानुभव एवेति चेत्, सोऽविकल्पकद्वयेऽपि तुल्य एवेत्युक्तम्, न च विकल्पयोरसदंशानुवेधतश्चित्ततैव युक्ता न च तत्स्वसंविदो वस्तुत्वेनायमनपराधः, तत्तद्व्यतिरिक्तेतरविकल्पदोषापत्तेः अन्यथा तद्योगादिति यत्किञ्चिदेतत् । अतः सामान्येनैवोभयचित्तप्रतिषेधोपपत्तेराप्तवचनप्रामाण्यात् तथानुभवभावतः सिद्धमिन्द्रियद्वारानुसार्येव विज्ञानमाविष्टाभिलापमहिरहिरित्येवमादि, न चेदं नेन्द्रियनिमित्तम्, तद्भावभावित्वानुविधानात्, अन्धादेरनुत्पत्तेः । इन्द्रियादविकल्पजन्म तत इदमिति तदनुत्पत्तिरिति चेत्, न आद्यविद्युत्सम्पातादौ तद्भावेऽपि तदभावात् । स मानसाभावतोऽभावो नाक्षव्यापाराभावत इत्यतोऽदोष इति चेत्, नात्र किञ्चिदुभयसिद्धं प्रमाणमिति यत् किञ्चिदेतत् ।

तथाविधविकल्पानुत्पत्तिरेव प्रमाणमिति चेत्, न, अस्या एव विवादगोचरापन्नत्वात् । अत एवैतन्निर्णीतेरयमदोष इति चेत्, न चक्षुर्व्यापाराभावेऽन्यस्याः समानत्वादिति । किञ्चेदमपि मानसं तद्विषयमात्रग्राहकत्वेन न तन्निश्चायकमिति। किञ्चानेन, निरंशैकस्वभावत्वाच्च वस्तुनोऽनुभवोऽपि न पटीयानपटीयांश्च युज्यते, अत्यन्तासत उत्पादेन सर्वथा हेत्वनन्वयतोऽभ्यासवासने च, अन्यथाऽसम्पूर्णवस्तुग्रहणमपि स्यात्, तथा च न निरंशैकस्वभावमेवैतत्, न चान्यथा, अपटीयस्त्वाद्यनुभवस्य तन्मात्रग्रहणतत्त्वात् तदतिरिक्तरूपान्तराभावात् अन्येनोपकाराद्ययोगादिति । एवमभ्यासवासनोपगमाच्चात्यन्तासत एवोत्पादः सत्यस्मिंस्तयोर्वाङ्मात्रत्वात्, तदात्मातिरेकेण आकालं तदभावात् पूर्वस्मादत्यन्तभिन्नत्वात्, तथापि तदभ्यासादावतिप्रसङ्गादितीन्द्रियजमेवैतत्, एतच्चानेकधर्मके वस्तुनि ज्ञानावरणाच्छादितस्य प्रमातुस्तथाविधक्षयोपशमभावत उभयोस्तथास्वभावत्वेनावग्रहेहावायधारणारूपं प्रवर्त्तत इति । अनेकधर्मकत्वं च वस्तुनोऽनेकविज्ञानजनकत्वात्, योग्ययोगिभिर्भेदेनोपलब्धेः, अन्यथा तद्भेदप्रसङ्गात्, द्वयोरपि तत्तन्निमित्तत्वात् तद्भावभावित्वानुविधानात् । मरावल्पभावे महद्दर्शनमनिमित्तमिति चेत्, न, अल्पस्यैव तन्निमित्तत्वात्, तदभावेऽभावात् विप्रकर्षाद्युपप्लवात् तत्तत्स्वभावत्वात्, अन्यथा तदनुपपत्तेः ततस्ततोऽन्यत्वाच्च स्वभावभेदेन व्यावृत्तेः, अन्यथा तदेकत्वप्रसङ्गात्, तदन्यहेतुत्वेनाविशेषात्, अन्यत्वस्य चाकल्पितत्वात्, कल्पितत्वे तत्त्वतस्तदभावापत्तेः । स्वहेतुत एव तत्तदन्येभ्योऽन्यत्वैकस्वभावं भवतीति चेत्, न, पटान्यत्वैकस्वभावान्यत्वे पटवत् कटादीनां तद्भावापत्तेः, तथास्वभावादन्यस्वभावत्वात्, अचित्रस्यानेकान्यत्वैकत्वायोगे तच्चित्रतयैकान्तैकत्वाभावात् पारम्पर्येणानेकजन्यजनकत्वाच्च, अन्यथा तद्भावासिद्धेः परम्पराहेतुतोऽपि भावात् तथाविधतद्भावभावित्वोपपत्तेः पुष्कलस्य चानन्तरेणोपयोगात् तदा तद्भावाभावादिति । अनन्तरजन्यत्वमेव परम्पराजन्यत्वमिति चेत्, न, परम्पराजनकानामनन्तरजनकत्वायोगात्, तत्स्वभावादिभेदात् तद्भेदेन च तत्तज्जन-

कत्वे न तद्वतत्। एवं जनकत्वेऽपि योजनीयमिति तच्चित्रस्वभावता। सुखदुःखादिहेतुत्वाच्च स्वभावभेदेन सुखादिजनकत्वात्, तेषां चाल्हादादिरूपत्वेन ज्ञानादन्यत्वात्, तत्स्वरूपेण बाह्यावेदनात् ज्ञानभावेऽपि क्वचित्तदभावात् तथानुभवसिद्धत्वात्। अज्ञानत्वे कथममीषामनुभव इति चेत्, सत्त्वादिवत्कथञ्चिज्ज्ञानाभेदात्, तदुदग्रत्वेन तथा तज्ज्ञानरञ्जनात्, उभयोस्तत्स्वभावत्वात्, युगपत्सद्वयविरोधात् सुखादिज्ञाने तथानुभवासिद्धत्वात्, तत्तद्वचनसिद्धेश्च। आविर्भावतिरोभावधर्मकं वस्तु न कृतार्थे प्रकृतिप्रवृत्तिः तद्विरागात् तद्वृत्तिसङ्क्षयाच्चेति वचनप्रामाण्यात्। तथाऽनित्यता सर्वसंस्कृतानां दुःखता सर्वसाश्रवाणां शून्यानात्मकते सर्वधर्माणां, अविकारिणी तथातेति वचनप्रामाण्याच्चेत्यनेकधर्मकं वस्तु। इह च ज्ञानावरणाद्याच्छादितः छद्मस्थः प्रमाता बोधविशेषदर्शनात्, तस्याहेतुकत्वेऽप्ययोगात् सदाभावादिप्रसङ्गात्, बोधमात्रस्याहेतुत्वात्, भेदकाभावे विशिष्टत्वाभावात्, न्यायतोऽतिप्रसङ्गात्, तद्भावे च तस्यैवावरणत्वादिति तथाविधनयनपटलादिकल्पं तज्ज्ञानविशेषकारि विरुद्धचेष्टानिमित्तं ततोऽन्यत्तदिति तत्त्ववादः। क्षयोपशमभावश्चास्य कालपरिणत्या विशिष्टानुष्ठानतश्च तत्तत्स्वभावतया नयनपटलादिह्रासरूपः प्रतिप्राण्येव यथोचितं तथाविधचित्रावबोधलिङ्गावसेयः, तस्मिंश्च सति तत्सामर्थ्यत एव विषयस्य तज्ज्ञेयत्वपरिणतिभावात् विषयिणोऽपि तज्ज्ञातृत्वपरिणत्युपपत्तेः, उभयोस्तथास्वभावत्वात्, अन्यथा तदनुपपत्तेरतिप्रसङ्गात्, नयनपटलादिह्रास इव स्थूरावबोधादि, तदानुरूप्यतः आविद्वदङ्गनासिद्धं तथाविधवस्तुग्राह्येव अवग्रहेहावायधारणारूपं मतिज्ञानसंज्ञितमिन्द्रियज्ञानमुपजायते, "तदिन्द्रियानिन्द्रियनिमित्तमिति वचनात्। तत्राव्यक्तं यथास्वमिन्द्रियैर्विषयाणामालोचनावधारणमवग्रहः, अवगृहीतविषयार्थैकदेशात् शेषानुगमनेन निश्चयविशेषजिज्ञासाचेष्टा ईहा, अवगृहीते विषये सम्यगसम्यगिति गुणदोषविचारणाव्यवसायापनोदोऽपायः, धारणा प्रतिपत्तिः, यथास्वं मत्यवस्थानमवधारणं च। न चैकत्वादवबोधस्येह चातुर्विध्याभावः, सर्वथैकत्वासिद्धेः, क्रमेण भावात् सम्पूर्णभवनेऽनियमात्। दृश्यत एवेहाद्यभावेऽपि

अ०ज० पताका० ॥ १८ ॥

क्वचिद्वग्रहमात्रं तथा निरवायेहाऽनिर्द्धारणश्चावायस्तथा तदनुभवसिद्धेः । अत एवैकत्वमपि, कथञ्चिदेकाधिकरणत्वात्, तत्रैव प्रवृत्तेः तद्वेद्यधर्माणामितरेतरानुवेधात् । तथा च यदिदं तदा दृष्टमपि नोपलक्षितमीषल्लक्षितमपि न सम्यग्ज्ञातं तदिदानीमवधारितमित्यस्ति व्यवहारः, न चायं भ्रान्तः, अविगानेन प्रवृत्तेः । अत इदमेकानेकमन्वयव्यतिरेकवद्दीर्घमपि कालसौक्ष्म्यात् तथावभासत इति । आह एवमपि तत्तद्धर्मावग्रहणादेः सर्वेषामवग्रहादित्वप्रसङ्गः, न, स्थूरेतरधर्मालम्बनावरणभेदतः क्रमभवनेन तथा प्ररूपणात् तत्त्वतस्त्वयमदोषएव, एवं चावग्रहादिभावे तत्तद्धर्मबोधात् केषाञ्चित् तथास्वभावत्वेनाक्षरानुगतबोधबोध्यत्वात् तेषु, अन्यथा नीलादाविव पीतादित्वेन बोधाप्रवृत्तेः क्षयोपशमसामर्थ्यतोऽक्षरप्रायोग्यद्रव्यग्रहणाविरोधात् तथाविधानुभवस्यान्यथानुपपत्तेः स्वसंवेद्यत्वेन प्रतिक्षेपायोगात् सन्न्यायत एव सिद्धं 'सविकल्पकं प्रत्यक्षमिति ।' एतेन यत्परेणाभ्यधायि इतश्चैतदेवं अन्यथा स्वाभिधानविशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति प्राप्तम् । अस्त्वेवमपि, को दोष इति चेत् एतदाशङ्क्य "निवृत्तेदानीमिन्द्रियज्ञानवार्त्ता अभिधानविशेषस्मृतेरयोगा"दित्यादि, तदपि परिहृतमेवावगन्तव्यम् । अभिधानविशेषयोजनासिद्धेः, वाच्यतद्बोधयोरेव तत्स्वभावत्वात्, नहि सर्वत्रैव स्मृत्यपेक्षो वाच्ये वाचकप्रयोगः, तथाऽननुभवात्, अन्तर्जल्पाकारबोधोपलब्धेः प्रयोगे उच्चार्यमाणस्य शब्दान्तरत्वात्, तस्यापि तद्बलेनैव प्रवृत्तेः, तदसम्पृक्तबोधवताऽनुच्चारणात् । प्रष्टृ व्यभिचार इति चेत्, न, तस्यापि प्रश्नाभिलापसम्पृक्तबोधवत्त्वात्, अन्यथा प्रश्नाभावात्, वस्तुनश्चानेकस्वभावत्वेन तस्याप्यभिधेयत्वात्, सर्ववस्तूनामेव प्रायस्तथा तथा सर्वशब्दवाच्यस्वभावत्वात् तत्तद्द्रव्याद्यपेक्षक्षयोपशमभेदतस्ततस्ततस्तत्र तत्राविलम्बितादिप्रतीतिभावात् अविगानेन तथा व्यवहारसिद्धेः अस्य चान्यथाऽयोगात् निमित्तानुपपत्तेः । एवं च सर्वशब्दानामपि प्रायो यथोक्तं सर्ववस्तुवाचकत्वमिति, क्षयोपशमानुरूपा च छद्मस्थानां प्रतीतिरिति न समं सर्वथा वा तदवसायः । न ह्यनेकप्रदीपावभासितेऽपीन्द्रनीलादौ मन्दलोचनादीनां सर्वाकारं समो वा तद्बोधः, तथाननुभवात्,

निमित्तभेदात्, न चासौ न तन्निमित्तः, तद्भावे भावात् तदभावे चाभावात्। दीपमण्डलादिदर्शनाद्व्यभिचार इति चेत्, न, तस्य तन्निमित्तत्वेऽपि भ्रान्तत्वात्, आन्तरदोषवैगुण्येनोत्पत्तेः, तद्विकलेनादर्शनात् इन्द्रनीलादिधर्माणां तु तदन्यवेदिनापि वेदनात् सूक्ष्मधर्मद्रष्ट्रा हि स्थूराणां ग्रहणात् तथा प्रतीतेः। न चैवं दीपादिद्रष्ट्रा तद्गृह्यते, इति दोषविजृम्भितमेतत्। दोषादसदर्शनसिद्धेः सर्वधर्मदर्शनमेव दोषजमस्त्विति चेत्, अदोषजं तर्हि कीदृक्। निर्विकल्पेन निरंशवस्तुग्रहणं, न, तत्राप्युक्तवत्सदाशङ्काऽनिवृत्तेः, एकस्यानेकस्वभावत्वविरोधात् तस्यान्याय्यत्वात् तन्निवृत्तिरिति चेत्, किन्तदेकस्वभावं, किमत्रोच्यते, वस्तुस्वलक्षणमेव, न, स्थूराकारप्रतिभासिनोऽसत्त्वात् अणूनां चाप्रतिभासनात् समूहस्याद्रव्यसत्त्वात् तेषामेव तत्त्वे तद्वदनुपलम्भात् समुदायदृश्यस्वभावत्वेनैकस्वभावत्वप्रसङ्गात् प्रत्येकमदृश्यस्वभावत्वात्, तत्तद्भेदे तदनणुत्वप्रसङ्गात् समुदायदृश्यस्वभावतया, अन्यथा योगिभिरप्यदर्शनात् तथापि तदणुत्वकल्पनेऽतिप्रसङ्गात्, अन्याणूनां समुदायादर्शनेऽपि तद्भावप्रसङ्गात् तैस्तद्भेददर्शने चानेकस्वभावतापत्तेः तेषामेवायोगिभिरन्यथा दर्शनात् अन्यथाऽन्यतरविज्ञानस्याविषयत्वप्रसङ्गात् दृष्टेष्टविरोधात् भिन्नसंस्थानबुद्ध्यसिद्धेः तत्त्वतोऽणुसमुदायाविशेषतस्तदयोगात् अस्याश्चानुभवसिद्धत्वात् प्रतिक्षेपायोगात् सर्वत्रानाश्वासप्रसङ्गात् विशेषहेत्वभावात् तत्त्वव्यवस्थानुपपत्तेः इति बाह्यालम्बनवादिनैकानेकस्वभावमेव तदङ्गीकर्त्तव्यम्। तत्राप्यनुपप्लुतप्रमात्राविगानसंवेद्याः स्वभावाः वस्तुसन्तः तदन्ये पुनर्नेति, तथा लोकानुभवसिद्धेः, अन्यथा तद्बाधया सर्वमेवासमञ्जसमनिबन्धनत्वादित्ययुक्तैकान्ततः शुष्कतर्कानुसारिणी सूक्ष्मेक्षिका, अनया हि भवदध्यक्षलक्षणमप्यसम्भव्येवेति वक्ष्यामः। अतोऽनेकस्वभावे वस्तुनि क्षयोपशमानुरूपप्रतिपत्तावुक्तवदन्तर्जल्पाकारबोधसिद्धेः अभिधानविशेषस्मृत्ययोगोऽबाधक एव। यदपि क्वचिद्वाच्योपलब्धौ तद्वाचकविशेषास्मरणं तदप्यनेकवाचकवाच्यत्वेऽस्य तथाविधावरणभावाद्विकल्पबोधवत एव अभिलापाद्यसंसृष्टबोधेनाननुस्मरणात् तथा प्रतीतेरिति, एवं च सति ह्यर्थदर्शने अर्थसन्निधौ दृष्टे शब्दे सतः

अ०ज० पताका० ॥ १९ ॥

स्मृतिः स्यादग्निधूमवदिति नैकान्तमुदरं, तदर्थस्याभिलापाऽसंसृष्टबोधेनादर्शनात् तथास्वभावत्वात् शब्दान्तरस्मृतौ चोक्तवददोषात् । एवं च न चायमशब्दमर्थं पश्यतीति विचारणीयम् । यदि शब्दानास्कन्दितमिति तदसिद्धं, केवलस्यैव दर्शनात्, अथाविकल्पज्ञानेन ततः सिद्धसाध्यता, शब्दार्थस्य तेनादर्शनात् । एवं चापश्यंश्च न शब्दविशेषमनुस्मरतीत्येतदपि विचारास्पदमेव । यदि येनैव संसृष्टविज्ञानः तमेव नानुस्मरतीति सिद्धसाध्यता, तस्य तदा तेनैव वेद्यमानत्वात् अथ तत्प्रतिबद्धं शब्दान्तरमिति, तदसिद्धेः तस्य सति क्षयोपशमे तद्दर्शनात् स्मरणोपपत्तेः । एवमननुस्मरन्न योजयतीत्यप्ययुक्तं तद्विज्ञानसंसृष्टस्य तथा योजनात् इतरस्यापि तत्सम्भवाविरोधात् । एवमयोजयन्न प्रत्येतीत्यप्यसाम्प्रतमेव, शब्दान्तरमधिकृत्यायोजयतोऽपि प्रतीतेः तद्व्यतिरिक्तेन तूक्तवद्योग एवेत्यायातमान्ध्यमशेषस्य जगत इत्युक्तिमात्रं, विवक्षिताभिधेयार्थशून्यत्वात् उक्तवत्तदयोगादिति । यत्पुनरेतदाशङ्कितमभिपतन्नेवार्थः प्रबोधयत्यान्तरं संस्कारं तेन स्मृतिर्नार्थदर्शनादित्येतदर्थतः साध्वेव, क्षयोपशमस्य द्रव्यादिनिमित्तत्वाभ्युपगमात् तदनुसारेण तत्प्रवृत्तिसम्भवात् । यत्पुनरिदमुक्तं न तत्सम्बन्धस्याऽस्वाभाविकत्वादित्येतदसाधु, उक्तवदस्वाभाविकत्वासिद्धेः, वक्ष्यमाणत्वात् चापोहाधिकारे अतस्समयाऽदर्शनेऽभावादित्ययुक्तं । तस्य क्षयोपशमव्यञ्जकत्वात् तद्भावे तु तदभावेऽपि भावात् क्वचित्तयोपलब्धेः, अन्यथा सदा तदपेक्षा स्यात् । एवं च पुरुषेच्छातोऽर्थानां स्वभावापरावृत्तेरित्यादि यावदशब्दसंयोजनमेवार्थं पश्यति दर्शनादित्येतन्निर्विषयमेव, अत्र ह्यनेकस्वभावतापत्त्या वस्तुनो नैरात्म्यमिति परं दूषणम्, एतच्चैकानेकस्वभावतयाऽस्य तत्त्वतोऽदूषणमेवान्यथा तदसत्त्वप्रसङ्गादित्युक्तप्रायं, अतो विरोधिशब्दवाच्यत्वेऽपि तत्तत्स्वभावतया तथोपलब्धेर्न कश्चिद्दोषः । स्यादेतदनलशब्दो ह्यनले तदभिधानस्वभावतया यमभिधेयपरिणाममाश्रित्य प्रवर्त्तते स जले नास्ति जलानलयोरभेदप्रसङ्गात् प्रवर्त्तते च समयाज्जलेऽनलशब्दस्तथा प्रतीतेरिति कथमनयोर्वास्तवो योग इत्युच्यते, शब्दस्यानेकस्वभावत्वात्

नह्यनलशब्दस्याऽनलगताभिधेयपरिणामापेक्षी तदभिधानस्वभाव एवैकः स्वभावः, अपि तु तथा विलम्बितादित्वेन जलगताभिधेयपरिणामापेक्षी तदभिधानस्वभावोऽपि तथा तत्प्रतीतेस्तद्वैचित्र्येण दोषाभावात् क्षयोपशमवैचित्र्यतस्तथा प्रवृत्तेः, अन्यथा अहेतुकत्वेन तदभावप्रसङ्गादिति । एतेन तथानुभवसिद्धेन शब्दार्थक्षयोपशमस्वभाववैचित्र्येणैतदपि प्रत्युक्तं यदुक्तं शब्देन्द्रियार्थयोर्भेद एवाव्यापृतेन्द्रियस्यान्यवाङ्मात्रेणैवेन्द्रियार्थाविभावनात् इन्द्रियादेव च शब्दार्थप्रतीतेरित्यादि । न खल्वव्यापृतेन्द्रियोऽपि तत्क्षयोपशमयुक्तोऽन्यवाङ्मात्रेण न विभावयत्येवेन्द्रियार्थं तद्वर्ण्यमानचिह्नादिनिश्चितेः तदन्यतुल्यजातीयमध्येऽपि भेदेन प्रवर्त्तनात् क्वचित्तत्प्राप्तेस्तथा निवेदनात् तथाऽस्पष्टं तु तत्साक्षात्कारेणाक्षव्यापारवैकल्यात् न त्वतद्विषयत्वेन एवमिन्द्रियादपि क्वचित्तथाविधक्षयोपशमभावे सङ्केतमन्तरेणापि भवति शब्दार्थविभावनं तथान्तर्ज्जल्पाकारादिबोधसिद्धेः, लोकानुभवप्रामाण्यादिति । स्यादेतदित्थमनेकस्वभावत्वे वस्तुनोऽनेकस्यैवानेकप्रमातृभिरवसायस्तथाहि यदि य एव तत्स्वभाव एकावसायस्य निमित्तं स एवापरावसायस्य ततस्तयोरैक्यं सर्वथैकनिमित्तत्वात् इतरेतरस्वात्मवत् , तद्भेदेऽपि तदवसायभेदे तदेकस्वभावतापत्तिः तदन्यकार्याणामपि तत्तथातया अविरोधादिति। अत्रोच्यते। एकान्तवादिन एवायं दोषो नानेकान्तवादिनः तस्य ह्यचित्रमेवैकं । न चानेककार्यजननैकस्वभावतां विहाय ततोऽनेकं भवति, अनेककार्यजनने च नाचित्रमेकत्वं, तद्भावेऽपि कार्त्स्न्येनैकेन तद्ग्रहात् तदपरावसायग्रहणप्रसङ्गः, तस्य तज्जननस्वतत्त्वस्यान्यथा ग्रहणायोगात् तत्सावधिकत्वात् न निरवधिकं ग्रहणं तद्ग्रहणमिति भावनीयम् । मलसामर्थ्यात् तदग्रहणं, तदग्रहणमेव सर्वथैकत्वात् अन्यथाऽस्य ग्रहणाग्रहणप्रसङ्गस्तथा च सत्यस्मन्मतानुवाद एव गृह्यमाणागृह्यमाणयोरेकत्वविरोधादिति तच्चित्रतयैव कथं चित् तद्ग्रहणादेकस्याप्यनेकप्रमातृभिरवसायो नान्यथेत्युक्तदोषानतिवृत्तेरित्यलं प्रसङ्गेन । यच्चोक्तं किञ्च विकल्पात्मकत्वेऽस्य निश्चयात्मकमिदमित्यनेकप्रमाणवादहानिस्तेनैव वस्तुनो निश्चयात् नित्यत्वादौ भ्रान्त्यनुपपत्तेः अनेकधर्मके वस्तुन्यन्यतरधर्म-

अ०ज०
पताका०

॥ २० ॥

निश्चयात् तदन्यनिश्चयाय प्रमाणान्तरसाफल्यमिति चेदित्याशङ्क्य नैकधर्मविशिष्टस्यापि निश्चये सर्वधर्मवत्तया निश्चयात् प्रमाणान्तरस्य निश्चितमेव विषयीकुर्वतः स्मृतिरूपानतिक्रमात् एकधर्मद्वारेणापि तद्वतो निश्चयात्मना प्रत्यक्षेण विषयीकरणे सकलधर्मोपकारकशक्त्यभिन्नात्मनो निश्चयादित्यादि ; तदप्ययुक्तम् । छद्मस्थज्ञानस्येत्थमप्रवृत्तेः, ज्ञेयतज्ज्ञानक्षयोपशमानां तथास्वभावत्वादित्युक्तप्रायम्, केवलिनां तु तथा निश्चयः प्रमाणान्तराभावश्चेति न कश्चिद्दोषः । आहैवमप्यनेकस्वभावतया ततस्तथानियतात्कथमनन्तानां केवलिनां तदविकलात्मग्राहकज्ञानभावः एकत्र कात्स्न्योंपयोगित्वेन तत्तज्जननस्वभावत्वात् अपरस्यापि तद्भावापत्तेर्हेत्वविशेषादिति। न, हेत्वविशेषासिद्धेः ज्ञानिनोऽन्यत्वात् अधिकृतवस्तुनश्च विचित्रत्वात् तत्तज्ज्ञान्यपेक्षया तत्र तत्र तदा तदाऽविकलात्मग्राहकज्ञानाभिव्यञ्जकात्मकत्वेनैकत्र कात्स्न्योंपयोगित्वादिति, न चैवमपरस्यापि तद्भावापत्तिः, अधिकृतवस्तुनस्तथात्वविरोधादिति सूक्ष्मधिया भावनीयम्, एकान्तैकस्वभाववस्तुवादिनस्त्वेष दोषोऽनिवारितप्रसर एव, तद्भेदनिबन्धनाधिकृतवस्तुवैचित्र्यानुपपत्तेरिति । किञ्च निर्विकल्पकेनापि प्रत्यक्षेणैकस्वभावे वस्तुनि परिच्छिन्ने कथं नानेकप्रमाणवादहानिरिति चिन्त्यम् । प्रत्यक्षस्यानिश्चयरूपत्वाच्चिन्तितमेवैतत्। आह च न्यायवादी "न प्रत्यक्षं कस्यचिन्निश्चायकं तद्यमपि गृह्णाति तं न निश्चयेन किं तर्हि तत्प्रतिभासेन, तच्च यत्रांशे पाश्चात्यं निश्चयं जनयितुं शक्नोति तत्रैव प्रामाण्यमात्मसात्कुरुते यत्र तु भ्रान्तिकारणसद्भावादशक्तं तत्र प्रमाणान्तरं व्याप्रियते समारोपव्यवच्छेदार्थमिति भ्रान्तिव्युदासाय प्रमाणान्तरप्रवृत्तिरिति। अत्रोच्यते, यदुक्तं "न प्रत्यक्षं कस्यचित् निश्चायकमित्यत्र कोऽयं निश्चयो नाम । स्वालम्बनाध्यवसाय एवेति चेत्, नायं तदाकारोत्पत्तिव्यतिरेकेण। अस्त्वेवं ततः को दोष इति चेत्, नासौ न प्रत्यक्षेऽपि कथमनिश्चायकं तत्। वस्तुमात्रप्रतिभासनादिति चेत्, अवस्तुप्रतिभासी तर्हि निश्चयः। न तत्रैव दृढः प्रत्यय इति चेत्, कथं तदाकारशून्यस्तत्रेति । किञ्च किं पुनरस्य दार्ढ्यं, किं निर्विकल्पकसमनन्तरत्वं, किं वा वासनाजन्म, उताध्यवसिततद्भा-

वता, आहोस्वित् ध्वनियोगः॥ न तावन्निर्विकल्पकसमनन्तरत्वं तदपरनिर्विकल्पकेन व्यभिचारात् निर्विकल्पकसमनन्तराभि-
विकल्पकोत्पत्तेः, नापि वासनाजन्म निर्विकल्पकस्यापि तत उत्पत्तेः, तत्समनन्तराव्यतिरेकात्, नाप्यध्यवसिततद्भावता,
अतदाभेन तत्परिच्छेदायोगात्, तत्त्वतस्तदनुपपत्तेः॥ नापि ध्वनियोगः, तत्तादात्म्याद्ययोगतस्तदासिद्धेः, तद्युक्तस्यापि तदा-
कारोत्पत्तिप्रधानत्वादिति, न च सैव केवलानिश्चयः, स्वालम्बनपरिच्छेदात्, न च न सोऽपि, तत्त्वतः तत्स्वभावतया तत-
स्तद्बोधोपपत्तेः। न च मूककल्पत्वान्नेति, बोधस्यानिश्चयत्वविरोधात्, न चास्पष्टतया नेति, तत्स्पष्टताऽभ्युपगमादिति। यच्चोक्तं
"तच्च यत्रांशे पाश्चात्यं निश्चयं जनयितुं शक्नोति तत्रैव प्रामाण्यमात्मसात्कुरुते" एतदप्ययुक्तम् तस्य निरंशत्वाभ्युपगमात् अन्यथा
परसिद्धान्तापत्तिः, व्यावृत्तयोंशा इति चेत्, न, तासां परमार्थतस्तद्व्यतिरिक्तत्वेन तन्मात्ररूपत्वात् तस्यैव च त्रैलोक्य-
व्यावृत्त्येकस्वभावत्वादिति, कथं च निश्चयस्य विकल्पात्मकत्वात् तत्त्वतो निर्विषयत्वात् तद्विषयता युक्ता येनोच्यते यत्रांशे
पाश्चात्यं निश्चयं जनयितुं शक्नोतीति, स ततोभवतीति तन्निश्चय इति चेत्, न, अतिप्रसङ्गात् नीलादि पश्यतः क्वचिद्भिन्न-
जातीयविकल्पाभ्युपगमात् तस्य च ततो भावात्, अन्यथा अहेतुकत्वापत्तेः, संवादको निश्चय इति चेत्, प्राप्यदेशगत-
जलादिनिश्चयेन व्यभिचारात्, न च संवादनशक्तिरेव संवादनमित्यदुष्टम्, शक्तेरप्रत्यक्षत्वात् कार्यमन्तरेण तद्भावानवगतेः,
न च ततोऽनन्याशक्तिरिति तदवगतावेव तदवगतिः, तदाभासतोऽप्रवृत्तिप्रसङ्गात् तच्छक्त्यवगमापत्तेः, न च तदाभासत्वतो
न तच्छक्त्यवगमः, तेनाप्यात्मवेदनात् तस्याश्च तदनन्यत्वात्, न च सम्यग्निश्चयशक्तेरेवावगतिरिति युक्तं, तत्त्वतो वचन-
मात्रत्वात् तथाप्रतीत्यभावादिति, एवं च तत्रैव प्रामाण्यमात्मसात्कुरुत इति वचनमात्रं। इतश्च वचनमात्रं यत्र तु भ्रान्तिकार-
णसद्भावादशक्तं तत्र प्रमाणान्तरं व्याप्रियते इत्याद्युपन्यासात्। तथाहि यदि तत्कचिदशक्तं पाश्चात्यं निश्चयं जनयितुमेवं
तर्ह्यशक्तमेव सर्वथैकत्वात् एकस्य चैकस्वभावत्वेन शक्तत्वाशक्तत्वविरोधात्, कथञ्चिदविरोधेऽप्यभ्युपगमविरोधात्, भि-

ध्यांशविषयनिश्चयभावाभावयोस्तु न तस्य किञ्चिदिति, कथं कचित्प्रामाण्यमात्मसात्कुरुत इति नैव समारोपव्यवच्छेदार्थमपि प्रमाणान्तरप्रवृत्तिः, न्यायतस्समारोपस्यैवायोगात्, । सजातीयेतरविविक्तैकस्वभावस्य वस्तुन इन्द्रियज्ञाने प्रतिभासनात् रूपादिनिश्चयज्ञानवत्तन्निबन्धननिश्चयज्ञानानां तमन्तरेणैव प्रवृत्तिसम्भवात्, तथाहि यद्रूपादिदर्शनानन्तरमलिङ्गं निश्चयज्ञानं भवति तत्कथमसति समारोपे भवेत् तद्व्यवच्छेदविषयं । स्यादेतदसमारोपविषये भावात् तत्तद्व्यवच्छेदविषयं यत्र ह्यस्य समारोपो भवति यथा स्थिरः सात्मक इति वा न तत्र निश्चयो भवति, तद्विवेक एव चान्यापोह इति तदपि तन्मात्रापोह-गोचरमेव न वस्तुस्वभावनिश्चयात्मकमित्येतदपि यत्किञ्चित्, वाङ्मात्रत्वात् । यत्तावदुक्तमसमारोपविषये भावादित्यत्र समारोपाभावस्य वृत्तिरुक्ता अयं च समारोपाभावो यदि प्रसज्यप्रतिषेधरूपस्ततो न क्वचिदस्य वृत्तिस्तस्य तुच्छत्वात् । तत्त्वत इत्थमेवेदमिति चेत्, कथमतुच्छप्रतिभासं रूपादिनिश्चयज्ञानं । तुच्छप्रतिभासमेव तदिति चेत्, अनुभवविरोधो रूपा-दिप्रतिभासस्य वेद्यमानत्वात्, अन्यथा तदनाकारत्वेन वेदनायोगादिति । अथ पर्युदासरूपः कथं न वस्तुस्वभावनिश्चयात्मकं तत्, तत्रैव प्रवृत्तेर्न तत्तदेति चेत्कथमसमारोपविषयेऽस्य भावः । अयमस्यैवात्मा न त्वन्य इति चेत्, स्वात्मन एव तदितरविकलस्य तत्त्वकल्पनायामतिप्रसङ्गः स्वलक्षणज्ञानस्यापि तत्त्वेन तद्भावापत्तेरिति । यच्चोक्तं यत्र ह्यस्य समारोपो भवति यथा स्थिरः सात्मक इति वा न तत्र निश्चयो भवति, एतदप्ययुक्तं, परमार्थेन तस्यास्थिरानात्मकस्यैव ग्रहणात् तत्र रूपादाविव समारोपप्रवृत्त्ययो-गात् । स्यादेतन्नहि तथा गृहीतोऽपि भावस्तथैव प्रत्यभिज्ञायते कचिद्भेदे व्यवधानसंभवात् यथा शुक्तेः शुक्तित्वे, यत्र तु प्रतिपत्तुर्भ्रान्तिनिमित्तं नास्ति तत्रैवास्य दर्शनविशेषेऽपि स्मार्तो निश्चयो भवति समारोपनिश्चययोर्बाध्यबाधकभावादित्येतदप्य-सत्, निरंशे तथा गृहीते क्वचिद्व्यवधानं क्वचिन्नेत्यपन्यायत्वाद्भेदाभावेन तत्त्वत एकनिश्चयज्ञानप्रसङ्गात्, न खलु रूप एव तदेकस्वभावनिबन्धनानि भूयांसि निश्चयज्ञानानि । किं चासौ भावः स्वप्रत्यभिज्ञानजनने व्यवधानसम्भवस्वभावो वा

स्यात् न वा, उभयथापि क्वचिद्भेदे व्यवधानसंभवादित्यप्ययुक्तम्, यथाक्रमं सर्वत्रैव तत्सम्भवासम्भवापत्तेः, अन्यथैकस्वभावत्वविरोधात् अतन्निबन्धनत्वे च निश्चयानां न तेभ्यस्तत्तत्त्वव्यवस्थेत्यफला तत्कल्पना, एवं च यथा शुक्तेः शुक्तित्व इत्यनुदाहरणमेव, भवन्नीत्या तदयोगात् शुक्तिकाया अप्यक्षज्ञानेन नील्यादिवत्तत्त्वेनैव ग्रहणात् । इत्थमेवेदमिति चेत्, कथं व्यवधानसम्भवः, ततस्तन्निश्चयानुत्पत्तेरिति चेत्, सैव तावत्किमिति चिन्त्यम् / निश्चयान्तरोत्पादादिति चेत्, कथमनुभवान्तरान्निश्चयान्तरोत्पादः, तत्तत्स्वभावत्वादिति चेत्, अनुभवान्तरवन्न तस्य तत्त्वं तत्त्वे वा ततस्तदुत्पादे व्यवहारनियमोच्छेदः, एवं हि नीलानुभवजन्योऽपि तन्निश्चयः पीतानुभवस्य तत्स्वभावतया जन्योऽपि सम्भाव्येतैव एवमन्यत्रापीति न न्यायविदस्ततो व्यवहारे नियमतः प्रवृत्तिर्युक्ता सर्वत्राशङ्कानिवृत्तेरिति, न, अनिवृत्तेः सर्वत्र बीजाभावात् वैधर्म्येण साधर्म्यासिद्धेः साधर्म्याच्च समारोप इति । यद्येवं स्थिरेतरादीनां किं साधर्म्यं क्व वा तेषां ग्रहणं येनास्थिरादिषु तत्समारोपः । सदृशापरापरोत्पत्तिविप्रलम्भादयमिति चेत् । किमिदं सजातीयेतरविविक्तैकस्वभावानां सादृश्यं कथं वा सदप्येतत्तदेकग्राहिणा ज्ञानेन गम्यते । तेषामेव तत् तत्स्वभावतया तथा ग्रहणेनेति चेत् । आकालं तदेकग्रहणे कुतोऽयं नभस आप्तवादः अनेकभिन्नकालभावग्रहणे चैकेनापैति क्षणिकता । तथाविधभावानुभवसामर्थ्यजनिश्चयात् तदवगम्यत इति चेत् । न युक्तमस्येमामक्रमागतामवगमश्रियं प्रतिपत्तुं तत्पूर्वक्षणानां च न्यायतस्तद्बीजाभाव उक्तः । तथानुभवसिद्धत्वात् सर्वं भद्रकमिति चेत्, न खल्वनुभव इत्येव तत्त्वव्यवस्थाहेतुः न्यायबाधितस्य तदनुपपत्तेः, अस्य चोक्तवन्न्यायबाधितत्वात्, क्षणिकत्वेन तथाऽसम्भवाच्च । एतेन "यत्र तु प्रतिपत्तुर्भ्रान्तिनिमित्तं नास्ति तत्रैवास्य दर्शनाविशेषेऽपि पाश्चात्यो निश्चयो भवति समारोपनिश्चययोर्बाध्यबाधकभावादिति" यदुक्तं तदपि प्रत्युक्तमेव, सर्वथैकस्वभावत्वे वस्तुनो दर्शने चेत्यमभिधानायोगात् एकत्र भ्रान्तिनिमित्तसम्भवे सर्वत्र तदापत्तेः तत्तदेकस्वभावत्वतत्त्वात्, अन्यथा यत्र भ्रान्तिनिमित्तं न यत्र चास्त्यनयोः कथञ्चिद्भेद

इति बलात् तदनेकस्वभावता शुक्तिकादावपि तन्नियमाभावाच्च, अतन्निबन्धनत्वे च निश्चयानां न तेभ्यस्तत्तत्त्वव्यवस्थेत्युक्तम् । एवं च यत्र स्वत एव निश्चयः स प्रत्यक्षो यत्र तु न सोऽनुमेय इति सन्न्यायमार्गिरन्यथाऽसमञ्जसत्वात् । न चैवं सविकल्पकप्रत्यक्षवादिनोऽप्यनेकस्वभावत्वाद्वस्तुनः क्षयोपशमवैचित्र्येण तथा निश्चयप्रवृत्तौ कश्चिद्दोषः, निरुपचरिततन्निबन्धनभावात्, दृश्यते च कथञ्चिदेकमेवैकानेकप्रमात्रपेक्षः शब्दलिङ्गाध्यक्षैः प्रतीतिभेदस्तथात्र निकुञ्जे वह्निरस्तीति शब्दतस्तथाविधदेशमात्रावच्छिन्नमग्निसामान्यं प्रतीयते धूमदर्शनात्तु विशिष्टदेशावच्छिन्नस्तद्विशेषः अध्यक्षतस्तु विशिष्टतरो ज्वालादिरित्यागोपालाङ्गनाप्रसिद्धत्वादन्याय्य एष इति । एवं च सन्न्यायसिद्धे प्रमाणानां वस्तुविषयत्वे यदुक्तं पुरस्तान्नान्य एवान्योपकारको नामेत्यादि, तदयुक्तमेव, परमार्थतो निर्विषयत्वात् । न च वस्त्वपि तदेकमनेकधर्मोपकारकशक्तिमदिष्यते जैनैः, एकानेकस्वभावत्वाभ्युपगमात् पृथग्भूतधर्मासिद्धेरिति कृतमत्र प्रसङ्गेन । यच्चोक्तं समारोपनिश्चययोर्बाध्यबाधकभावादिति, एतदप्ययुक्तं, परनीत्या समारोपनिश्चययोर्भेदासिद्धेः समारोपस्यापि निश्चयत्वात्, तदभावभावित्वस्य चोभयत्राविशेषात् । पौर्वापर्यस्य वा नियामकत्वात्, क्वचित्तस्यापि तुल्यत्वात्, अनित्यादिप्रतिपत्तावपि पुनर्नित्यादिनिश्चयोपलब्धेः, वस्तुन एव पारम्पर्येण तद्भावत्वात्, तदन्यतरापरनिमित्तत्वे तदितरत्र तन्निमित्तत्वानाश्वासात्, विशेषहेत्वभावात्, अनित्यस्याप्यर्थक्रियायोगादिति निर्लोठयिष्यामः । किञ्च समारोपव्यवच्छेदभावाविशेषादनुमानविकल्पवत्कथं रूपादिविकल्पो न प्रमाणं, समुद्भूतसमारोपव्यवच्छेदेनाभावादिति चेत्, न, क्वचित् तथापि भावदर्शनेनाऽविरोधात्, शुक्तिकाशकलादौ रजतादिसमारोपव्यवच्छेदेन तद्भावात्, न च न सोऽपि रूपादिविकल्पः, तन्मात्रहेतुत्वात्, न च तत्त्वतएकस्यापि तदितरनाशनेन प्रवृत्तिः, नाशस्य निर्हेतुकत्वाभ्युपगमात्, तदभाव एव तद्भावोपपत्तेः । लिङ्गलिङ्गिसम्बन्धस्मरणादिनाऽप्रवृत्तेरिति चेत्, कोऽयं गुणे प्रद्वेषो दोषाभिनिवेशः वस्तुसमारोपाभावेऽस्योपयोगात्, न च नासौ रूपादिविकल्पस्यापि, तदभावे

तत्प्रवृत्त्यनुपपत्तेः इति नानयोर्विशेषः । स खलु गृहीतग्राह्येव, प्रत्यक्षप्रतिभासिनोऽर्थस्य परामर्शात्, नह्यनुमानविकल्पोऽपि नैवमिति परिभाव्यतामेतत्, नहि प्रत्यक्षं भागश उत्पद्यते, निरंशत्वात् । सत्यं नोत्पद्यत इत्यनुमानविकल्पपरामर्शालम्बनमपि तत्र गृहीतमेव केवलं गृहीतेऽपि येष्वाकारेषु न तु तदनन्तरमेव निश्चयोत्पत्तिर्भूयसा व्याप्तिदर्शनात्तु भवति तद्विषय एवानधिगतार्थाधिगन्तृत्वात्प्रमाणमनुमानविकल्पो नेतर इति यत्किञ्चिदेतत्, अनालोचिताभिधानत्वात्, अनालोचिताभिधानत्वं च ग्राह्ये आकाराभावात् सर्वथैकस्वभावत्वाभ्युपगमात्, परिकल्पितानामसत्त्वात् तत्सत्त्वे नियमतोऽतिप्रसङ्गात् तथा युक्तितो व्याप्त्यसिद्धेः तद्भावस्य कथञ्चिद्भेदनिमित्तत्वात् अन्यथा तदयोगात्, नह्यभेदवत एवानित्यत्वस्य स्वात्मना व्याप्तिः, न च भिन्नयोरेव, हिमवद्विन्ध्ययोः तथानधिगतार्थाधिगन्तृत्वाभावात्, वस्तुरूपस्याध्यक्षत एवाधिगमात्, स्वाधिगमस्य चेतरत्रापि भावात् तदन्यस्य चेतरत्राप्यभावादिति, एवं प्रवर्तकत्वाद्यप्यस्य समानमितरेण, तत्रापि रूपादिनिश्चयादेव प्रवृत्तेः, व्यवहारे प्रमाणमेवायमिति चेत्, क्व तर्ह्यप्रमाणमिति, रूपादावेवेति चेत्, कुतोऽयं तत्राकारणो द्वेषः, प्रागेव तदधिगमादिति चेत्, समानोऽयं त्वन्नीत्याऽनित्यत्वादौ, तथापि न तद्वत्तद्दर्शनमिति चेत्, न, तर्हि प्राक् तद्वत्तदधिगमोऽन्यथारूपादिनिश्चयवत् स्यात् तदैवायं, निमित्ताविशेषात् तदधिगमस्यैव तत्त्वतस्तन्निमित्तत्वात् बाधकानुपपत्तेः विशेषेण भावात् एकान्तिकत्वात्, अन्यथा तदनुपपत्तेः । किञ्चायमधिकृताधिगमः किं [1]स्वगृहीतनिश्चयजननस्वभावः उत [2]समारोपजननस्वभावः अहोस्वि[3]दुभयजननस्वभावः उताहो [4]अनुभयजननस्वभाव इति । यदि [1]स्वगृहीतनिश्चयजननस्वभावः, निरवकाशः समारोपो, न चासावन्यनिमित्तोऽनिमित्तो वा । [2]अथ समारोपजननस्वभावः, कुतोऽस्मान्निश्चयजन्म, अतत्स्वभावभावेऽतिप्रसङ्गात्, [3]उभयजननस्वभावत्वे विरोधः, न्यायाविरोधेऽप्यभ्युपगमबाधा, [4]अनुभयजननस्वभावत्वे, तदुभयाभावस्तथा च प्रतीतिविरोधः इत्येकान्तेन निर्विकल्पकप्रत्यक्षवादिनो न न्यायतो रूपादिनिश्चयानुमानानिश्चययोर्भेदइति सूक्ष्मधिया भावनीयम् । कथं तर्ह्यनुमानविकल्पो

नानन्तरं, सन्न्यायतोऽक्षज्ञानेन तद्विषयानधिगतेः वस्तुनोऽनेकधर्मत्वात् क्षयोपशमवैचित्र्यादित्युक्तप्रायम्, अतो न निर्विकल्पकमेव प्रत्यक्षम्। लक्षणायोगाच्च "प्रत्यक्षं कल्पनापोढमभ्रान्तमिति लक्षणं" न चैतन्न्याय्यं, परनीत्याऽनेकदोषापत्तेः, कल्पनापोढत्वस्याव्यापकत्वात्, कल्पनायामपि स्वसंविदः प्रत्यक्षत्वाभ्युपगमात्, तस्याश्च तदव्यतिरिक्तत्वात् व्यतिरिक्तत्वेऽधिकृतविशेषणायोगात् तत्त्वतो व्यवच्छेद्यानुपपत्तेः अवस्तुत्वात्कल्पनायाः। स्वसंविद्यातत्त्वेतरविकल्पाभ्यां दोषापादनमयुक्तमिति चेत्, न, तदवस्तुतत्त्वेन विकल्पधियोऽभावप्रसङ्गात् स्वसंविन्मात्रस्यैव भावात् असत्योपरागायोगात् क्लिष्टताऽसिद्धेरिति। किञ्चैकान्तवादिनः सर्वथा कल्पनाऽपोढत्वे कल्पनापोढत्वकल्पनातोऽप्यपोढत्वात् कल्पनापोढत्वलक्षणायोगः। प्रत्यक्षसामान्यं लक्षणविषय इति चेत्, न तस्य ततो व्यतिरिक्तेतरविकल्पायोगात्, व्यतिरिक्तत्वे न तदध्यक्षलक्षणं अव्यतिरिक्तत्वे तूक्तवल्लक्षणायोगः। निरूपणानुस्मरणविकल्पाभ्यामविकल्पकं स्वभावविकल्पेन तु सविकल्पकमिति चेत्, न, विरोधात्, अन्यथाऽनेकान्तापत्तेः स्वाभ्युपगमपरित्यागादिति। एवमभ्रान्तत्वविशेषणमप्यसङ्गतमेव, परनीतितो व्यवच्छेद्यायोगात्। इन्दुद्वयादिज्ञानं व्यवच्छेद्यमिति चेत्, न, तस्याभ्रान्तत्वात्, एतच्च लक्षणोपपत्तेः तस्यापि तत्प्रकाशकस्वभावहेतुजत्वतश्च भ्रान्तताऽसिद्धेः, अन्यथा तदयोगात्, तस्य चानुभवसिद्धत्वात्, न च बहिस्तद्विषयानुपलब्ध्या तत्सिद्धिः, तद्ग्रहण स्वभावधिया तद्विषयानुपलब्ध्यसिद्धेः, अन्यथानुपलब्धौ तदभावासिद्धेरतिप्रसङ्गात्। न चातैमिरिकस्यापि तत्प्रत्ययप्रसङ्गः, तस्य तिमिरतदन्यहेतुजन्यस्वभावत्वात्, अतैमिरिकाणां च तदभावात् तथा लोकप्रसिद्धेः। न च बाधातो अस्य भ्रान्तता, बाधासिद्धेः भिन्नकालविषयप्रत्ययेन तदभ्युपगमेऽतिप्रसङ्गात्, क्वचिदभ्रान्तस्यापि असर्प्पादौ तदन्यतो बाधोपलब्धेश्च। न चानर्थक्रियाकरणतः, अत्राप्यदेशगतजलादिज्ञानेन व्यभिचारात्, संविन्मात्रार्थक्रियाविधाने चास्येतरत्रापि तद्भावात् तथाप्रतीतेः न च लोकप्रतीतितः, अभ्युपगमविचारात् तेन च तदप्राप्तेः तस्य चेहाधिकृतत्वादित्यलमनया

लोकागमानुभवविरुद्धया अतिसूक्ष्मेक्षिकया उक्तवत्सर्वत्रासमञ्जसतापत्तेः । यस्तु लोकादिसापेक्षः तस्यैव तद्भेदस्याविद्वदङ्गनादिलोकप्रतिष्ठितत्वात् अविगानतस्तथाऽप्रतीतेः तद्व्यवस्थाकारिसदागमभावात् उक्तदोषाभाव इति । किञ्च निर्विकल्पकं प्रत्यक्षमित्यत्र न प्रमाणं, तेनैव तदनधिगतेः, अर्थविषयत्वात् तस्य च ततोऽन्यत्वात्, तथाहि न तन्निर्विकल्पकत्वमेव तदर्थः न चानर्थो विषयः न चाविषयेऽधिगतिरिति न तत्रास्य प्रमाणतातिप्रसङ्गात् । उभयं विषय इति चेत्, न, उभयोस्तल्लक्षणायोगात् स्वनिर्विकल्पकत्वस्य तदकारणत्वात् अकारणस्य चाविषयत्वात्, अन्यथाभ्युपगमविरोधात् । एतेन स्वसंविदितत्वं प्रत्याख्यातं । अनेन विषयावेदनप्रसङ्गात् सर्वथैकस्वभावत्वात् निर्विषयतापत्तेः, न च स्वसंवेदनमेव विषयवेदनं, तयोः कालादिभेदात् तद्वेदनस्यैकत्वाभावात् तच्चित्रताप्रसङ्गादित्येवमेकस्वभाववस्तुवादिनोऽन्यावेदनप्रसङ्ग एव, एवं च सति स्वनिर्विकल्पकत्ववेदनात् तत्सामर्थ्यतस्तत्पृष्ठभावी विकल्पः स्वतस्तद्विषय एव स्याद्रूपादिविकल्पवच्च न भवति तथाऽप्रतीतेः, न च तमन्तरेण तत्तथाताव्यवस्थितिरतिप्रसङ्गादिति, एतेन यदाह न्यायवादी, "प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिध्यति । प्रत्यात्मवेद्यस्सर्वेषां विकल्पो नाम संश्रयः॥ १ ॥ संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना । स्थितोऽपि चक्षुषा रूपमीक्षते साक्षजा मतिः॥ २ ॥ पुनर्विकल्पयत्किञ्चिदासीन्मे कल्पनेदृशी । इति वेत्ति न पूर्वोक्तावस्थायामिन्द्रियाद्गतौ॥ ३ ॥" इत्यादि, तदपाकृतमवसेयम्, उक्तवत्प्रत्यक्षेणैवासिद्धेः तदेकस्वभावत्वविरोधादिति । न चानुमानमत्र प्रमाणं, अस्य स्वलक्षणत्वात् अनुमानस्य च सामान्यलक्षणालम्बनत्वात्, न चेदं परे पक्षे चारु, गमकलिङ्गासम्भवात् स्वभावकार्यासिद्धेः स्वभावस्य तादात्म्येन तत्त्वात् तद्वत्तद्ग्रहणात् तद्ग्रहे साध्यप्रतिपत्तेः तदप्रतिपत्तौ तद्ग्रहणायोगात् एकान्तैकत्वात् तथाग्रहे मोहाऽभावात् भावे वा निवृत्त्यनुपपत्तेः उपायाभावादिति, अनेन शिंशपादिप्रतिपत्तौ वृक्षाप्रतिपत्तिः प्रत्युक्ता, तुल्ययोगक्षेमत्वात्, अन्यथा कथञ्चित्तद्भेदापत्तेः । व्यावृत्तिभेदोऽभ्युपगम्यत एवेति चेत्, न तर्हि तदेकत्वस्वभावता । सोऽपारमार्थिक इति चेत् । किमर्थमस्योपन्यासः । व्यवहारार्थमिति

अ०ज०
पताका०

॥ २४ ॥

चेत् । कीदृशोऽसतां व्यवहारः । परमार्थतो भ्रान्त इति चेत् । न तत्त्वतस्साध्यसाधनभाव इति । एतेन सर्व एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेनेत्येतदपि प्रत्युक्तं, अस्य तावदर्थाप्रतिबद्धत्वात् तस्यैकत्वेनातथाभूतत्वान्नीलानीलपीतबुद्ध्याकारतुल्यत्वात् परप्रतिपादनोपायत्वानुपपत्तेः अतिप्रसङ्गादिति न स्वभावहेतोस्तदवगतिः । एवं कार्यहेतोरपि, तन्निर्विकल्पकत्वकार्यत्वेन कस्यचिदसिद्धेः, सदैकेनैकवेदनात्, तत्कार्यत्वस्य च तदवधिकत्वात् तदग्रहणे तथाऽग्रहणात्, अन्यथा न्यायायोगात् । तत्तत्स्वभावतः तथाग्रहणेऽतिप्रसङ्गात् अन्यतरदर्शनादन्यतरावगमापत्तेः तथा विशिष्टस्य ग्रहणात् अभ्युपगमेऽनुभवविरोधात् लोके तथोपलब्धेः तस्य च परपक्षेऽभावात् ज्ञानानां प्रतिनियतार्थत्वात् तत्तथाभावतोऽनुसन्धानायोगात् तथाविधविकल्पस्याप्यसिद्धेः, तस्यापि क्षणिकत्वात् तथा तत्तन्निश्चयानुपपत्तेरित्यत्रापि बुद्ध्यारूढधर्मधर्मिन्यायतोऽप्यधिकृतव्यवहाराभावः, उक्तवन्न्यायतस्तदयोगात् योगेऽप्यभिलषितार्थासिद्धिरेव अर्थस्यार्थगमकत्वाभ्युपगमात् तत्तथातायां च निश्चयाभावात् तस्य तद्विषयत्वानभ्युपगमात् पारम्पर्यतस्तत्तद्भावे प्रमाणाभावात् परनीतितस्तदसिद्धेरिति, अनेन धूमादग्न्यनुमानं निषिद्धं, समानयुक्तित्वादिति । यस्य पुनरन्वयव्यतिरेकवदेकानेकस्वभावं निश्चयात्मकमेव प्रत्यक्षं तस्योक्तदोषाभावः, सर्वत्रानुपचरितनिबन्धनभावात् प्रतीतिसचिवतच्चित्रस्वभावतया तदविरोधादित्यलं प्रसङ्गेन । अस्तु वा निर्विकल्पकमपि प्रत्यक्षं तत्रासाधारणमेव वस्तुप्रतिभास इत्येतदयुक्तं, न्यायानुभवविरोधात्, तत्प्रतिभासो हि निश्चयबलेन व्यवस्थाप्यते, अन्यथा तदयोगात्, भावतस्तेनैव तदनधिगतेस्तथानुभवाभावात् एवमपि तत्कल्पनेऽतिप्रसङ्गापत्तेः नियामकाभावादिति । न च द्राग्दर्शनात् तन्निश्चयोऽपि तु सदादिमात्रस्य अतः प्रथममक्षसान्निपाते तदेव प्रतिभासत इति युक्तम्, सितेतरादिष्वपि क्षिप्रादिदर्शने तावन्मात्रनिश्चयात्, न च तत्र तदग्रहणमेव, तथानुभवविरोधात्, न चान्यथाग्रहणेऽन्यथा निश्चयोत्पादः, प्रमाणाभावात् । न च सम्भव्ययं न्याय्यः, असमञ्जसत्वापत्तेः, न च वैभ्रमिक एवायं, तद्भावभावित्वोपलब्धेः ।

अवग्रहादप्ययमयुक्त इति चेत्, सत्यमदोषस्तु तन्मात्रादनभ्युपगमात् । एवमपि द्रुतबाधेति चेत्, न, अन्तरालाभावत एव तद्भावात् । कथमेतदवगम्यत इति चेत्, अवग्रहबोधस्याल्पत्वात् । यदि नामैवं ततः किमिति चेत्, नासौ विशिष्टाध्यवसायबीजं यस्तु भवति सोवान्तरावायरूपोऽवायबहुत्वात् । एवं सद्द्रव्याद्यनेकस्वभावे वस्तुनि तदितरधर्मालोचनेन समानधर्मव्यवच्छेदतस्तद्बोधपूर्वकत्वात् तदितरबोधस्य तथानुभवतस्वतथास्वभावत्वाद्गमात् प्रथममेव विशेषाग्रहणात् इन्द्रियद्वारेणैव तथार्थविशेषप्रतिपत्तिः सकललोकसिद्धत्वात्, अन्यथा तदनुपपत्तेः द्राग्दर्शने क्वचिदभावात् शीघ्रावगमस्यापि दीर्घत्वात् कालसौक्ष्म्यादिति वस्तुनोऽनेकस्वभावत्वात् सर्वेषां सदाभावात् अन्यथा तदनुपपत्तेश्चित्रास्तरणवदेकदैव किमार्थविशेषप्रतिपत्तिर्येन तदेवमिति ग्रहीतुः क्षयोपशमाभावादित्युक्तप्रायं । एवमीहादेः कथञ्चिदनधिगतार्थाधिगन्तृत्वात् एकाधिकरणत्वात् बोधवृद्ध्युपपत्तेः आलोचिताधिगमात् तत्स्थैर्यसिद्धेः तथानुभवभावात् प्रतिक्षेपायोगात् बाधकानुपपत्तेः न्यायतएव व्यवस्थितं प्रामाण्यं । सद्द्रव्याद्यनेकस्वभावता च वस्तुनस्तथानुभवसिद्धत्वादिति । किं हि सत्त्वादन्यत् द्रव्यादीति चेत्, प्रतीतमेतद्यस्मिन् गृहीतेऽपि कथंचिन्न गृह्यत इति, नैवं विधं किञ्चिदवगच्छाम इति चेत्, किं न भवति भवतः क्वचिद् घटादौ सन्मात्रग्रहेऽन्याग्रहः । किं तद्यद्भूयो गृह्यत इति चेत्, ननु बालादिसिद्धं तदनुविद्धमेव विशिष्टं मृद्रूपादि । न तत् तत्सत्त्वतोऽन्यदेवेति चेत्, सत्यमेतत् किन्तु तन्मात्रमपि न भवतीति तथा प्रतीतेर्निश्चयानुभवेनाविगानत एवैकत्र सन्मृद्रूपाकारवेदनात् सन्मात्रादेवैतदनुपपत्तेरतिप्रसङ्गात् रूपमात्राद्रूपरसानिश्चयापत्तेः । न च सत्त्वाकारयोरप्यभेद एव, अनेकदोषप्रसङ्गात्, तथाहि घटसत्त्वं तावदेकं तस्य मृद्रूपाद्यात्मकत्वे एकत्वहानिः तदनभ्युपगमे प्रतीतिबाधात् तथैकत्वेऽपि कस्यासावाकार इति वाच्यम्, न रूपसत्त्वस्य, त्वगिन्द्रियेणापि ग्रहणात् तस्य च रूपाविषयत्वात् तथाऽप्रतीतेः तत्सत्त्वस्य च तत्त्वात्, न स्पर्शसत्त्वस्य, चक्षुषाप्युपलब्धेः स्पर्शात् तत्सत्त्वभेदप्रसङ्गात् रूपेऽप्यनुगमोपपत्तेः, अन्यथानुभवविरोधात्, न चोभयसत्त्वस्य,

अ० ज० पताका० ॥ २९ ॥

वदेकतायोगात् इन्द्रियसङ्करप्रसङ्गात्, लोकविरोधापत्तेः असमञ्जसत्वादिति। न च तयोराकारयोर्भेद एव, तथा प्रतीत्यभावात् तत्त्वत उभययोगात् तत्सत्त्वैकत्वक्षतेः तथा चाभ्युपगमविरोधादिति। न चैतेभ्योऽन्य एव घटः, अग्रहणप्रसङ्गात् अरूपाद्यात्मकत्वात् तत्त्वावपि तत्तद्रूपतानापत्तेः। इत्थमपि तद्ग्रहणे इन्द्रियाणां स्वधर्मातिक्रमात्, कथमतिक्रम इति चेत्, चक्षुरादेररूपादिग्रहणात्, एवमपि को दोष इति चेत्, ननु रसादिग्रहणापत्तिः, प्रतीतिबाधितेयमिति चेत्, तदतिरिक्तग्रहे का प्रतीतिः। न तेभ्य एकत्वबुद्धिरिति चेत्, ततः किमिति वाच्यम्। अस्ति चेयमिति चेत्, न खल्वस्यां विगानं। य एतन्निमित्तः स स तेभ्योऽन्य इति चेत्, सङ्ख्यायाः तद्भावप्रसङ्गः। न सा तदनाश्रितेति चेत्, एवमपि तत्त्वतोऽन्यैव, यदि नामैवं ततः किमिति चेत्, तन्निमित्तैकबुद्धिः। सा तद्विशेषणभूतेति चेत्, कथमेतद्विनिश्चीयत इति, एकोयमिति व्यवसायादिति चेत्, नासौ सदादिभिन्नप्रतिभासीति तथाननुभवात् एवमपि तत्कल्पनेऽतिप्रसङ्गात् तदन्तरापत्तेर्निराकरणायोगात् अननुभवाविशेषादिति तदेकत्वपरिणामनिबन्धन एवायं। तेषामेवैकात्मकत्वाद्भेदाभेदभावात् तथास्वभावत्वात् विरोधानुपपत्तेः प्रतीतिसिद्धत्वात् बाधाभावादिति सङ्ख्याद्यनेकस्वभावे वस्तुनि वस्तुमात्रग्राह्येवावग्रहकल्पमविकल्पकमङ्गीकर्त्तव्यमित्यन्यथोक्तदोषानतिवृत्तिः। एवं भूते चास्मिन्नावयोरविवाद एव, एवंविधावग्रहस्यास्माभिरप्यभ्युपगतत्वात्, न चात्र कश्चिद्दोषः, अपि तु शुक्तिकादावपि क्वचिद्रजतादिनिश्चयस्य न्यायत एवापत्त्या गुणः, तस्य ह्यवग्रहोत्तरकालमीहाप्रवृत्तस्य तथाविधसमानधर्मोपलब्धुरेवासत्क्षयोपशमभावतो भावात्, अन्यथोक्तवत्तदयोगादिति। यच्चोच्यते गृहीतग्राहित्वाद्विकल्पोऽप्रमाणमिति, एतदप्ययुक्तं, स्वमतविरोधात्, निर्विकल्पकज्ञानेन स्वलक्षणस्य गृहीतत्वात् विकल्पस्य तद्ग्राहित्वानुपपत्तेः तत्प्रतिभासशून्यत्वात्, एवमपि तत्तथाभ्युपगमे, अतिप्रसङ्गात्, नीलविकल्पस्य पीतग्राहित्वापत्तेः, पारम्पर्येण तत्तज्जनकत्वाविशेषात् उपलब्धपीतनीलद्रष्टुरपि तद्भावादिति। न च गृहीतग्राहिज्ञानमप्रमाणमेव, एकत्र नीलादावनेकप्रमातृज्ञानानां प्रमाणत्वाभ्युपगमात् तेषां चान्योन्यं गृहीतग्राहित्वात्,

अन्यथा तद्ग्रहणानुपपत्तेः, तथाऽगृहीतग्राहिज्ञानासम्भवात् सर्ववस्तूनां सर्वबुद्धैस्सदाग्रहणात् तेषां सर्वज्ञत्वात्, अन्यथा तत्तत्त्वायोगात् एकसन्तानापेक्षया च गृहीतग्राहिज्ञानासम्भव एव सर्वेषां सर्वदाऽगृहीतग्रहणादिति । स्यादेतन्न तत्त्वतो गृहीतग्राहित्वेनास्याप्रामाण्यमपि त्वविषयत्वेनेति । कथमयमविषय इति वाच्यम्, यदनेन वेद्यते न तदस्तीति चेत्, क्व तन्नास्तीति, किं तत्रैव उच्यते, उताहो बहिरिति, यदि तत्रैव कथं वेद्यते वेद्यमानं वा कथं न तत्रेति चिन्त्यम् । अथ बहिः, अविकल्पकेऽपि समानः प्रसङ्गः तेनापि वेद्यमानस्य बहिरभावात् स्वरूपस्यैव वेदनात् । तद्बहिस्थतुल्यरूपमित्यदोष इति चेत्, केयं तत्तुल्यरूपतेति वाच्यम्, किं तत्साधारणरूपभाव उताहो तत्तद्ग्रहणस्वभावतेति, न तावत्साधारणरूपभावः, चेतनाऽचेतनत्वेन तद्वैलक्षण्यसिद्धेः सामान्यवेदनेन तदप्रामाण्यप्रसङ्गाच्च तत्तद्ग्रहणस्वभावता, तदङ्गीकरणे च विकल्पज्ञानेऽपि तुल्यः परिहारः, तस्यापि तद्ग्रहणस्वभावताऽभ्युपगमात् । तथाविधग्राह्याभावादस्य कुतस्तद्ग्रहणस्वभावतेति चेत्, न, तथाविधग्राह्याभावे प्रमाणाभावात्, प्रत्यक्षस्य स्वलक्षणविषयत्वेन तत्राप्रवृत्तेः, अनुमानस्याप्यनुपलब्धिलक्षणप्राप्तार्थाविषयत्वात्, तस्य च तदभावाभ्युपगमात् । नहि साधारणं रूपमुपलब्धिलक्षणप्राप्तमिष्यते भवद्भिः, तदवस्तुत्वप्रतिज्ञानात् अनीदृशानुपलब्धेश्चाभावनिश्चायकत्वानुपपत्तेः । एतेन तद्बाधकप्रमाणप्रवृत्तिः प्रत्युक्ता, उक्तवत्प्रत्यक्षादेस्तद्बाधकत्वायोगात् । युक्त्या तदयोगो बाधक इति चेत्, न, विकल्पानुपपत्तेः, युक्तिर्हि प्रमाणमप्रमाणं वा स्यात्, प्रमाणं चेत्, न प्रत्यक्षादेरन्यदित्यत्र चोक्तदोषः । अप्रमाणत्वे तु तद्बाधकत्वानुपपत्तिरतिप्रसङ्गात् । अखिलविकल्पज्ञानभ्रान्ततावादिनश्च तत्सामर्थ्योत्थं वचनमपि तादृगेवेति सुस्थिता तत्तत्त्वनीतिः, नहि भ्रान्तमात्मनो भ्रान्ततामवैति द्विचन्द्रज्ञानादावात्मनि भ्रान्तताधिगमव्यपोहेन चन्द्रद्वयाद्यधिगतिदर्शनात्, तत्स्थामोपजातवचसोऽपि स्वभ्रान्तताभिधानपरित्यागेन चन्द्रद्वयाद्यभिधानादिति सकलमेव शास्त्रज्ञानाभिधानं भ्रान्तिमात्रमिति कथं ततस्तत्त्वनिश्चय इति चिन्त्यम्, तथाह्यस्य नित्यात्मादिविकल्पवत्कृतकत्वादिलिङ्ग-

द्वारायाता अनित्यानात्मादिविकल्पा अपि भ्रान्ता एवेति कथं तेभ्यस्तन्निश्चितिः, निश्चितौ वा कथं न नित्यादावपि तद्विकल्पानामपि ततो भावात्। स्यादेतत्स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्व एव विकल्पास्तथापि केषांचिदेव तत्प्रतिबद्धजन्मनां विकल्पानां अतत्प्रतिभासित्वेऽपि वस्तुन्यविसंवादो मणिप्रभायामिव मणिभ्रान्तेः नान्येषां, तद्भेदप्रसवे सत्यपि यथादृष्टविशेषानुस्मरणं परित्यज्य किञ्चित्सामान्यग्रहणेन विशेषान्तरसमारोपाद्दीपप्रभायामपि मणिबुद्धेरिति संवादिभ्य एव तन्निश्चितिर्नासंवादिभ्यः, एतदप्यसत्, अविचारितरमणीयत्वात्। तत्र यत्तावदुक्तं स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्व एव विकल्पा इति। अत्र किमिदं स्वलक्षणदर्शनं नाम का वा तदाहिता वासना यत्कृतविप्लवरूपाः सर्व एव विकल्पा इति। वस्त्वनुभवः स्वलक्षणदर्शनं तदाहितवासना तु तथाविधविकल्पजननशक्तिः, यद्येवं कथं निरंशवस्तुविषयान्निरंशानुभवात् तथाविधविकल्पजननशक्तीनां प्रभूतानां सम्भवः, कथं चैकस्या एवानेकविकल्पजन्म, समुत्पद्यन्ते च स्वलक्षणदर्शनानन्तरं नित्यानित्यादिविकल्पाः क्रमेणैकस्याक्रमेण चानेकप्रमातॄणां, न चैते शक्तिभेदैकानेकजनकत्वे विना, न च भूयसामपि निरंशवस्तुविषयनिरंशानुभवानां तत्त्वतस्तत्त्वे विशेषो, रूपादिस्वलक्षणानामिव, तन्न तेषामिवैकस्य बहूनां वानन्तरं पारम्पर्येण वा तथाविधफलभेदोऽमीषां न्याय्य इति भाव्यमेतत्। का चेयं तथाविधविकल्पजननशक्तिः, किं तदुत्तरं मानसं उतान्यैव काचित्, यदि मानसं, कथं स्वलक्षणादस्वलक्षणजन्म, अस्वलक्षणं च विकल्पोऽसदाकाररूपत्वात्। न स्वसंवित्तिस्तत्रास्वलक्षणमपि तु बहिर्मुखावभास एवेति चेत्, न खलु सा ततोऽन्येति कथं नास्वलक्षणं। असन्नसौ सा तु सती स्वसंविदितत्वादेवेति चेत्, कथमसौ तन्मात्रतत्त्वा विकल्प इति चिन्त्यम्। असदाकारानुवेधादिति चेत्, कथमसतानुवेधो नाम। स निर्विषयत्वादसन्नतु तथाप्रतिभासेनेति चेत्, न स्वसंवित्तिस्तथाप्रतिभासनादन्येत्यस्वलक्षणत्वमेव। तस्य विभ्रमरूपत्वात् तदन्यानन्यत्वकल्पनैवायुक्तेति चेत्, कोऽयं विभ्रम इति कथनी-

यम् । अनिरूप्यस्वरूपस्तत्त्वतोऽसद्रूप इति चेत्, कथमयं स्वसंवित्तिभेदक इति वाच्यम् । न तत्त्वत इति चेत्, उच्छिन्नो विकल्पः । अस्त्विति चेत्, प्रतीत्यादिबाधा, चेतनैव तथाभूता विकल्प इति चेत्, किं भूतेति चिन्त्यम् । असदाकारेति चेत्, अस्वलक्षणमेवेयमसदाकारत्वात् । न स्वसंवित्तिस्तत्रास्वलक्षणम् अपि तु बहिर्मुखावभास एवेति चेत्, न खलु सा ततोऽन्येति समानं पूर्वेणेति, यदि मानसं कथं स्वलक्षणादस्वलक्षणजन्म साधीय इति कथं वा निर्विकल्पकत्वेनाभिन्नात् भिन्नविकल्पसम्भवो नहि नीलादिमात्रात् क्वचिद्रसादिभावः तथादर्शनात्, न चात्र किञ्चिद्भेदकम्, अनभ्युपगमात्, अभ्युपगमेऽपि ततोऽतिशयासिद्धेरिति निवेदयिष्यामः । अथान्यैव काचित्, कासाविति वाच्यम् । अनादिमदालयगतशक्तेः स्वलक्षणदर्शनसहकारिभावतो विशेषकरणं, तथाहि सा तदनुभवं प्राप्योत्कर्षेण तथाविधविकल्पजननस्वभावोपजायते इति स्वलक्षणदर्शनाहितेत्युच्यते, अत एव न भिन्नविकल्पसम्भवाभावः तथाविधशक्तिसहकारित्वेन तदनुभवस्य तदविरोधादिति, एतदपि यत्किंचित्, तस्य तत्सहकारित्वासिद्धेः, ततस्तस्या उपकाराभावात् अनुपकार्योपकारकयोश्च सहकारित्वायोगात् । द्विविधो हि वः सहकारार्थः परस्परातिशयाधानेन सन्ताने विशिष्टक्षणोत्पादनलक्षणः, पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणश्च, न चानयोरेकोऽपि सम्भवति, क्षणिकत्वेन परस्परातिशयाधानायोगात् । अतिशय उपकार इत्यनर्थान्तरं । न चासावन्यतोऽन्यस्य, विकल्पायोगात्, तदनुभवो हि तच्छक्तेरनुत्पन्नाया उत्पन्नायाः निरुद्धाया एव चोपकुर्यात्, न तावदनुत्पन्नायाः, तस्या एवासत्त्वात्, असतश्चोपकाराकरणात् । नाप्युत्पन्नायाः, तस्या अनाधेयातिशयत्वात्, क्षणादूर्ध्वमनवस्थितेः । द्वाभ्यामप्येकीभूय तदन्यकरणमेवातिशयाधानं तदेव चोपकार इति चेत्, न, उपादानकारणविशेषाधानमन्तरेण ततः कार्यविशेषासिद्धेः, न चैककालभाविनाऽन्यतो भवन्त्या अन्यत एव भवता तस्या अतिशयाधानं, तन्निबन्धनस्य तत्कृतविशेषासिद्धेः, तदभ्युपगपगमे च तत्राप्ययमेव वृत्तान्तः एवं निबन्धनपरम्परायामपि वाच्यमित्यत्राणं निबन्धनपरम्परा । स्वहेतुपरम्प-

अ०ज०
पताका०
॥ २७ ॥

रात एव सा शक्तिस्तथास्वभावोत्पन्ना याऽनुपकारिणमपि तदनुभवं सहकारिणमपेक्ष्य विशिष्टं कार्यं जनयत्यतो न दोष इति चेत्, न, अनुपकारिणोऽपेक्षायोगात्, तदभ्युपगमेऽतिप्रसङ्गात्, तत्तथाविधस्वभावाधायक-हेतोरप्यस्थानपक्षपातित्वापत्तेः, स्वभावापर्यनुयोगस्य च प्रमाणोपपन्नस्वभावविषयत्वात्, स्वपरिकल्पनागर्भ-वाङ्मात्रोदितस्वभावविषयत्वे तु व्यवस्थानुपपत्तिः, अतथाविधस्वभावानामपि तथाविधस्वभावत्वाभिधाना-विरोधात् । एवं च सहेतुकनाशापत्तिः, स्वहेतुपरम्परातस्तथास्वभाव एवासावुत्पन्नो भावो योऽकिञ्चि-त्करमपि नाशहेतुमपेक्ष्य नश्यतीत्यपि वक्तुं शक्यत्वात्, स्वभावपर्यनुयोगासिद्धेः अचिन्त्यशक्तित्वात् अन्यथा त्वत्प-क्षेऽपि तुल्यत्वादिति । नापि निरुद्धायाः, तस्या एवासत्त्वात् असतश्चोपकाराकरणात् न वः प्रकारान्तरेणोपकारकरणं सम्भवति, एवं तावदाद्यपक्षे सहकारार्थाभाव इति, एतेन पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणोऽपि सहकारार्थो निषिद्धः, तत्त्वतः सहकारार्थाविशेषात्, स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्नेत्यादिना तु सुतरामभेदात् प्रत्येकं तत्तथाविधकार्यजननसमर्थस्वभावेतरविकल्पदोषापत्तेश्च, प्रथमपक्षे किमन्योन्यापेक्षया, एकत एव तत्सिद्धेः । द्वितीय-पक्षे चापेक्षायामपि तदसिद्धेः, । प्रत्येकमतत्स्वभावत्वात्, तेषामत एव प्रत्येकत्वाभावात् अप्रत्येकत्वत एव तत्स्वभावत्वाद-दोष इति चेत्, न, अनेकतः सर्वथैकभवनासिद्धेः तद्भिन्नस्वभावत्वात्, अन्यथाऽनेकत्वायोगात् । एवं चेतरेतरस्वभाव-वैकल्येन तत्रानुपयोगात् । तत्स्वभावविकलस्तद्रूपो न स्यान्नातत्कार्य इति चेत्, न, तत्स्वभावविकलस्य तत्कार्यत्वविरोधात्, तज्जननैकस्वभावादेव ततस्तदुत्पत्तेः अन्यतस्तदभावात् तस्यापि तत्त्वेन्यत्वाभाव इति निरूप्यतां सम्यग्, अन्यथा कार्यैक-त्वानुपपत्तिः, समग्रस्यैव तस्योत्पत्तेः, अनेकजन्यत्वे च तदयोगात्, सर्वेषां तज्जनकत्वात् एकभाविनोऽपरभावासिद्धेः, तद्वैयर्थ्यप्रसङ्गात्, समग्रजनकत्वेऽप्येकस्यापि जनकत्वात्, अन्यथा समग्रजनकत्वविरोधात्, भेदशस्तद्भावापत्तेः, अन्यत-

जनकत्वे च कुतस्तत्स्वभाववैकल्यमिति यत्किञ्चिदेतत् । हेतुभेदात् फलभेद इति चापन्यायस्तथा च सत्ययमेव खलु भेदो भेद-हेतुर्वा भावानां यदुत विरुद्धधर्माध्यासः कारणभेदश्चेत्युक्तिमात्रं, भावार्थशून्यत्वात् सामग्र्ययोगात् समग्रेभ्यः तद्भेदासिद्धेस्तत्त्वतः समग्रमात्रत्वात् । तदुपादानादिभेदेन तद्भेद इति चेत्, न, तत्स्वभावभेदमन्तरेणैतदसिद्धेः, तद्भेदे वाऽनेकस्वभावतापराधः, अन्यथोभयोस्तुल्यतापत्तेः, तत्कार्ययोरपि तुल्यता सामस्त्येनोभयजननस्वभावादुभयादुभयप्रसूतेः तत्तथात्वकल्पनायास्तद्वैचिव्यापादनेनायोगादिति प्रपञ्चितमेतत् । भिन्नविकल्पसम्भवाभावोऽपि न्यायतस्तदवस्थ एव, तदनुभवस्यानेकशक्तिसहकारित्वविरोधात्, एकस्वभावत्वात् तस्य चानित्याद्यन्यतमविकल्पशक्तिसहकारित्वतत्त्वात्, अन्यथा तदेकस्वभावत्वासिद्धेः एकान्तैकस्वभावत्वे च कथमस्य नित्यादिविकल्पशक्तिसहकारिभाव इति चिन्त्यम्, नहि नीलविज्ञानजन्मसहकारिस्वभावं नीलं कदाचिद्रसादिविज्ञानजन्मसहकारितां प्रतिपद्यते तत्तत्त्वविरोधादिति, अनेनानेकशक्तिसहकार्येकस्वभावत्वकल्पना प्रत्युक्ता, अनेकगर्भस्य तस्यैकत्वायोगात्, अतिप्रसङ्गात् निबन्धनव्यवस्थाभावात् विश्वस्यैकनिबन्धनतापत्तेरिति स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्वे एव विकल्पा इति वचनमात्रमेव । तत्प्रतिबद्धजन्मत्वासिद्धेश्च, तथाहि कस्तेषां वस्तुना प्रतिबन्ध इति वाच्यम्, न तादात्म्यं, तद्देशभेदात् अनभ्युपगमाच्च । न तदुत्पत्तिस्तदसरूपत्वात् तदनन्तराभावाच्च । पारम्पर्येण तत्तदुत्पत्तिरिति चेत्, न विहितोत्तरत्वात्, तत्तद्भावेऽपि तन्निमित्तत्वाविशेषान्नित्यादिविकल्पेभ्योऽपि तन्निश्चितिसिद्धेर्वस्तुनस्तथात्वप्रसङ्गात् अनेकान्तापत्तेरिति । न च न नित्यादिविकल्पानामपि तत्प्रतिबन्धः, तेषामपि तद्भेदप्रसवाभ्युपगमात्, नान्येषां, तद्भेदप्रसवे सत्यपीत्याद्युपन्यासात्, तद्भेदप्रसवश्चार्थभेदादुत्पादः स चेदनित्यादिविकल्पानामिवामीषां तत इति तत्कथं न तेभ्यस्तन्निश्चितिः । ननूक्तमत्र यथादृष्टविशेषानुसरणं परित्यज्य किञ्चित्सामान्यग्रहणेन विशेषान्तरसमारोपादिति, उक्तमिदमयुक्तं तूक्तम् इतरत्राप्युक्तन्यायतुल्यत्वात्, अनित्यादिविकल्पानामपि नित्या-

अ० ज० पताका० ॥ २८ ॥

दिरूपयथादृष्टविशेषनिश्चयपरित्यागेनावस्थाभेदग्रहणतो विशेषान्तरसमारोपेण प्रवृत्तेरित्यपि वक्तुं शक्यत्वात्, । नित्यस्य भेदाभेदविकल्पद्वारेणावस्थाभेद एवायुक्त इति चेत्, न, ततस्तद्भेदाभेदविकल्पाप्रवृत्तेः, अवस्थानामुत्प्रेक्षितत्वात् तथा तत्त्वानामपि समचित्रनिम्नोन्नतसमारोपवत्तथासमारोपहेतुत्वाविरोधः, आन्तरदोषसामर्थ्यात् तस्य चासद्दर्शनवासनारूपत्वात्, नित्यप्रमातुरपि तत्स्वभावत्वतोऽनित्यस्याभेदवासनावत्तथावासनोपपत्तेरितीतरत्राप्युक्तन्यायतुल्यत्वमिति । किञ्च यथादृष्टविशेषानुसरणं परित्यज्येत्यत्र तथा दृष्टो नान्यथेत्यत्र न प्रमाणं । प्रत्यक्षमेवात्र प्रमाणमिति चेत्, न तत्कस्यचिन्निश्चायकं, तथ्यमपि गृह्णाति न तन्निश्चयेन, किं तर्हि, तत्प्रतिभासेन, स चैवं भूत एव नान्यथेति ऋतेऽतीन्द्रियार्थदर्शितामतिशयश्रद्धां वा न विनिश्चयोपायः । न तदेव, सम्प्रमुग्धमूककल्पत्वात् । नानुमानं, तथाविधलिङ्गासिद्धेः, न चान्यत्, अनभ्युपगमात्, अनित्यतादिरूपस्यैव वस्तुनि विद्यमानत्वात् । स एवं भूतो नान्यथेति चेत्, कुतस्तत्रास्यैव विद्यमानतासिद्धिरिति वाच्यम् । तत्तथा प्रत्यक्षप्रतिभासादेवेति चेत्, सोऽयमितरेतराश्रयदोषोऽनिवारितप्रसरः, कथं वा तत्तत्प्रतिभासत्वे तन्नीलत्वादिवत्तदनिश्चयः । किञ्चित्सामान्यग्रहणेन विशेषान्तरसमारोपादिति चेत्, किमत्यन्तभेदिनां सामान्यं । सदृशापरापरोत्पत्तिरिति चेत्, प्रतिनियतैकग्राहिज्ञानतत्त्ववादे कुतोऽस्याः खल्ववगमः, नहि कथंचिदेकस्यानेकग्राहिणो विज्ञानस्याभावे केनचित् सदृशोऽयमिति भवत्यतिप्रसङ्गात्, रूपग्रहणस्यापि रसग्रहणसदृशतापत्तेः । एवं च व्यवस्थानुपपत्तिः । न रूपज्ञानं रसज्ञानोपादानमतोऽयमदोष इति चेत्, न न भवति क्वचित्तथाभावापत्तेः, रूपज्ञानसमनन्तरभाविनो रसज्ञानस्य तदनुपादानत्वेऽनुपादानत्वप्रसङ्गात् । किं वा तत्तथाभावाभावेऽत्यन्तासत एव भवतोऽस्योपादानचिन्तया, तत्तथाभावे वाऽनिवारितोऽन्वयः । एतेन सदा सत्त्वोपलम्भः प्रत्युक्तः, तत्त्वतस्तस्यापि सादृश्यनिबन्धनत्वात् तस्य चोक्तवद्ग्रहणायोगात् आन्तरतद्विकल्पबीजस्याप्रमाणत्वात् तथापि तत्कल्पनायाश्चेतरत्रापि तुल्यत्वादित्युक्तप्रायं । एवं प्रदीपप्रभोदाहरणं

सर्वत्रगत्वादनुदाहरणमेव, न च दीपप्रभाया मण्यर्थेन प्रतिबन्धः अस्ति च मणिप्रभायाः, न चैवमनित्येतरादिविकल्पानां केषांचिदेव वस्तुना प्रतिबन्धो नान्येषामिति वैषम्यमपि दार्ष्टान्तिकेन । अयोनिशो मनस्कारपूर्वकत्वान्नित्यादिविकल्पानां न वैषम्यमिति चेत्, न, अस्यापि तुल्यत्वात्, अनित्यादिविकल्पानामप्येवं भूतभावस्य वक्तुं शक्यमानत्वात्, उभयत्र तन्नियामकत्वानुपपत्तेर्निबन्धनाविशेषादित्यतः स्थितमेतत्, अखिलविकल्पज्ञानभ्रान्ततावादिनश्च तत्सामर्थ्योत्थं वचनमपि तादृगेवेति दुःस्थिता तत्त्वनीतिः । भ्रान्तिज्ञानवन्तोऽपि कामलिप्रभृतयः शङ्खादौ संस्थानादितत्त्वनिश्चयनिबन्धनं दृश्यन्त एवेति चेत्, न, तेषां तत्राभ्रान्तत्वात्, अन्यथा पीतवर्णादिवत्तत्त्वनिश्चयनिबन्धनाभावः । विकल्पज्ञानमपि स्वसंवित्तावभ्रान्तमेवेति चेत्, क्व तर्हि भ्रान्तमिति वाच्यम् । कल्पनायामिति चेत्, न, तस्यास्तदव्यतिरेकात्, अन्यथा विकल्पज्ञानायोगात् स्वसंवित्तेर्भेदकासिद्धेर्बोधमात्राद्बोधमात्रभावात् तदतिरिक्तदोषानभ्युपगमात् अभ्युपगमे च तद्वस्तुत्वेन तद्योगजविकारकल्पनाया वस्तुत्वापत्तेरिति । आह अस्तु दोषजं वस्तुत्वमस्याः शङ्खपीतादिप्रतिभासतुल्यं तु तत्, संस्थानादितत्त्वनिश्चयकल्पा तु स्वसंवित्तिरिति, यदिनामैवं ततः किमिति वाच्यम्, विकल्पज्ञानस्याप्यभ्रान्तता, एवमपि का भवत इष्टसिद्धिः, ननु ततस्तत्त्वनीतिभावः, अनिश्चयात्मिकायाः कथमसौ, हन्त कल्पनानुवेधात्, स खलु नित्यत्वादिकल्पनयापीति विपक्षसाधारणत्वान्नेष्टसिद्ध्यर्थमेवेत्ययुक्त एव । न च निरंशवस्तुवादिनो यथोक्तकल्पनैव सम्भवति, तदेकस्वभावत्वेन कल्पनाबीजायोगात्, स्वभावभेदमन्तरेण हेत्वभेदतः फलभेदासिद्धेः । भवतोऽपि कथमेकं भ्रान्ताभ्रान्तमिति चेत्, चित्रस्वभावत्वेन तथात्वाविरोधात्, तत्त्वतः एकत्वासिद्धेः दोषसामर्थ्योपयोगात् अविगानतस्तथा तत्प्रतीतेरित्यतो निर्विकल्पकवद्विकल्पकमप्यक्षव्यापारानुसारि यथावस्थितवस्तुविषयमविगानतः स्पष्टतुल्यविनिश्चयं सत्क्षयोपशमजन्म बाधाविज्ञानरहितमवगमादिफलमभ्रान्तमेष्टव्यमन्यथोक्तवत्तत्त्वनिश्चयाभाव इति विकल्पकत्वेऽपि न भ्रान्तमधिकृतविज्ञानमित्यतः

सामान्यविशेषरूपवस्तुसिद्धिरिति। यच्चोक्तमेकं सामान्यमनेके विशेषा इत्यादि, तदप्ययुक्तं, तथानभ्युपगमात्, नहि यथोक्तस्वभावं सामान्यमभ्युपगम्यतेऽस्माभिर्युक्तिरहितत्वात्, तथाहि तदेकादिस्वभावं सामान्यमनेकेषु दिग्देशसमयस्वभावभिन्नेषु विशेषेषु सर्वात्मना वा वर्त्तेतांशेन वा, न, तावत्सर्वात्मना, सामान्यानन्त्यप्रसङ्गात् विशेषाणामनन्तत्वात्, एकविशेषव्यतिरेकेण वाऽन्येषां सामान्यशून्यतापत्तेः, आनन्त्ये चैकत्वविरोधात्, नापि देशेन, सदेशत्वप्रसङ्गात्। न च गगनवत् व्यापित्वाद्वर्त्तत इति ब्रूम इत्यकल्पं कन्यायानुसारिचेतोहरं वचः, अविचारितरमणीयत्वात्, कार्त्स्न्यदेशव्यतिरेकेण वृत्त्यदर्शनात्। उभयव्यतिरेकेण नभसो वृत्तिरिति चेत्, न असिद्धत्वात्, नभसः सप्रदेशत्वाभ्युपगमात्, निःप्रदेशत्वे चानेकदोषप्रसङ्गात्, तथाहि येन देशेन विन्ध्येन सह संयुक्तं नभः हिमवन्मन्दरादिभिरपि किं तेनैवाहोस्विदन्येनेति, यदि तेनैव, विन्ध्यहिमवदादीनामेकत्रावस्थानप्रसङ्गः, निष्प्रदेशैकाकाशसंयोगान्यथानुपपत्तेः। अथान्येन, आयातं तर्हि सदेशत्वमाकाशस्य। स्यादेतदेशत्वाद्वियतो यथोक्तविकल्पा सम्भवस्तत्रैकस्मिन्नेव तेषामवस्थितत्वात्, इदमप्ययुक्तं, वस्तुतः पूर्वोक्तदोषानतिवृत्तेः, न च सर्वव्यापिनो विन्ध्यादय इति, येन तस्मिन्नेव तेषामवस्थितत्वादिति सफलं भवेत्, इत्यतो यत्र विन्ध्यभावो यत्र वाऽभाव इत्यनयोर्नभोभागयोरनन्यत्वमन्यत्वं वेति वाच्यम् किञ्चातः, यद्यनन्यत्वं, किमु सर्वथा आहोस्वित्कथञ्चित्, यदि सर्वथा, हन्त तर्हि यत्र विन्ध्यभावस्तत्राप्यभावः स्यात्, तदभाववन्नभोभागाव्यतिरिक्तत्वात्तद्भाववन्नभोभागस्य, विपर्ययो वा, अथ कथञ्चित्, अनेकान्तवादाभ्युपगमात् स्वकृतान्तप्रकोपः, अथान्यत्वं, किं सर्वथा, उत कथञ्चित्, यदि सर्वथा, अन्यतरस्यानभोभागत्वप्रसङ्गः, सर्वथाभेदान्यथानुपपत्तेः, अथ कथञ्चित्, स्वदर्शनपरित्यागदोष इति। स्यादेतद्भागानभ्युपगमात् व्योम्नो यथोक्तदोषानुपपत्तिः, इत्यभ्युपगममात्रभक्तो देवानांप्रियः सुखैधितो नोपपत्तिमात्रानपि भागानवगच्छतीति ननु विशिष्टभावभावाभावगम्या एव भागा इत्यवगमे निवेश्यतां चित्तमित्यलं प्रसङ्गेन। एतेन नित्यव्यापिनिर्देशसामान्यप्र-

त्तिरपि प्रत्युक्ता । आहानुभवासिद्धत्वात् सामान्यस्य न युज्यते सहृदयतार्किकस्य तत्प्रतिक्षेपेणात्मानमायासयितुमायासस्य निष्फलत्वात्, तथाहि यदि समानतं वस्तुसद्व्याप्येकमनवयवं सामान्यवस्तु न स्यात् न तदा देशकालस्वभावभेदभिन्नेषु घटशरावोष्ट्रिकोदञ्चनादिषु बहुषु विशेषेषु सर्वत्र मृन्मृदित्यभिन्नौ बुद्धिशब्दौ स्याताम्, न खलु हिमतुषारकरकोदकाङ्गारमुर्मुरज्वालानलझंझामण्डलिकोत्कलिकापवनखदिरोदुम्बराम्बरिकादिषु अत्यन्तभिन्नेषु बहुषु विशेषेष्वेकाकारा बुद्धिर्भवति नाप्येकाकारः शब्दः प्रवर्त्तत इत्यतोऽस्य यथोक्ताभिन्नबुद्धिशब्दद्वयप्रवृत्तिनिबन्धनस्य वस्तु सतः सामान्यस्य सत्त्वमाश्रयितव्यमिति । अत्रोच्यते न खल्वस्माभिर्यथोक्तबुद्धिशब्दद्वयप्रवृत्तिनिबन्धनं निषिध्यते किंतर्ह्येकादिधर्मयुक्तं परपरिकल्पितं सामान्यमिति, तच्च यथा विशेषवृत्त्ययोगेन न घटां प्राञ्चोतीति तथा लेशतो निदर्शितमेव, प्रपञ्चतस्त्वन्यत्र वृत्त्ययोगसङ्ख्यादिव्यभिचारतद्वत्प्रत्ययप्रसङ्गादिना युक्तिकलापेन निराकृतमिति नेह प्रयासः । आह किं पुनर्यथोक्तबुद्धिशब्दद्वयप्रवृत्तिनिबन्धनमिति, उच्यते, अनेकधर्मात्मकानां वस्तूनां तथाविधः समानपारिणाम इति । न चात्र सामान्यवृत्तिपरिक्षेपोपन्यस्तविकल्पयुगलप्रभवदोषसम्भवः, समानपरिमाणस्य तद्विलक्षणत्वात् तुल्यज्ञानपरिच्छेद्यवस्तुरूपस्य समानपरिणामत्वात् अस्यैव च सामान्यभावोपपत्तेः । समानानां भावः सामान्यमिति यत्तत्समानैस्तथा भूयत इत्यन्वर्थयोगात्, अर्थान्तरभूतभावस्य च तद्व्यतिरेकेणापि तत्समानत्वेऽनुपयोगात्, अन्यथा समानानामित्यभिधानाभावादयुक्तैव तत्कल्पना, समानत्वं च भेदाविनाभाव्येव तदभावे सर्वथैकत्वतः समानत्वानुपपत्तेरिति तथाविधः समानपरिणाम एव समानबुद्धिशब्दद्वयप्रवृत्तिनिमित्तं । आह यथा असमाना अपीन्द्रियादयस्तथास्वभावत्वाद्रूपज्ञानाद्येककार्यकारिणस्तथैतेऽपि भावास्तथाविधसमानपरिणामविकला अपि तथाविधबुद्ध्यादिहेतवः किं नेष्यन्ते, उच्यते, असमानेभ्यः समानबुद्ध्याद्यसिद्धेः तन्निबन्धनस्वभाववैकल्यात्, तथाहि न चक्षुरादिषु समानबुद्ध्यादिभावः, तथाऽप्रतीतेः,

रूपज्ञानाद्येककार्यकारित्वं चात्रानर्थकमेव सिद्धसाधनत्वात् , को हि नाम तथा असमानेभ्योऽपि तथैकं कार्यं नेच्छति तथा-विधसमानपरिणामविकलास्तु समानबुद्धिशब्दद्वयप्रवृत्तिहेतवो न भवन्ति न तथाविधैककार्या इत्यभिदधति विद्वांसः । ततश्चा-नेन किञ्चिदुपद्रूयतेऽसमानेभ्यः समानबुद्ध्याद्यसिद्धिरिति, नासिद्धिः प्रधानेश्वरादिकार्यत्वसमानपरिणामविकलेभ्योऽपि भावेभ्यः प्रधानादिकार्याः प्रधानादिकार्या इति केषांचित्समानबुद्ध्यादिसिद्धेः, न, तस्याः सङ्केतसम्मोहहेतुत्वात् आविद्वद-ङ्गनादीनामविशेषेण समानपरिणामवद्भावेष्विवाक्षदर्शनत एव तदप्रवृत्तेः । तथाक्षदर्शनमपि न तत्रार्थयाथात्म्यतो ऽपि तु जन्मान्तरवासनात इति चेत्, तत्रापि किं निमित्तमितिवाच्यम्, जन्मान्तरवासनैवेति चेदनवस्था, अनादित्वात् तद्वासनाया अयमप्यदोष इति चेत्, न, अनादितथाक्षदर्शनादर्थयाथात्म्यासिद्धेः, अन्यथातिप्रस-ङ्गात्, रूपाद्यक्षदर्शनस्यापि तत्रार्थयाथात्म्यत एतदिति निश्चयाभावात्, उक्तवद्वासनाकल्पनोपपत्तेरित्यलं प्रस-ङ्गेन, बुद्ध्याकार एवायमिति चेत्, कोऽस्य हेतुरिति वाच्यम्, तदेककार्यकारिणामतत्कारिभेद इति चेत्, नेन्द्रियादिभिर्व्यभिचारात्, । न रूपज्ञानाद्येककार्यमिह गृह्यते अपि तु समानजातीयक्षणोत्पादस्तेषामतत्का-रिभेदोऽत्र विवक्षित इति चेत्, न, सर्वेषामेवासौ विद्यते रूपज्ञानादिभावेऽपीन्द्रियादिसमानजातीयक्षणोत्पत्तेरिति तैरेव व्यभिचारात् । तुल्यसमानजातीयकार्योत्पादिनामतत्कारिभेद इह गृह्यत इति चेत्, न, तस्य तेभ्यो भेदाभेदविक-ल्पानुपपत्तेः, भेदे, तेषामिति सम्बन्धाभावः, तादात्म्याद्यसिद्धेः, भेदमात्रत्वात्, वस्तुत्वा(नु?)पत्तेश्च, अभेदे त एव ते इति कथमसमानास्तद्धेतवो नाम, नहि रसादिभ्यः समानो रूपबुद्ध्याकारः, तथाननुभवात् व्यवस्थानुपपत्तेश्च । नान्य एव तत्तद्भेदो ऽपितु त एव तत्स्वभावा इत्यतस्त एव तद्धेतवो नान्येऽतत्स्वभावत्वादिति चेत्, तेषामेवासौ स्वभाव इति कुतः । स्वहेतुभ्य उत्पत्तेः, न, अन्येषामपि तत्प्रसङ्गात् तेषामपि स्वहेतुभ्य एवोपपत्तेः, । न तथाविधेभ्य एषामिति चेत्, किमिदं

तथाविधत्वं तुल्यकार्यकृज्जनकत्वं, नेदं तत्तुल्यसामर्थ्यमन्तरेण, तदङ्गीकरणे चाङ्गीकृत एव मदीयोऽभ्युपगमः, अतुल्यसामर्थ्येभ्यस्तुल्यसमानजातीयकार्यानुत्पत्तेः इन्द्रियादिषु तददर्शनात् तदतुल्यसामर्थ्यनिबन्धनमेतत्, अतोऽन्यत्तत्तुल्यसामर्थ्यकारणमिति सन्न्यायः। तुल्यसामर्थ्यमेव च नो भावानां समानपरिणाम इति परिभाव्यतामेतत्। अविषय एवायं बुद्ध्याकारोऽनादिवासनादोषादुपप्लव इति चेत्, केयं वासना नाम, किं बोधमात्रं उतान्यदेव किञ्चित्। यदि बोधमात्रमनुत्तरज्ञानेऽपि तथाविधाकारापत्तिः तस्यापि बोधमात्रभावात्। अनिष्टं चैतत् तत्र तदनभ्युपगमात्, अथान्यदेव किञ्चित्, तदेवास्य विषय इति कथमविषयो नाम।' अवस्त्वेव तदिति चेत्, कथं ततः स आकार इति वाच्यम्। अहेतुक एवायमिति चेत् सदा तद्भावादिप्रसङ्गः। विशिष्टं बोधरूपं वासना न बोधमात्रमिति चेत्, किंकृतमस्य वैशिष्ट्यमिति वाच्यम्। अनादिहेतुपरम्पराकृतमिति चेत्, न, तत्रापि तन्मात्राविशेषात्। ससमुद्रोर्मिवद्यतस्तदेव तदिति चेत्, न, तस्यापि वाय्वादिना विना तत एवाभावात्। अनागमो वाय्वादिकल्प इति चेत्, न, तदभावेऽपि क्वचित्तद्भावोपपत्तेः, स्वविक्षोभोद्भवसमुद्रोर्मितुल्यः स इति चेत्, स एव तदा कुत इति वाच्यम्, तस्यैव तत्स्वभावत्वादिति चेत्, न, तदविशेषेण सदा समुद्रोर्मिप्रसङ्गात्। तस्य तत्क्षणविशेषत्वादप्रसङ्ग इति चेत्, न, तस्य तन्मात्रत्वेन विशेषत्वासिद्धेः। ऊर्मिजननस्वभावत्वं विशेष इति चेत्, नहि स्वभावः स्वभाववतोऽन्य इति तन्मात्रत्वमेव। तन्मात्रत्वेऽपि तद्भेद एवेति चेत्, न, तादृशस्यास्याप्रयोजकत्वात्, तत्तद्भावेऽतिप्रसङ्गात्, तत्स्वभावानामपि केषांचित् तथाभेदान्नित्यतया फलभेदापत्तेः। न नित्यता केषांचिदपि, किं नेति वाच्यम्, न, तद्धेतुः। तथाभूताद्धेतोस्तस्यैव यदिति चेत्, न, मोक्षहेतोः कैश्चित्तथाविधत्वाभ्युपगमात्, अहेतोरपि तथाभावकल्पनाऽविरोधात् अस्याप्यर्थक्रियोपपत्तेः तत्करणस्वभावत्वात् अनित्यत्वादेः सर्वतः सर्वार्थक्रियाभावेनेहाप्रयोजकत्वात्। तत्करणस्वभावत्वस्य च प्रयोजकत्वात् तद्वैचित्र्येण परोदितदोषासिद्धेः क्रमयौगपद्याभ्यामर्थक्रियाकरणस्वभावत्वात् तस्य

अ०ज०
पताका०
॥ ३१ ॥

च पर्यनुयोगायोगात्, अन्यथा समानत्वादिति, समुद्रोर्मिकल्पश्चाधिकृतो बुद्ध्याकारः, स यद्येवं न युज्यते स्वसंवेदनसिद्धश्च प्रतिभमात् अतो यथोक्तनिबन्धन एवेति युक्तमभ्युपगन्तुमन्यथा तदुच्छेदापत्तिरिति । तथाविधः समानपरिणाम एव समानबुद्धिशब्दद्वयप्रवृत्तिनिमित्तं, यद्येवं कथं क्वचित् तद्व्यतिरेकेणाप्यस्याः प्रवृत्तिः । ननु चास्येत्ययुक्तं वस्तुनिबन्धनस्य तद्व्यतिरेकेण कदाचिदप्यप्रवृत्तेः, तथातद्दर्शनस्य च तदाभासविषयत्वेनाविरोधात्, अन्यथा प्रत्यक्षस्याप्यविषयत्वापत्तिरिति समानपरिणाम एव सामान्यम् । यतश्चैवमतो न य एवासावेकस्मिन् विशेषे स एव विशेषान्तरे, किं तर्हि, समान इति कुतः सामान्यवृत्तिविचारोदितभेदद्वयसमुत्थापराधावकाश इति । न चैवं सति परस्परविलक्षणत्वाद्विशेषाणां समानबुद्धिशब्दद्वयप्रवृत्त्यभावः सत्यपि वैलक्षण्ये समानपरिणामसामर्थ्यतः प्रवृत्तेः, असमानपरिणामनिबन्धना च विशेषबुद्धिरिहेति यथोदितबुद्धिशब्दद्वयप्रवृत्तिः । तथा चोक्तं, "वस्तुन एव समानः, परिणामो यः स एव सामान्यम् । असमानस्तु विशेषो, वस्त्वेकमनेकरूपं तु ॥" ततश्च तद्यत एव सामान्यरूपं, अत एव विशेषरूपं, समानपरिणामस्याऽसमानपरिणामाऽविनाभूतत्वात्, यत एव च विशेषरूपमत एव सामान्यरूपम्, असमानपरिणामस्यापि समानपरिणामाविनाभावादिति, न चानयोर्विरोधः, अन्योऽन्यव्याप्तिव्यतिरेकेणोभयोरसत्वापत्तेः, उभयोरपि स्वसंवेदनसिद्धत्वात्, संवेदनस्योभयरूपत्वादुभयरूपतायाश्च व्यवस्थापितत्वात् । यच्चोक्तं सामान्यविशेषोभयरूपत्वे सति वस्तुनः सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्ग इत्यादि, तदपि जिनमतानभिज्ञतासूचकमेव केवलं न पुनरिष्टार्थप्रसाधकमिति, नहि मधुरकलड्डुकादिविशेषोऽनर्थान्तरं सर्वथैकस्वभावमेकमनवयवं सामान्यमित्यभिदधति जैनाः, अतः किमुच्यते न विषं विषमेव मोदकाद्यभिन्नसामान्याव्यतिरेकादित्यादि, किं तर्हि समानपारिणामः, स च भेदाविनाभूतत्वात् न य एव विषादभिन्नः स एव मोदकादिभ्योऽपि, सर्वथा तदेकत्वे समानत्वायोगात् । स्यादेतत्समानपरिणामस्यापि प्रतिविशेषमन्यत्वादसमानपरिणामवत्तद्भावानुपपत्तिरिति, एतदप्ययुक्तं, सत्यप्यन्यत्वे

समानासमानपरिणामयोर्भिन्नस्वभावत्वात्, तथाहि समानाधिषणाध्वनिनिबन्धनस्वभावः समानपरिणामः, तथा विशिष्टबुद्ध्याभिधानजननस्वभावस्त्वितर, इति यथोक्तसंवेदनाभिधानसंवेद्याभिधेया एव च विषादय इति प्रतीतमेतत्, अन्यथा च यथोक्तसंवेदनाद्यभावप्रसङ्गात्, अतो यद्यपि द्वयमप्युभयरूपं, तथापि विषार्थी विष एव प्रवर्त्तते तद्विशेषपरिणामस्यैव तत्समानपरिणामाविनाभूतत्वात्, न तु मोदके, तत्समानपरिणामाविनाभावाभावात् तद्विशेषपरिणामस्येति, अतः प्रयासमात्रफला प्रवृत्तिनियमोच्छेदचोदनेति । एतेन विषे भक्षिते मोदकोऽपि भक्षितः स्यादित्याद्यपि प्रतिक्षिप्तमवगन्तव्यम् तुल्ययोगक्षेमत्वादिति । यच्चापरेणाप्युक्तं सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेरित्यादि, तदपि कूटनटनृत्तमिवाविभावितानुष्ठानं न विदुषां मनोहरमित्यपकर्णयितव्यं, वस्तुतः प्रदत्तोत्तरत्वात्, सामान्यविशेषरूपस्य वस्तुनः सम्यग्व्यवस्थापितत्वात्, अन्यत्र च प्रपञ्चेन निराकृतत्वात् । तथा चोक्तम्, समानेतरबुद्धिश्च प्रतिवस्तूपजायते । सच्चोष्ट्रः सदधीत्यादिरूपा तन्निश्चयात्मिका ॥१॥ नौष्ट्र्यादि सत्त्वभिन्नं चेत् ननु तत्केन चेष्यते । अभेदेन विगानं चेद्धियां तत्किं कृतं ननु ॥ २ ॥ भेदे तु तदसत्त्वं चेत् कः किमाहात्र वस्तुनि । कथं तद्भाव इष्टश्चेद्भेदाभेदविकल्पनः ॥ ३ ॥ अन्योऽन्यव्याप्तितश्चायं सत्त्वौष्ट्रत्वादिधर्मयोः । सिद्ध एकान्तभेदादित्यागाज्जात्यन्तरात्मकः ॥४॥ न सत्त्वं किञ्चिदौष्ट्र्यादिधर्मान्तरविवर्जितम् । तद्वा सत्त्वविनिर्मुक्तं केवलं गम्यते क्वचित् ॥ ५ ॥ ततोऽसत्तत्तथान्यायादेकं चोभयसिद्धितः । अन्यत्रातो विरोधस्तदभावापत्तिलक्षणः ॥ ६ ॥ एवं चोभयरूपत्वे तद्विशेषनिराकृतिः । असिद्धा नान्यतोऽभिन्नं यदन्यत्रापि वर्त्तते ॥ ७ ॥ प्रवृत्तिनियमोऽप्येवं दधि खादेति युज्यते । चोदितस्येह दध्न्येव यद्विशेषेण चोदना ॥ ८ ॥ अतोऽस्त्यातिशयस्तत्र येन भेदेन वर्त्तते । सदध्येवेत्यदो नेति सद्द्रव्यत्वानुवेधतः ॥ ९ ॥ ततः सोऽस्ति न चान्यत्र न चाप्यनुभयं परम् । एवं तत्त्वव्यवस्थायामवद्यं नास्ति किञ्चन ॥ १० ॥ सर्वथा क्षणिकत्वे च प्रतीत्योत्पादवादिनः । सर्वस्य सर्वकार्यत्वमाप्याऽभेदो भवेदपि ॥ ११ ॥ क्षीरोष्ट्रानन्तरं मृतेः न्यायाद्दध्युष्ट्र-

योर्यतः । द्वयकार्यत्वयोगेन नियमात्तुल्यरूपता ॥ १२ ॥ न चेत् तत्तत्स्वभावत्वान्नतत्ताभ्यां पृथङ् मतम् । तच्चाविशिष्टं सर्वेषामसतामिति भाव्यताम् ॥ १३ ॥ विशिष्टतत्स्वभावत्वकल्पना च न युज्यते । विशिष्टोपाध्यभावेन भावे चास्यान्वयो ध्रुवः ॥ १४ ॥ अभिन्नदेशरूपादिभावेऽप्येषोऽनिवारितः । न चैकान्तिक एवायं धूमादावन्यथेक्षणात् ॥ १५ ॥ एवं सन्न्यायतः सिद्धे द्वितयेऽप्युभयोद्भवे । चोदनेऽन्यतरस्येह प्रवृत्तौ नियमः कुतः ॥ १६ ॥ उभयोस्तुल्यरूपत्वाभिरंशत्वाच्च सर्वथा । विशेषासम्भवाद् ध्वान्तमवधूय विचिन्त्यताम् ॥ १७ ॥ एवं सर्वत्र संयोज्यः प्रवृत्त्यनियमो बुधैः । प्रक्रान्तार्थानुसारेण लेशतस्तु निदर्शित " इत्यादि ॥ १८ ॥ यच्चोक्तं सर्ववस्तुशबलवादिनः क्वचिदन्यासंसृष्टाकारबुद्ध्यसिद्धेः तथा वाचकाभावात्संहारवादानुपपत्तिः, तत्सिद्धौ वा तत एव तत्स्वभावभेदात् तदेकरूपतैवेति, एतदप्ययुक्तम्, सर्ववस्तुशबलभावेऽपि तथा क्षयोपशमवत्प्रमातुर्गुणप्रधानभावेन क्वचिदन्यासंसृष्टाकाराया इव बुद्धेः सिद्धेः, सन्निकृष्टविप्रकृष्टयोः प्रमात्रोरुष्ट्र एव सदुष्ट्रादिबुद्धिभेददर्शनात्, विप्रकृष्टो हि तत्र प्रमाता तथाप्रतिपत्तिवीर्यतोऽप्रधानगुणभूतमपि भावेन गुणभूतोष्ट्रत्वादिविशेषं पटुप्रतीत्यपेक्षापादितप्रधानभावं सन्मात्रमेवेति यथा विशिष्टवस्त्रादौ रक्तादि, सन्निकृष्टस्त्वन्यथा प्रतिपत्तिबलेनोक्तरूपमपि तत्त्वतस्तथाग्रहणगुणोपनतमुख्यभावमुपसर्जनीकृतसत्तासमानरूपमुष्ट्रत्वादि रक्तादाविव विशिष्टं वस्त्रादीति । तथाक्षयोपशमबलत्वं च प्रमातुः प्रभास्वरस्य प्रकृत्या बोधह्रासवृद्ध्युपलब्धेः, आगंतुककर्ममलभावेन द्रव्याद्यवाप्तितोऽविरुद्धमेव, न चैतद्बुद्धिद्वयमपि न तन्निमित्तं, तद्भावभावित्वाविशेषात्, एवमप्येकस्या अन्यथाकल्पनेति प्रसङ्ग इति, तथावाचकस्यापि भावात् कथञ्चित्प्रवृत्तिनिमित्तभेदात् तथासंहारवादोपपत्तिः । शेषं त्वनभ्युपगमादेव न नः क्षतिमावहति केवलग्रहणपुरस्सरसंहारवादासिद्धेः, नरसिंहमेचकवद्वस्तुनो जात्यन्तरात्मकत्वाभ्युपगमात्, एकस्वभावत्वे तु कार्यद्वयायोगेन धीध्वन्यभाव एव, हेत्वभेदे फलभेदासिद्धेः, एतेन सर्वात्मत्वे च भावानामित्याद्यपि प्रत्युक्तं, तुल्ययोगक्षेमत्वात्, निरूपितवस्तुन एव तस्य ज्ञापकत्वेनाभिधानात् ।

एवं चाक्रमेणाप्यनेकधर्मके वस्तुनि पुरस्थितेऽपि सम्पूर्णज्ञानदोषः क्रमज्ञानदोषश्च प्रत्युक्तः, तत्तथाविधावरणदोषतस्तदुपपत्तेः, नह्यर्थसन्निधिरित्येवायोगिनां सर्वाकारमेव तदवगमः, तस्यानेकधर्मत्वात्, अवगमस्य च कारणान्तरापेक्षत्वात् । अर्थो हि यथाधर्माभ्यासमवगमं जनयति, यथाऽङ्गनार्थः सन्निधानाविशेषेऽपि परिव्राट्प्रभृतीनां कुणपाद्यवगमं, प्रत्यासत्तितो वा, यथा जनकाध्यापकः सुतस्य जनकावगमं, प्रकरणापेक्षो वा, यथा वैद्यादिः, तत्कथायां प्रस्तुतायां तद्दर्शिनां, तत्रानेकधर्मसम्भवेऽपि वैद्याद्यवगममिति । न चैकस्यानेकत्वविरोधेन तत्रानेकधर्मत्वासम्भवः, एकत्वानभ्युपगमात्, एकाऽनेके च विरोधासिद्धेः, इतरेतरानुवेधात्, जात्यन्तरात्मकत्वोपपत्तेः, तथा संवेदनादित्युक्तप्रायं । न च सर्वथा सदृशानुभवनिमित्ताः कुणपादिविकल्पा इत्यतत्कारणात्तत्कार्यव्यावृत्तानां सदृशत्वाभ्युपगमात्, तदनुभवानां चातत्कार्यव्यावृत्त्यसिद्धेः, भिन्नजातीयविकल्पनिबन्धनत्वात्, कुणपकामिन्यादिविकल्पानां भिन्नजातीयत्वाभ्युपगमात्, तदनभ्युपगमेतिप्रसङ्गः । रूपरसादिविकल्पानामप्यभिन्नजातीयत्वापत्तेः तथा च तदनुभवानां सदृशतेति रूपरसादिभेदाभावः । भिन्नेन्द्रियानुभवनिबन्धनत्वात् तद्विकल्पानामयमदोष इति चेत्, एवमपि सितेतरादिभेदाभावप्रसङ्गः, तद्विकल्पानां भिन्नेन्द्रियानुभवनिबन्धनत्वासिद्धेः । सर्वेषामेव तेषां चाक्षुषत्वादिति । न च भिन्नविकल्पोपादानवासनासहकारिभावतस्तदनुभवस्यायमदोषः, सर्वथैकस्वभावत्वे तस्यानेकसहकारित्वानुपपत्तेः, तदन्यतमसहकार्येकस्वभावत्वेनान्यत्र तद्भावविरोधादित्युक्तप्रायमेव, ततः कथञ्चिद्भिन्नधर्मविषया एव कुणपाद्यवगमा इति, तथाहि भाविजीववियोगयोग्यतालक्षण एव स्त्रीशरीरधर्मः कुणपावगमनिमित्तं, तथाविधेच्छाकामादिमज्जीवसंयोगयोग्यतालक्षणस्तु कामिन्यवगमस्य, क्षुद्रजन्तुपरिभोगक्षुदपनोदयोग्यतालक्षण एव तु भक्ष्यावगमस्येति । न च य एव भाविजीववियोगयोग्यतालक्षणः स्त्रीशरीरधर्मः स एव तथाविधेच्छाकामादिमज्जीवसंयोगयोग्यतादिलक्षणः, फलभेदात्, तथाविधवियोगरमणीयोगादीनां तथोपलब्धेः, लोकानुभवसिद्धत्वात्, अन्यथा भेदव्यवस्थाऽयोगादिति ।

अ०ज०
पताका०
॥ ३३ ॥

एवं जनकत्वाध्यापकत्ववैद्यत्वदातृत्वादीनामपि कथञ्चिद्भेदोऽवसेयः, फलभेदान्यथानुपपत्तेः, तस्य चाध्यक्षसिद्धत्वात्, जनकत्वस्यैवाध्यापकत्वे तस्यापि तत्त्वात्पित्रादेरपि पुत्रत्वादिप्रसङ्गः, पुत्रस्यापि क्वचिदध्यापकत्वसिद्धेरिति। इतश्चैतदेवं दानहिंसादिविरतिचेतनायाः स्वसंवेद्यत्वेऽप्यभ्युदयादिसाधनशक्त्यवगमानुपपत्तेः, न च तच्छक्तेरप्यविकल्पकेनावगमः, तथानिश्चयाभावात्, अवगमेऽपि फलस्यानन्तर्याभावात्। अतत्फलसाधर्म्याद्विपर्ययस्तस्या निश्चय इति चेत्, न, अविचारितरमणीयत्वात्, अतत्फलसाधन्यास्तत्त्वतः साधर्म्यासिद्धेः, तस्याः पारम्पर्येणाप्यतत्साधकत्वादितरस्यास्तु तथा साधकत्वात्, अन्यथा पारम्पर्येणापि ततस्तदसिद्धेः, इत्थंभूतयोरपि तयोः साधर्म्याभ्युपगमेऽन्याय इति सर्वात्मना तद्ग्रहे तथैव निश्चयापत्तिस्त्वमन्तरेणापि तत्तथाताभ्युपगमेतिप्रसङ्गात्। स्यादेतत्सर्वात्मना तद्ग्रहेऽपि न तथैव निश्चयो भवति, कारणान्तरापेक्षितत्वात्, बुद्धिपाटवादेर्निश्चयभेददर्शनात्, तीक्ष्णबुद्धीनां योगिनां रूपदर्शनमात्रेण तदन्यासम्भवि क्षणिकत्वादिनिश्चयसिद्धेः, न, वाङ्मात्रत्वात्, तीक्ष्णबुद्धीनामित्यत्र बुद्धेस्तैक्ष्ण्यायोगात्, सर्वथैकस्वभाववस्तुवादिनस्तत्प्रभवत्वेन सर्वबुद्धीनामेव तत्परिच्छेदकत्वाविशेषात्, तन्न्यूनाधिकबोधभावेऽपि च तीक्ष्णैका नापरा तथेत्यनिबन्धनो भेदः, तन्न्यूनाधिकत्वे च न सर्वैः सर्वात्मना तद्ग्रह इति यत्किञ्चिदेतत्। तत्तद्वासनाभ्यासादपि तन्निश्चयभेद, इत्यप्ययुक्तं, तदनुभवानामविशिष्टत्वात्, सर्वथा निरंशवस्त्वालम्बनत्वात्। एवं चानेकगुणसम्भवेऽपि क्वचित्पुरुषे यथाभ्यासं गुणनिश्चय इति याचितकमण्डनमेतत् पुरुषस्यैकस्वभावताभ्युपगमदौर्गत्येनानेकगुणसम्भवविभूतिवैकल्यात्। तदेकस्वभावतायां च न भिन्नस्वभावास्तदनुभवा इति कथं दातृत्ववैद्यत्वादिनिश्चयभेदः, तदनुभवनिबन्धनत्वान्निश्चयानां, तद्विभिन्नस्वभावतायां च कथं वस्तुन एकस्वभावतैवेति चिन्त्यम्। स्वोपादानभेदादनुभवभेदो न वस्तुभेदादिति चेत्, न, सर्वथैकस्वभावत्वे वस्तुनोऽनेकानुभवसहकारित्वानुपपत्तेः, अन्यतरविज्ञानजन्मसहकार्येकस्वभावत्वेनास्य तदपरविज्ञानजन्मसहकारिस्वभावत्वविरोधात्। अनेकविज्ञानजन्मसहकार्ये-

कस्वभावमेतदिति चेत्, न, इत्थम्भूतस्यैकत्वायोगात्, सर्वथैकस्मादनेकजन्मव्याहतेः, एकान्तैकस्यानेकत्रानुपयोगात्, तदन्यतरवत्तदितरस्यापि निमित्ताभेदेन तत्त्वापत्तेः, अन्यथा कार्त्स्न्येनैकत्रोपयोगायोगादिति, न च नास्त्येव तत्राधिकृतशक्तिः, आयत्यां फलभावात्, व्यवहितानामपि हेतोः फलानामुत्पत्तिदर्शनात्, मूषिकालर्कविषविकारवत् । आह मूषिकाविषादावायत्यां तत्फलदर्शनाद्युक्तं तच्छक्त्यनुमानं दानहिंसादिविरतिचेतनायां त्विष्टस्वर्गादिफलस्यात्यन्तमनुपलम्भादयुक्तमिति, न, अनुपलम्भेऽपि सम्भवात्, इष्टफलभावे विरोधाभावात् । किमनेन साधकमत्र प्रमाणं नास्तीति चेत्, बाधकेऽपि समानः प्रसङ्गः । अत एव संशयोऽस्त्विति चेत्, न, भवत्पक्षे तदयोगात् । कथमयोग इति चेत्, तत्कार्त्स्न्यग्रहणतो याथात्म्यनिश्चयापत्तेः । आवरणदोषादनिश्चय इति चेत्, किं ततस्तस्याः क्षुण्णमिति वाच्यम् । अस्पष्टग्राह्यतेति चेत्, न, योगिनापि तथाग्रहणापत्तेः । न तस्यावरणमिति चेत्, किं तेनान्यत एव ग्राह्यभेदसिद्धेः । अयोगिन एव स न योगिन इति चेत्, न, तदेकस्वभावत्वविरोधात् । ग्राहकभेदादविरोध इति चेत्, न, एकस्वभावायाः तद्भेदेऽपि ग्रहणभेदासिद्धेः, नहि नीलसंवेदनमन्यथा स्वनीलत्वमधिगच्छति अन्यथा च तद्योगीत्यनेकस्वभावापत्तेः, अत एकस्वभाववस्तुनः सर्वेषां तुल्यं ग्रहणमग्रहणं चेति सन्न्यायरणस्तम्भः । न च तत्र पारम्पर्येण तत्तत्कार्यसाधनशक्तिनिश्चयः, तथाऽप्रतीतेः, अस्ति च तत्कार्त्स्न्यग्रहीतुर्योगिनः, इतरथा योग्ययोगिनोस्तत्र विशेषाभावप्रसङ्गात्, तथा च दृष्टेष्टविरोध इति, नह्यर्थसन्निधिरित्येवायोगिनां सर्वाकारमेव तदवगम इति कृतं प्रसङ्गेन । तथा चोक्तं, वस्तुनोऽनेकरूपस्य नेन्द्रियात्सर्वथा गतिः । चित्रावरणयोगेन प्रमातुः किन्तु देशतः ॥ १ ॥ एवं च विप्रकृष्टस्य सन्निकृष्टस्य चैकदा । उष्ट्रादौ बुद्धिभेदेनानेकरूपत्वसंस्थितिः ॥ २ ॥ अप्रधानीकृतौष्ट्र्यादिविशेषं प्रतिपद्यते । विप्रकृष्टः पुमान्सत्त्वं वस्त्रादौ रक्ततादिवत् ॥ ३ ॥ सन्निकृष्टोऽपि चौष्ट्र्यादि तूर्णं सत्त्वोपसर्जनम् । रक्तादाविव वस्त्रादि विशिष्टं तीव्रवीर्यतः ॥ ४ ॥ अप्र-

धानं च यत्प्रोक्तमुख्यत्वाग्र तत्तथा । प्रतिपत्तारमाश्रित्य न तु तत्त्वव्यपेक्षया ॥ ५ ॥ अन्योऽन्यव्याप्तिरूपेण द्वयोस्तद्भाव- सिद्धितः । अमुख्यगुणभावेन तत्त्वतस्तूभयात्मकं ॥६॥ एकान्तैक्ये तु भावानां कार्यभेदाद् निश्चितिः । नैकस्मादुत्तरो भावो ज्ञानं चेति सुनीतितः ॥ ७ ॥ हेत्वभेदान्न चाज्ञाते तद्ध्वनिः सम्प्रवर्त्तते । एवमेकस्वभावत्वे उपपन्नौ न धीध्वनी ॥ ८ ॥ इत्यादि कृतं विस्तरेणेति ॥ तृतीयोधिकारः ॥

तथा यच्चोक्तमेवमभिलाप्यानभिलाप्यमपि विरोधबाधितत्वादेवानुद्घोष्यमित्यादि, तदप्ययुक्तं, विरोधासिद्धेः, अभिलाप्यानभिलाप्यस्यैव प्रमाणासिद्धत्वात् तथा व्यवहारोपलब्धेः, अन्यथा व्यवहारोच्छेदप्रसङ्गात्, तथाहि यदि तदे- कान्तेनैवानभिलाप्यमभ्युपगम्यते, कथं तर्हि तथाविधशब्दात् तथाविधार्थप्रतीत्यादि, दृश्यते चानलाद्यानयेत्युक्ते तत्प्रतीतिपुर- स्सरा केषांचिद् धूमध्वजादौ प्रवृत्तिः तत्समासादनं समासादिते तथा निवेदनमिति कथञ्चिदभिलाप्यसिद्धिः, अन्यथा तदनुपपत्तिरतिप्रसङ्गात् । स्यादेतदन्यापोहाभिधायकाः शब्दा इति ततस्तं प्रतिपद्यते, ततश्च दृश्यविकल्पावर्थावेकीकृत्य तद्बलात्प्रवर्त्तते, न तु शब्दाद्वस्त्वेव प्रतिपद्य प्रवर्त्तते, तस्य ततोऽनवगतेः, प्रतिबन्धाभावात्, तादात्म्यतदुत्पत्त्यनुपपत्तेः, अनेकदोषप्रसङ्गात्, प्रतिबन्धमन्तरेणाप्यन्यतोऽन्यावगतावपन्यायः, परमार्थैकतानत्वे च शब्दानामनिमित्ता न स्यात् प्रवृत्ति- रर्थेषु चित्रतन्त्रान्तरगतेषु, परस्परविरोधित्वेन सर्वेषां तथाऽभावादतीताजातयोश्चासत्त्वात्, न च स्यादनृतार्थतावाचः कस्याश्चिदपि, स्ववाच्यनिष्ठत्वात् तद्व्यतिरेकेण तदप्रवृत्तेः, सङ्केतवशाच्च शब्दात् प्रतीतिस्तस्य चापोहमन्तरेणान्यत्र कर्तुमश- क्यत्वात्, वस्तूनामानन्त्याद्व्यवहारानुपयोगादिति तद्वाच्यतैव, इत्येतदप्ययुक्तं, भावार्थशून्यत्वेन वाङ्मात्रत्वात्, अन्यापो- हाभिधायकत्वेऽपि वस्तुनि प्रवृत्त्यनुपपत्तेः, तस्य ततो व्यतिरिक्ताऽव्यतिरिक्तविकल्पदोषप्रसङ्गात्, व्यतिरिक्तत्वे, स च वस्त्ववस्तु वा, वस्तुत्वे, अपरनामा सामान्यवादस्तथा च तद्द्वारायाता अनिवारितप्रसरा दोषाः । न च तदभिधानेऽपि वस्तुनि प्रवृत्तिः, नहि

कश्चिद्दण्डं छिन्द्धीत्युक्तो दण्डिनं छिनत्त्यन्यत्र शब्दार्थव्यवहारानभिज्ञादिति, अवस्तुत्वे तु तदभिधाने न किञ्चिदुक्तं स्यात्, कथमेवमवस्तुप्रतिपत्तिपुरस्सरा तत्प्रवृत्तिः, न च तत्प्रतिपत्तावर्थतो वस्तुप्रतिपत्तिः, तुच्छत्वेन तस्यैवाप्रतिपत्तेः, अन्यथा वस्तुत्वविरोधात्, तस्य तेनाप्रतिबन्धात्, सामर्थ्यासिद्धेश्च । अव्यतिरिक्तत्वे वस्तुन एवापोहत्वात् तदभिधायकत्वं शब्दानामिति व्यर्थस्तत्प्रतिक्षेपाभिनिवेशः । आह न व्यर्थो, बाह्यं स्वलक्षणं पुरोधाय व्यावृत्तिमतोस्तत्त्वाभिधानात्, न च तच्छब्दार्थः साक्षात्, अपि तु विकल्पपरिनिष्ठित आन्तरस्तस्माच्च धर्मिणो व्यावृत्तयस्तत्त्वान्यत्वेनानिर्वचनीया इति, न, इत्थमपि ततो वस्तुनि प्रवृत्त्यनुपपत्तेः, तत्प्रतिपत्त्यभावात्, एवमपि प्रवृत्तावतिप्रसङ्गात्, आन्तरार्थ एव शब्दस्य चरितार्थत्वादिति । दृश्यविकल्पार्थैकीकरणाद्वस्तुनि प्रवृत्तिरिति चेत्, न, तदेकीकरणासिद्धेः, दृश्यविकल्पयोरत्यन्तभिन्नत्वात्, साधर्म्यायोगात्, एकस्योभयानुभवितुरभावात्, तदाद्वयदर्शनादर्शनविकल्पानुपपत्तेः । आद्यपक्षे भेदेनैवोभयप्रतिपत्तेः किमेकीकरणेन । चरमपक्षे च तदप्रतिपत्तेः कथं तेनैवैकीकरणं तद्भावेऽपि दृश्यस्य विकल्पो नैकीकृतत्वाद्विकल्पमात्रतापत्तेः, तदवगमाद्वस्तुन्यप्रवृत्तिरेव । न वै स्वविभिन्नदृश्यस्य विकल्पेनात्मसात्करणमेकीकरणमपि त्वस्यैवाध्यवसिततद्भावता, तथाहि विकल्पमेव दृश्यमित्यध्यवस्य प्रवर्त्तत इति, एतदप्यनालोचितमनोहरं, तस्यैवाध्यवसिततद्भावतासिद्धेः, अतद्भावेन तद्भावाध्यवसायविरोधात्, अतिप्रसङ्गात्, नीलाकारबोधेन पीताध्यवसायापत्तेः, इत्यसमञ्जसत्वेन व्यवहारोच्छेदप्रसङ्गात्, किञ्च कः खलु विकल्पमेव दृश्यमित्यध्यवस्यति । विकल्प एवेति चेत्, न, तत्र सामान्यावभासनात् अन्यथा विकल्पत्वायोगात् । अन्य इति चेत्, न, आत्मवादापत्तेः, तत्तथाध्यवसायनिमित्ताभावाच्च । तथाविधशब्दात् तथाविधविकल्पजन्मैवाध्यवसिततद्भावतेति चेत्, अभ्युपगतं तर्हि शब्दस्यार्थवाचकत्वं, तथाहीदमेवास्य तद्वाचकत्वं यत्तथा तदाकारविकल्पजनकत्वं, तच्चेदिष्यत एव तथाविधात् ततस्तथाविधविकल्पोत्पत्त्यभ्युपगमेनेत्येवं च तदेवास्य निर्व्याजमस्तु, किमनेनाकाशकुसुमोद्गमसमानेन दृश्य-

अं०ज० पताका० ॥ ३९ ॥

विकल्पार्थैकीकरणव्याजेन । ततश्च दृश्यविकल्पावर्थावेकीकृत्य तद्बलात् प्रवर्त्ततेन तु शब्दाद्वस्त्वेव प्रतिपद्य तस्य ततोऽनवगतेः इति शब्दगडुमात्रमेव, वस्तुन एव शब्देनावगतेः, प्रतिबन्धभावात् । वाच्यवाचकलक्षणो हि शब्दार्थयोः प्रतिबन्धः तथाहि वाच्यस्वभावा अर्थाः वाचकस्वभावाश्च शब्दा इति तज्ज्ञसिवादः । यदेवं कथं न सङ्केतमन्तरेणैव ततस्तदवगतिः, उच्यते, तथाविधक्षयोपशमाभावात्, नहि रूपप्रकाशनस्वभावोऽपि दीपोऽसति चक्षुषि तत्प्रकाशयति चक्षुः कल्पश्च क्षयोपशमः स च सङ्केततपश्चरणभावनादिजन्यस्तथोपलब्धेः, सङ्केतादिभ्यः समुपजातक्षयोपशमादिभावानां नो लौकिकयतिमुनीनां शब्दादर्थाच्च सम्यग्वाच्यवाचकभावावगमात्, तथाहि सर्व एव सर्वज्ञाः सुमेरुप्रभृतींस्तच्छब्दवाच्यानेव प्रतिपद्यन्ते, तैरेव तथाप्ररूपणात् । अन्यैरेवं प्ररूपिता इति तथा प्ररूपणमिति चेत्, तेषामेव तथाप्ररूपणे को हेतुः । अन्यप्ररूपणेति चेत्, अत्रापि समानः प्रसङ्गः । समाधिरपि समान एवेति चेत्, तत्सम्बन्धसिद्धिः, सर्वैरेव तथा तथा तज्ज्ञानाभिधानात् । अनादौ संसारे कदाचित्कैश्चिदन्यथा सा कृतेति चेत्, नात्र प्रमाणम्, अतीन्द्रियत्वात् । विपर्ययेऽपि समानमेतदिति चेत्, न, इदानीन्तनप्रयोगतोऽसमानत्वसिद्धेः, अन्यथा धूमधूमध्वजादिष्वपि समानमेतत्, तथा च नैरात्म्यादिभावनाया अपि सदारागादिप्रहाणनिबन्धनत्वेऽनाश्वास इति यत्किञ्चिदेतत् । एवमपि सङ्केततो वाच्यान्तरवाचकत्वं शब्दस्यायुक्तमिति चेत्, न ततश्चित्रशक्तिमत्त्वेन योगात्, तथा च सर्वे शब्दाः प्रायः सर्वार्थवाचकशक्तिमन्तः सर्वे चार्थाः सर्वशब्दवाच्यशक्तियुक्ता इति विचित्रक्षयोपशमादिसहकारियोगतस्तथा तथा प्रवर्त्तन्त इति न काचिद्बाधा । एतेन न रूपप्रकाशनस्वभावो दीपोऽरूपं प्रकाशयति तद्वदेव घटादिवाचकस्वभावः शब्दः प्रयोगादपि नाघटं प्रकाशयेत्, इत्यपि प्रत्युक्तं, विचित्ररूपप्रकाशनस्वभावदीपवदेव चित्रवाच्यवाचकस्वभावत्वात्, शब्दस्याशेषाभिधानेऽपि तु सहकारिक्षयोपशमभेदतोऽर्थितादिभेदेनेव प्रदीपात् प्रकाश्ये वाच्ये प्रतिपत्तिः । न च दीपप्रकाशिता

अपि सर्वे निम्नोन्नतादयः सर्वैरेव प्रतीयन्ते, चक्षुः सामर्थ्यानुरूपं प्रतीतिभेदोपलब्धेरिति शब्दार्थयोर्वाच्यवाचकलक्षणप्रतिबन्धसिद्धिः तादात्म्यादिविचारविषयास्तु दोषा अनभ्युपगमादेव न नो बाधायै भवन्ति। यच्चोक्तं परमार्थैकतानत्वे च शब्दानामनिमित्ता न स्यात् प्रवृत्तिरर्थेषु चित्रतन्त्रान्तरगतेषु परस्परविरोधित्वेन सर्वेषां तथाभावात्, इत्येतदप्ययुक्तं, मृषाभाषावर्गणोपादानशब्दानां निमित्तभेदवैचित्र्येण बहुभेदानामनर्थकत्वाभ्युपगमात्, ते हि तदर्थमास्यादिप्रसवविकला वन्ध्याबला इव केवलं तथाविधसंवेदनसंभोगमात्रफला एव, स्वरूपालोचनादिभ्यस्तु प्रमाणादिवेतरस्यार्थवच्छब्देभ्यस्तद्विशेषावसायः, तथाहि दृश्यन्ते एव केचित् विमलमतयः श्रवणमात्रादेवानृतत्वादियाथात्म्यमवधारयन्तः ध्वनेः, अपोहमात्राभिधायकत्वेऽपि चैषां समान एवायं प्रसङ्गः, तथाविधाऽपोहस्यापि सर्वत्राभावात्, अप्रधानाद्यपोहस्य क्वचिदनुपपत्तेः, सर्वभावानामेव परमार्थतोऽप्रधानादिरूपत्वात्, बुद्धिपरिकल्पिततदपोहाभ्युपगमे च तदन्यतो विशेषात्, रूपादिज्ञानाद्यपोहस्यातथाभूतत्वात्, वस्तुबलप्रवृत्ते रूपादीनां रसादिभ्यो भेदात् तथाविधबुद्धीनामपि पारम्पर्येण तन्निमित्तत्वाभ्युपगमात्, वस्तुभेदो वासना प्रकृतिश्च तस्याः आश्रय इत्यादि वचनप्रामाण्यात्, प्रधानादिबुद्धिभेदसिद्धेरिति। न चासामप्यधिकृतभेद एवाश्रयः, अतत्प्रतिभासत्वात्, तद्रूपाच्च ततस्तदतत्प्रतिभासत्वानुपपत्तेरातिप्रसङ्गात्, रूपाद्यन्यतमभेदादेव बुद्धीनां रसादिप्रतिभासत्वापत्तेः तदसत्त्वप्रसङ्गादित्युक्तं। न च वासनाप्रकृत्युपादानभेदतस्तत एवासामतत्प्रतिभासता, तस्य तत्त्वतो निरंशत्वात्, अनेकसहकारित्वाभावात्, यथाकथञ्चिदेकसहकारिस्वभावत्वे तदन्यसहकारिस्वभावत्वविरोधात्, स्वभावभेदानुपपत्तेः, तमन्तरेण फलभेदायोगादिति। केवलवासनाप्रकृतिनिबन्धनत्वे तु प्रधानादिबुद्धीनामागत एव मदीयोऽभ्युपगमः, तदन्यापोहबुद्धीनामतथाविधत्वात्, तथाविधापोहस्यापि सर्वत्राभाव एवेति युक्तिसिद्धेः। तद्विषयशब्दानां चोपादानभेदात्, अन्यथाविषयभेदाभावात् तत्तत्स्वभावत्वेन तद्वाचकत्वापत्तेरिति सूक्ष्मधिया भावनीयमि-

अ०ज०
पताका०
॥ ३६ ॥

त्यलं प्रपञ्चेन । अतीताजातयोश्च सर्वथाऽसत्त्वमसिद्धं, सतः सर्वथाऽसत्तायोगात्, तदुत्पत्त्याद्यापत्तेः, असतश्च सत्ताविरोधात् अतिप्रसङ्गादिति । तत्तथाभिधाने न कश्चिद्दोषः, न च न स्यादनृतार्थता वाचः कस्याश्चिदपि, मृषाभाषावर्गणोपादानायास्तथात्वाविरोधात्, तस्या ह्यर्थाभावेऽपि भावात्, परपक्षेऽपि तद्विवक्षाभेदोपपत्तेः, अन्यथा तत्सत्यत्वप्रसङ्गात्, वाच्याभेदात्, तद्भेदे च समानतापत्तेरिति । यच्चोक्तं सङ्केतवशाच्च शब्दात्प्रतीतिस्तस्य चापोहमन्तरेणान्यत्र कर्तुमशक्यत्वादित्यादि, तदप्यसारम्, अपोहेऽपि सङ्केतस्य कर्तुमशक्यत्वात् । त्रिविधोहि वोपोहः एकस्तावद्व्यावृत्तं स्वलक्षणमेव अन्योऽपोह्यतेऽस्मिन्निति कृत्वा । यदधिकृत्याह " स्वभावपरभावाभ्यां यस्माद्व्यावृत्तिभागिन " इति । अयं च शब्दलिङ्गाश्रयस्य व्यवहारस्याश्रयत्वेन व्यवस्थाप्यते न तु शब्दवाच्यतयेति नात्र सङ्केतः, अन्यथा व्यवच्छेदमात्रं द्वितीयः, अन्यापोहनमन्यापोह इति कृत्वा यः सर्वत्राभेदेन वः पूर्वाचार्यैर्व्यवस्थाप्यते, प्रतिषेधमात्रस्य सर्वत्राविशेषात् अत्रापि न सङ्केतो निःस्वभावत्वात् । आह च न्यायवादी, " अर्थानां यच्च सामान्यमन्यव्यावृत्तिलक्षणं । यन्निष्ठास्त इमे शब्दा न रूपं तस्य किञ्चन " इति । विकल्पबुद्धिप्रतिभासस्तु तृतीयः अन्योपोह्यते ऽनेनेति कृत्वा, अयं च शब्दस्य निबन्धनतयाभ्युपगम्यते । यदधिकृत्याह " विकल्पयोनयः शब्दा विकल्पाः शब्दयोनय " इति । अयमप्युपप्लवत्वान्नास्त्येवेति कथमत्र सङ्केतः । बहिरयं नास्ति विकल्पबुद्धिप्रतिभासस्त्वस्त्येव तत्र सङ्केत इति चेत्, कोऽयं विकल्पबुद्धिप्रतिभासः । एते वृक्षादय इति तदेकाकारतैवेति चेत्, किमियं तत्स्वसंवित्तेर्भिन्नाभिन्नेति वाच्यम् । अनिर्वचनीयेति चेत्, कथं तत्र सङ्केतः । तद्भेदाभेदाभ्यामनिर्वचनीया नान्यथेति चेत्, किमिदमन्यथात्वं नाम । संवृत्या भाव इति चेत्, न, तर्हि परमार्थेनायमिति न तत्र सङ्केतः । अवस्तुन्य?ायमिति चेत्, न, वस्तुप्रतीतेः । भ्रान्ता खल्वियमिति चेत्, न अत्र प्रमाणम् । इतरत्रापि समानमिति चेत्, न, तदनुभव?लसिद्धेः, इतश्च न विकल्पबुद्धिप्रतिभासे सङ्केतः, स्थितास्थितविकल्पायोगात्, न स्थिते, अक्षणिकत्वप्रसङ्गात्, नास्थिते,

कर्त्तुमशक्यत्वात्, तथा गृहीततरविकल्पानुपपत्तेः, न गृहीते, सन्तानान्तरवर्त्तिनोऽस्य ग्रहीतुमशक्यत्वात्, नागृहीते, अति प्रसङ्गात्, तथा व्यवहारसमर्थाऽसमर्थालोचनायोगाच्च, व्यवहारसमर्थत्वे तस्यार्थक्रियासमर्थत्वेन वस्तुत्वाद्ग्राह्येऽनिमित्तो द्वेषः, तदसमर्थत्वे तु सङ्केतवैयर्थ्यम्, तद्वाच्यावाच्यस्वभावत्वचिंतासिद्धेश्च, तच्छब्दवाच्यस्वभावत्वे, तस्य शब्दस्यापि तद्वाचकस्वभावत्वमिति वास्तव्य(व?)सम्बन्धसिद्धिः। अन्यथा सङ्केताभावोऽतिप्रसङ्गात्। स्यादेतच्छब्दो हि विकल्पजन्मा विकल्पहेतुश्च वर्त्तते। तथा चोक्तं "विकल्पयोनयः शब्दाः विकल्पाः शब्दयोनय" इति ततश्चासौ शब्दो यथाभूतादेव वक्तृविकल्पादुत्पद्यते तथाभूतस्यैव श्रोतृविकल्पस्य जनक इति एतावतांशेन तत्र सङ्केत इति प्रतिपाद्यते, न पुनः शृङ्गग्राहिकया क्रियते। तथा च तैमिरिकद्वयद्विचन्द्रप्रतिपादनन्याय एवेहाऽवितथशब्दार्थव्यवहारज्ञैरनल्पधीधनैः प्रतिपादितः। यथोक्तं "रूपान्तरं विकल्पे यदुभयोः प्रतिभासते। सत्यर्थे तत्र सङ्केत एकत्वाध्यवसायतः ॥ १ ॥ यादृशाद्यः समुत्पन्नः स भवत्येव कारणं। तादृग्विधविकल्पस्य ध्वनिः सङ्केतसंस्थितिः ॥ २ ॥ किमेतदिति सङ्केत्य इतरोऽप्येवमित्यदः। न कल्पयति यावद्धि तावन्न समयोद्भवः ॥ ३ ॥ वक्तुः श्रोतुश्च तुल्या ते बुद्धी तेनैकगोचरे। तत्त्वेन बहिरर्थोऽस्ति न कश्चिच्छब्दगोचरः ॥ ४ ॥ स्वबुद्धिप्रतिभासस्य संवित्तावपि जायते। बहिरर्थग्रहे मानस्तुल्यतैमिरबुद्धिवत् ॥ ५ ॥" इत्येतदपि यत्किञ्चित्, अविचारितरमणीयत्वात्, शब्दस्य विकल्पमात्रतो जन्मासिद्धेः, तद्भावेऽपि मूकादिषु तददर्शनात्, समग्रकारणस्य च कार्याव्यभिचारात्, अन्यथा समग्रत्वानुपपत्तेः, निमित्तमात्रत्वे चास्य तद्वन्निमित्तान्तरावगमनिमित्तत्वे न विरोध इत्यस्तु विषयेऽपि सङ्केतो विषयविकल्पविवक्षाप्रयत्नभावाद्द्रव्यादिविशेषेभ्यस्तज्जन्मोपपत्तेः। घटोऽयमानयैव चैनमित्यादौ तथा दर्शनात्, इत्थम्भूतस्यान्यतरवैकल्येऽप्यभावात् भाविनश्चेत्थम्भूतत्वानुपपत्तेः, तेन व्यभिचारायोगात्, तादृशस्य विकल्पमात्राभिधायित्वेऽप्यदोषात्, प्रमाणाभासवत्तदाकारत्वेऽपि विशिष्टकार्यासाधनत्वादिति युक्तियुक्तं सच्छब्दादाविद्वदङ्गनादिप्रतीतं विषयप्रवृत्त्यादि। तैमि-

रिकद्वयं द्विचन्द्रप्रतिपादनन्याये तु निर्विषयविज्ञानविषयत्वात् सर्वशब्दानां तन्मात्राभिधानात् प्रतीत्यन्तराभावात् बहिरर्थग्रहेऽभिमानानुपपत्तेः तदेकस्वभावत्वाभ्युपगमात् स्वसंवेदनमात्रस्वभावत्वेनास्यान्तर्मुखावभासित्वतो बहिर्मुखावभासित्वविरोधात्। लोके तु तैमिरिकज्ञानस्यानेकस्वभावतया तैमिरिकचन्द्रादिहेतुसामर्थ्यतस्तथात्वाविरोधात् एकचन्द्रस्यापि तद्विषयत्वात् तदभावेऽभावात् तथापि तद्धेतुत्वकल्पनेऽतिप्रसङ्गादिति परमत एव बहिरर्थग्रहाभिमानानुपपत्तिरिति न युक्तियुक्तं विषयभ्रष्टस्यादि। न चैकचन्द्रवदर्थोऽपि कथञ्चिदस्य विषय इष्यते, अभ्युपगमे चापद्यते बलात् कथञ्चिच्छब्दविषयोऽर्थ इति यत्किञ्चिदेतत्। न चासौ शब्दो यथाभूतादेव वक्तृविकल्पादुत्पद्यते तथाभूतस्यैव श्रोतृविकल्पस्य जनक इत्येतदप्यालोचिताभिधानं, तज्जन्यजनकताग्राहिणः परमार्थसतस्तथाविधविज्ञानस्याभावात्, क्षणिकत्वेनोभयोर्ग्रहणासिद्धेः तदग्रहे च तथानिश्चयायोगः, तत्तत्स्वभावतया क्षणिकेनापि तत्स्वभावत्वगतेः, अन्यथा तदग्रहणप्रसङ्गान्निश्चय इति चेत्, न, तत्स्वभावगत्यसिद्धेः, इतरेतरग्रहणमन्तरेण तदयोगात्, तस्य च क्षणिकवादेऽभावात्, तथापि तदभ्युपगमे दृष्टेष्टविरोधः धूमादिमात्रग्रहणादेव तस्य वह्न्यादिजन्यस्वभावतया तथैवावगतेः। अविनाभावग्रहणमन्तरेण नालिकेरद्वीपवासिनोऽपि धूमध्वजादिप्रतिपत्त्यापत्तेः। न चेयमेवमिति न तत्स्वभावावगतिरिति न तज्जन्यजनकताग्राहि परमार्थसतस्तथाविधं ज्ञानमस्ति। किञ्च तथाभूतस्यैव श्रोतृविकल्पस्य जनक इत्येतदप्ययुक्तं, क्वचिदसम्भवात्, गम्भीरशास्त्रश्रवणादौ तथोपलब्धेः, अन्यथा तदनवगमाभावात्, अभ्युपगमे च प्रतीतिविरोधः, क्वचित्सम्भवेऽपि तदवगमासम्भवाच्च, परचेतसोऽप्रत्यक्षत्वात्, तदाकारोऽतदाकार इति सन्देहात्, स्वात्मनि ततस्तदाकारविकल्पोत्पत्त्या तज्जननस्वभावत्वाऽवगतेर्न सन्देह इति चेत्, न, क्वचिदसम्भवादित्युक्तं, न च यादृशाद्यः समुत्पन्नः तादृशस्यैव हेतुरित्यसन्देहनिमित्तं, व्यभिचारभावाद्गोमयगोलोमादिप्रभवेभ्यः शालूकदूर्वादिभ्यः पुनस्तदनुत्पत्तेः। तथाविधसामग्र्यभावतो न तदुत्पत्तिरिति चेत्, तत्रापि न तदभाव इति न प्रमाणं,

श्रोतृतदुपलब्धिरेव प्रमाणमिति चेत्, न, क्वचिदसम्भवादित्युक्तं । तैलप्रभवदीपाच्च तैलानुत्पत्तिरिति व्यभिचार एव, न च गृहीतस्ते वचनतोऽभिप्राय इति लोकप्रतीतिस्तदसन्देहे निमित्तं, अभ्युपगमविचारात्तेन चोक्तवत्तदसिद्धेरित्यतितुच्छमेतत् । यच्चोक्तं वस्तनामानन्त्याद्व्यवहारानुपयोगादिति तदपि न दोषकृत्, तुल्यत्वात्, तथाहि न विकल्पबुद्धिप्रतिभासोऽन्य एव विकल्पेभ्योऽपि तु विकल्पा एव ते च भूयांसस्तथात्वतो बोधमात्रविशेषा इति सर्वेषु वा देशकालस्वभावविप्रकर्षवत्सुविकल्पेषु वाचकत्वे नियोगो ध्वनीनां, परिदृष्टेषु वा, न तावत्सर्वेषु, आनन्त्यादनुपलब्धेः इह येनोपलभ्यन्ते न तेषु ध्वनीनां संयमविधिः यथा विनष्टानुत्पन्नेषु, नोपलभ्यन्ते च देशकालविप्रकृष्टा विकल्पा इति न तेषु सङ्केतः । नापि परिदृष्टेषु, तत्रापि दोषात्, तथाहि परिदृष्टविकल्पसङ्केतविधौ सङ्केतकाले य एव नोपलब्धो विकल्पस्तत्रैव ततः शब्दात् प्रवृत्तिर्न भवेत्, नह्यन्यत्र कृतसमयात् ध्वनेरन्यत्र प्रवर्त्तनं युक्तं, यथा केसरादिमति भावे गोशब्दात्, ततश्च निष्प्रयोजन एव सङ्केतस्तत्समयोपलब्धस्यासंसारमपि पुनरनुपलम्भाच्च । स्यादेतत् न हि स्वसंविद्रूपेषु बोधमात्रविशेषेषु सङ्केतोऽपि तु बुद्धिपरिकल्पिते रूपे तच्चावस्थितमिति यथोक्तदोषानुपपत्तिः, एतदपि यत्किञ्चित्, बुद्धिपरिकल्पितस्य रूपस्यावस्तुत्वेनासत्त्वान्निश्चयाभावतः सङ्केतासिद्धेरिति । आह बुद्धिपरिकल्पितं रूपं कल्पितयैव बुद्ध्या निश्चीयत इति निश्चयाभावादित्यसिद्धं, न, सम्यग्निश्चयानभिधानात् खकुसुमरूपं वन्ध्यासुतबुद्ध्या निश्चीयत इति तत्त्वतोऽभिधानाविशेषात्, अन्यथा बलात्तद्भावापत्त्याऽनयोः परिकल्पितत्वाभाव इति परिचिन्त्यतामेतत्, निश्चय उपलम्भः संविदित्यनर्थान्तरं, न च संविदोऽप्यवस्तुत्वमनभ्युपगमात् शून्यतापत्तेः, स्वसंविदितरूपा च बुद्धिः बुद्धिस्वभावं च तत् न चाधिकं तत्र किञ्चिदिति कथमवस्तुत्वं नाम, एवं पूर्वोक्तदोषानतिवृत्तिरेव । आह यद्रूपं तद्बुद्धौ प्रतिभासते तथाभूतं नास्तीत्यवस्तुत्वं, तथाहि, तद्व्यतिरिक्तमपि व्यतिरिक्तमिवाऽसाधारणमपि साधारणमिव अनर्थक्रियाकार्यपि तत्कारीवाऽवभासते तथा तन्नास्तीत्यवस्तुत्वं तथाप्रतिभासतयास्त्येव ।

अ०ज० पताका० ॥ ३८ ॥

उक्तं च न्यायवादिना " पररूपं स्वरूपेण यया संव्रियते धिया । एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः ॥ १ ॥ तया संवृतनानात्वाः संवृत्या भेदिनः स्वयम् । अभेदिन इवाभान्ति भावा रूपेण केन चित् ॥ २ ॥ तस्या अभिप्रायवशात्सामान्यं सत्प्रकीर्त्तितम् । तदसत्परमार्थेन यथा सङ्कल्पितं तथा ॥ ३ ॥ इति, एतदप्युक्तं, तत्त्वतो विहितोत्तरत्वात् तदुक्तिमात्रभेदात्, तथाहि यद्रूपं तद्बुद्धौ प्रतिभासते तथाभूतं नास्तीत्यवस्तुत्वमुक्तं, तत् क्व नास्ति किं तद्बुद्धावेव, आहोस्विद्बहिः, यदि तद्बुद्धावेव, तत्र प्रतिभासते तत्रैव नास्तीति व्याहतमेतत् यदि नास्ति कथं प्रतिभासते प्रतिभासते चेत् कथं नास्तीति । अथ बहिः, यद्बुद्धौ प्रतिभासते तत्कथं बहिर्भवति तद्धर्मत्वात्, न चैतावताऽवस्तुत्वं, स्वलक्षणबुद्ध्याकारस्याप्यवस्तुत्वप्रसङ्गात्, तस्यापि बहिरसत्त्वात् । स बाह्यबलोपजात इति चेत् , इतरत्रापि समानमेतत् । न तथाविधं बाह्यमस्तीति चेत्, अतथाविधभावे किं प्रमाणं । तदाकारज्ञानोत्पत्तिरिति चेत्, इयं तथाविधेऽपि सदृशी । नेयं ततः क्वचित्तदभावेऽपि भावादिति चेत् , निर्विकल्पकबुद्धावपि तुल्यमेतत् । न सा साध्वी तदाभासत्वादिति चेत्, इतरत्रापि समानः समाधिः । सा साध्वी न सम्भवत्येवेति चेत् , साधारणोऽभिशापः । स्वलक्षणदर्शनानुग्रहादसाधारण इति चेत् , न, तद्दर्शनानुग्रहस्यापि भावात् । तदभावादेव तदभाव इति चेत् , न, तस्यासिद्धत्वात् , तदाकारादिसंवेदनात् तन्निश्चयानुपपत्तेः, न साधारणाकारेणैव संवेदनेन साधारणार्थाभावनिश्चयः, अतिप्रसङ्गात्, स्वलक्षणाकारेणाप्यनेन तदभावनिश्चयापत्तेः, एवमन्याकारेणापि योजना कार्येति । एवं च तद्व्यतिरिक्तमित्याद्यनालोचिताभिधानमिति दर्शितमेव तथापि लेशतो विशेषेण दर्श्यते, तत्र यदुक्तं पररूपमित्याद्यत्र पररूपं व्यावृत्तं स्वलक्षणमसाधारणं तत्कथं स्वरूपेण स्वप्रतिभासेन संव्रियते प्रच्छाद्यते धिया एकार्थप्रतिभासिन्या एकाकारया भावानाश्रित्य भेदिनः स्वलक्षणान्यधिकृत्योत्पन्नया तथोत्पन्नायास्तत्प्रतिभासत्वेन तत्प्रकाशनात्संवरणासिद्धेः । पारम्पर्येणोत्पत्तेः अस्या अतदाकारतेति चेत् , न, न्यायाऽनुपपत्तेः पारम्पर्येणापि कृष्णादिभ्यः सि-

तादिबुद्ध्यसिद्धेः, तदन्यतरमात्रसत्त्वापत्त्या तदितराभावप्रसङ्गात् । न चाप्येपैकार्थप्रतिभासिन्येव, तथाननुभवात्, तत्समानतया प्रतीतेः तदननुविद्धैकार्थप्रतिभासनादिति, एवं च संवरणानुपपत्तेः, तथा धियासंवृतनानात्वाः, स्थगितनानात्वाः किं विशिष्टया संवृत्त्या संव्रियतेऽनया स्वलक्षणमिति कृत्वा भेदिनः स्वयं असाधारणात्मनाऽभेदिन इव संसृष्टा इवाभान्ति भावा रूपेण केनचित् विजातीयव्यावृत्त्युपलक्षितेन घटत्वादिनेति न्यायतो वचनमात्रमेवेति । तथा तस्या बुद्धेरभिप्रायवशादेकाकाराध्यारोपवशात् सामान्यं सदिति प्रकीर्त्तितं बुद्ध्यारोपित एवाकारः सामान्यमुक्तं तदसत्परमार्थेन वस्तुस्थित्या यथासङ्कल्पितं समारोपितं तयेति, एतच्च वचनमात्रं परमार्थतस्तदसत्त्वासिद्धेः, बुद्ध्यारूढस्य वेद्यमानत्वात्, तत्प्रतिक्षेपेऽतिप्रसङ्गात्, तन्निर्विषयत्वासिद्धेः, प्रमाणाभावात्, सर्वथाऽसतः प्रतिभासनायोगात्, वियत्केशादिबुद्धेरपि सदालम्बनत्वात् तथाविधतिमिररेण्वादिभावतः उत्पत्तेः अन्धतमसेऽभावादिति वक्ष्यामः । एवमपि तुल्य एवानन्त्यदोष इति चेत्, न, समानपरिणामवद्भावेष्वन्यतरवाचकत्वनियोगेऽपि ध्वनेरदोषात्, भूयोऽपि ततस्तादृशि प्रवृत्त्यविरोधात् एवंभूता एतच्छब्दवाच्या इति नियोगसमये नियोगादित्येवं व्यवहारानुपयोगादिति यत्किञ्चिदेतत्, इत्थमेव व्यवहारोपपत्तेः, अन्यथोक्तवदयोगात् । आह वस्तुविषयत्वे शब्दानां सामानाधिकरण्यादिव्यवहाराभावः, विकल्पानुपपत्तेः, तथाहि नीलोत्पलशब्दयोः, एकं वा वस्तुवाच्यं स्यात्, अनेकं वा, आद्यपक्षे, एकेनैव शब्देन निरंशस्य वस्तुनः सर्वात्मनाभिधानात् द्वितीयस्य शब्दस्याप्रवृत्तिरभिधेयाभावात् प्रवृत्तौ वा पर्यायतेति न नानाफलत्वं । द्वितीये पक्षे त्वेकाधारताभावः घटपटादिशब्दवत् नानाविषयत्वात् । अथ मतं नीलशब्दो नीलगुणविशिष्टं द्रव्यमाह उत्पलशब्दोऽप्युत्पलत्वजातिविशिष्टं तदेव द्रव्यमतो विशेषयोर्भेदान्नानाफलः शब्दो विशेष्याभेदादेकाधार इति, एतदप्यसत्, युक्त्ययोगात्, तथाहि नीलगुणेन विशिष्टं द्रव्यं नीलशब्देनाभिधीयमानं सर्वात्मनाऽभिधीयतेऽनंशत्वात् कोऽपरो द्रव्यस्योत्पलत्वादिजातिविशिष्ट आत्माऽनभिहितोऽस्ति य उत्पलशब्देनाभिधीयेतेति

तथैव पर्यायता स्यात् । अथ विशेषणभेदाद्विशेष्यस्य द्रव्यस्य भेदस्तथाप्येकाधारता न स्यादिति वैयधिकरण्यमेव । एवं विशेषणविशेष्यभावानुपपत्तिरपि वाच्या, अन्यापोहपक्षे त्वयमदोषः, एकस्यैव धर्मिणो व्यवच्छेदद्वयोपगृहीतस्य विकल्पबुद्धेः प्रतिभासनात् । एतदुक्तं भवति नीलशब्दप्रयोगाद् बुद्धिप्रतिभासी धर्मी अनीलव्यावृत्तरूप एव प्रतिभासते अनुत्पलव्यवच्छेदस्तु न नीलशब्देनोपात्तो न प्रतिक्षिप्तः, उत्पलशब्दप्रयोगादप्यनुत्पलव्यावृत्तरूप एव प्रतिभात्यनीलव्यवच्छेदस्तूत्पलशब्देन नोपात्तो न त्यक्तो, नीलमुत्पलमिति शब्दद्वयप्रयोगे उभयसमारोपव्यावृत्तैकधर्मिप्रतिभासिनी विकल्पबुद्धिरुत्पद्यते ततो नानाफलः शब्द एकाधारो भवतीति भवेद् बुद्ध्यनुरोधित्वेन सामानाधिकरण्यमिति, न तु बुद्धिप्रतिभाससंदर्शितो धर्मी वस्तुत एकोऽनेकधर्मा विकल्पनिर्मितस्य धर्मधर्मिभावस्यालीकत्वात् यतश्च भेदान्तराप्रतिक्षेपेणोत्पलशब्दो वर्त्तते ततोऽप्रतिक्षिप्तभेदान्तरापेक्षितत्वाद् बुद्धेर्भवति विशेषणविशेष्यभावः उत्पलङ्किं नीलमिति, एतदप्यसत्, विकल्पबुद्धिप्रतिभासस्यालम्बनाभावेन परमार्थतोऽसत्त्वात् यद्यनेकधर्मकमेकमालम्बनं भवति ततस्तदनुसारेण नियमवती तथाविधा बुद्धिरुपजायते तथा च नानाफलः शब्द एकाधारः प्रवर्त्तत इति भवति सामानाधिकरण्यं न च तदस्तीति कथं तद्भावः, न खलु मुख्यस्त्रीपुरुषद्वन्द्वसम्भव्यपत्यं वन्ध्यासुतदुहितृयुगलकाद्भवतीति कदाचिदनभिनिविष्टः प्रेक्षावानभिधत्ते तद्भावे च बुद्धाविव तत्राप्यविरोध एवास्य । बुद्धिः परिकल्पिता अर्थस्त्वपरिकल्पित इति चेत्, किमत्र क्षुण्णम् । स तथाविधो नास्तीति चेत्, बुद्धिः किमस्ति । परिकल्पिताऽस्तीति चेत्, न तर्हि पारमार्थिकी । कः किमाहेति चेत्, कथं तथाभूतायां सामानाधिकरण्यादि । तदपि तथाभूतमेवेति चेत्, बालक्रीडनकप्रायः शास्त्रारम्भः । तत्त्वतः इत्थमेवेति चेत्, नोचितमबालस्य बालचेष्टितं । फलाप्तेरुचितमिति चेत्, किमसद्व्यवहारात् फलं । तत्त्वप्रतिपत्तिरिति चेत्, साऽसद्व्यवहारादिति चित्रम् । एतद्याथात्म्यप्रतिपत्तिरेवेयमिति चेत्, कथं विकल्पात्मिकायास्तत्त्वम् । कथं च न स्यादिति चेत्, असदाकाराऽनुवेधात् ।

स्वसंवित्तत्र तत्त्वमिति चेत्, न सा न विपक्षेऽपीति यत्किञ्चिदेतत्। साऽन्यादृशीति चेत्, किं कृतमन्यादृशत्वं। प्रतिभासभेद-कृतमिति चेत्, कथमसन् भेदको नाम। तत्प्रतिभासतया सन्नेवेति चेत्, तच्चित्रतापत्तिः। न तत्त्वत इति चेत्, सन्निरर्थक उपन्यासः। तच्चित्रतायामपि को दोष इति चेत्, न कश्चिदपि तु बाह्यस्यापि तद्भावाविरोध इत्येवं चालमनेन तत्प्रति-क्षेपासदभिनिवेशेन बाह्य एवेदमस्तु तथा लोकप्रतीतेः। तथा चाहुर्वृद्धाः भिन्ननिमित्तप्रयुक्तस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यं न चैतदर्थशबलतामन्तरेण एकस्मिन्ननेकनिमित्ताभावात् एकत्वविरोधात् तत्स्वभावभेदमन्तरेण तत्कल्प-नासिद्धेः अतिप्रसङ्गात् तथा तच्चित्रैकस्वभावताभ्युपगमे वा विप्रतिपत्तिरावयोः तदेकानेकस्वभावत्वमन्तरेण तच्चित्रैकस्वभा-वतायोगात्, न चैकानेकस्वभावत्वे भावानां विरोधः, तथाप्रतीतेः, सन्नीलमुत्पलमित्यादिसंवेदनात्, न च यदेव सत्त्वं तदेव नीलत्वादि तद्गतावपि क्वचित्तदनवगतेः विप्रकृष्टादिभिस्तथादर्शनात्। न चैकस्वभावादेव तत एष बुद्धिभेदः, अति-प्रसङ्गात्, कासांचिदहेतुकत्वापत्तेः, न च निरालम्बना एवैता इति, तद्भावभावित्वोपपत्तेः, अन्यथा तदयोगात्, न चावि-कल्पिकैका साध्वी, एतास्त्वसाध्व्य इति, विहितोत्तरत्वात्, तत एव तत्प्रसूतेः अनन्तरक्षणसुखादिसंवेदनादिजनकत्वात्। न च तथैनैव स्वभावेनानन्तरक्षणं जनयति तेनैव सुखादि, तदभेदापत्तेः सर्वथा हेत्वभेदात्। न चैकाजनकत्वतस्सामग्रीजन-कत्वेन तद्भेदत एव तद्भेदः, सामग्र्ययोगात्, समग्रेभ्यस्तद्भेदाभेदविकल्पासिद्धेः। न च तत्सिद्धावपि तद्भेदः समालोच्य-मानो घटते, एकसमग्राणामन्याजनकत्वात् तत्रैव सामर्थ्याभ्युपगमात्। न च तेषामेवोपादानसहकारिभावतस्तद्भेदः, अभिधानमात्रत्वात् उक्तवद्युक्त्यनुपपत्तेः। न च सर्वेषां सर्वजननस्वभावत्वतोऽनपराधः, तदेकस्वभावत्वविरोधात्, अवि-रोधेऽपि तत्तुल्यतापत्तेरिति तदेकानेकस्वभावत्वसिद्धिः। एवं च लोके तथा दर्शनात् बहिर्मुखावभासिसंवेदनोपपत्तेः, बाधा-सम्भवात् तथा चित्रस्वभावतातिरेकेणोक्तवद् बुद्धावपि तदयोगाद्बाह्य एव कथञ्चित्सामानाधिकरण्यसिद्धेः, तत्रापि तथाविध-

अ०ज०
पताका०
॥ ४० ॥

शब्दस्य कथञ्चिद्भिन्ननिमित्तत्वोपपत्तावप्येकार्थवृत्तित्वस्याप्यविरोधात्, तदेकानेकस्वभावत्वेनोभयस्यापि निरुपचरितत्वादिति; तथाहि नीलत्वोत्पलत्वे विशेषपरिणामरूपे न सत्त्वादिसमानपरिणामाऽननुविद्धे, क्वचित्तयाऽननुभवात्, तदननुविद्धयोरसत्त्वापत्तेः, न च सत्त्वादिमात्रतत्त्वे एव, अन्यथापि वेदनात्, तदन्यत्र तदननुविद्धस्यापि तस्य भावात्। सत्त्वादिमात्रमेव तद्विशिष्टमिति चेत्, न, सत्त्वादिमात्रतत्त्वे तद्भाव एव कथञ्चित्तदतिरिक्तविशेषणाभावे तद्वैशिष्ट्यासिद्धेः न हि स्वच्छोदकबिन्द्वोः सर्वथा समानयोर्व्यक्तिभेदेऽपि तथा जातिभेदो नाम, न चोदकमात्रतत्त्ववादिनस्तदतिरिक्तदेशाद्यनानुवेधे तत्तत्त्वाविशेषादितरोऽपि न्याय्यः, अनादृत्य तु सूक्ष्मेक्षिकामेतदुक्तमिति न सत्त्वादिमात्रमेव तत्, विशिष्टं तु विशेषणभाव इति तदेकानेकस्वभावत्वसिद्धिः। तत्तथाभिधाने च तथा वस्तुशब्दस्याभाव्यादनेकान्तनीत्या वस्तुतथात्वानुसारि सुस्थितं सामानाधिकरण्यम्। नीलोत्पलत्वविशेषपरिणामयोः कथञ्चित्सत्त्वादिसमानपरिणामाभेदात्, तस्य च तथाभिधानादिति। न चेह नीलोत्पलशब्दयोरेकं वा वस्तुवाच्यं स्यादनेकं वेति विकल्पोक्तदोषसम्भवः, केवलोभयपक्षविविक्तस्य जात्यन्तरात्मकस्यैकानेकस्य वाच्यत्वात्, तत्र च केवलोभयपक्षगतदोषानुपपत्तेः अतदात्मकत्वात्, तथापि तत्तदापादनेऽतिप्रसङ्गः येन केनचिदुष्टेन विश्वस्य दुष्टतापत्तेरिति यत्किञ्चिदेतत्। नीलशब्दो नीलगुणविशिष्टं द्रव्यमाहेत्यादि तु यदुक्तं तदनभ्युपगमादेव न नः क्षतिमावहति। न खलु जैनैर्वैशेषिकैरिव द्रव्यगुणजातयो भिन्ना एवेष्यन्ते, किं तर्हि, कथञ्चित्, न च निरंशमेव द्रव्यम्, अपित्वेकानेकस्वभावं तत्र चोक्तदोषवद्दोषाभावः, तथाहि नीलविशेषपरिणामात्कथञ्चिदभिन्नसत्त्वादिसमानपरिणामाभिधानेऽपि नीलशब्देन तस्यैव कथञ्चिदुत्पलत्वादिविशेषपरिणामाभेदित्वस्य तेनैवानभिधानात्, तत्तत्स्वभावत्वात् तदभिधानायोत्पलशब्दस्यापि कथञ्चित्तत्रैव प्रवृत्तिः, अन्यथा तदनभिधानात्। न चैवमनयोः पर्यायता, कथञ्चित्प्रवृत्तिनिमित्तभेदात्, तद्भावेऽपि तदभ्युपगमेऽतिप्रसङ्गात्। तयोपाधिभेदाद्विशेष्यभेदेऽपि च न वैयधिकरण्यमेव, सर्वथाभेदानभ्युपग-

मात् तत्तत्समानपरिणामत्वात् तत्स्वभावतया तथाप्रतीतेः, अन्यथा वस्त्वभावप्रसङ्गादिति कथञ्चित्तदेकाधारत्वमनवद्यम् । यच्चोक्तमन्यापोहपक्षे त्वयमदोषः एकस्यैव धर्मिणो व्यवच्छेदद्वयोपगृहीतस्य विकल्पबुद्धौ प्रतिभासनादित्यादि, तदपि यत्किञ्चित्, विकल्पप्रतिभासस्यैवालम्बनाभावेन परमार्थतोऽसत्त्वादित्यादिना विहितोत्तरत्वात्, तथाह्यदस्तत्रैदम्पर्यम्, यदि तथैकानेकस्वभावाभावत एव चित्रा बुद्धिरिष्यते, ततस्तत्रापि नीलशब्दप्रयोगाद् बुद्धिप्रतिभासी धर्मी अनीलव्यावृत्तरूप एव प्रतिभासते इत्युच्यमानं सविषयत्वेन घटते, तद्भावे च तद्वदर्थतथाभावेऽप्यदोष एव, तच्चित्रताभावे त्वनुत्तरविज्ञान इव निबन्धनाभावेन तत्कल्पनाभाव एवेति । एवं बाह्य एव विशेषणविशेष्यभावोपपत्तिरपि भावनीया, तथाह्युत्पलं किं नीलमिति । अत्राहोत्पलत्वस्य विशेषपरिणामत्वान्नीलत्वस्यापि तत्त्वादेव कथं विशेषणविशेष्यभाव इति, उच्यते उत्पलत्वस्य कथञ्चित्सत्त्वादिसमानपरिणामापृथग्भावात् तत्सामर्थ्यतः कथञ्चिद्विशेष्यत्वोपपत्तेः, तथा शब्दस्वभावत्वाच्चाकल्पितशब्दार्थनीत्या कथञ्चित्तदभिधानादित्यलं प्रसङ्गेन । एवमेकान्ताभिलाप्यमप्यनुपपन्नमेव, तद्भावे शब्दार्थयोस्तादात्म्यापत्तेः, आह नन्वभ्युपगमा एव बाधायै भवन्ति शब्दार्थयोर्हि तादात्म्यमिष्यत एव तत एव तत्प्रतीतेः वृक्षत्वशिंशपात्ववत् वृक्षत्वप्रतिपत्तिनान्तरीयिका शिंशपात्वप्रतिपत्तिरित्यनयोस्तादात्म्यम् एवं शब्दप्रतिपत्तिनान्तरीयिकैवार्थप्रतीतिरित्यनयोरपीदं न्याय्यम्, शब्दानुविद्धश्चाखिलोऽर्थावबोध इत्यनुभवः प्राणभृतां तदभावे बोधानुपपत्तेः इति, आह च शब्दार्थतत्त्ववित्, "वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती । न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥१॥ न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन जायते ॥२॥" इत्यादि । न चालोचनाज्ञानमपि न शब्दानुविद्धम्, तथानुभवेऽपि सुप्तादिबोधवत्तत्सूक्ष्मभावोपपत्तेः, ऊर्ध्वं तत्स्थूरभावात् । न चासावहेतुकः, सदा तद्भावादिप्रसङ्गादिति, न चैवमालोकाद्यनुविद्धोऽवबोध इति, तदभावेऽपि नार्थतादात्म्यमस्य । न च न तदभावेऽपि स्पर्शनेनार्थग्रहः, तथाऽप्रतीतेः । न चैवं शब्दानु-

विद्धेन बोधेन तद्ग्रहः, तत एव हेतोरिति शब्दार्थयोस्तादात्म्यसिद्धिः, नीलादेरिव ज्ञाने शब्दप्रतिभासनात् । कथं तर्हि क्षुरिकानलाऽञ्जलादिशब्दोच्चारणे न वदनपाटनदाहपूरणादय इति, उच्यते तद्बोधभावे पाटनादिबोधाभाववत्तदवस्थाभेदहेतुत्वात्, पाटनादीनां बाह्यार्थपक्षेऽपि यन्नतः क्षुरिकादिमुखावेशे तदभाववत्तदवस्थाभेदहेतुत्वमेव, पाटनादीनां तदभावे न कश्चिदक्षतवदनः स्यादिति यथोक्तदोषाभावः, एवं शब्दब्रह्मपरिवर्त्तमात्रं जगत्, कथं तर्हि परं ब्रह्म शब्दाविषयः, यदाह अतः परं वाचो निवर्त्तन्त इत्यादि । उच्यते वाच्यवाचकभावप्रपञ्चाभावतो न शब्दरूपाभावेन न खलु शब्द इन्द्रियाद्यभावे शब्द इत्यनुच्चमाणः स्वसत्तां जहाति अतो वाच्यवाचकभावातीतमिदमेव परं ब्रह्मेति न कश्चिद्दोषः । अत्रोच्यते यत्किञ्चिदेतदविचारितरमणीयत्वात् । तत्र यत्तावदुक्तं नह्यभ्युपगमा एव बाधायै भवन्ति तदसत्, असदभ्युपगमस्य बाधायोपलब्धेः चौराद्यभ्युपगमस्य विद्वन्मध्ये बाधाफलत्वात्, नहि दृष्टेऽनुपपन्नं नाम । स्यादेतदसद्विषयो वासाविति युक्तं बाधाफलत्वमस्य, न चैवं शब्दार्थयोस्तादात्म्याभ्युपगमः उक्तनीतेस्तत्र बाधाफलत्वमस्य, न, शब्दार्थयोर्हि तादात्म्यमिष्यत एवेत्यस्यैवायोगात्, शब्दार्थानुपपत्तेः, तथाहि शब्दार्थयोस्तादात्म्यमिति कोऽर्थः, यदि तदात्मनोर्भावस्तादात्म्यम्, एवं तर्हि तौ द्वावपीष्टावेवापृथग्भावाभिधानात्मानयोरैक्यमेवेति नैवं शब्दब्रह्मपरिवर्त्तमात्रं जगदिति ऐदम्पर्यविरोधः विजातीयपरिवर्त्तायोगात् इन्द्रियगम्येषु तथा अदर्शनात् नहि मृदम्भोरूपेण विपरिवर्त्तते तद्वा तद्रूपेण सकललोकसिद्धमेतत् अस्यान्यथात्वाभ्युपगमे प्रतीतिबाधा द्रव्यवर्गणाविजातीयपरावर्त्तस्यापि देशादिभेदनिबन्धनत्वात् निरवयवं च शब्दब्रह्म, सावयवत्वे चास्यापरनामा धर्मास्तिकायाद्यभ्युपगम एवेति न काचित् नो बाधा । अथ तदात्मनो भावस्तादात्म्यमित्यत्र वक्तव्यम्, कस्यायमात्मा यदात्मनो भाव इत्यभिधीयते, यदि शब्दस्य, तद्व्यतिरेकेणार्थाभावात्, सर्वस्य शब्दमात्रत्वात्, शब्दार्थयोस्तादात्म्यमिति न न्यायसङ्गतं, नहि देवदत्तवन्ध्यासुतयोस्तादात्म्यमित्यभिदधति विद्वांसः । न च तदुपलब्धौ तद्भेदेन तत्प्रतीतिः चिन्ता वा

तद्भेदादिगोचरा, अस्ति च शब्दोपलब्धौ तद्भेदेनैतदुभयमर्थे, न चैतत्तद्भेदगोचरमेव, तद्भेदस्यातत्प्रतिभासिसंवेदनेनावेदनात्, नहि चन्दनशकलं कुङ्कुममिति वेद्यते वेद्यते च शब्दात् भिन्नप्रतिभासितया रूपादिघटादिः, बधिरोऽपि वाहीकः पश्यति पनसमिति सुप्रतीतं, शब्दानुगतबोधसिद्धावपि न बोधाभिन्नदेशोऽर्थ इति कुतः शब्दार्थयोस्तादात्म्यम्। यच्चोक्तं तत एव तत्प्रतीतेः वृक्षत्वशिंशपात्ववदित्यादि, तदप्ययुक्तम्, अत्रापि धर्मभेदनिबन्धनत्वादस्य, वृक्षत्वशिंशपात्वे हि विशिष्टौ वस्तुधर्मौ कथञ्चिद्भेदाभेदवृत्ती नान्यथाऽनयोस्तादात्म्यम्, तथाहि यदि वृक्षत्वमेव शिंशपात्वमिति धवाद्यभावप्रसङ्गः, तत्र वृक्षत्वस्य विद्यमानत्वात् तस्य शिंशपात्वादिति। अथ विशिष्टं वृक्षत्वमेतत् किमस्य विशेषणमिति चिन्त्यम्। ननु शिंशपात्वमेव, कथञ्चिदन्यत्तर्हि तत्ततः, अन्यथा पूर्वोक्तदोषानतिवृत्तिः। अवृक्षव्यावृत्तिमात्रनिबन्धनमेतदशिंशपाव्यावृत्त्या विशेष्यत इति चेत्, अस्त्वेतदेवमप्यस्मदभ्युपगमसिद्धिरेव, अशिंशपाव्यावृत्तिरहितस्यापि वृक्षत्वस्य धवादिषु भावात्, शब्दान्तरवाच्ययोर्विशिष्टयोर्धर्मयोरेव तादात्म्यमित्यस्मदभ्युपगमसिद्धिः, परिकल्पितत्वं च व्यावृत्तीनां प्रागिरस्तमेवेति न पुनः प्रतन्यते। एवं च वृक्षत्वप्रतिपत्तिनान्तरीयिका शिंशपात्वप्रतिपत्तिरित्यनयोस्तादात्म्यमित्येतत्सुन्दरमेव, कथञ्चित्तदुपपत्तेः, अन्यथाऽयोगादित्युक्तप्रायम्। एवं शब्दप्रतिपत्तिनान्तरीयिकैवार्थप्रतिपत्तिरित्यनयोरपीदं न्याय्यमिति त्वसुन्दरम्, अर्थस्य बोधभिन्नदेशतोपपत्तेः, तथाऽनुभवसिद्धत्वात् तदुपलब्धावपि तदर्थप्रवृत्तिसिद्धेः। भ्रान्तिमात्रमेतन्न तत्त्वत इति चेत्, किमत्र प्रमाणं, तयोरेव तादात्म्यमिति चेत्, तदिदमसिद्धमसिद्धेन साध्यते। यत्किञ्चिदेतत् देशभेदेन तद्भेद एव प्रतीयत इति चेत्, न तस्यापि तद्भेदत्वेन भेदकत्वायोगात्, तद्धविशिष्टमन्यस्तदन्यस्य भेदकं भवति न च कथञ्चिद्भिन्नं विशेषणमन्तरेण, विशिष्टतास्वरूपवैशिष्ट्यस्याप्यन्यतो देशभेदादिना विनायोगादिति सूक्ष्मबुद्धिविषय एव। एवं च शब्दानुविद्धश्चाखिलोऽर्थानवबोध इत्यनुभवः सर्वप्रमाणभृतां तदभावे बोधानुपपत्तेरिति, देवदत्तकान्तेतररूपचिन्तायामनाभोगवतो भोजनमात्रकथनमेतत्सत्यप्यभिनिविष्टार्थासिद्धेः, तथाहि यदि

अ०ज०
पताका०
॥ ४२ ॥

नाम बोधः शब्दानुविद्धस्ततः शब्दार्थयोस्तादात्म्यमिति काऽत्रोपपत्तिः, अन्यच्च बोधशब्दयोरपि तादात्म्यं वा स्यात् न वा किञ्चातः, तादात्म्ये शब्दस्यापि बोधतापत्तिरिति तन्मात्रवादसिद्धिः, बोधस्य वा ऽचेतनत्वं शब्दात्मत्वेन, तथा चानुभव-विरोधः, चेतनाचेतनत्वे च शब्दात्मनो नामकरणं जगद्वैचित्र्यस्य। एतेन यदुक्तमाह च शब्दार्थवित्, "वाग्रूपता चेदुत्क्रामेत्" इत्यादिकारिकाद्वयं तदपि प्रत्युक्तं, तुल्ययोगक्षेमत्वादिति, आह च वादिमुख्यः, "बोधात्मता चेच्छब्दस्य न स्यादन्यत्र तच्छ्रुतिः। यद्बोद्धारं परित्यज्य न बोधोऽन्यत्र गच्छति॥ १॥ न च स्यात्प्रत्ययो लोके यः श्रोत्रा न प्रतीयते। शब्दाभे-देन सत्येवं सर्वः स्यात्परचित्तवत्" इत्यादि। यच्चोक्तं न चालोचनाज्ञानमपि न शब्दानुविद्धं तथाननुभवेऽपि सुप्तादिबो-धवत्ततः सूक्ष्मभावोपपत्तेः ऊर्ध्वं तत्स्थूरभावादित्यादि, तदपि न नो बाधायै, तत्तदनुवेधेऽप्युक्तवच्छब्दार्थयोस्तादात्म्या-योगात्, न च सुप्तादिबोधः सूक्ष्मः सन्नन्यूनातिरिक्तत्भाव ऊर्ध्वं स्थूरो भवति, एकान्तैकस्य तदन्यप्रतिबन्धकाभावेऽवस्था-भेदानुपपत्तेः, प्रतिबन्धकभावे च तत्कृतश्चैतन्यक्रियानिषेधस्तदभावे च तत्क्रियेति न सूक्ष्मस्य स्थूरभावः उपचयकर्तृदकाभा-वादिति। एवं च सति न चासावहेतुकः, सदा तद्भावादिप्रसङ्गादित्यप्यनालोचिताभिधानं, उपादानहेतोस्तद्वृद्धिकर्तुरस-त्त्वात् तदितरस्य च तद्भेदत्वेन प्रकृतानुपयोगात्। किञ्चालोचनाज्ञानगतः सूक्ष्मः शब्दः किं बोधात्मक उत तदतिरिक्तश-ब्दात्मकः, यदि बोधात्मकः, कथमुच्यते न चालोचनाज्ञानमपि शब्दानुविद्धं तज्ज्ञानमात्रत्वेन शब्दार्थानुपपत्तेः, आत्म-नात्मानुवेधाभिधानस्येत्थमयुक्तत्वात्। अथ तदतिरिक्तशब्दात्मकः कथं तेन तदनुवेधः, अर्थेनास्य तादात्म्याभ्युपगमात्, तत्सूक्ष्मभावे तत्सूक्ष्मभावोपपत्तेः, अलौकिकं चैतद्यदुत सूक्ष्मावकाद्यनुविद्धमालोचनाज्ञानमिति। एवं च न चैवमालोकाद्य-नुविद्धोऽवबोध इति तदङ्गत्वेऽपि नार्थतादात्म्यमस्य न च तदभावेऽपि स्पर्शनेनार्थाग्रहः तथाऽप्रतीतेः न चैवं शब्दानुविद्धेन बोधेन तद्ग्रहस्तत एव हेतोरिति शब्दार्थयोस्तादात्म्यसिद्धिः नीलादेरिव ज्ञाने शब्दप्रतिभासनादित्याद्यप्युपन्यासमात्रफल-

तद्भेदादिगोचरा, अस्ति च शब्दोपलब्धौ तद्भेदेनैतदुभयमर्थे, न चैतत्तद्भेदगोचरमेव, तद्भेदस्यातत्प्रतिभासिसंवेदनेनावेदनात्, नहि चन्दनशकलं कुङ्कुममिति वेद्यते वेद्यते च शब्दात् भिन्नप्रतिभासितया रूपादिघटादिः, बधिरोऽपि वाहीकः पश्यति पनसमिति सुप्रतीतं, शब्दानुगतबोधसिद्धावपि न बोधाभिन्नदेशोऽर्थ इति कुतः शब्दार्थयोस्तादात्म्यम्। यच्चोक्तं तत एव तत्प्रतीतेः वृक्षत्वशिंशपात्ववदित्यादि, तदप्ययुक्तम्, अत्रापि धर्मभेदनिबन्धनत्वादस्य, वृक्षत्वशिंशपात्वे हि विशिष्टौ वस्तुधर्मौ कथञ्चिद्भेदाभेदवृत्ती नान्यथाऽनयोस्तादात्म्यम्, तथाहि यदि वृक्षत्वमेव शिंशपात्वमिति धवाद्यभावप्रसङ्गः, तत्र वृक्षत्वस्य विद्यमानत्वात् तस्य शिंशपात्वादिति। अथ विशिष्टं वृक्षत्वमेतत् किमस्य विशेषणमिति चिन्त्यम्। ननु शिंशपात्वमेव, कथञ्चिदन्यत्तर्हि तत्ततः, अन्यथा पूर्वोक्तदोषानतिवृत्तिः। अवृक्षव्यावृत्तिमात्रनिबन्धनमेतदशिंशपाव्यावृत्त्या विशेष्यत इति चेत्, अस्त्वेतदेवमप्यस्मदभ्युपगमसिद्धिरेव, अशिंशपाव्यावृत्तिरहितस्यापि वृक्षत्वस्य धवादिषु भावात्, शब्दान्तरवाच्ययोर्विशिष्टयोर्धर्मयोरेव तादात्म्यमित्यस्मदभ्युपगमसिद्धिः, परिकल्पितत्वं च व्यावृत्तीनां प्रागिरस्तमेवेति न पुनः प्रतन्यते। एवं च वृक्षत्वप्रतिपत्तिनान्तरीयिका शिंशपात्वप्रतिपत्तिरित्यनयोस्तादात्म्यमित्येतत्सुन्दरमेव, कथञ्चित्तदुपपत्तेः, अन्यथाऽयोगादित्युक्तप्रायम्। एवं शब्दप्रतिपत्तिनान्तरीयिकैवार्थप्रतिपत्तिरित्यनयोरपीदं न्याय्यमिति त्वसुन्दरम्, अर्थस्य बोधभिन्नदेशतोपपत्तेः, तथाऽनुभवसिद्धत्वात् तदुपलब्धावपि तदर्थप्रवृत्तिसिद्धेः। भ्रान्तिमात्रमेतन्न तत्त्वत इति चेत्, किमत्र प्रमाणं, तयोरेव तादात्म्यमिति चेत्, तदिदमसिद्धमसिद्धेन साध्यते। यत्किञ्चिदेतत् देशभेदेन तद्भेद एव प्रतीयत इति चेत्, न तस्यापि तद्भेदत्वेन भेदकत्वायोगात्, तद्वविशिष्टमभ्यस्तदन्यस्य भेदकं भवति न च कथञ्चिद्भिन्नं विशेषणमन्तरेण, विशिष्टतास्वरूपवैशिष्ट्यस्याप्यन्यतो देशभेदादिना विनायोगादिति सूक्ष्मबुद्धिविषय एव। एवं च शब्दानुविद्धश्चाखिलोऽर्थावबोध इत्यनुभवः सर्वप्रमाणभृतां तदभावे बोधानुपपत्तेरिति, देवदत्तकान्तेतररूपचिन्तायामनाभोगवतो भोजनमात्रकथनमेतत्सत्यप्यभिमिष्टार्थासिद्धेः, तथाहि यदि

अ०ज०
पताका०
॥ ४२ ॥

नाम बोधः शब्दानुविद्धस्ततः शब्दार्थयोस्तादात्म्यमिति काऽत्रोपपत्तिः, अन्यच्च बोधशब्दयोरपि तादात्म्यं वा स्यात् न वा किञ्चातः, तादात्म्ये शब्दस्यापि बोधतापत्तिरिति तन्मात्रवादसिद्धिः, बोधस्य वा ऽचेतनत्वं शब्दात्मत्वेन, तथा चानुभवविरोधः, चेतनाचेतनत्वे च शब्दात्मनो नामकरणं जगद्वैचित्र्यस्य । एतेन यदुक्तमाह च शब्दार्थवित्, "वाग्रूपता चेदुत्क्रामेत्" इत्यादिकारिकाद्वयं तदपि प्रत्युक्तं, तुल्ययोगक्षेमत्वादिति, आह च वादिमुख्यः, "बोधात्मता चेच्छब्दस्य न स्यादन्यत्र तच्छ्रुतिः । यद्बोद्धारं परित्यज्य न बोधोऽन्यत्र गच्छति ॥ १ ॥ न च स्यात्प्रत्ययो लोके यः श्रोत्रा न प्रतीयते । शब्दाभेदेन सत्येवं सर्वः स्यात्परचित्तवित्" इत्यादि । यच्चोक्तं न चालोचनाज्ञानमपि न शब्दानुविद्धं तथाननुभवेऽपि सुप्तादिबोधवचतः सूक्ष्मभावोपपत्तेः ऊर्ध्वं तत्स्थूरभावादित्यादि, तदपि न नो बाधायै, तत्तदनुवेधेऽप्युक्तवच्छब्दार्थयोस्तादात्म्यायोगात्, न च सुप्तादिबोधः सूक्ष्मः सन्नन्यूनातिरिक्ततद्भाव ऊर्ध्वं स्थूरो भवति, एकान्तैकस्य तदन्यप्रतिबन्धकाभावेऽवस्थाभेदानुपपत्तेः, प्रतिबन्धकभावे च तत्कृतश्चैतन्यक्रियानिषेधस्तदभावे च तत्क्रियेति न सूक्ष्मस्य स्थूरभावः उपचयकर्तृदलाभावादिति । एवं च सति न चासावहेतुकः, सदा तद्भावादिप्रसङ्गादित्यप्यनालोचिताभिधानं, उपादानहेतोस्तद्वृद्धिकर्तुरसत्त्वात् यदितरस्य च तद्भेदत्वेन प्रकृतानुपयोगात् । किञ्चालोचनाज्ञानगतः सूक्ष्मः शब्दः किं बोधात्मक उत तदतिरिक्तशब्दात्मकः, यदि बोधात्मकः, कथमुच्यते न चालोचनाज्ञानमपि शब्दाननुविद्धं तज्ज्ञानमात्रत्वेन शब्दार्थानुपपत्तेः, आत्मनात्मानुवेधाभिधानस्येत्थमयुक्तत्वात् । अथ तदतिरिक्तशब्दात्मकः कथं तेन तदनुवेधः, अर्थेनास्य तादात्म्याभ्युपगमात्, तत्सूक्ष्मभावे तत्सूक्ष्मभावोपपत्तेः, अलौकिकं चैतद्यदुत सूक्ष्मावकाद्यनुविद्धमालोचनाज्ञानमिति । एवं च न चैवमालोकाद्यनुविद्धोऽवबोध इति तदङ्गत्वेऽपि नार्थतादात्म्यमस्य न च तदभावेऽपि स्पर्शनेनार्थग्रहः तथाऽप्रतीतेः न चैवं शब्दाननुविद्धेन बोधेन तद्ग्रहस्तत एव हेतोरिति शब्दार्थयोस्तादात्म्यसिद्धिः नीलादेरिव ज्ञाने शब्दप्रतिभासनादित्याद्यप्युपन्यासमात्रफल-

मेव, अभीष्टफलविकलत्वात् । अत्र हि बोधार्थयोस्तादात्म्यप्रतिषेधः बोधमात्रेण चार्थाग्रहश्चाक्षुषस्य चार्थस्य स्पर्शनेन ग्रह इत्यैदम्पर्यमेतच्च सर्वमपि सूक्ष्मेक्षिकया निरूप्यमाणं न भवदिष्टैदम्पर्यविरोधि । तथाहि यदि शब्दार्थयोस्तादात्म्यं तदा आलोकस्याप्यर्थत्वेन शब्दात्मकत्वान्न चैवमालोकाद्यनुविद्धोऽर्थावबोध इत्यनिरूपिताभिधानं शब्दस्यैव तत्त्वादित्यसदेतद्यदुत नार्थतादात्म्यमस्य शब्दतादात्म्यादेव तत्सिद्धेः, न च बोधमात्रेणार्थाग्रहः, तन्मात्रस्यावग्रहेण ग्रहणादिति निर्लोठितम्, न च चाक्षुषार्थस्य स्पर्शनेन ग्रहः, इन्द्रियार्थप्रतिनियमानुपपत्तेः अन्धाद्यभावप्रसङ्गादिति । तथा नीलादेरिव ज्ञाने शब्दप्रतिभासनादित्यनेनार्थस्य बोधाद्भेद उक्तस्ततस्तदात्मकः शब्दः कथं बोधाभिन्नो भवेदित्यलमसद्वादनिरूपणाभरेण । यच्चोक्तं कथं तर्हि क्षुरिकानलाचलादिशब्दोच्चारणे न वदनपाटनदाहपूरणादय इत्याशङ्क्य बोधभावे पाटनादिबोधभाववत्तदवस्थाभेदहेतुत्वात् पाटनादीनामित्यादि, तदप्ययुक्तं, जैनमतापरिज्ञानात्, न खलु बौद्धविशेषयोगाचारमतमिव विज्ञानमात्रं तत्त्वमिति जैनं मतम्, अपि तु बाह्यार्थाभ्युपगमरूपमपि ततश्चानभ्युपगतदोषाख्यानमात्रमेतदिति । आह ननु तत्र बाह्यार्थपक्षेऽपि यत्नतः क्षुरिकादिमुखावेशे तदभाववचदवस्थाभेदहेतुत्वमेव पाटनादीनामिति यथोक्तदोषाभाव इत्युक्तम्, सत्यमुक्तमयुक्तं तूक्तम्, मत्पक्षे तदवस्थाभेदस्योपपत्तेः तद्व्यतिरिक्तभेदकभावात् तथाहि पुरुषप्रयत्नादयस्तद्भेदकाः शब्दब्रह्ममात्रतत्त्ववादिनः पुनरस्य तद्व्यतिरिक्तभेदकाभावेन वैचित्र्यानुपपत्तेः, निरवयवैकस्वभावत्वाभ्युपगमात्, तत्तत्स्वभावतत्त्वकल्पनाऽसिद्धेः, तत्स्वभावस्य तद्ब्रह्ममात्रत्वात् तस्य च तथाऽविचित्रत्वात् विचित्रत्वे च जगद्वैस्वरूप्यस्यैव तन्नामकरणात् न च तद्व्यतिरिक्तभेदकभाव इति तदवस्थाभेदानुपपत्तेः, यत्किञ्चिदेतत्, एवं शब्दब्रह्मपरिवर्त्तमात्रं जगदिति प्रलापमात्रम् । यच्चोक्तं कथं तर्हि परं ब्रह्म शब्दाविषयो यदाहातः परं वाचो निवर्त्तन्त इत्याशङ्क्य वाच्यवाचकभावप्रपञ्चाभावाच्च शब्दरूपाभावेनेत्यादि, तदप्ययुक्तमेव, वाच्यवाचकभावप्रपञ्चरहितस्य शब्दरूपस्यानुपपत्तेः,

स्ववचनविरोधात्, तथाहि वाच्यवाचकभावमपञ्चरहितं च शब्दरूपं चेति व्याहतमेतत् नहि सद्रूपरहितं सत्त्वं नाम, अन्यस्मातः परं वाचो निवर्त्तन्त इतीयमपि वागेव इयं चेत् तत्र प्रवर्त्तते कथं वाच्यवाचकभावमपञ्चाभावः न चेत् प्रवर्त्तत इति कथमपरवाचां निवृत्तिः, एवं च न खलु शब्द इन्द्रियाद्यभावे शब्द इत्यगृह्यमाणः स्वसत्तां जहाति अतो वाच्यवाचकभावातीतमिदमेव परं ब्रह्मेत्यपि व्युदस्तं ततश्च किमुच्यते न कश्चिद्दोष इति ननु दोष एव केवलः, तथाहि यद्यपि शब्द इन्द्रियाद्यभावे शब्द इति न गृह्यते तथापि नासौ स्वसत्तां जहाति तद्योग्यतोपपत्तेः तद्रहितस्य च स्वसत्तायोगात्, तथाहि य इन्द्रियेण न गृह्यते तद्ग्रहणयोग्यताविकलश्च कथमसौ शब्दो नामेति चिन्त्यम् किञ्चेत्थङ्कल्पनानिबन्धनभूता तत्र शक्तिः स्याद्वा न वा यद्यस्त्येवं तर्हीत्थङ्कल्पनागतशब्दवाच्याऽसाविति कथं वाच्यवाचकभावातीतार्थसाधनायोदाह्रियते। अथ नास्ति कथं तच्छून्ये एवेत्थङ्कल्पनाशब्दः प्रवर्त्तते प्रवृत्तौ वा कथं शब्दार्थयोस्तादात्म्यं विनार्थे नास्य प्रवृत्तिरित्यलं प्रसङ्गेन। किञ्च कः पुनरयं शब्दो यस्यार्थेन तादात्म्यमिष्यते किमत्रोच्यते यतः सास्नादिमदर्थप्रतिपत्तिरिति, आह च भाष्यकारः येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दो वर्णेभ्यस्तत्सम्प्रत्ययानुपपत्तेः एकाकारो ह्ययं नानेकेभ्यो वर्णेभ्यो भवितुमर्हति अनेकेभ्योऽनेकप्रत्ययभावात् अयं च स्फोटरूप एक एवेति युक्तोऽस्माद्यथोदितसम्प्रत्ययः। आह कुतोऽयमुत्पद्यते, नन्वयं नित्यः सर्वगतो नोत्पद्यते एव, आह किमित्यतो न सदा सर्वत्र सम्प्रत्ययः, हन्ताभिव्यञ्जकाभावेन अभिव्यञ्जकाश्चास्य ध्वनयस्तेऽपि पुरुषप्रयत्नसापेक्षा इति न सदा सम्प्रत्ययः। आह स किमेकध्वनिव्यंग्योऽनेकध्वनिव्यङ्ग्योऽपि किञ्चातः, अनेकध्वनिव्यङ्ग्यत्वे सदेशताऽनभिव्यक्त्यादि एकध्वनिव्यङ्ग्यत्वे तु शेषवैयर्थ्यं एकाभिव्यक्तादेव ततस्तत्सम्प्रत्ययसिद्धेः यत्किञ्चिदेतत्, निरवयवत्वेन सदेशतायोगात् एकध्वनिव्यङ्ग्यत्वेऽपि च सकृच्छ्रुतानुवाकवदनेकव्यक्तिग्रहणोपपत्तेः ध्वनिसंस्कृतं चेन्द्रियं स्फोटं गृह्णातीति न सर्वत्र तत्सम्प्रत्यय इति। अत्रोच्यते सर्वमिदमयुक्तं अनालोचिताभिधानात् तत्र

यत्तावदुक्तं यतः सास्नादिमदर्थप्रतिपत्तिरित्याह च भाष्यकारः येनोच्चरितेनेत्यादि । अत्र किमिदमुच्चारणं नाम, नन्वभिव्यक्तिरिति, किमुक्तं भवति येनोच्चरितेन येनाभिव्यक्तेनेति, हन्तालौकिकः शब्दार्थः, का चेयमभिव्यक्तिः, इन्द्रियग्राह्यस्वभावता, किं नेयमस्य स्वतत्त्वं, न न किन्त्वावृतेति, किमस्यावरणं श्रोत्रविद्या, कुतस्तदपगमः, वक्तृध्वनेः, किमत्र मानं, स्फोटोपलब्धिः, किम सदेयं, भूयोऽविद्यातः, कुतोऽसौ द्रागेव तम इव दीपाभावे, ध्वन्यभावतः, किं स्फोटस्याविद्याभावाभावयोरस्ति कश्चित्स्वभावभेदः किं वा न, यद्यस्त्यानित्यता, स्वभावान्तरोपमर्देन स्वभावान्तरापत्तेः । इष्यत एवेयमीदृशीति चेत्, नित्यप्रतिज्ञाव्याघातः परिणामवादापत्तेः । अथ नास्ति सदाग्रहणादिप्रसङ्गः तद्ग्राह्यताद्येकस्वभावत्वान्यथानुपपत्तेः अविद्याभावे ग्राह्यतैकस्वभाव एवायमित्यप्यसत्, सदा तदभावेन तद्ग्रहणप्रसङ्गादित्यतिसूक्ष्ममतिविषयमेतत् । किञ्च येनोच्चरितेनेत्यत्र वर्णात्मकेन शब्देनोच्चरितेन यथा क्षयोपशममसौ संप्रत्ययो भवति तथानुभूतेः, गकारादिदलगोशब्दसंवेदनात् तद्व्यतिरिक्तस्य चापरस्याक्रमवत एकस्यासंवेदनात्, तथाहि गौरित्यत्र गकारौकारविसर्जनीयवर्णप्रतिभास्येव तत्सम्प्रत्ययः कथमयमुच्चरितध्वंसिभ्य एतेभ्यः तथेतरेतरप्रतिबद्धस्वभावतयात्मनि बोधकरणेन, न च क्रमभाविनां तथाबोधकरणविरोधस्तस्यापि क्रमेणैव तथाभवनात् अर्धोच्चरितविरामेऽभावात्, ध्वनेश्चैकत्वाभ्युपगमेनार्द्धोच्चरितत्वासम्भवः, तदनेकत्वेऽपि स्फोटैकत्वतोऽर्द्धाभिव्यक्त्ययोग इति भावनीयमेतत् । एवं च वर्णेभ्यस्तत्सम्प्रत्ययानुपपत्तेः इत्ययुक्तम्, उक्तवदुपपत्तियोगात्, नैकाकार एवायं किन्त्वेकानेकाकारः, गकारादिवर्णात्मकगोशब्दवेदनात् तथा दीर्घकालेनैव तत्तद्वर्णजबोधान्वयाविरोधादित्यतः किमुच्यते नानेकेभ्यो वर्णेभ्यो भवितुमर्हति, तथाऽनेकात्मकस्यान्यथाभवनायोगात् । एवं चानेकेभ्योऽनेकप्रत्ययभावादित्यपि वचनमात्रं, तेषां तथाप्रतिबद्धस्वभावतयैकान्ततोऽनेकत्वासिद्धेः तदितराक्षेपकस्वभाववन्तो ह्यमी एकानेकरूपास्तथैव च प्रतिभासन्त इति न कश्चिद्दोषः । यच्चोक्तं अयं च स्फोट रूप एक एवेति युक्तोऽस्माद्यथोदितसम्प्रत्यय इत्येतदप्य-

अ०ज०
पताका०
॥ ४४ ॥

चारु, एकस्यासंवेदनादित्युक्तप्रायम् । यच्चोक्तं आह कुतोऽयमुत्पद्यत इत्येतदाशङ्क्य नन्वयं नित्यः सर्वगतो नोत्पद्यत एवेति, एतदप्ययुक्तं नित्यसर्वगतत्वेऽस्य प्रमाणाभावात् नित्यस्य सर्वथैकस्वभावत्वेन प्रमाणपरिच्छेद्यस्वभावत्वे सदा सर्वपरिच्छेदापत्तेः, अन्यथा नित्यत्वायोगात्, कदाचित्केनचिद्ग्रहणे तद्ग्राह्यस्वभावत्ववत्तदन्यग्राह्यस्वभावत्वाभावाद्भावे वा कदाचित्केनचिद्ग्रहणवत्तदन्यग्रहणापत्तेरभावे चान्यदा तदभावात्तथा भवनेन परिणामवादापत्तिरेवेति । एतेन यदप्याह किमित्यतो न सर्वदा सर्वत्र तत्सम्प्रत्यय इत्याशङ्क्योक्तं हन्ताभिव्यञ्जकाभावेन अभिव्यञ्जकाश्चास्य ध्वनयस्ते च पुरुषप्रयत्नसापेक्षा इति न सदा तत्सम्प्रत्ययः, इत्येतदप्ययुक्तम्, अभिव्यक्तेरेवोक्तवदसिद्धेः, ध्वनयश्च वर्णात्मका एव तद्व्यतिरेकेण तत्स्वरूपासिद्धेः । कलकले तन्मात्रग्रहणे तत्सिद्धिः । वर्णास्तु स्फोटप्रस्वेदसंस्थानीया इति चेत्, न, अविचारितरमणीयत्वात्, कलकलो हि तत्समुदायधर्मस्तद्भावभावित्वात् तत्समानपरिणाममात्ररूपो ह्ययमत एव श्रोत्रेण गृह्यते, अन्यथाऽशब्दत्वात् कथमस्य श्रोत्रेण ग्रहणमिति चिन्त्यम् । स्फोटप्रस्वेदसंस्थानीयत्वे च वर्णानां तदनित्यतापत्तिः, तदात्मभूतप्रस्वेदगलनादिति । एतेन स किमनेकध्वनिव्यङ्ग्य उतैकध्वनिव्यङ्ग्य इत्याद्याशङ्क्य यदुक्तं यत्किञ्चिदेतन्निरवयवत्वेन सदेशतायोगादित्यादि, तदपि वस्तुतः परिहृतमेव, परिहृतेन तुल्ययोगक्षेमत्वात्, नवरं ध्वनिसंस्कृतं चेन्द्रियं स्फोटं गृह्णातीति न सर्वत्र तत्सम्प्रत्यय इति यदुक्तम्, अत्रोच्यते, अथ कोऽयं ध्वनिनेन्द्रियसंस्कारः अविद्यापनयनम्, किं यथावस्थितं स्फोटं न गृह्णाति, हन्त गृह्णात्येव, कथं न तद्व्यापित्वादिग्रहः, संस्कारप्रतिनियमात्, अपैति निरयवत्वाद्यस्य, केन हेतुना, न तस्यान्यथा ग्रह इति कृत्वा, नहि शुक्लः पीत इति गृह्यतेऽभ्रान्तेन, तस्माद्वर्णात्मक एव शब्दश्चित्रस्वभावत्वात्, तथा श्रोत्रद्वारेण छद्मस्थेन गृह्यते योगिना तु कात्स्न्येनेति कृतं प्रसङ्गेन प्रकृतं प्रस्तुमः । एवं व्यवहारान्यथानुपपत्तेः अभिलाप्यानभिलाप्यमिति स्थितम्, न चात्र विरोधबाधा, भिन्ननिमित्तत्वात् तथाह्यभिलाप्यधर्मकलापनिमित्तापेक्षया तदभिलाप्यमनभिलाप्यधर्मकलापनिमित्तापेक्षया चानभि-

लाप्यमिति धर्मधर्मिणोश्च कथञ्चिद्भेद इति प्रतिपादितम् । ततश्च यद्यत एवाभिलाप्यमत एवानभिलाप्यम् अभिलाप्यधर्मकलापनिमित्तापेक्षयाऽभिलाप्यत्वादभिलाप्यधर्माणां चानभिलाप्यधर्माविनाभूतत्वाद्यत एवानभिलाप्यमत एवाभिलाप्यम्, अनभिलाप्यधर्मकलापनिमित्तापेक्षयानभिलाप्यत्वादनभिलाप्यधर्माणां चाभिलाप्यधर्माविनाभूतत्वादिति । एतेन "अन्यदेवेन्द्रियग्राह्यमन्यच्छब्दस्य गोचरः । शब्दात्प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते ॥ १ ॥ अन्यथा दाहसम्बन्धाद्दाहं दग्धोऽभिमन्यते । अन्यथा दाहशब्देन दाहार्थः संप्रतीयते ॥ २ ॥ वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते । प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबन्धनम् ॥ ३ ॥ " इत्यादि प्रतिक्षिप्तम्, रूपाद्यनेकधर्मणो वस्तुनोऽनभिलाप्यधर्मप्रधानस्येन्द्रियग्राह्यत्वादभिलाप्यधर्मप्रधानस्य च शब्दगोचरत्वात्, तथाप्रतीतेः, इन्द्रियव्यापारेऽपि कथञ्चिदभिलाप्यधर्मावगमात् वाचकप्रयोगदर्शनात् अन्तर्जल्पानुभवसिद्धेः शब्दादपि क्वचित्कथञ्चिदनभिलाप्यधर्मसंवेदनात् तद्रक्ततादिप्रतीतेः तुल्यजातीयमध्ये क्वचित्ततस्तद्विशेषावसायात् एतच्चागोपालाङ्गनादिप्रतीतम्, या पुनर्भिन्नाक्षस्य क्वचित् शब्दादप्रतीतिरेव सा तथाविधतदन्यस्येव क्षयोपशमवैकल्येन, न खल्वनन्धोऽपि तथाविधक्षयोपशमविकलो जनः क्वचिद्रत्नादौ शिरःशूलशमनादिलक्षणं विशिष्टप्रभावं शब्देनोच्यमानमपि प्रतिपद्यते, तथाऽदर्शनात्, न चासौ न शब्दार्थः, तदन्येनावगमात्, तथाव्यवहारसिद्धेः, अर्थक्रियोपलम्भादिति । स्यादेतद्यदि तदभिलाप्यधर्मकमेवं तर्ह्यभिलाप्यानां शब्देनाभिधीयमानत्वात् किमित्यकृतसङ्केतस्य पुरोऽवस्थितेऽपि वाच्ये शब्दान्न सम्प्रत्ययप्रवृत्ती भवत इति, अत्रोच्यते, तज्ज्ञानावरणकर्मक्षयोपशमाभावात् तस्य च सङ्केताद्यभिव्यङ्ग्यत्वात्, तथाहि ज्ञस्वभावस्यात्मनो मिथ्यात्वादिजनितज्ञानावरणादिकर्मपटलाच्छादितस्वरूपस्य सङ्केतपश्रवणदानप्रतिपक्षभावनादिभिस्तदावरणकर्मक्षयोपशमक्षयावेवापाद्येते ततो विवक्षितार्थाकारं संवेदनं प्रवर्त्तत इति, अन्यथा तत्प्रवृत्त्यभावात् तत्प्रथमतयैव सर्वत्रादृष्टसङ्केतानामर्भकाणां सङ्केतस्य कर्त्तुमशक्यत्वात्, तथाहि न सङ्केतकशब्दादप्यसङ्केतिता-

त्तदर्थप्रतिपत्तिः सङ्केतवैयर्थ्यप्रसङ्गात् असङ्केतितादपि ततस्तत्प्रतीतेः तत्सङ्केतकरणे च तत्राप्ययमेव वृत्तान्त इत्यनवस्थाप्रसङ्गः । क्वचिदवस्थाने चास्मन्मतानुवाद एव ततः शब्दात्तदावरणकर्मक्षयोपशमस्ततो विवक्षितार्थाकारं संवेदनमेतच्च सङ्केतकशब्दादप्यविरुद्धमेवेति । सर्वस्यैवास्यैवं तदावरणकर्मक्षयोपशमहेतुत्वाविशेषतः सङ्केतत्वमिति चेत्, न, एतदविशेषासिद्धेः प्रबलेतरावरणविषयभेदेन विशेषात् । स्यादेतदर्भकोऽप्यसकृदयमित्यादिशब्दसङ्केत्यार्थसन्निधावुच्चार्यमाणमाकर्ण्य व्यवहर्तॄंश्च तथा व्यवहारे प्रवर्त्तमानान्दृष्ट्वा प्रतिपद्यते शब्दार्थम्, तथाहि न मात्रादिभ्यः कस्यचिद् घटादावपि सङ्केतः दृश्यते च तत्प्रतिपत्तिरिति, अत्रोच्यते दृश्यते खल्वियं प्रतिपत्तिः किन्तु भवत्पक्षे न युज्यते असकृद्दर्शनकालेऽप्यादिशब्दात्तत्प्रतिपत्त्यनुपपत्तेः असङ्केतितत्वात् उपपत्तौ चास्मदुक्तन्यायेन कथञ्चिद्वास्तवसण्टङ्कसिद्धिः । अनादित्वात् संसारस्यासकृच्छ्रुतत्वात् सर्वशब्दानामाद्यशब्दश्रवणासिद्धिरिति चेत्, सुतरां तत्सिद्धिः अनादावपि भवे तस्य तद्वाचकत्वेन श्रवणात्तदर्थप्रतीतिसिद्धेरन्यथा चासिद्धिरित्यनादिमान्वाच्यवाचकभावः, वाचकत्वं च शब्दस्य वाच्यविषये संवेदनजनकत्वमेवेति प्रतिपादितं पुरस्तात्, बुद्धिप्रकाशार्थे च शब्दप्रामाण्यं स्वतन्त्रनीत्याऽतिपाण्डित्यख्यापनफलम्, न ह्यसौ स्वसंविदो व्यतिरिक्तादिविकल्पैः कश्चिदुपपद्यते, स्वसंविद्विषयप्रामाण्याभ्युपगमे च ज्ञानस्वलक्षणवाचकत्वमेव शब्दानामित्येतदपि वस्तुतः प्रतिपादितमेव, अपोहविषयत्वे च शब्दानां तस्य तत्त्वतोऽसत्त्वात् निर्विषयत्वेनानेकदोषप्रसङ्गः । तथाहि "क्षणिकाः सर्वसंस्कारा इत्याप्तवचनं वृथा । अपोहविषयत्वेऽस्य यथार्थत्वावियोगतः ॥ १ ॥ अपोहोऽयन्न संस्कारा न च क्षणिक इष्यते । इष्टौ वा तस्य वस्तुत्वं बलादेव प्रसज्यते ॥ २ ॥ नमो बुद्धाय चेत्यादिस्तवः सर्वो निरर्थकः । तत्तत्त्वानभिधानेन तथा च वचनक्षतिः ॥ ३ ॥ अवस्तुत्वाप्रतिज्ञानात्तेषामिष्टौ च तत्त्वतः । सर्वस्तत्राविशेषः स्यादयोगाद्वस्त्ववस्तुनोः ॥ ४ ॥ शिक्षापदाभिधानं च भावार्थानभिधानतः । गेयादितुल्यमेवं स्यात्तद्वाच्यत्वाविशेषतः ॥ ५ ॥ न ताऽसत्त्वाद्विशेषोऽस्य घटते

सूपपत्तितः । अवस्तुत्वादसत्त्वं च तस्य वस्तुत्वमन्यथा ॥ ६ ॥ जघन्याश्लीलवादश्च योऽपि रत्नत्रयानुगः । अनर्थाय न सोऽप्येवं हन्त युक्त्योपपद्यते ॥७॥ भिक्षो इत्यादि शब्दाच्च तत्संवित्तिर्न युज्यते । मनुष्याद्यङ्गभूतेति सर्वमेवासमञ्जसम् ॥८॥ इत्यादि कृतं विस्तरेण । अन्यस्त्वाह बाह्यमर्थमधिकृत्यैतत्सदसदादित्वमुक्तं एतच्च वन्ध्यासुतसौन्दर्यवदविषयमेव तस्यैवासत्त्वात् स हि परमाणवो वा स्युस्तत्समूहो वा अवयवी वेति सर्वथाप्यसन् न्यायानुपपत्तेः, परमाणवस्तावदध्यक्षेण न प्रतीयन्ते तथा तदनुभवाभावात् स्थूलाकारसंवेदनोपपत्तेः तस्य च तेष्वभावात् अन्याकारेण चान्याग्रहणात् ग्रहणे चातिप्रसङ्गतो व्यवहारायोगादिति । नाप्यनुमानस्य विषयस्तदव्यभिचारिलिङ्गायोगात्, तत्र हि विज्ञानान्यथानुपपत्तिर्लिङ्गं स्यात्, सा चायुक्तैव, तस्यान्यथाप्युपपत्तेः अन्तर्वासनात एव भावात् । न च योगिग्राह्या इति न्याय्यं वचः, प्रमाणाभावात्, अग्राह्या इत्यपि किं प्रमाणमिति चेत्, ननु तद्युक्त्या योगः, परमाणवो हि मूर्त्ता इष्यन्ते मूर्त्तत्वे च सत्यवश्यं दिग्भागभेदेन भाव्यम्, सति चास्मिन् सावयवत्वमहत्त्वैकत्वानेकत्वविचाराक्षमत्वात् कुतस्त इति । न च निरवयवत्वाद्‌मीषामयमदोषः मूर्त्तत्वे निरवयवत्वाऽयोगात् क्वचिदवस्थानेन नियमतः पर्यन्तसिद्धेः पारिमाण्डल्याभ्युपगमादित्यनेन तत्समूहः प्रत्युक्तः । तेषामेव नैरन्तर्यावस्थानस्य तत्समूहत्वात् निरवयवानां च तत्त्वतो नैरन्तर्यावस्थानायोगात् सर्वत एकस्य तदपरभावापत्तेः । एवं च तन्निरवयवत्वविरोधात् इन्द्रियग्राह्यसमूहत्वेन तदग्रहणतो व्यवहारायोगाच्च अवयव्यपि न युज्यत एव स्वावयवव्यतिरेकेणैव तस्याभ्युपगतत्वात् मूर्त्तत्वेन तत्तदभिन्नदेशतानुपपत्तेः, देशकात्स्न्र्यविकल्पद्वारेण तत्तद्वृत्त्ययोगात् तत्सदेशताऽनेकतापत्तेः अभ्युपगमादिविरोधात् प्रकारान्तरेण च वृत्त्ययोगात् वर्त्तन्त इति ब्रूम इति वचनमात्रत्वात् भिन्नदेशस्य चाग्रहणात् तथानुभवाभावात् एवमपि तथा कल्पनेऽतिप्रसङ्गादिति । न चास्य स्वारम्भकावयवेभ्यो जन्मापि युक्त्युपपन्नं तन्नित्यत्वेन तज्जननस्वभावत्वानिवृत्तेः, प्राग्वत्पश्चादपि तद्भावाभावात्, तेषामपि

स्वभावनियतत्वेन तत्त्वतोऽजनकत्वात् तथा तुलानतिविशेषाग्रहणात् तस्यापि महत्त्वेनानुपलक्षणायोगात् जलमत्स्यादौ जलाधिक्यातुलनस्य विजातीयेषु योगात् अवयविनेव आ अवयवं तैराजलमन्याप्तेः तत्प्रयत्नप्रतिबन्धयोगेन गुरुत्वप्रतिबन्धभावात् अपान्तरालस्खलनेन अवयविनि तदसिद्धेः, समाहारगुरुत्वानुपलब्धिपक्षोऽप्यवयविभावेन समाहार्यान्तरभावात् तदधिकगुरुत्वोपलब्धिप्रसङ्गादिदोषतोऽघटमान एवेत्यपकर्णयितव्यः । न चासावमूर्त्तोऽग्रहणप्रसङ्गात् मूर्त्तानुवेधेऽपि स्वभावान्तराभवनात्, अन्यथा कथञ्चित्तद्रूपतापत्तेरिति । न चार्थे सत्यपि तद्ग्रहणोपायः समस्ति युक्त्ययोगात्, सहि संवेदनग्राह्यः स्यात्, तच्च साकारमनाकारं वा साकारत्वेऽपि स्वाकारं विषयाकारं वेति, यदि स्वाकारं तमेव तद्वेदयेत्कथमनेनार्थो गृहीतो नाम, अथार्थाकारं जडरूपता स्यात्, अन्यथा तदाकारत्वाभावः, अनाकारत्वे तु प्रतिकर्मव्यवस्थानुपपत्तिः, निबन्धनाभावात् तत्सत्तामात्रस्य सर्वत्राविशेषात्, प्रत्यासन्नेतरनिबन्धनत्वात् तस्य सुप्तादिकल्पत्वादित्यसन्नेव बाह्योऽर्थइति, एतदप्ययुक्तम्, अनालोचिताभिधानात् । तत्र यदुक्तं परमाणवस्तावदध्यक्षेण न प्रतीयन्त इत्यादि, एतदप्ययुक्तम्, विकल्पानुपपत्तेः, तथाहि किं सर्वथा न प्रतीयन्ते आहोस्वित्कथञ्चित् यदि सर्वथा तदसिद्धं कथञ्चित्प्रतीतेः, तेषां साधारणासाधारणरूपत्वात् चित्रस्वभावत्वात् प्रत्येकं त्वेकपरिणामभावात्, साधारणरूपप्रतीतेः तथानुभवभावात्, विच्छिन्नार्थग्रहणस्वभाववेदनवेदनात्, तस्मिन्नसत्यस्यासिद्धेः दुष्टकेशादिज्ञानस्यातदाभासत्वात्, तस्यापि तद्बलेनैव प्रवृत्तेः भिन्नदोषोपयोगापेक्षणात्, अन्यथा तदनुत्पत्तेरिति, अनेन स्थूलाकारसंवेदनात् तस्य च तेष्वभावादित्याद्यपि यदुक्तं तत्प्रत्युक्तम् । तत्साधारणरूपस्यैव तत्त्वतः स्थूलाकाररूपत्वात् तस्य तेष्वभावासिद्धेरिति । एवं च नाप्यनुमानस्य विषयः अव्यभिचारिलिङ्गाभावादित्याद्यपि यदुक्तं तदुक्तिमात्रमेव, तेषां कथञ्चित्प्रत्यक्षसिद्धत्वात् प्रत्यक्षस्य चानुमेयत्वोपपत्तेः, तथाविधविज्ञानस्य तथाभावमन्तरेण सम्यग्न्यायतो योगात्, अन्तर्वासनात एव भावासिद्धेः । बोधमात्रतत्त्ववादिनस्तस्या एवायोगात् तन्मात्रस्य सर्वबोधेषु भावात् तत्त्वेन भेदानुपपत्तेः, भिन्नजाती-

यकार्यायोगात् वस्तुतो भेदकाभावात्, तद्भेदमात्रस्याप्रयोजकत्वात् तद्भावेऽपि तथा कार्यभेदासिद्धेर्बुद्धबोधभेदेषु तथाभ्युपगमादिति तद्भावोपि न तत्त्वतस्तदतिरिक्तवस्तुव्यतिरेकेणेति वक्ष्यामः । यच्चोक्तं न च योगिग्राह्या इति न्याय्यं वचः प्रमाणाभावादित्यादि, तदप्ययुक्तम्, तेषां साधारणासाधारणरूपत्वात् कार्त्स्न्येन निरावरणज्ञानैरेव ग्रहणात् । स्यादेतन्न तेषामकार्त्स्न्येन सचेति सत्यम्, एवमेतत् यद्येवं कथमर्वाग्दृशां न तथैव ग्रहः, प्रतिबन्धकदोषात्, कथमेतदेवमवगम्यत इति वाच्यम्, ज्ञानविशेषदर्शनात्, कीदृशः पुनर्ज्ञानविशेषः, तद्गतधर्मगोचरः, तथाहि श्लेषमिश्रीकृतसर्षपयष्टौ दूरासन्नश्यामलामललोचनानां न न प्रतिभासभेदः, न चासौ न तन्निमित्तो न च निमित्तान्तरापेक्षो न न सम्यग्रूप इति परिभावनीयम् । अतः प्रतिबन्धकापगमानुरूपा तत्प्रतिपत्तिरनवद्या च । योगिनोऽपि तत्साधारणाकारं गृह्णन्त्येवेति चेत्, को वा किमाह । तद्ग्रहणेनैव विरुद्धस्तदितरग्रह इति चेत्, न तेनैवासौ कथञ्चित्तद्भेदे । कथं भिन्नेनैव स इति चेत्, न भिन्नेनैव कथम् । तर्ह्येतत्स्पष्टमभिधीयतामिति चेत्, कथञ्चिदभिन्नेनेति, एतदुक्तं भवति, तौ साधारणेतराकारौ भेदाभेदेन व्यवस्थिताविति निरावरणेन तथैव गृह्येते आसन्नामललोचनेनेव यथोदितसर्षपयष्टौ सर्षपाः रत्नादौ वा तद्गुणा इति नह्यसौ सर्षपान्न पश्यति तथा प्रतीतेः, न च तद्यष्टिमप्यत एव हेतोः, न चान्यतरदपि, अत्र तदितराभावापत्तेः, न च परिकल्पितमपि, अत एव हेतोः, इत्येवं रत्नादिगुणेष्वपि तज्ज्ञमाश्रित्य योजनीयम् । स्यादेतदेवं योगिभिर्न ते विविक्ता एव गृह्यन्ते न कचिद्ग्रहणात्, विविक्तानामपि भावात्, पुद्गलास्तिकायवैचित्र्यात्, वचनप्रामाण्यात् । तथा चार्षं "खन्धा खन्धदेसा खन्धपएसा परमाणु पोग्गला" इत्यतो ये विविक्तास्ते गृह्यन्ते तथास्वभावत्वात् प्रत्येकसर्षपवत् स्थूलाकारस्य छद्मस्थेनापि ग्रहणानुगुण्यतस्तु एवमुपन्यास इति । एवं चाग्राह्या इत्यपि किं प्रमाणमिति चेत् इत्येतदाशङ्क्य यदुक्तं ननु तद्युक्त्ययोग इत्येतदपि तुच्छमेव द्रष्टव्यम्, तद्युक्त्ययोगासिद्धेः । आह परमाणवो हि मूर्त्ता इष्यन्ते मूर्त्तत्वे च सत्यवश्यं दिग्भागभेदेन भाव्यम् सति चास्मिन्

अ०ज०
पताका०
॥ ४७ ॥

सावयवत्वमहत्त्वैकत्वानेकत्वविचाराक्षमत्वात्कुतस्त इत्यादिना तद्युक्त्ययोग उक्तः, सत्यमुक्तोऽयुक्तस्तूक्तः, मूर्त्तत्वादेवाणूनामुक्त-दोषाभावात् तत्त्वतोऽभ्युपगतत्वात्, अन्यथा मूर्त्तत्वायोगात् अभ्युपगमानां चादोषत्वादिति, न युक्तिबाधिता अप्यभ्युपगमा इष्टसिद्ध्यर्थम्, अतिप्रसङ्गात्, सर्वसिद्ध्यापत्तेः, तन्मात्रनिबन्धनत्वात्, असमञ्जसत्वापत्तेरिति, नैतदेवम्, अधिकृता-भ्युपगमस्य युक्तिबाधितत्वासिद्धेः, तथाहि परमाणवो मूर्त्ता अत एव द्रव्यसन्तस्तथासतां च नियमात् क्वचिद-वस्थानं अवस्थाने चावश्यं दिग्भागभेदः द्रव्यसतः सर्वत्र विच्छेदात्, अन्यथाऽवस्थानाभावात्। स्वात्मन्येवाव-स्थानमिति चेत्, न, तत्रापि न सर्वत्र विच्छेदः, यदि नामैवं ततः किमिति चेत्, हन्त तत्तद्दिग्भागभेद-सिद्धिः, का पुनरत्र भावनेति चेत्, पूर्वादिप्रदेशेषु तद्भावः, नैतत्प्रदेशेषु भाव्यत इति चेत् तद्भावे समाधीयतां चेतः, नैवं सति स निरवयव एव, भवतु नामैवं ततः किम्, कथं नु तत्परमाणुत्वम्, ननु तदल्पतराभा-वेन, कथं ततो नास्त्यपरः, सर्वाल्पस्य विवक्षितत्वात्, कथं तथा दिग्भागभेदे तत्, द्रव्यतोऽशक्यभेदतया सत्त्वावस्थाना-भ्यां च तत्रापि दिग्भागभेदात् तस्यापि तद्धर्मत्वात् अतद्धर्मत्वे तत्तदभावप्रसङ्गात् तदभावे च सत्त्वाद्ययोगात् कथञ्चिदमीषां सावयवत्वादिसिद्धिः द्रव्यतो निरंशादित्वेऽपि पर्यायतः सांशादित्वात्। न चैतदनार्षम्, "एगपएसो गाढं सत्तपएसा य से फु-सणत्ति" मुनीन्द्रवचनश्रवणात्। इतश्चैतदेवं तेषामेव रूपाद्यात्मकत्वात् अतदात्मकत्वेऽरूपादित्वेनासत्त्वप्रसङ्गात्। किं हि तन्मूर्त्तं यद्रूपादि न भवति, तदाधार इति चेत्, कोऽसावतदात्मकः, किञ्चापतनधर्माणां तेन, तद्द्रव्यमेवेति चेत् किं तदरू-पाद्यात्मकं यत् अतदाभया धिया गम्यते, द्रव्यधीगम्यमिति चेत्, काऽसावरूपाद्याभा, कथं वा मूर्त्तं स्वतोऽरूपादि, मूर्त्तत्वयोगा-दिति चेत्, कथं मूर्त्तामूर्त्तयोर्योगः तत्स्वरूपानापत्तौ वा तत्त्वं, अतिप्रसङ्गात्। नभसोऽपि मूर्त्ततापत्तेः, भिन्नतद्धर्मयोगात् सर्वगतत्वादिति। किं चास्यानेकगुणसम्बन्धस्वभावत्वे सति तदुपपत्तिः, अन्यथाऽयोगात्। न चायमेक एवोपाधिभेदात्

रूपादीनामनेकत्वात् रूपसम्बन्धस्वभावस्यैव रसादिसम्बन्धस्वभावत्वे तदतत्त्वप्रसङ्गात्, अन्यथा रूपसम्बन्धस्वभावत्वविरोधात् एकान्तैकत्वेनास्याचित्रत्वात् चित्रत्वे चैकत्वायोगादिति स्वभाववैचित्र्याद्रूपादिवैचित्र्यमेवास्तु । यथाहुर्न्यायवृद्धाः "कारणमेव तदन्त्यं नित्यः सूक्ष्मश्च भवति परमाणुः । एकरसगन्धवर्णो द्विस्पर्शः कार्यलिङ्गश्च" । एवं च रूपादीनामेवैकत्वपरिणामोऽयमिति सावयवत्वादिसिद्धिः । अन्ये तु प्रत्येकं रूपादिरूपा एव परमाणव इति मन्यन्ते तदप्ययुक्तम्, असम्भवात्, तेषां हि मूर्त्तत्वेन स्पर्शादिभावः, अन्यथा मूर्त्तत्वाभावात्, अमूर्त्तत्वे चैषां सदैवाग्रहणं भूयसामप्यमूर्त्तत्वानतिक्रमात्, तथाभूतेभ्योऽतथाभूतोत्पत्तौ युक्त्यभावः हेत्वन्तराभावात् । न चैकस्तदन्ययोगाद्रूपादिमान्, संघातात्मकत्वेन तदणुत्वविरोधात् । देशकार्त्स्न्यविकल्पद्वारेण च तत्त्वयोगानुपपत्तेः देशयोगपक्षे सदेशत्वादनणुरूपत्वम्, व्याप्तितो रूपादिमत्त्वाभावश्च, कार्त्स्न्ययोगपक्षे त्वितरेतररूपापत्तेः, अन्यथा कार्त्स्न्ययोगाभावाद्रूपादिमत्त्वानुपपत्तिः । एतेनामूर्त्तरूपादियोगः प्रत्युक्तः । अमूर्त्तत्वेऽपि तद्वस्तुत्वेनोक्तवत् विकल्पदोषानतिक्रमात्, अन्यथा तद्वस्तुत्वाभावः अतः स्वगतपरिणामापेक्षया रूपाद्यात्मकास्ते इति स्थितम् । एवं च न च निरवयवत्वादमीषामयमदोषः मूर्त्तत्वेन निरवयवत्वायोगादित्यादि यदुक्तं, तदप्यबाधकमेव, तत्त्वतस्तथेष्टेः । यच्चोक्तं एतेन तत्समूहः प्रत्युक्तस्तेषामेव नैरन्तर्यावस्थानस्य तत्समूहत्वात् निरवयवानां च तत्त्वतो नैरन्तर्यावस्थानायोगात् सर्वत एकस्य तदपरभावापत्तेः एवं च निरवयवत्वविरोधादित्यादि, एतदपि, यथोदितपरमाणुसमाश्रयणे निरवकाशमेव, तथाहि तन्नैरन्तर्यावस्थानमेव तेषां तथा स्वभावतया कथञ्चिदपृथग्भूतं तथाविधैकपरिणामवत्तत्समूहः तदेव च द्रव्यं तेषामेव तत्त्वात् तत्समानधर्मत्वात् तथा तथा तद्द्रवणात् तद्भावाव्ययत्वात् । स्यादेतत्तेषां तथा स्वभावतयेति कोऽर्थः । उच्यते परमाणूनामेवायं स्वभावो येन ते तत्कालाद्यपेक्षया तत्र तत्र तैस्तैर्मिथो नैरन्तर्य्येण विशिष्टसंस्थानवता अवतिष्ठन्ते बादरीभवन्ति च । आह

अ०ज० पताका० ॥ ४८ ॥

किमिदं बादरत्वम्, उच्यते तथा समुदितानामिन्द्रियग्राह्यस्वभावता स्थूरत्वमित्यर्थः कथं सूक्ष्माणां सत्तानुपचये तत्, तत्तत्स्वभावतया, इयमेव तदनुपचयेऽन्याय्या, न, तत् स्वभाववैचित्र्यसिद्धेः। अनिदर्शनमभिधानमात्रमेतदिति चेत्, न, निदर्शनभावात्, किं तदेवंविधं लौकिकमिति वाच्यम्, ननु वस्त्रभाण्डादिभावः तत्र हि तुल्ये तौल्ये प्रकटोऽल्पमहत्त्वादिभेदः। न च तदणवो न तुल्याः, तौल्याभेदात्, न च हीनाधिका तत्सत्ता, अत एव हेतोः, न चाभिन्नपरिणामोऽसौ, दर्शनादिभेदात्, न चातत्स्वभावत्वेऽयम्, अतिप्रसङ्गादिति बादरभावसिद्धिः। एवं चेन्द्रियाग्राह्यसमूहत्वेन तदग्रहणतो व्यवहारायोगादिति प्रत्युक्तम्, उक्तवत्तेषां तथास्वभावतया सर्वथेन्द्रियाग्राह्यत्वासिद्धेः, तेषामेव तथाभवनादिति। आहैवमन्यूनानतिरिक्ततत्सत्ताभावे नोत्पादव्ययध्रौव्ययुक्तं सदिति न्याय्यं वचः, तत्र तत्त्वत उत्पादव्ययाभावात्, सत्तालेशस्यापि व्ययायोगात्, असतश्चोत्पादानुपपत्तेः, अन्यथा यो व्येति तस्य निरन्वयो व्ययः यश्चोत्पद्यते तस्याप्यसत एवोत्पादः, या च तत्रापरा सत्ता तस्याः कूटस्थितिनित्यतैवेति कथमुत्पादव्ययध्रौव्ययुक्तं सदिति, अत्रोच्यते अन्याय्यमिदं वचः तत्सम्पूर्णसत्ताया एव परिणामित्वात् परिणामित्वे च तत्तत्कालाद्यवस्थानलक्षणस्य तत्सत्त्वस्वभावस्य कथञ्चित्क्षययोगात्, अन्यथा तत्तादवस्थ्यापत्त्या सदा तद्भावेन वर्तमानतादिप्रसङ्गः युक्तिबाधितश्चायं तत्कार्यासिद्धेरिति व्यययोगः। समयान्तराद्यवस्थानलक्षणस्य च तत्सत्त्वस्वभावस्य कथञ्चिदसत एवोत्पादः, सर्वथा सत्त्वे प्रागपि तद्भावात्तदा तद्भावविरोधः, अस्ति चायं समयान्तराद्यवस्थानयोगादिति, भावाधारौ चेतौ वान्ध्येयादावसम्भवादनयोः तत्स्वभाववैकल्ये च तत्सत्त्वस्यासम्भव एवेति भावनीयम्। आहैवमपि किञ्चित्तत्रासदेवोत्पद्यत इतीष्टं तद्वत्तत्प्रतीत्य तदपरभावे को दोषः। उच्यते दृष्टहान्यदृष्टपरिकल्पनाख्यः, तथाहि भावाश्रितमसद्भवद्दृष्टं मृद्घटादिसंस्थानादिवत्तत्समयान्तरावस्थानादि तत्त्यागे दृष्टहानिः न दृष्टं चातदाश्रयं वान्ध्येयबालाद्याकारवन्मृद्भावघटाकारवद्वा तदङ्गीकरणेऽदृष्टपरिकल्पना, न च तत्तथाभावाभावेऽसत्सद्भवतीति न्यायवादिनः तत्प्रतीत्य तद्भाव

इत्यपि कल्पना युक्ता, पुष्कलबीजाभावादिति तदुपादानमन्तरेणैव स्यात्तद्भावो यद्यसदेव सद्भवेत् न चासावऽतो यदपि किञ्चित्तत्रासदुत्पद्यते तदपि भावाश्रयत्वात् तत्तथाशक्तियोगात् तस्यैव तथाभवनात्, अन्यथोक्तवदयोगान्नासदेव किं तर्हि कथञ्चित् पूर्वभवनभूतान्यथाभूतभवनात्मकत्वादुत्पादस्य, एतेनैतत्स्वभाव एव तत्त्वतो व्यय इत्यर्थत उक्त एव, यतोऽस्यायमर्थः पूर्वभवनेन भूतत्वं उत्पादतया अन्यथाभूतं तु भवनं व्ययतया तदेतदुभयमात्मा यस्येत्यन्यपदार्थेनोत्पादः सम्बध्यते व्ययाविनाभूतः, व्यपदेशस्त्वस्य पूर्वभवनाभूताऽन्यथाभूतभवनात्मक इति । तच्चैवम्, तत्त्वतस्तथा स्वभावत्वात् यथाक्षयोपशमं तथैव व्ययप्रतीतेः, तत्तुच्छाभवनस्य तु व्ययत्वे सर्वत्राविशेषात् स्यात् तद्व्ययबुद्धिः न च भवति, तथाऽप्रतीतेः । एवमनयोस्तत्त्वे सर्वथा भावाविच्छेदात् ध्रौव्यमपि सिद्धमेव, भावविच्छेदे सत्येतदनुपपत्तेः, तद्धर्मत्वात्, अतद्धर्मत्वे तत्त्वस्यायोगात् सर्वथा तुच्छत्वात्, इत्यतः तच्चित्रस्वभावत्वात्, अन्यथा तदनुपपत्तेः, तदुत्पादादिबुद्धिभेदवेदनात्, निमित्तभेदमन्तरेण तदयोगात्, अन्यथातिप्रसङ्गात्, अन्यतरभ्रान्तत्वकल्पनायां प्रमाणाभावात् एवमपि तत्कल्पने सर्वत्रानाश्वासप्रसङ्गात् उत्पादव्ययध्रौव्ययुक्तं सदिति कथमन्यार्थ्यं वचः प्रतिविहितं चात्र पूर्वाचार्यैरिति न प्रयासः । एवं च विशिष्टवादरभावसिद्धौ तत्तत्स्वभावतयैव विशिष्टसंस्थानभावोपपत्तेः, यापि घटशरावादिबुद्धितुल्यतापत्तिचोदना साऽप्यनवकाशैव, विशिष्टसंस्थानवत्त्वात् तदेकत्वपरिणामस्य, तच्चित्रस्वभावतया तद्वास्तवत्वोपपत्तेः, अविगानतस्तथोपलम्भात् निमित्तान्तराभावात् । बोधमात्रतत्त्ववादे तु वासनाद्ययोगात् अस्य चोक्तत्वादभिधीयमानत्वाच्च । अविशिष्टरूपादिनिबन्धनवादिनस्त्वेष दोषो निवारित एव वैशिष्ट्येन तेषामेकस्वभावत्वात् घटशरावादिसंस्थानानुपपत्तेः, तदव्यतिरिक्तत्वेन तन्मात्ररूपत्वात्, तत्तत्स्वभावत्वे तद्धर्मभेदोपपत्तेः, रूपादिष्वविशेषे तद्विशेषाभावात्, भावे त्वस्मदभ्युपगमसिद्धेः अन्यथा तथा तत्सन्निवेशित्वायोगात् । न चेयमविकल्पिकाऽनुल्यैव, रूपादिस्वलक्षणालम्बनत्वात्, विकल्पिकाया अपि तथा भेदानुपपत्तेः

अस्या अपि तत्त्वतोऽविकल्पिकालम्बनत्वात्, प्रत्यक्षपृष्ठभावित्वेनाध्यवसितनद्भावतो गृहीतग्राहित्वेन विकल्पिकाया अप्रामाण्याभ्युपगमात्, अन्यथा गृहीतग्राहित्वानुपपत्तेः, अविशिष्टबोधमात्रात् तद्भेदायोगात्, विषयभेदमन्तरेण च तद्वैशिष्ट्यानुपपत्तेः, तद्भेदाभ्युपगमे चास्मदभ्युपगतद्रव्यसंस्थानाभ्युपगमः, अन्यथा तथा तद्भेदायोगात्, भेदकाभावात्, व्यक्तिभेदमात्रस्याप्रयोजकत्वात्, तद्भावेऽपि तथाबोधभेदासिद्धेः, समानजातीयेभ्योऽतुल्येतरबुद्ध्यभावादिति रूपादीनामनेकस्वभावत्वसिद्धिः। स्यादेतत्सिद्धसाधनमेतदुक्तमेव नः पूर्वाचार्यैः, द्विविधा हि रूपादीनां शक्तिः सामान्या प्रतिनियता च, तत्र सामान्या यथा घटसन्निवेशिनामुदकाद्याहरणादिकार्यकरणशक्तिः, प्रतिनियता यथा चक्षुर्विज्ञानादिकार्यकरणशक्तिरिति, अत्रोच्यते उक्तमिदमयुक्तं तूक्तम्, पूर्वाभ्युपगमविरोधात्, एकान्तैकस्वभाववस्तुवादिनो भवन्तः, स्वलक्षणानां निरंशत्वप्रतिज्ञानात्, तत्कथमिदमित्थमभिधातुं युज्यत इति। किञ्च किमिदं सामान्यप्रतिनियतशक्तिमद्भ्यो रूपादिभ्योऽन्यदुतानन्यदिति, अन्यत्वे संगायोगः, अनन्यत्वे रूपादिभ्यस्तदेकत्वादि, त एव तदिति चेत्, कथमेकस्वभावास्तदुभयभाजः, परिकल्पितं तदिति चेत्, निर्हेतुकं तर्हि तत्कार्यम्, रूपादिभ्य एव तदिति चेत्, कथमेकस्वभावेभ्यः, अनेकान्ततत्स्वभावत्वादिति चेत्, न तदचित्रतायामेतदित्युक्तप्रायम्। एवं सर्वथैकस्वभाववादिनो रूपादय एव घट इत्ययुक्तम्, रूपादय एव रूपादय इति वाक्यार्थापत्तेः भिन्नशब्दप्रयोगायोगात्, प्रवृत्तिनिमित्ताभावात्, कार्यभेदानुपपत्तेः, तस्य च प्रतिक्षेपायोगात् सकललोकसिद्धत्वात् उदकाद्याहरणज्ञानादिभावात्। एवं च तदग्रहे तद्बुद्ध्यभावादिति युक्तिरप्ययुक्तिरेव, तद्ग्रहणस्यैव तद्बुद्धित्वेन तद्भेदाभिधानायोगात् तद्भेदाभिधाने च रूपादिबुद्ध्यविनाभूता घटबुद्धिरिति बलादापद्यते एवं च भवन्ती नियमत एवेयं तत्प्रतिबद्धं निमित्तान्तरमुपदर्शयतीति यथोदिततत्परिणामसिद्धिः। अवश्यं चैतदित्थमङ्गीकर्त्तव्यम् यदि तु रूपादय एव घटस्ततस्तदतिरिक्ततत्त्वान्तराभावाद् घटस्य रूपादय इति व्यतिरेकाभिधायी व्यपदेशो न स्यात्। स्यादेतत्त-

थाकृतसङ्केतत्वाग्रे यथा शब्दा नियुज्यन्ते तथा वाचका इत्यव्यतिरेकेऽप्येवं व्यपदेशो युक्त एव केवलं प्रयोजनानपेक्षो न भवति तदप्यस्त्येव, यथाह न्यायवादी रूपादयो घटस्येति तत्सामान्योपसर्जनास्तद्व्यक्तिभेदाः ख्याप्यन्त इति । अयमत्रार्थो रूपादयो घटस्येति व्यपदेशे घटसामान्यविशेषणा रूपादिशक्तिभेदाः प्रतिनियता उच्यन्ते, प्रतिनियतशक्तिस्वभावाः सन्तः सामान्यशक्तिस्वभावाः ख्याप्यन्त इति यावत्, एतदप्ययुक्तम्, वचनमात्रत्वात्, एवं हि प्रतिनियतचक्षुर्विज्ञानादिकार्यकरणस्वभावाः सन्तः उदकाद्याहरणकार्यकरणस्वभावाः ख्याप्यन्त इत्येतदापन्नम्, एतच्चैवमभिधीयमानं असति वास्तवे तत्स्वभाववैचित्र्ये नीलादिविज्ञानकार्यकरणभावस्वभावा नीलादयः पीतादिविज्ञानकार्यकरणस्वभावाः ख्याप्यन्त इत्यसन्दिग्धं तुल्यमनेन, अन्यतरशब्दादेः प्रवृत्तिनिमित्ताभावाविशेषात् एकान्तैकस्वभावत्वात् तत्स्वभाववैचित्र्याभ्युपगमे तु न विप्रतिपत्तिरावयोस्सर्वत्र निरुपचरितप्रवृत्तिनिमित्तोपपत्तेः तत्तत्परिणामापेक्षया तथा तथोपसर्जनादिभावेन विचित्रक्षयोपशमयोगतस्तत्तच्छब्दादिसिद्धेरिति । एतेन चन्दनस्य गन्ध इत्यत्रापि चन्दनं नाम न गन्धव्यतिरिक्तं किञ्चिद्द्रव्यमस्ति किं तर्ह्यनेकात्मकस्य गन्धस्य चन्दनस्वभावो यो गन्धः स तथा निर्दिश्यत इति यदुच्यते परैस्तदपि प्रत्युक्तमेव सर्वथैकस्वभावत्वे सत्यस्याप्यनुपपत्तेः तथाहि चन्दनस्वभावो यो गन्ध इत्यनेन गन्धविशेषणाभिधानात्, अन्यथा गन्धस्वभावो यो गन्ध इति प्राप्नोति तन्मात्रस्य वैशिष्ट्यायोगेन विशेषणानुपपत्तेः इत्यलं प्रसङ्गेन, अवयविपक्षोक्तदूषणानि तु तथा तदनभ्युपगमान्न नो बाधायै, नह्यवयवेभ्योऽन्य एवावयवीत्यभिदधति जैनाः, किं तर्हि, कथञ्चिदनन्यस्तदेकत्वपरिणाम एवासाविति, इत्थं चैतदङ्गीकर्त्तव्यम्, तथा प्रतीतेः तदग्रह एव सर्वथाऽग्रहणात्, समन्धकारे तदनुपलब्धेः । नेयमवयवाग्रहणत इति चेत्, कुतस्तर्हीति वाच्यम्, समन्धकारेण तद्ग्रहणावरणादिति चेत्, स्यात्तदभावे तद्भेदग्रहः, । अस्त्येवायमिति चेत्, न, प्रतीतिविरोधात् । असिद्धोऽयमिति चेत्, कयोपपत्त्येति वाच्यम्, नह्यनेकेषु क्वचिदेकबुद्धिः । को वा किमाहेत्यविप्रतिपत्तिरत्र, अस्ति चेयमनेकावयवे

ऽवयविनि । सत्यं नवतद्धर्मेति भाव्यताम् । तद्धर्मेति कोऽर्थः, कथञ्चित्तद्ग्रहणात्मिका, यदि नामैवं ततः किं तत्, तदेकत्वपरिणामता, यदि ह्यसौ तदन्य एव स्यात् ततस्तदन्यान्यबुद्धिवदतद्ग्रहणात्मिकैव भवेत्, न चेयमित्थम्, तथाननुभवात् न ह्यमृदादिग्रहणरूपा घटादिबुद्धिरनुभूयते, न चानुभवविरुद्धा कल्पना न्याय्या नह्यस्यां प्रभवन्त्यां कस्यचिदसिद्धिर्नाम न चामृदाद्यात्मकत्व एवामीषां तद्भेद एव देशाद्यभेदानुपपत्तेरिति यथोदित एवायं प्रतीतिन्यायाविरुद्धः, तथाह्यस्ति तावदियं विच्छिन्नार्थग्रहणस्वभावप्रतिभासा स्थूलाकारा प्रतीतिः, न चायं स्थूलः तत्तत्स्वभावतया समानजातीयावयवैकत्वपरिणामरूपः तत्तत्सहकारियोगात्तथाभवन्विरुद्ध्यत इति, न चात्रावयविपक्षोक्तदूषणावकाशः, ततोऽस्य जात्यन्तरत्वात्कथञ्चित्स्वावयवात्मकत्वेन सर्वथा तद्व्यतिरेकासिद्धेः । एतेन मूर्त्तत्वेन तदभिन्न देशतानुपपत्तिः प्रत्युक्ता, तत्स्वभावतया तथाभवनात् अत एव वृत्त्ययोगदूषणासम्भवात् अर्थान्तरभूतस्यैवावृत्तेः भिन्नदेशस्य वा ग्रहणादित्यप्यनङ्गीकरणादबाधकम्, न हि तत्स्वभावतया तेषामेव तथाभावस्तद्भिन्नदेश उपादानशून्यो वा कथञ्चित्तद्व्यतिरेकात्, हेतूनां च परनीत्या स्वभावनियतत्वेन तत्त्वतोऽहेतुत्वोपपत्तेः, एवं तुलानतिविशेषाग्रहणमपि न दोषकृत्तत्त्वतो विशेषाभावात्तेषामेव तथापरिणतेः धर्मोत्पादव्ययभावेऽपि वस्तुनस्तुल्यत्वात् । एवं च न चासावमूर्त्तोऽग्रहणप्रसङ्गादित्यपि यथोक्तावयविवादिनो न बाधायै तत्तथाभावस्य तदेकत्वपरिणामतया तथाविकल्पनायोगादिति । यच्चोक्तं न चार्थे सत्यपि तद्ग्रहणोपायः समस्ति, युक्त्ययोगात् स हि संवेदनग्राह्यः स्यात् तच्च साकारमनाकारं वा साकारत्वेऽपि स्वाकारं विषयाकारं वेति, यदि स्वाकारं, तमेव तद्वेदयते, कथमनेनार्थो गृहीतो नामेति, एतदप्ययुक्तम्, तदर्थग्रहणपरिणामस्यैव स्वाकारत्वात्, अर्थग्रहणपरिणामता चास्य तथाप्रतीतेः, बोधमात्रावेदनात्, सति चास्मिन्कथमनेनार्थो न गृहीतो नाम, तद्वेदनस्यैव तद्रूपत्वात् तत्स्वाकारवेदनमेव ह्यर्थग्रहणरूपं तथाप्रतीतेरिति । आह वचनमात्रमेतद्बोधमात्रतत्त्वस्य स्वभावनियतात्मनोऽर्थानुपरक्तस्य तद्ग्रहणरूपत्वायोगात्, नियमहेत्वनुपपत्तेः, अतिप्रसङ्गादिति,

न, बोधमात्रतत्त्वस्यैव तथास्वभावत्वात्, अर्थक्षयोपशमसन्निधानतस्तथा तथा चैतन्यविक्रियोपपत्तेः, स्वस्वभावनियतात्मकत्वेऽप्यस्योक्तार्थाविरोधात्, तच्छक्तिवैचित्र्यात्, तथाविधतच्छक्तेरेव तत्त्वतोऽर्थोपरागत्वात्, अधिकयोगाभावेनान्यथा तदसिद्धेरित्यर्थक्षयोपशमसन्निधानस्यैव नियमहेतुत्वोपपत्तेः अतिप्रसङ्गदोषोऽप्यनवकाश एव। तथा विशिष्टविच्छिन्नार्थग्रहणरूपविज्ञानवेदनाच्चेति विशिष्टचैतन्यविक्रियाज्ञानपक्षे न कश्चिद्दोषः परिभाव्यतामेतत्। स्यादेतदसत्यप्यर्थे स्वप्नादिषु तथाविशिष्टविच्छिन्नार्थग्रहणरूपविज्ञानवेदनोपपत्तेर्यत् किञ्चिदेतदिति परिभावितमेव, न परिभावितम्, तत्तदाभासविवेकानवगतेः, इह यदसत्यप्यर्थे स्वप्नादिज्ञानं तत्तदाभासमतोऽन्यद्यथार्थमेव, अन्यथा भ्रान्तेतरव्यवस्थायोगः भेदकहेत्वभावात्। स्यादेतत्पृथग्जनज्ञानमखिलं भ्रान्तमेव ग्राह्यग्राहकाकारोपप्लवरूपत्वात् अभ्रान्तं तु तद्विकलं योगिनामिति न भ्रान्तेतरव्यवस्थायोगो भेदकहेत्वभावश्च, एतदप्यसत्, प्रमाणाभावात् योगिज्ञानप्रमाणत्वे तद्ग्राह्यत्वाभावो ग्राहकाकाराद्यापत्तेः तद्विकलतत्तदवगमायोगात्। अचिन्त्या योगिनां शक्तिरित्यवगम इति चेत्, नात्र प्रमाणमन्यत्र पक्षपातात्। अपि च येन तेन प्रकारेणैतदवगमेऽस्य च तथाभावगतावर्थतो ग्राहकाकारादयो नियमेन, नान्यथोभयायोगादिष्टसिद्धिः बोधमात्रतत्त्ववादिनश्च सर्वत्र तद्भावे तदधिकाभावेनोपप्लवासिद्धेश्चेति प्रपञ्चयिष्यामः। कथमनयोर्भ्रान्तेतरभेदावसायः सन्क्षयोपशमादितः अनाविलानुभवसंवादादेराविद्वदङ्गनादिलोकसिद्ध एवेति एवं च यदुक्तमथार्थाकारं जडरूपता स्यादन्यथा तथाकारत्वाभावः, अनाकारत्वे तु प्रतिकर्मव्यवस्थानुपपत्तिः निबन्धनाभावात् तत्सत्तामात्रस्य सर्वत्राविशेषात् प्रत्यासत्तेरनिबन्धनत्वात् तस्य सुप्तादिकल्पत्वात् इति, एतदुपन्यासमात्रफलमेव, तथार्थाकारतानभ्युपगमात्, यथाभ्युपगमं तु जडरूपतासिद्धेः, तदर्थग्रहणपरिणामस्यैवार्थाकारत्वात्, अन्यथा तदनुपपत्तेः, अर्थलेशस्य कस्यचित्तत्रानुप्रवेशायोगादिति निर्लोठितमिदं सर्वज्ञसिद्धौ। यदा च तस्यैवार्थग्रहणशक्तिरर्थाकारः तदा न तदाकारत्वाभाव इति कथं प्रतिकर्मव्यवस्थानुपपत्तिर्निबन्धनोपपत्तेः, तयोरेव तत्स्व-

अ०ज० पताका० ॥ ५१ ॥

भावत्वेन तच्छक्तिविशेषभावादिति । यद्यद्ग्रहणशक्तिमत्तदेव तद्ग्राहकमितरदेव च तद्ग्राह्यमिति न तत्सत्तामात्रस्य सर्वत्राविशेषः, तत्तथा स्वभावत्वेन प्रत्यासत्तेः सनिबन्धनत्वादिति, बोधस्याविशेषतः सुप्तकल्पत्वमसिद्धम्, अर्थक्षयोपशमसन्निधानजस्योत्कर्षवैशिष्ट्यसिद्धेरिति । स्यादेतदेवमप्यात्ममात्रवेदिना व्यतिरिक्तवेदनमयुक्तमेव, सत्यमयुक्तं तद्वत्तद्भावेन न पुनर्ज्ञस्या, ज्ञानान्तराज्ञानप्रसङ्गात् । एवं च न सन्तानान्तरावगम इति चिन्त्यतां देशनादेर्विषयः, यथा कथञ्चित्तदवगमे कः खलु तथैवार्थे तद्विरोधः । अर्थस्यैवाभावादिति चेत्, कुतस्तदभावनिश्चयः, ज्ञानानुभवादिति चेत्, केन ज्ञानान्तरानुभवः । ज्ञानत्वाचेनैवेति चेत्, किमत्रभवतः प्रमाणम् । लोकानुभव एवेति चेत्, न असौ नार्थेऽपीति चिन्त्यताम्, न चार्थो युक्तिबाधित इति न्याय्यम्, तथाविधयुक्त्यभावात्, न चाभिहिता एव तास्तथाविधा इति, तासां जातियुक्तत्वात्, न चैतद्वचनमात्रमेव, तद्भावस्य दर्शितत्वात्, न चैवम्भूता ज्ञानेऽपि न सन्ति, प्रायः सर्वत्रगत्वादित्येतच्च वक्ष्यामः । एतेन "सहोपलम्भनियमादभेदो नीलतद्धियोः" द्विचन्द्रादिवत् । तथा "दर्शनोपाधिरहितस्याग्रहात् तद्ग्रहे ग्रहात् । दर्शनं नीलनिर्भासं नार्थो बाह्योऽस्ति केवल" इत्याद्यपि यदुच्यते परैस्तत्प्रतिक्षिप्तमेव, विच्छिन्नार्थग्रहणस्वभावसंवेदनवेदनपक्षेऽस्यानवकाशत्वात्, विच्छिन्नार्थग्रहणमर्थप्रत्यक्षीकरणं तत्स्वभावविज्ञानानुभवे सत्यर्थप्रत्यक्षतयोभयभावसिद्धेरनवकाशत्वमिति । किञ्चेदमयुक्तिसङ्गतमेव तथाह्यत्र नीलतद्धियोरभेदः साध्यः सहोपलम्भनियमेन, सोऽयमनयोः सतोरसतोर्वा साध्येन, सत्त्वे न सतः सदन्तरापत्तिरित्यभेदासिद्धिः, असत्त्वान्यतरसत्त्वे च वस्तुधर्मत्वादभेदस्येति । नीला धीरेवेति प्रतिज्ञार्थ इति चेत्, अन्यस्य तद्भावे को विरोधः । असतस्तद्भावानुपपत्तिरिति चेत्, स्यादेतत्तदसत्त्वसिद्धौ । अननुभवात् तत्सिद्धिरेवेति चेत्, भवेदियं व्यन्तराभावे, तत्स्वानुभववदेवेति चेत्, अन्योऽपि स्वसत्तावानेव, न च स्वात्मनाननुभवाविशेषे तच्चेतनाचेतनत्वे, तेन तत्त्वव्यवस्थितौ कथञ्चिदाधिक्ये नाङ्गतां प्रतिपद्येते परोक्षत्वाविशेषात् स्वानुमानाप्रवृत्तेः तल्लक्षणायोगात् सर्वव्यन्तराणां तत्तुल्यतासिद्धेः अतु-

ल्यानुमितौ चान्यस्मिन्नप्यविरोधः सत्त्वादिना कथञ्चित्तुल्यत्वोपपत्तेः । परसिद्धभेदव्यवच्छेदः साध्यार्थ इत्यप्ययुक्तम्, विकल्पानुपपत्तेः, स ह्यस्य प्रमाणसिद्धोऽप्रमाणसिद्धो वा स्यात्, प्रमाणसिद्धत्वे कथं तद्व्यवच्छेदसिद्धिः, सिद्धौ वा प्रमाणसिद्धत्वम्, अप्रमाणसिद्धस्तु न सिद्ध एव परस्यापि किमस्य व्यवच्छेदसाधनेन । स्यादेतत्प्रमाणसिद्ध इति विभ्रमापोहः सङ्गरार्थः अत्राप्येतदनिवृत्तिरेव, न्यायानुपपत्तिश्च बोधमात्रतत्त्ववादिनः, विभ्रमायोगात् भेदकाभावेन कालुष्यासिद्धेरेवं सन्न्यायऽतो ग्रहणाभावात् प्रत्यनीकानवगमेनापोहानुपपत्तेरित्यसुन्दरः पक्षः । प्रत्यक्षविरुद्धादिदोषयुक्तत्वाच्च, ज्ञानस्य विच्छिन्नार्थग्राहित्वात् तथानुभवभावादुभयभावसिद्धेः प्रत्यक्षविरुद्धः, तथा तद्वैचित्र्यवेदनाद्भेदकमन्तरेण तदयोगात् बोधमात्रस्याभेदकत्वात् अनुमानविरुद्धः " पञ्च बाह्या द्विविज्ञेया " इति वचनात्, अन्यार्थानुपपत्तेः प्रमाणाभावादागमविरुद्धः सकललोकार्थाङ्गीकरणाद्भेदेनार्थसिद्धेस्तन्निराकरणनैर्घृण्याल्लोकविरुद्धः, भिन्ननिमित्तशब्दाभिधानात् भूयस्तदभेदापादनादितरेतरव्याहतेः स्ववचनविरुद्धः इत्यलं प्रसङ्गेन । हेतुदोषा उच्यन्ते सहोपलम्भनियमादित्ययं तावद्विपर्ययसाधकत्वाद्विरुद्धः सहशब्दस्यार्थान्तरेण विना प्रयोगादर्शनात्, सहोपलम्भादेव भिन्नत्वं नीलस्य तद्धिय इति विपर्ययसिद्धिः । स्यादेतदेकार्थः सहशब्दस्तेनैतदुक्तं भवति सहोपलम्भनियमादेकेनैवोपलम्भादिति यावत्, एवं च न विपर्ययसिद्धिरित्युक्तदोषाभावः, नैतदेवम्, अविचारितरमणीयत्वात्, तथाह्येकेनोपलम्भादिति कोऽर्थः किं ग्राह्यग्राहकयोरेकेनैव वेदनात् उतासम्पृक्तेनैव ग्राह्यग्रहणादिति, यदि ग्राह्यग्राहकयोरेकेनैव वेदनं ततः स एक एवानुभव इति प्राप्तं बुद्धविज्ञानपृथग्जनविज्ञानयोरेकत्वम् । न तत्तस्य ग्राहकमिति चेत्, न तेन सन्तानान्तरावगमः । सत्यमिष्टमेवेदमिति चेत्, कथं तर्ह्यस्याप्ततेति वाच्यम्, शुद्धेः, सा किमत्रोच्यत इति चेत्, साप्यहेतुकेति न युक्तैव, परार्थभूतेर्नाहेतुकेति चेत्, कथं तदनवगमे तत्सिद्धिरित्यचिन्त्यशक्त्यादिना तु तदवगमो नीलेऽपि तुल्यः । असम्पृक्तेनैव ग्राह्यग्रहणे त्वस्मन्मतानुवाद एव, ग्राह्यसन्तानारूपितस्यैवास्य तत्स्वभावतया ग्राहकत्वाभ्युपगमात्,

अ० ज०
पताका०
॥ ८२ ॥

अस्य च न्याय्यत्वात्, भिन्नार्थग्रहणात्, प्रतिप्राणि प्रतीतेः, भावतो बाधासम्भवात्, सदा तथोपलम्भात्, अर्थक्रियादर्शनात् अन्यथा ग्राहकत्वायोग इत्युक्तप्रायम्। न चास्योक्तप्रकारातिरिक्तोऽर्थः न चायमप्येकार्थो लौकिकः न च ग्रन्थकारबहुमतः न च बहुमतत्वेऽपि युक्तरूपः, परार्थे ह्यनुमाने वक्तुर्वचनगुणदोषा अपि विचिन्त्यन्त इत्युक्तं प्रतिपादयताऽनेन परमवश्यं प्रतीतपदार्थकः शब्द उपादेयोऽन्यथा प्रतीतेरभावात्, लोके च नार्थान्तरेण विना सहशब्दप्रयोगो दृष्ट इति कथमयमेकार्थवाचको युक्तरूपः स्यात्, साङ्केतिकेऽपि शब्दार्थयोगे लोकप्रसिद्धिरेवानुसर्तव्या तत्परित्यागेनासमञ्जसत्वप्रसङ्गात्। एवं चानैकान्तिकोऽपि हेतुः बुद्धविज्ञेयचित्तादावपि भावात्, तथाहि बुद्धस्य भगवतो यद्विज्ञेयं सन्तानान्तरं चित्तं तस्य बुद्धविज्ञानस्य सहोपलम्भनियमोऽस्ति अथ च नानात्वमित्यनैकान्तिकः, तथा चित्तचैत्तानामपि सहोपलम्भनियमोऽस्तीत्यनैकान्तिक एव। आगमासिद्धमेतदिति नानेन व्यभिचार इति चेत्, किन्नेदमित्थमिति न किं वा न निश्चीयत इति, आद्यपक्षे न प्रमाणमित्ययुक्तो मूलवंशनिह्नवः, चरमे तु निश्चीयत एव वचनेनेति व्यभिचारसिद्धिः, इष्टश्च भवता वचनानुसारः पूर्वाचार्यमताङ्गीकरणात्। "ग्राह्यं न तस्य ग्रहणं न तेन ज्ञानान्तरग्राह्यतयापि शून्यम्। तथापि च ज्ञानमयः प्रकाशः प्रत्यक्षपक्षस्य तवाविरासीत्" ॥ १ ॥ तथा प्रेतवत्पुनः सन्तानानियमः सिद्धः, तथा च नरकवत्पुनः सर्वं सिद्धमित्यादिवचनसमर्थनात्, अन्यथा विचारायोगः स्वमात्रवेदनातिरेकेण सर्वानिश्चितेरिति, एवं न केवलमनैकान्तिकोऽसिद्धश्च, सहोपलम्भनियमस्योभयासिद्धत्वात् भवतः सहार्थायोगात् तदपरस्यानभ्युपगमात्, अभ्युपगमे साधनवैफल्यादिति, परस्यापि नीलेन सह तद्धिय उपलम्भो नाभेदेन सिद्धः, भेदेन तु सहार्थसिद्धौ न साधनमिष्टसाधकमितरस्येति, न चाभेदस्य सहोपलम्भनियमस्य च व्याप्यव्यापकभावः अन्यथाऽप्यस्याविरोधात् ज्ञानज्ञेयतत्स्वभावत्वत एव नियमोपपत्तेः, ज्ञानस्यार्थग्रहणस्वभावस्य सतः स्वसंविदितरूपत्वात्, चित्रस्वभावतया तथात्वाविरोधात्, अर्थस्य च ज्ञानविविक्ततया तथास्वभावत्वादित्यपि सहोपलम्भनियम उपपद्यत एव, तद्योग्यतालक्षणप्र-

तिबन्धसामर्थ्यादिति । अनेनैतदप्यपाकृतमेव यदाहुरेके प्रत्यक्षोऽर्थः परोक्षं तु ज्ञानं तत्प्रत्यक्षतयार्थापत्तिसमवसेयमिति, अपाकरणं चास्य परोक्षत्वे ज्ञानस्यार्थप्रत्यक्षतासिद्धेः, ज्ञानेन ह्यर्थः प्रत्यक्षीक्रियते तच्चेत्परोक्षं कथमर्थःप्रत्यक्षो नाम, तेन प्रत्यक्षीकृतत्वादिति चेत् न । आत्मानमप्रत्यक्षीकुर्वतोऽन्यप्रत्यक्षीकरणासिद्धेः, इन्द्रियवत्सिद्धिरिति चेत्, न, तस्य बहिष्करणत्वेन तद्भावोपपत्तेः, अन्तःकरणे को दोष इति चेत्, न खलु ततः कर्त्तरि क्रियाधानमिति, यद्येवं ततः किमिति चेत्, न तेन युक्तितः कस्यचित् प्रत्यक्षीकरणम्, तथाहि परोक्षं ज्ञानमात्मनः सर्वथा भिन्नं नातिशयाधायि तत्रार्थप्रत्यक्षताहेतुरिति न न्यायोपेतमेतत् यदि त्वात्मनि द्रव्यमनोवद्बोधक्रियाधायकं स्यात् स्यात् तद्धेतुः किन्त्वेवं सैव तत्त्वत आत्मसमवायिनि ज्ञानम्, न भवेत् कल्पितबुद्ध्याख्यम्, सा चात्मधर्मत्वात् कथञ्चित्तदभेदात् तथा स्वभावत्वात् प्रतीत्यनुग्रहप्रवृत्तेः स्वसंविदितैवेति ज्ञानप्रत्यक्षतासिद्धिः स्यादेतद्यदि तदात्मक्रियारूपमेवास्वसंविदितं सदर्थप्रत्यक्षताकारि स्यात् को दोषः स्यात्, उच्यते सदैव तदप्रत्यक्षतायां प्रमातुः क्रियान्तराभावात् अर्थप्रत्यक्षतैव न स्यादिति हल्लेखादिशून्यो हि सुप्तकल्पोऽसौ कथं किञ्चित्प्रत्यक्षीकुर्यात्, तदविकृतौ कर्मविशेषाधानस्याकिञ्चित्करत्वात् प्रदीपाद्यवभासितानामप्यन्धादिभिर्घटादीनामदर्शनात् क्रियान्तराभ्युपगमे च तत्राप्ययमेव वृत्तान्तोऽस्मन्मतानुवादो वेत्यलं प्रपञ्चेन । निर्णीतमेतदस्मद्गुरुभिः प्रमाणमीमांसादिषु परोक्षप्रकृतेरर्थप्रत्यक्षतायोगात्, स्वप्रत्यक्षीकरणे च चेतनाया कथं तद्वात्मावेदनमवेदने वा चेतनत्वं, नहि परप्रकाशनात्स्वात्माप्रकाशक इह प्रकाशो नाम, न च तदनुभवमन्तरेण स्मृतिः, अस्ति चेयं ज्ञानविषयाऽपि, तथार्थदर्शनरूपैवेयमिति न लौकिकम्, तदा तथा तदभावात् क्वचिदपवर्गोपपत्तेरित्येतेन निर्विषयज्ञानाभाव उक्तः न चात्र प्रमाणमनुमानाभावात् तल्लक्षणायोगात् अर्थापत्तेरप्यभावेऽप्रवृत्तेः बुद्धिव्यक्तेश्च तदासत्त्वेनाभावात् तदव्यतिरिक्तस्य च सामान्यस्य इतरस्यापि तद्ग्रहणे ग्रहणादिति स्वात्मन्यपि तत्सम्यग्निर्णयग्रहे परावबोधाय शास्त्रकरणमयुक्तमित्येवमादिना । साम्प्रतं यदुक्तं द्विचन्द्रादिवदित्येतन्निरूप्यते,

अ०ज०
पताका०
॥ ५३ ॥

अयं दृष्टान्तो हि वर्त्तते अस्य चायमर्थोऽभिमेतः योऽयं द्वितीयचन्द्रोऽलीकप्रतिभासः तस्य सहोपलम्भनियमोऽस्ति न चासौ ततो भिन्नो भेदेऽवस्तुत्वप्रसङ्गात्, ततश्च विज्ञानमेव तत्तादृशं बाह्यार्थग्रहणस्वभावमिवावभासमानमप्यबहिर्गोचरमेव, एवमखिलमेव विज्ञानमिति एतच्चानालोचितसुन्दरम्, तस्य भ्रान्तत्वेन तथात्वाविरोधात् भ्रान्तत्वं च बाधकप्रत्ययोपलब्धेर्दोषजत्वेन सकललोकसिद्धत्वात् तदनुभव एव तथा प्रतीतेः, एवं तद्बलात् तज्जातीयानामेव तत्त्वव्यवस्थापनं युक्तं ननु सामान्येन सर्वेषाम्, अतिप्रसङ्गात्, नहि ग्राह्याकारादिमद्विज्ञानमनुभूयत इति तत्तत्स्वभावतया सर्वस्यैव तथाविधत्वकल्पनं न्यायोपपन्नं बुद्धविज्ञानानामतथाविधत्वात्। न चेदमतथाविधत्वममीषां तदितरेभ्यो भेदकम्, भेदमन्तरेण न्यायतोऽनुपपत्तेः पृथग्जनविज्ञानानामपि प्रमाणतदाभासाभ्युपगमात्, तत्रापि संवादिज्ञानजनकानां तदितरेभ्यस्तथैव भेदात् भेदकमन्तरेण समानभेदहेतुमात्राच्चथाभेदासिद्धेः, अतिप्रसङ्गात् इत्येवं द्विचन्द्रेतरादिविज्ञानानामपि भेदको भेदः समभ्युपगन्तव्यः, स च भेदकोऽर्थ एवास्तु किमन्येन स्वहेतुपरम्पराजनितहेतुभेदादिना कल्पितेन बोधमात्रतत्त्ववादिनोऽस्य प्रदीर्घपरम्परायामपि तन्मात्रातिरेकेण विशेषासिद्धितोऽभिधानमात्रत्वादिति, अर्थस्तु सत्क्षयोपशमादिमतोऽभ्रान्तज्ञानहेतुरितरस्य तु विपर्ययहेतुरिति न किञ्चिदत्रावद्यं लोकसमयसिद्धत्वात्। आह आन्तरहेतोरेव तद्भेदाभ्युपगमे को दोषः, ननु न कश्चिदपि तु बाह्यार्थसिद्धिरेव, बोधमात्रस्वतत्त्वानि हि सर्वचित्तानि न तदतिरिक्तं भेदकमिति तन्मात्रनिबन्धनत्वाद्विजातीयभेदासिद्धेः अस्य चानुभवसिद्धत्वात्, तद्भेदापादकं तत्कालुष्यकारि वस्तुसत्कर्माङ्गीकर्त्तव्यम्, अन्यथा बुद्धस्येव प्रभूतबुद्धानां वा स्वरूपभेदेऽपि चित्तमात्राद्भ्रान्तेतरभेदाभाव इति बाह्यार्थसिद्धिः। इयं चैवमर्थतोऽसकृदुक्तैवाभिनिविष्टस्त्वत्र पर इति पौनःपुन्येनोच्यते। एवं स्वप्नविज्ञानमपि जाग्रद्विज्ञानविजातीयम्, आविलबोधवद्भूयस्तथादर्शकत्वेऽपि स्वमिथ्यात्वावसायहेतुमद्वृत्तिनिवृत्तिकृदाविद्वदङ्गनादिसिद्धमनुभूतदृष्टादिनिमित्तं भ्रान्तमेव न तन्निदर्शनात् तद्विजातीयमपि सर्वं तथा भवितुमर्हति। न च

तदपि चित्तमात्रोद्भवं बुद्धादीनामसम्भवात्, अपि तु कर्माविलचित्तजमेव न ततोऽपि न बाह्यसिद्धिरित्यवहितैर्भावनीयम् । इतश्च बाह्यार्थसिद्धिः, विज्ञानमात्रस्यैवायोगात्, विकल्पानुपपत्तेः । विज्ञानं हि ग्राह्यरूपं वा स्याद्ग्राहकरूपमुभयरूपमनुभयरूपम्, प्रकारान्तरासम्भवात्, तत्र ग्राह्यरूपत्वे सकलविज्ञानानामेव रूपान्तराभावादेकस्वभावत्वाद्ग्राहकविज्ञानानुपपत्तेः ग्राह्यरूपत्वायोगात् निमित्ताभावादतिप्रसङ्गापत्तेस्तदभावप्रसङ्गतः प्रतीत्यादिबाधा ग्राहकरूपत्वेऽप्यभिधानान्तरेणैवानुवृत्तेरिति, ग्राहकमेव सत्तत्संवेदनान्तरग्राह्यमिति चेत्, न, तस्योभयरूपतापत्तेः नहि तयेनैव स्वभावेन ग्राहकं संवेदनान्तरस्य तेनैव ग्राह्यं सर्वथा तदेकत्वे तद्ग्राह्यग्राहकयोस्तुल्यतापत्तिः, तत्सम्बन्धिस्वभावैकत्वान्यथानुपपत्तेः सम्बन्धमन्तरेण तत्तद्भावासिद्धिरतिप्रसङ्गादिति तत्तत्स्वभावतालक्षणः सोऽङ्गीकर्त्तव्यः तथा च सत्युक्तदोषापत्तिरेवेति सूक्ष्मधिया भावनीयम् । उभयरूपत्वे विरोधः, एकस्यानेकत्वायोगात्, तथाहि यदि ग्राह्यरूपं तत्कथं ग्राहकरूपम्, ग्राहकरूपं चेत् कथं ग्राह्यरूपमितरेतरात्मकत्वेन तत्स्वरूपाभावः, अनुभयरूपत्वे तु स्फुटमसत्त्वं तदितरलक्षणासिद्धेः किं हि तत्सग्रद् ग्राह्यरूपं ग्राहकरूपं वा न भवति को वा तत्प्रतिपत्त्युपायः परं प्रति प्रतिपादनोपायो वा न कश्चिदन्यो ध्यान्ध्यसामर्थ्यादिति । स्यादेतदनभ्युपगतोपालम्भ एषः, चरमपक्षस्यैवास्माभिरिष्टेः, तस्याचान्यार्थत्वात्, तथाह्यनुभयरूपमद्वयमुच्यते, ग्राह्यग्राहकाकारविविक्तं यदि तर्हि ग्राह्यग्राहकत्वं द्वयमपि नास्ति किमपरं विज्ञानस्यावशिष्टं यत्तस्य तत्त्वं स्यात् नहि ग्राह्यग्राहकाकारविविक्तमपरं रूपमर्वाग्दर्शिभिः संवेद्यते संवेदने वा तत्त्वदर्शित्वं स्यात्, तथा चायत्नमुक्ताः स्युः देहिनः, नाप्यनुमानात् तस्य निश्चयः, तथाहि न स्वभावलिङ्गजं तत्रानुमानं सम्भवति तत्स्वभावस्यैव साध्यत्वात्, नापि कार्यलिङ्गजम् अद्वयेन रूपेण प्रत्यक्षानुपलम्भसाधनस्य कार्यकारणभावस्यासिद्धेः, नापि कार्यव्यतिरेकलक्षणात् कार्यकारणभावसिद्धिरस्ति, कार्यस्यैवासिद्धेः, तथाहि योगाचारस्य तदेवाद्वयं कार्यं तच्च प्रमाणसिद्धम्, यच्च द्वयरूपं भासते तच्च शशविषाणप्रख्यत्वात् न कार्यमिति । स्यादेतज्जाड्याद्

द्वयानभिज्ञैरिदमभिधीयते, यतो न ग्राहकशब्देनान्तर्बोधरूपं हर्षविषादाद्यनेकविवर्त्तं स्वसंविदितमुच्यते, येन तस्याप्यभावः स्यात्, किन्तु यदेतद्विज्ञानाद्बहिरिव नीलादि भासते तदेकानेकविचाराक्षमत्वात् न तत्त्वमतो न तावद्विज्ञानस्य व्यतिरिक्तं परमार्थतो ग्राह्यमस्ति, तदभावाच्च तदपेक्षाप्रकल्पितं बोधरूपस्य यत्कर्तृरूपमस्य ग्राह्यस्यायं ग्राहक इति तदिह ग्राहकं रूपं तन्नास्तीत्युच्यते, कर्तृकर्मणोः परस्परापेक्षाप्रकल्पितत्वात् । अत एवोक्तम् "परस्परापेक्षया तयोर्व्यवस्थानादिति" ननु बोधरूपं स्वसंवेदनमात्रे स्थितं यथोक्तेन ग्राह्यग्राहकद्वयेन रहितत्वादद्वयमित्युच्यते । तथा चोक्तम्, "नीलपीतादियज्ज्ञानाद् बहिर्वदवभासते । तन्न सत्यमतो नास्ति विज्ञेयं तत्त्वतो बहिः ॥ १ ॥ तदपेक्षया(क्षा?) च संवित्तेर्मता या कर्तृरूपता । साप्यतत्त्वमतः संविदद्वयेति विभाव्यते ॥ २ ॥" इत्यादि, एतदप्यसत्, प्रायो दत्तोत्तरत्वात्, तथाहि नीलादेरेकानेकविचाराक्षमत्वमसिद्धं जात्यन्तरत्वेनैकानेकात्मकत्वात् तथापरिणतिस्वभावत्वादित्युक्तप्रायम् । इत्थं कथं नदतत्त्वमित्यतो न तावद्विज्ञानस्य व्यतिरिक्तं परमार्थतो ग्राह्यमस्तीत्ययुक्तम्, तस्यैव ग्राह्यत्वात्, तथानुभूतेः, अद्वयस्य चाननुभवात्, अनुभवे वा सर्वेषां तत्त्वदर्शितैव स्यात्त्वन्नीतितस्तथा चायत्नमुक्ताः स्युर्देहिन इत्युक्तम् । स्यादेतदद्वयमेव बोधरूपं स्वसंवित्तिसिद्धं, न च सर्वेषां तत्त्वदर्शिताप्रसङ्गः, यतो गृहीतेऽपि तस्मिन्निरंशत्वादद्वये बोधरूपे भ्रान्तिबीजानुगमान्न यथाबोधमद्वयावसायो जायते, ततो गृहीतमपि तदगृहीतकल्पमित्यननुभूतिर्न तत्त्वत इति, नैतदेवम्, कल्पनामात्रत्वात्, तदाऽद्वयाननुभूतेः व्यवसायाभावात्, तथापि तत्कल्पनेतिप्रसङ्गात्, नीलादेरप्यतत्त्वापत्तेः शुक्लादिस्वसंविदुत्तद्भ्रान्तिबीजानुगमान्न यथाबोधमवसीयत इत्यपि वक्तुं शक्यत्वात्, युक्त्यनुपपत्तेरुभयत्र तुल्यत्वात्, अद्वयस्याप्यनुभवायोगात्, युक्तीनामपि बोधात्मकत्वेन विपर्ययाशङ्कानिवृत्तेः, अन्यथा प्रतिभाससम्भवात् ताभ्यस्तत्त्वव्यवस्थायोगात् बोधमात्रस्य चायुक्तित्वात् व्यवहारोच्छेदप्रसङ्ग इति यत्किञ्चिदेतदिति, न च बोधमात्रतत्त्ववादिनो भ्रान्तिबीजमपि किञ्चित्, बोधमात्रस्यैवानभ्युपगमात्, अभ्युपगमे वा भ्रान्त-

बोधायोगात्, तस्यैव तत्त्वात् बोधभिन्नभ्रान्तिबीजभावे तु बाह्यसिद्धिरेव। एवं चानुभूत्यादिसिद्धे बाह्यग्राह्यभावे नास्य ग्राह्यस्यायं ग्राहक इति ग्राहकरूपप्रतिषेधोऽयुक्तः, तदात्मकत्वेन ज्ञानस्यैव प्रतिषेधापत्तेः। किञ्च कथं पुनरिदं व्यज्ञायि भवता यथेदं विज्ञानं व्यतिरिक्तग्राहकाकारविकलमिति, न तावत्तदनुभव एव निमित्तम्, तस्य वैपरीत्येन प्रवृत्तेः, आविद्वदङ्गनादिसिद्धत्वात्। वस्तुस्थित्या तत्तथेति तथास्वभावत्वाज् ज्ञायत एवेति चेत्, तत्तथेति कुतोऽयमाप्तवादः प्रतिभासमानाकारशून्यतेति चापूर्वा वस्तुस्थितिः तत्तथास्वभावत्वाभिधानं च, किञ्च न च वस्तुस्थित्यापि व्यतिरिक्तग्राहकाकारशून्यत्वे सति तत्तथेति युक्तम्, एवं हि तच्छून्यत्वं तस्य स्याद्यद्यसौ तत्र न भवेत् न चान्यत्रास्या भवतः तत्राभवनं न्याय्यमित्यन्यत्र तत्सिद्धिः, तत्कल्पिताभवने तु तत्र तदितरभवनापत्तिः। कल्पितवास्तवतदाकारशून्यं तदिति चेत्, न ततो अन्यस्वभावत्वाभावे एतत्, न च तुच्छान्यस्वभावत्वमस्य, युक्तिविरोधात् तदभावे हि तत्तथा न च तदभावस्तदितराभावे, केनचिदबाधितत्वात् विशेषानुपपत्तेः तस्मादसंव्यवहार्य एव तुच्छाभाव इति न तत्र व्यतिरिक्तग्राहकाकारवैकल्यावसायोपायः तदतत्स्वभावत्वादिति परिभाव्यतामेतत्। किञ्चैवं परिकल्पिताद्वयरूपत्वेऽपि तत्त्वतोऽनुभयरूपत्वासिद्धिरेव स्वात्मसंवेदनात् कर्तृकर्मभावोपपत्तेः अन्यथा तदयोगात् न ह्यात्मन आत्मनाऽवेदने स्वसंवेदनं नाम वेदने तु तच्चित्रस्वभावता तस्यैव ग्राह्यग्राहकरूपत्वादिति। स्वात्मनि क्रियाविरोध इति चेत्, न, तथानुभवे तदसिद्धेः, कथं तदसिद्धिरिति चेत्, विरोधे तदयोगोपपत्तेः। तदयोगेऽपि किमिति चेत्, ननु च तदनुभवाभावः, तत्स्वहेतोरेव तादृगिति चेत्, किमनेनान्वयकथनेन सर्वथाऽसंवेद्यासंवेदकस्वभावत्वे न स्वसंवेदनम्, सति चास्मिन्नियमतः स्वभाववैचित्र्येण कथञ्चित् कर्तृकर्मयोग इति। एतेन यदप्युच्यते गगनतलवर्त्यालोकवदकर्मकं स्वयमेवैतत्प्रकाशत इत्यादि तदपि प्रतिक्षिप्तम्, यतो बोधरूपं तत्, न चाबुद्ध्यमानस्य किञ्चिद्बोधरूपता युज्यते इत्यात्मबोधोऽभ्युपेयस्तथा च सत्युक्तदोषानतिवृत्तिः

स्वात्मसंवेदनादिति । एवं यथोक्तालोकेऽपि भावनीयम् । न ह्यसावपि किञ्चिदनालोकयन्नालोको नाम, एवं चाभिधानमात्रमेवाकर्मकत्वमिति सन्न्यायासिद्धेः, आलोकनमालोक इति भावसाधनपक्षेऽपि स्वभावालोकनादिति । एवमपरोक्षस्वभावमित्याद्युक्तावपि स्वप्रत्यक्षस्वभावमित्यादिवाक्यार्थापत्तित उक्तदोषानतिवृत्तिरेव । किञ्च बोधमात्रतायां तन्नीलत्वादिभेदाभावो भेदकाभावात् तमन्तरेण च तदनुपपत्तेः बोधमात्रस्याविशिष्टत्वात् एकान्तैकस्वभावस्य विशिष्टत्वायोगात् तन्मात्रत्वात्, अन्यथा सर्वत्र बोधभावाभावात् अतत्स्वभावत्वात् स ह्यन्यत्र भवंस्तन्मिश्रणात्तत्कः अमिश्रणे तन्मात्रत्वम् । तथातत्त्वस्यैव तथाभेदाभावः तत्स्वभावभेदापत्तेः सति चास्मिंस्तदन्यासिद्धिरेव, तत्स्वभावो हि न बोधमात्रात्मनोऽभिन्नः स चाविशिष्टः प्रतिकूलं तुल्यस्वभावतयेति भिन्नजातीयेनास्य भेद आपादनीय इत्यन्यसिद्धिः । तज्जातिभेदवत्किन्नात्र स इति चेत्, नासौ सदादिमात्रस्य, नीलादीनां ततः कथञ्चिद्भेदात् तथाप्रतीतेः, नहि सत्प्रतीतिरेव नीलादिप्रतीतिस्तथाननुभवात् । एवं तर्हि तुच्छा नीलादयः, न ते क्वचित् सदननुविद्धाः, स्वतोऽसतां कथं तदनुवेधः, सदा तदनुवेधे नासत्त्वं सत्त्वमेवैवम्, तत्तथाविधतदितरानुविद्धमित्यस्तु केवल एव पुनः को दोषः, तन्मात्रतया न नीलादित्वम् । एवं हि न नीलमेव पीतं न च सत्त्वमात्रतत्त्वमेतत् न चासदेव प्रतीतिहेतुः प्रतीयते च तदन्यत्वेन ततस्ततोऽन्यत्तदिति सिद्धम्, तन्मात्रताभावे तदेव तत् । तत्रैव किं मानमिति वाच्यम्, हन्त तथानुपलम्भ एव, सोऽसिद्धो, दूरोपलम्भेन कोऽयमनीलादिरूप इति य एव तन्निश्चयाजनकः स मन्दो नीलादिग्रह एव, न, सत्त्वनिश्चयजनकत्वात् । न तत्रापि स केवलस्य, सत्यम्, तद्भिन्नात्मगमकस्तु तदन्यानुविद्धं सत्त्वमिति युक्तो जातिभेदः, न चैवमन्यानुविद्धो बोध इति तन्मात्रतत्त्ववादे त्वयुक्त एव । एतेन "नीलादिरूपस्तस्यासौ स्वभावोऽनुभवश्च सः । नीलाद्यनुभवः ख्यातः स्वरूपानुभवोऽपि सन्" इत्येतत्प्रत्युक्तम्, एकान्तैकस्वभावस्यात्र विवक्षितत्वात्, तस्य चोक्तवदयोगात्, न च नीलत्वादिभेदाभाव एव, आल्हादादिवत्स्पष्टसंवेदनत्वात् अपह्नवेऽतिप्रसङ्गादिति । किञ्च विज्ञानमात्रवादिनो न कारकज्ञापकस्थितिः, न्याया-

अ०ज० पताका० ॥ ५६ ॥

नुपपत्तेः, तथाह्यस्य न बीजाङ्कुरौ वस्तुनो विद्येते, किन्तु बीजाङ्कुरप्रतिभासायाः बुद्धेर्ग्राह्याकारे बीजाङ्कुरव्यवस्था, ग्राह्याकारश्च बुद्धेस्तत्त्वतो नास्ति विप्लवत्वेनासत्त्वात्, तत्कथं तदाकारयोः कार्यकारणव्यवस्थानिबन्धनभूतयोरसत्त्वे बीजादङ्कुरस्य जन्मेति कारकव्यवस्था। स्यादेतत् बीजनिर्भासाया बुद्धेरनन्तरमेवाङ्कुरनिर्भासाबुद्धिरिति बीजाङ्कुरनिर्भासानुगतयोर्बुद्ध्योः प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः, अयं च स्वसंवेदनलक्षणयोर्बुद्ध्योर्वस्तुत्वादविरोध्येव बीजादिनिर्भासस्तु विचाराक्षमत्वादुपप्लव एव न तस्य तत्त्वतः कार्यकारणभावः लोकप्रतीत्यनुसारतस्तु तथाव्यवहारायाभिधीयत इति व्यवस्था, अहो बलवानयमसदभिनिवेशो य इत्थमप्यनालोचिताभिधानं विदुषोऽपि प्रवर्त्तयतीति अनालोचिताभिधानता चास्य बीजादिनिर्भासो निश्चीयमान उपप्लवः स तत्त्वतो नास्तीति तन्निश्चयाभावापत्त्या, न खलु बोधेऽप्यसतो निश्चयः, अतिप्रसङ्गात्, खरविषाणादिनिश्चयापत्तेः, असत्त्वाविशेषात्, न च तत्र सत्त्व एवोपप्लवता, बोधादभिन्नत्वात्, तस्य चानुपप्लवत्वे नेष्टः, भिन्नसत्त्वेऽर्थापत्तिः। विशिष्टो बोध एवोपप्लव इति चेत्, तन्मात्रतत्त्वनीतौ कुतोऽस्य वैशिष्ट्यमित्युक्तप्रायम्, वक्ष्यते च स्वसंवेदनलक्षणे च बुद्धी सर्वथा बोधमात्रत्वात् अद्वयत्वादविशिष्टे बुद्धित्वेन तदन्यग्राहकबुद्धिशून्ये चेति प्रत्यक्षानुपलम्भाप्रवृत्तिरेव, नहि भिन्नकालभाविबुद्धिद्वयमन्वयविकलतयोपकारादिनिरपेक्षं तथाविधावयभावे तदितरावसायकमिति न स्वसंवेदनलक्षणयोरपि बुद्ध्योः कार्यकारणभावावसाये समुपायः। ततश्च सोऽनयोर्वस्तुत्वादविरोधीत्यज्ञाताभिधानम्, तत्पृष्ठभाविविकल्पज्ञानमपि तथाविधबीजाङ्कुरनिर्भासाभावेन भवन्नीत्याऽसम्भव्येव न ज्ञानहेतुरिति भावनीयम्। एवं च लोकप्रतीत्यनुसारतस्तु तथा व्यवहारायाभिधीयत इत्यपि वचनमात्रमेव, सर्वथा असतो लोकेऽप्यप्रतीतेः, तुच्छस्यानुभवविरोधात्, अकार्यकारणभूतस्य च तुच्छत्वात् व्यवहारस्य चार्थक्रियारूपत्वात् असतस्तादर्थ्यायोगादिति। असच्चन्द्रद्वयं प्रतीयत इति चेत्, असत्प्रतीयत इति च व्याहतम्, क तर्हि तत्सत्, ननु तत्प्रतीतौ, किमत्र मानम्, तदनुभव एव, तदसत्त्वे को दोषः, तदनुभवा-

भावः, कुतस्तर्हि तत्, स्वहेतुजातात्, किं पुनस्तदस्य, बोधादग्रविषयादि, कथं तर्हि भ्रान्तम्, अदृष्टाध्यारोपात्, यद्येवं नास्ति तत्त्वत इति चेत्, न, अध्यारोपग्रहणरूपतया भावादिति सती सनिबन्धना च सन्नीत्या सर्वलोकप्रतीतिः। असंश्च बीजाङ्कुरनिर्भासः, तत्त्वतोत्पत्त्याद्यसिद्धेरिति न बीजादङ्कुरस्य जन्मेति कारकव्यवस्था। एतेन ज्ञापकव्यवस्था प्रत्युक्ता, धूमादग्निप्रतिपत्त्ययोगात् अयं धूमोऽयमग्निरिति निर्भासाभावात्, तमन्तरेण च तथाप्रतीत्यनुपपत्तेः, अद्वयबोधमात्रस्य च गगनतलवर्त्यालोककल्पत्वादिति। एवं च यदाह न्यायवादी "बीजादङ्कुरजन्माग्नेर्धूमात्सिद्धिरितीदृशी। बाह्यार्थाश्रयिणी यापि कारकज्ञापकस्थितिः ॥ १ ॥ सापि तद्रूपनिर्भासास्तथा नियतसङ्गमाः। बुद्धीराश्रित्य कल्प्येत यदि किं वा विरुध्यते ॥ २ ॥" इत्यादि तदसाम्प्रतमिति दर्शितं भवति। इतश्च ज्ञापकस्थितिरयुक्ता धूमप्रतिभासकालेऽग्निप्रतिभासाभावात् तथासंवित्तेः पश्चाद्भावित्वात्, अनग्निप्रतिभासजोऽप्येवं धूमप्रतिभासः स्यात्, लिङ्गभूतस्यास्य न्यायतः पूर्वमग्निप्रतिभासासिद्धेः, तथाह्यन्तर्ज्ञेयवादिनोऽप्यनुमानकाले धूमप्रतिभास एव पूर्वमुत्पद्यते नाग्निप्रतिभासोऽनुमानाप्रवृत्तेः, अनुमेयस्यैव प्रत्यक्षत्वादिति पूर्वो नाग्निप्रतिभास एव, एवं च कार्यात् कारणगत्ययोगः। धूमप्रतिभासोऽग्निप्रतिभासहेतुस्ततस्तद्गतिरिति चेत्, न, व्यभिचारसम्भवात्, नावश्यं कारणानि तद्वन्ति भवन्तीत्यभ्युपगतत्वाद्व्यभिचाराच्च। स्यादेतद्धूमनिर्भासो न सर्वस्माज्ज्ञानादुत्पद्यते, किन्तु यद्विज्ञानमग्निनिर्भासस्य सन्तानपरिणामेनोत्पादनसमर्थं तत एव, नह्यग्निनिर्भासस्याकारणभूतं क्वचिद्धूमनिर्भासकारणत्वेन दृश्यते, महानसादावग्निनिर्भाससहितस्यैव धूमनिर्भासस्य समुपलम्भात्, एवं च नाग्निनिर्भास एव धूमनिर्भासकारणं किं तर्ह्यग्निनिर्भासजननसमर्थं निर्भासान्तरमप्येनदपि तत्समर्थमेव नान्यदिति, लिङ्गभूतधूमनिर्भासस्य पूर्वभाव्यनग्निनिर्भासादपि विशिष्टादुत्पत्तिः सफलैव, तथाहि यदाप्यनग्निनिर्भासानन्तरं धूमनिर्भासः संवेद्यते तदाप्यग्निनिर्भासजननसमर्थमालयाख्यमेव वि-

ज्ञानं धूमनिर्भासहेतुः, तस्मात्सन्तानपरिणामेनाग्निनिर्भासजननसमर्थाद्विज्ञानसन्तानादुत्पन्नो धूमनिर्भासः कारणभूतस्य विज्ञानसन्तानस्याग्निनिर्भासजननसामर्थ्यमनुमापयति । एवं च कार्यात्कारणमेवानुमितं भवति, धूमविज्ञानेन स्वोपादानपूर्वकं विज्ञानमग्निनिर्भासजननसमर्थमनुमापयतार्थतो भाव्यग्निनिर्भास एवानुमितो भवति, धूमनिर्भासस्य कारणभूतो ज्ञानसन्तान उत्तरोत्तरक्षणपरिणामेनाग्निनिर्भासस्य हेतुरित्येवमनुमानात् । एवं चार्थक्रियार्थिनोऽपि प्रवृत्तिरविरुद्धा, प्रतिबन्धकाभावे दाहपाकादिनिर्भासहेतुरग्निनिर्भासो भविष्यत्यत्रेत्येवमभिप्रायस्य प्रवृत्तेरिति । अत्रोच्यते यत्किञ्चिदेतत्, उपपत्तिविरोधात् लिङ्गभूतधूमनिर्भासस्यानग्निनिर्भासान्तरादप्युत्पत्तावग्निनिर्भासजन्यत्वनियमाभावात् अग्निनिर्भासजन्यस्वभावस्य सकृदप्यन्यतोऽभावात् भावे तत्स्वभावहानिः । एवं च शक्रमूर्ध्नोऽपि तद्भावानिरोधः तस्यानग्निनिर्भासवदग्नेरपि धूमजननस्वभावत्वात् । अनग्निनिर्भासोऽग्निनिर्भासजननसमर्थ इति चेत्, न, ततो धूमनिर्भासभावविरोधात् । नानन्तरमेवापि तु पारम्पर्येणेत्यविरोध इति चेत्, कुतः किं न परम्परयेत्यसमाधिरेषः । व्यवहारकालभाव्यत्र पारम्पर्यं न दीर्घतरमिति चेत्, शक्रमूर्ध्नोऽप्यग्निभावे सम्भवत्येवैतत्, कथं पुनरेतदेवमिति स्पष्टमभिधीयतामिति चेत्, तद्विकारतदन्याग्निनिर्भासोपपत्तेरुक्तमेवेति न शक्रमूर्द्धप्रतिभासजो धूमप्रतिभास एव, किं न, तथा संवेद्यमानोऽपि तत्त्वतो भ्रान्तिसंवेदनात्, किमन्यस्य तत्संवेदनाधिकं रूपम्, ननु विशिष्टहेतुजन्यत्वं, का पुनर्हेतोर्विशिष्टता, अग्निप्रतिभासजननसामर्थ्यम्, नहि न तत्तथा शक्रमूर्द्धप्रतिभासस्यापीत्युक्तम् । न च न तत्र नियमेनेति वक्तुं युक्तम्, इतरस्यापि तुल्यत्वात्, नहि प्रतिभासान्तरादपि धूमप्रतिभासोत्पत्तौ नियमतोऽग्निनिर्भासः, विध्यापितादौ क्वचिदसम्भवात्, न च प्रतिबन्धकाभावविशेषणान्न तुल्यत्वमिति युक्तं वचः, अस्येतरत्रापि वक्तुं शक्यत्वात्, तथाहि शक्रमूर्द्धप्रतिभासादपि धूमप्रतिभासोत्पत्तेः प्रतिबन्धकाभावे सत्युक्तवद्भवत्येवाग्निप्रतिभासः, तद्विकारादग्न्यन्तरस्याभवनस्यैव प्रतिबन्धकत्वात्, प्रतिबन्धग्रहणकाले न शक्रमूर्द्धप्रतिभासस्य ग्रहणमिति

अ०ज०
पताका०
॥ ५७ ॥

चेत्, समानमेवदनग्निप्रतिभासतस्तद्भावे, तत्प्रतिभासान्तरेण लोके तथा दर्शनात्, अन्यथा योगाद्व्यवहारासिद्धेरिति, अस्तुवाग्निप्रतिभासजननसमर्थादेव प्रतिभासान्तरादस्य जन्म, तथापि ततस्तत्सामर्थ्यतो भाव्यग्निप्रतिभासानुमानात् कारणात् कार्य्यावसायप्रसङ्गः। स्यादेतद्यतो धूमप्रतिभासस्ततोऽग्निप्रतिभासोऽपीति तत्त्वतो धूमप्रतिभासोऽग्निप्रतिभासेन सहैकसामग्र्यधीनस्ततोऽयं स्वकारणस्यैवाग्निप्रतिभासजननयोग्यतां नाम धर्ममनुमापयतीति कार्यादेव कारणानुमानम्, तद्योग्यताप्रतिपत्तिरेव च तत्त्वतोऽग्निप्रतिभासप्रतिपत्तिरिति न कारणात् कार्यानुमानापत्तिः। एतदप्यसत्प्रतीतिबाधितत्वात्, न वै धूमप्रतिभासादुक्तलक्षणात्कारणप्रतिपत्तिस्तथाननुभवात् तदुत्तरकालमेव क्वचिदग्निप्रतिभासानुभूतेः। न सा हेतुप्रतिभासस्य तथा योग्यतां विहायेति चेत्, अस्त्येतत्किन्त्वसौ नार्वाग्दर्शिना तथाऽवगन्तुं पार्य्यते, तथाप्रतीतेरवगमेऽपि बलात्कारणात्कार्य्यावसायप्रसङ्गः, तावत्क्षणव्यवहिताग्निप्रतिभासावधित्वात् तस्या इति। एवं चार्थक्रियार्थिनोऽपि प्रवृत्तिरविरुद्धा प्रतिबन्धकाभावे दाहपाकादिनिर्भासहेतुरग्निप्रतिभासो भविष्यत्यत्रेत्येवमभिप्रायस्य प्रवृत्तेरित्यपि वचनमात्रमेव, उक्तवत्कार्यानुमानव्यतिरेकेण तदप्रवृत्तेः, तथा कार्यानुमानसिद्धौ च तदनन्तरप्रतिभासस्यापि जलौदनादिरूपस्य तत एवानुमानप्रसङ्गः, प्रस्तुतधूमप्रतिभासहेतोस्तद्योग्यताया अपि भावात्, अभावे तद्भावविरोधात् सन्तानोच्छेदापत्तेः, तदभ्युपगमे च प्रतीतिबाधा। न तत्रार्थितादय इत्यप्रसङ्ग इति चेत्, वस्तुस्थितिस्तावदेवम्, अर्थितादयस्त्वितरत्रापि चिन्त्याः। बाह्याभावे स्वसंवेद्यक्षणिकज्ञानमात्रपक्षे तेषां दुर्घटत्वात्, किं वा न तेऽप्यज्ञानमत्रापराध्यति यदा पुनरुक्तवत्तद्योग्यतावगमसंभवस्तदा तेऽपि तदर्थितया पुंसामत्रोपनता इति प्रवर्त्तन्त एव, सातबहुलत्वाल्लोकस्य, न च कारणात् कार्य्यानुमानमपि न युक्तियुक्तमेव, प्रतिपच्चन्द्रेण पूर्णिमाचन्द्रानुमानसिद्धेः, वज्रासनादिविशिष्टज्ञानानुमानवद्व्यभिचारासंभवात्। एवं च सर्वमसमञ्जसमिति परिभाव्यतामेतत्। बाह्यान्वयिचित्रवस्तुभावे

चायमदोषः, लिङ्गप्रतिपत्तिकाले लिङ्गिन एव सत्त्वात्, छिन्नस्यापि विशिष्टस्योपपत्तेः, अग्निजन्यस्वभावत्वस्यापि धूमे भावात् तदाभासे चाभावात्, अन्यथा तदनुपपत्तेः शक्रमूर्द्धादिरप्यग्निजन्यत्वप्रसङ्गादिति चित्रस्वभावता धूमस्य, धूममात्रप्रतिभासजननस्वभावाधिकस्वभावभावात्, अन्यथा तत्प्रतिभासाविशेषात्, तन्मात्रादुत्पत्तेः तत्तदाभासावसायाभाव इति । अस्ति चायमाविद्वदङ्गनादिसिद्धो विशिष्टार्थग्रहणस्वभावसंवेदनात्, बाह्यार्थगोचरः, स्वनिवृत्त्यपरोत्पत्तिद्वयनिष्पादनैकस्वभावत्वे च तच्चित्रतापत्त्या वस्त्वन्वयानुसारी फलभावात् चित्रक्षयोपशमसमुद्भूतचित्रज्ञानसंवेद्य इति परिभाव्यतामेतत् । आदैवमपि तत्तदाभासविशेषो दुष्परिज्ञान एव उभयत्र धूमवेदनात्, उच्यतेऽस्ति तावदसौ परिज्ञाने तु यत्नः कार्यो नाविवेचितं लिङ्गिनं गमयति न चायमसम्भवीति, कार्यकारणभावस्य सर्वत्र नियतत्वात्, अन्यथा तदनुपपत्तेः, एवमपि नो दोषभाव एव अनग्नेर्धूमवदधूमाद् धूमज्ञानाविरोधादिति शक्रमूर्द्धनि धूमासिद्धेः । अधूमान्न जातु चिद्धूमज्ञानमिति चेत्, न, बाष्पादौ भावात् तथा लोकप्रतीतेः तस्य तदाभासत्वे शक्रमूर्द्धधूमेऽपि समानः प्रसङ्गः उत्पातजत्वेन तस्याप्यधूमत्वादिति नियत एव कार्यकारणभावोऽभ्युपगन्तव्यः, तथा च सति बाष्पादौ तदितरविशेषपरिज्ञानवच्छक्रमूर्द्धधूमादावपि तत्सम्भवादुक्तदोषाभाव इति बाह्यभाव एव ज्ञापकस्थितिः नान्तर्ज्ञेयभावे, उक्तवद्योगात् । एतेन स्वभावानुपलब्ध्योरपि ज्ञापकत्वं व्युदस्तम्, नहि स्वभावाख्यमपि लिङ्गमप्रावहिस्सत्ताकमद्वयबोधमात्रतया ज्ञापकत्वायालं, ज्ञाप्यस्यातदात्मकत्वाच्च, नहि कृतकत्वादिज्ञानमनित्यत्वादिज्ञानात्मकं, तथाऽननुभवात्, अनात्मभूतज्ञानान्तरगमकत्वे च स्वभावहानिः । तद्धि कारणभूतं वा गम्येत कार्यभूतं वेत्युभयथापि न युक्तियुक्तं स्वभावत्वम्, नियमतो भेदात्, एवं केवलभूतलादिज्ञानादपि घटाभावज्ञानादौ योजना कार्येति लिङ्गान्तरत्वाभावः भवन्नीत्या तत्त्वतस्तथाननुभूतेः इति, एवं च यदिदमाशङ्क्य " अनग्निजन्यो धूमः स्यात् तत्कार्यात्कारणे गतिः । न स्यात् कारणतायां वा कुत एकान्ततो गतिः ॥ ? ॥ तथापि धूमाभासा धीः

प्रबोधपटुवासनाम् । जनयेदग्निनिर्भासां धियमेव न पावकम् ॥ २ ॥ तद्योगवासनागर्भ एवं धूमावभासिनीम् । व्यनक्ति चित्तसन्तानो धियं धूमोऽग्नितस्ततः ॥ ३ ॥ " इत्यादि वार्तिककारेणोक्तं तदुक्तिमात्रमेव, उक्तवद्योगादिति । अन्यस्त्वाह संव्यवहारार्थमनुमानलक्षणप्ररूपणं स चोक्तस्वरूपात्ततः सिद्ध्यत्येव, अन्यथा तदसिद्धेः, परमार्थतस्त्वद्वयं बोधमात्रं तत्त्वमिति नानुमानानुमेयव्यवस्था, एतदप्यसत्, विचाराक्षमत्वात्, तथाहि कोऽयं संव्यवहारः, अन्यतोऽन्यप्रतिपत्तिः, यद्येवं कथमद्वयं बोधमात्रं तत्त्वम् । न सा परमार्थत इति नास्त्येवम् । तर्हि किं तदर्थमनुमानलक्षणप्ररूपणया । अथ साप्यसती, कथं शास्त्रप्रणयनम्, तदप्यसदेवेति, तदिदं विहारकक्षाप्रवेशनमित्यलमत्र निर्बन्धेन । किं चाद्वये बोधमात्रे तत्त्वे न भवापवर्गविशेष इति न युक्ता तत्तत्त्वकल्पना, कथं न विशेषः ग्राह्यादिप्रपञ्चवतो भवत्वात् तद्रहितस्य चापवर्गत्वादिति, न, अद्वये बोधमात्रे ग्राह्यादिप्रपञ्चाभावात्, भावे वाऽद्वयत्वविरोधात् निमित्तासिद्धेश्च, तथाहि किमस्य निमित्तं अनिमित्तत्वेऽभावप्रसङ्गः बोधमात्रनिमित्तत्वे सदापत्तिः, अविद्यानिमित्तमिति चेत्, बाह्यार्थसिद्धेः । बोधमात्रमेवाविद्येति चेत्, ननूक्तो दोषः । क्लिष्टं तदेव सेति चेत्, कुतः क्लिष्टत्वम् । स्वभावत एवेति चेत्, न, ततः अबोधक्षणस्येव ततोऽक्लिष्टस्यानुदयात्, अक्लिष्टश्चासौ शुद्धः स चायुक्तः, ततः सङ्क्लेशमात्रतत्वात् तद्धि स्वस्वभावेनाजनयज्जनकधर्मतामतिपतति जनयच्च तेन भिन्नजातीयम्, नहि शुद्धबोधमात्रादशुद्धबोधजन्म, तत्तत् स्वभावनियमात्, न नीलाच्छुक्लोदयवददोषः, तन्मात्रान्नीलान्तरवत्तदसिद्धेः, शक्त्यन्तरोपादानं हि तदिष्यते, " कस्यचित्किञ्चिदेवान्तर्वासनायाः प्रबोधकम् । ततोधियां विनियमो न बाह्यार्थव्यपेक्षया ॥ १ ॥ " इत्यादिवचनात्, न चात्रोपादाननिमित्तभावो ज्यायान् कस्यचित् क्वचित् सहकारित्वायोगादिति निर्लोठितं प्रपञ्चेन । अनन्तरविज्ञानशक्तिपक्षे तु न नीलाच्छुक्लजन्म तथाऽनुभवभावेऽपि सम्यायायोगात्, हेत्वभेदे फलभेदानुपपत्तेः, अन्यथातिप्रसङ्गात्, नीलाच्छुक्लवच्छुद्धादप्यशुद्धजन्मानिषेधात्, न शुद्धोऽशुद्धजननस्वभावः, इतर इतरजननस्वभावः कथं, सर्वथा सङ्क्लेशनिवृत्तेः

शुद्धबोधेऽपि तुल्यैवेयं कथं भूयस्तद्भाव एव माभवत्विति निषिध्यते। इत्थं चैतदङ्गीकर्त्तव्यमन्यथा यस्य सर्वथा निवृत्तिस्त- स्यानन्तरं तत्सदृशेनैव भवितव्यमित्युक्तदोषानतिवृत्तिरेव। किञ्चाद्वये बोधमात्रे तत्त्वे सङ्क्लिष्टो सङ्क्लिष्टश्च बोध इत्येतदेवा- सम्भव्यन्यत्र वचनमात्रात् उभयत्र बोधमात्रभावात्, अन्यथा तत्तत्त्वासिद्धेः तद्व्यतिरिक्तस्य चाभावाद्बोधभेदमात्रस्याप्रयो- जकत्वात्, तस्मिन् सत्यपि जातिभेदायोगात् शुद्धबोधभेदेषु तदनुपपत्तेः, एवमपि तदङ्गीकरणे इष्टबाधा बुद्धबोधानामपि क्लिष्टेतरत्वप्रसङ्गात्, तेषामपि मिथो भेदात्, तन्मात्रस्य च तद्भावहेतुत्वात्, अन्यथाधिकभावसिद्धिः क्लिष्टो बोध इति क्ले- शस्य बोधविशेषणत्वात्, असतो विशेषणत्वायोगात् अतिप्रसङ्गात्। तदितरत्राप्यविशिष्टत्वात्, तथाहि बोधोबोध इति तत्त्वे क्लेशाभाव उभयत्राविशिष्ट एवेति, न च निरंशं तत्त्वमिति तत्त्वतो न विशेषणविशेष्यभावः, क्लिष्टो बोध इति तत्त्वानुपपत्तेः निरंशस्यैकस्वभावत्वात् तस्य च बोध एवोपयोगात्, अन्यथा तद्बोधतापत्तेः क्लिष्ट इति शब्दहेत्वभावात् तत्त्वतस्तत्त्वत्वा- विशेषादिति यथोदिततत्त्वानुपपत्तिः। एतेन यदुच्यते तदेवाद्वयबोधमात्रं तथास्वभावत्वात् तथावभासमानं ग्राह्यादिरूपत्वा- द्विकल्पात्मकत्वात्क्लिष्टो बोध उच्यत इत्यादि, तदपि प्रतिक्षिप्तम्, अद्वयस्य निरंशत्वात्, असतश्चाननुभवादिति कर्मलक्षण एव क्लेशोऽस्तु, सत्यस्मिन्नपरिकल्पिते तद्योगात् क्लिष्टता तद्वियोगाच्च परमार्थत एव शुद्धिरित्युपपद्यते भवापवर्गविशेषो नान्यथा। एवं च तस्य कर्मणः सत्त्वादचेतनत्वाद्बाह्यसिद्धिरेवेत्यलं प्रसङ्गेन। इतश्च बाह्यप्रतिक्षेपोऽयुक्तः, आप्तवचनविरोधात्, "सञ्चितालम्बनाः पञ्च विज्ञानकाया" इति वचनप्रामाण्यात् बाह्यसञ्चयस्येष्टत्वात्, आलम्बनत्वेन तद्वस्तुत्वसिद्धेः, वि- ज्ञानजनकत्वात्, अवस्तुनो जनकत्वायोगात् उक्तवत्तद्भावाविरोधाच्च, तथाहि तन्नैरन्तर्यावस्थानमेव तेषां तथास्वभावतया कथञ्चिदपृथग्भूततथाविधैकपरिणामवत्समूह इत्युक्तं समूहः सञ्चय इति चानर्थान्तरमेव, न चेदं गम्भीरदेशनायोग्यतापादनाय विनेयानुगुण्यत उक्तमिति युक्तम्, प्रमाणाभावात्, तद्विवक्षाया अप्रत्यक्षत्वात् तथानुभवाभावात् तथापि तत्कल्पनेतिप्रसङ्गा-

अ०ज० पताका० ॥ ५९ ॥

दिति । न च "चित्तमात्रं भो जिनपुत्र यदेतत् त्रैधातुकम्" इत्यादिबाधकं वचनमेव प्रमाणमत्र, तदनाप्ततासेः विरुद्धार्थाभिधानात् तुल्ययोगक्षेमत्वात् अस्यैवान्यार्थत्वादिति, तथाहीदमेव युक्तं यदास्थानिवृत्त्यर्थमस्य संयोगवियोगाभ्यां हर्षादिकरणेन सङ्कल्पमात्ररमणीयताकथनम्, अन्यथा बाह्याभावेन दानपारमितादीनां तन्निबन्धनगुणानामभावः तदभावाच्च तस्यैव भगवतोऽभावप्रसङ्गः, न च विज्ञानमात्रसम्पादनीया एव ते, लोके तथाऽदर्शनात् दानादिज्ञानभावेऽपि परप्रीत्याद्यभावादतः शून्यतावचनवन्न्यायबाधितत्वात् प्रमाणाभावाज्जातियुक्तियोगात् त्रैधातुकास्थानिवृत्त्यर्थमेवैतदिति युक्तमेवं चाप्तवचनतोऽपि सिद्धे बाह्येऽर्थे व्यवस्थितं सदसदादित्वं घटस्य । यच्चोक्तं विरोधिधर्माध्यासितस्वरूपत्वाद्वस्तुनोऽनेकान्तवादिनो मुक्त्यभावप्रसङ्गः इति, एतदपि मूर्खमक्षिकया मुक्तिमार्गमनालोच्यैवोक्तमिति, उक्तवत्सत्त्वानित्यत्वादीनां विरोधित्वासिद्धेः, अन्यथा वस्त्वभावप्रसङ्गात् । किञ्च तथाभूतवस्त्वभावे सत्येकान्तवादिन एव मुक्त्यभावप्रसङ्गः, तथाहि यदि तदात्माङ्गनाभवनमणिकनकधनधान्यादिकमेकान्तेनैवानात्मकत्वादिधर्मयुक्तं भावनालम्बनमिष्यते, हन्त तर्हि सर्वथानात्मकत्वाद्भावकभाव्याभावात् तत्परिज्ञानोत्तरकालभाविभावनाभावतः कुतः कस्य वा दोषप्रहाणमिति कथ्यतामिदम् । स्यादेतत्परपरिकल्पिताविचालितैकस्वभावाऽऽत्मापेक्षया तदनात्मकमभ्युपगम्यते, न पुनः प्रतिक्षणनश्वरात्मापेक्षयेति, एतदप्यसारं, विकल्पानुपपत्तेः, तथाहि तत्कथञ्चित् प्रतिक्षणनश्वरं स्यात् सर्वथा वा, यदि कथञ्चिदर्हन्मतानुवाद एव । तथा चोक्तमर्हन्मतानुसारिभिः "सर्वव्यक्तिषु नियतं क्षणेक्षणेऽन्यत्वमथ च न विशेषः । सत्योश्चित्यपचित्योराकृतिजातिव्यवस्थानात्" इत्यादि । अथ सर्वथा, हन्त तर्ह्यैहिकामुष्मिकसकललोकसंव्यवहाराभावप्रसङ्गः, तथाहि प्रतिक्षणनिरन्वयनश्वरत्वे सत्यात्मादिवस्तुनः ग्राह्यग्राहकभावस्मरणप्रत्यभिज्ञानकुतूहलविरमणाद्याविष्टाङ्गनादिप्रतीतमपि नोपपद्यते, नहि ग्राह्यार्थतद्ग्राहकसंवेदनयोः कथञ्चिदपि तुल्यकालताभ्युपगम्यते तयोर्हेतुफलभावाभ्युपगमात् । उक्तं च "ग्राह्यतां विदुर्हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम्"

इति, एवं च सति ग्राह्यार्थाभाव एव ग्राहकसंवेदनप्रसूतेस्तदभावभाविन्वात् कुतस्तस्य तद्ग्राहकत्वमितरस्य च तद्ग्राह्यत्वमित्यादाय युक्तिप्रदीपं निरस्कृत्य स्वदर्शनाभिनिवेशतिमिरं निभाल्यतामेतदिति । आकारार्पणक्षमत्वमपि तस्याऽनिश्चितमेव, न यतोऽनन्तरातीतविषयाकारमेतत्संवेदनमिति विनिश्चेतुं शक्यते, तस्याग्रहणात् तदानीमसत्त्वादिति तदाकारमेतदतदाकारं न भवतीत्यवगमानुपपत्तिः । संवेद्यमानादेव संवेदनाकारात्तदाकारत्वावगम इति चेत्, तथाहि न यद्यदाकारं न भवति तत्तद्ग्राहकं भवति, पीताकारमिव नीलस्य, तद्ग्राहकं चैतदिति कथं तदवगमानुपपत्तिः, इत्येतदप्ययुक्तम्, अविचारितमरणीयत्वात्, तन्प्रत्यक्षतानुपपत्तेः अनुमीयमानत्वात्, न चानुमीयमानतापि एवं विधाविनाभावव्यवस्थाकारिणः क्षणद्वयग्राहिणो विज्ञानस्याभावात् क्षणिकत्वविरोधात् कारणविज्ञानबोधान्वयव्यतिरेकेण कार्यविज्ञाने तद्वैशिष्ट्यायोगात् अतिप्रसङ्गादिति । स्यादेतत्समानकालयोरेव ग्राह्यग्राहकभावः, तथाहि स्वहेतुभ्यएव तद्विज्ञानं विशिष्टसमानकालभाविभावग्राहकस्वभावं भावोऽपि तद्ग्राह्यस्वभाव एवोत्पद्यत इति यथोक्तदोषानुपपत्तिः, न, तयोस्तादात्म्यतदुत्पत्त्यनुपपत्तेः प्रतिबन्धाभावात् । स्यादेतत्, एकसामग्र्यधीनत्वादुभयोर्वस्तुतस्तदुत्पत्तिलक्षण एव प्रतिबन्धः, तथाहि स्वकार्यसाधनप्रवृत्तग्राह्यनिमित्तस्वोपादानजन्यं विज्ञानमेवं स्वकार्यसाधनप्रवृत्तसमनन्तरविज्ञाननिमित्तस्वोपादानजन्यं च ग्राह्यमिति कथं न प्रतिबन्ध इति, उच्यते ग्राह्यग्राहकयोर्मिथो हेतुहेतुमद्भावाभावः, तदुत्पत्त्यसिद्धेः, उक्तवदन्योऽन्यमनुपकारित्वेन निमित्ततानुपपत्तेश्च । ग्राह्यग्राहकभावलक्षण एव तयोः प्रतिबन्ध इति चेत्, नास्य धर्मकीर्त्तिनानङ्गीकृतत्वात् । किं तेन,मयाङ्गीकृतो न्याय्यत्वादिति चेत्, अङ्गीक्रियतां तर्हि कथञ्चित्तत्स्थैर्यमप्यनुभवन्यायसम्पन्नत्वात्, अन्यथा क्षणिकत्वाद्यधिगति विरोधात्, न ह्येकान्तेन क्षणस्थितिधर्मणा विज्ञानेनोपलब्धोऽपि भावः क्षणिकोऽयमिति गम्यते, तदनु तेन तद्भावानवगमात् तमन्तरेणापि तद्गतावतिप्रसङ्गः शङ्खपीतज्ञानवदतथाभूतादपि ततः कुतश्चिन्निमित्तात्तत्तथाभूतभावाविरोधात्, तत्प्रतीत्य भवतः तत्त्वतस्तदुपकारानपेक्षिणस्तद्भावाभावावि-

क्षेपेण नित्यादपि तज्ज्ञानसिद्धेः। भावोऽपि नावगम्यत इति चेत्, को वा किमाह। आत्मानुमानतः क्षणिकताधिगतिरिति चेत्, न आत्माभावे तस्याप्यप्रवृत्तेरित्यलं प्रसङ्गेन विजृम्भितमेवात्रास्मत्स्वयूथ्यैरिति। स्मरणाद्यसम्भवस्तु प्रतिक्षणं निरन्वयनश्वरत्वे सति वस्तुनः सुभाव्य एव, नह्यन्येनान्यस्मिन्ननुभूतेऽन्यस्यान्योपलब्धौ स्मरणप्रत्यभिज्ञानादयो युज्यन्त इत्येवमैहिकसकललोकसंव्यवहाराभाव इति स्थितम्। आमुष्मिकव्यवहारस्तु सुतरामसङ्गतः कृतनाशाकृताभ्यागमप्रसङ्गात्, तथाहि यः कुशले प्रवर्त्तते स तदैव सर्वथा विनश्यति, कुशलमपि च कर्मात्मलाभसमनन्तरमेव निरन्वयमपैत्यतः कृतनाशः क्षणान्तरस्य चिरनष्टात् कर्मणः पुनरायत्यां फलोदयाभ्युपगमे सत्यकृताभ्यागम इति न चैतद्युक्तियुक्तम्। तथा मुक्तिरपि प्राणिनामसङ्गतैव, तथाहि तीव्रतरवेदनानिर्विण्णः शरीरी संसारविमुखया प्रज्ञया विभावितसंसारदोषो निरास्थो जिहासुर्भवमुपादित्सुर्निर्वाणं रागादिक्लेशपक्षविक्षोभदक्षमामुखीकृत्य मार्गममलं क्रमेणावदायमानचित्तसन्ततिर्निरतिशयपेशलरसामास्वादयति निर्वृतिमिति न्यायः, अयं च प्रतिक्षणनिरन्वयनश्वरत्वे सत्यात्मादिवस्तुनो न घटामुपैति, तथाह्यन्य एव दुःखैः सांसारिकैः पीड्यतेऽन्यश्च निर्विद्यतेऽन्यस्य च विरागमुक्ती इत्यतोऽशोभनमेतदतिप्रसङ्गात्, एवमामुष्मिकव्यवहारोऽप्यसङ्गत इति स्थितम्। स्यादेतद्विशिष्टकार्य्यकारणभावनिबन्धनस्सर्व एवायमैहिकामुष्मिकव्यवहारः, तथाहि विशिष्टां रूपादिसामग्रीं प्रतीत्य विशिष्टमेव संवेदनमुपजायते ततश्च तदेव तस्य ग्राहकमभिधीयते न पुनरन्यदतिप्रसङ्गात्, एवं स्मरणाद्यपि भावनीयमिति, कृतनाशाकृताभ्यागमप्रसङ्गोऽप्यत्रानवकाश एव, क्षणभेदेऽप्युपादानोपादेयभावेनैकस्यामेव सन्ततावाहितसामर्थ्यस्य कर्मणः फलदानात्, अतो य एव सन्तानः कर्त्ता स एवोपभोक्तेति, तथाहि यः कुशले प्रवर्त्तते स यद्यपि तदैव सर्वथा विनश्यति तथापि निरुध्यमानः स्वानुरूपकार्योत्पादनसमर्थं सामर्थ्यं विज्ञानसन्ततावाधाय निरुध्यते यतः सामर्थ्यविशेषादुत्तरोत्तरक्षणपरिणामेन कालान्तरपरिणामसञ्जातवासनापरिपाकात्मकारिप्रत्ययसमवधानोपनीतप्रबोधात् फलमिष्टमनिष्टं चोपजायते ततो न यथोक्तदोषः। प्रतीत-

ऽयमर्थः, तथाहि रसायनादिभिः प्रथमोपनिपातवेलायामाहितो विशेषो देहतदुत्तरोत्तरावस्थाभेदोपजननेन पश्चाद्देहाद्यतिशयस्य बलमेधारोग्यादेर्निष्पादकः, तथा लाक्षारसनिषेकोपनीतसामर्थ्यं मातुलिङ्गकुसुममुत्तरोत्तरविशेषोपजननेन फलोदरान्तर्वर्त्तिनः केशरस्य रक्तता हेतुर्भवत्येवेति दृष्टत्वान्मुच्यतामभिनिवेशवैशसम् । यच्चोक्तम् मुक्तिरपि प्राणिनामसंगतैवेत्यादि यावदयं च प्रतिक्षणनिरन्वयनश्वरत्वे सत्यात्मादिवस्तुनो न घटामुपैतीति, तदप्ययुक्तम्, प्रतिक्षणनिरन्वयनश्वरात्मपक्ष एव युज्यमानत्वात्, तथाहि नैरात्म्यवादिनः क्षणिकाः पदार्थाः यथाहेतुसन्निधानं विक्रियामात्मसात्कुर्वाणास्समुपरोधहेतुभिर्यदा पीड्यन्ते दुःखविशेषाध्यासितोत्तरक्षणोत्पत्तितस्ततस्ते निर्विघ्नुक्तोत्तरोत्तरक्षणसमुत्पादान्निर्विण्णास्तदुत्तरोत्तरश्रुतभावनादिना क्लिष्टानेकक्षणपरम्परोत्पादेन दानदमसंयमाद्यनेकप्रकारशुभकर्माध्यासाद्रागादिबीजोन्मूलनसमर्थमार्गभावनातः प्रतिकलमवदायमानविशुद्धपर्य्यन्तवर्त्तिक्षणोत्पादाधिगतविमुक्तयः कथ्यन्त इत्यनवद्यम्, अन्यथात्मनो व्यवस्थितत्वात् वेदनाभावाद्भावेऽपि विकारान्तराभावात्प्रतिपक्षाभ्यासेनाप्यनाधेयातिशयत्वाच्च मुक्त्यसम्भवः, इत्येतदपि तत्त्वापरिज्ञानविजृम्भितमेव, भवत्पक्षे कार्यकारणभावस्यैवायोगात् अयोगश्च विकल्पानुपपत्तेः, तथाहि तत्कार्यमुत्पद्यमानं नष्टाद्वा हेतुत उत्पद्येतानष्टाद्वा नष्टानष्टाद्वेति, कारणमप्यनेकमेकस्वभावस्य कार्य्यस्य जनकं भवेत्, यद्वाऽनेकस्वभावस्य, अथवैकमेकस्वभावस्य, यदि वानेकस्वभावस्येति सर्वथापि दोषः तथाहि न नष्टादुत्पद्यते, तस्य तदानीमसत्त्वात् तदहेतुकत्वापत्तेः सदाभावाभावप्रसङ्गात्, नाप्यनष्टात् कार्यकारणयोर्योगपद्यापत्तेः, सव्येतरगोविषाणादिषु तदनभ्युपगमात्, अभ्युपगमे च प्रतीतिविरोधात् । नापि नष्टानष्टात्, नियोगतो विरोधापत्तेः, तस्यैव तथाभवनायोगात् योगेऽप्यभ्युपगमप्रकोपादिति । अथ तुलोन्नामावनामवद्धेतुविनाशकाले कार्योत्पादान्नायं दोष इति समाधिरास्थीयते, तत्रापि वक्तव्यम्, कोऽयं हेतुविनाशः किं हेतुस्वभाव एव, यथाहुः “ क्षणस्थितिधर्मा भाव एव नाश इति ” किं वा हेतुमत्यस्तमयः । यथाहुः “ न भवत्येव केवलम् ” किञ्चातः यदि हेतुस्वभावः सैव हेतुफलयोर्यौग-

अ०ज०
पताका०
॥ ६१ ॥

पद्यापत्तिः तन्नाशोत्पादयोरेव तत्त्वात्, तयोश्चायौगपद्याभ्युपगमात् । अथ हेतुप्रत्ययस्तमयः न तस्य कार्योत्पादसमानकालता, निः स्वभावत्वेन कादाचित्कत्वायोगात्, तत्त्वे वा, सहेतुत्ववस्तुत्वप्रसङ्गादिति । स्यादेतद्द्वितीये क्षणे कार्यस्य सत्तोत्पादात्मिका प्रथमे तु कारणं जातं तच्चाविनष्टमेव तदा स हि तस्य स्वसत्तायाः कालः क्षणभावित्वात् तु तत्फलकाले निवर्त्तते, अनु-वृत्तावपि तस्य नैरर्थक्यं निष्पत्तेस्तदानीं कार्यस्य, तदित्थं कारणक्षणानन्तरभावित्वात् कार्यस्य अविनष्टाच्च हेतोरुत्पादो न च यौगपद्यप्रसङ्गः, इत्येतदप्यचारु, स्वतन्त्रविरोधात् कारणभावाविच्छेदित्वेन कार्यभावस्यान्वयापत्तेः भावाविच्छेदस्या-न्वयत्वात् तस्य चेत्थमङ्गीकरणात्, सदैव भावाभावाभावादिति । कारणभावादन्य एव कार्यभाव इति चेत्, न, एकान्ते-नान्यत्वासिद्धेः तत्त्वतो भेदकाभावात् तदतिरिक्तक्षणानभ्युपगमात् अभ्युपगमे तदक्षणिकत्वप्रसङ्गात् तस्याप्यपरक्षणानुपपत्तेः अनवस्थाप्रसङ्गात्, अप्रसङ्गेऽपि तद्भावाभेदकत्वेनान्वयापत्तेः उभयत्र भावाविशेषादिति । आकारादिभेदादविशेषासिद्धिरिति चेत्, न, तद्भावभेदाभावात् तथानुभवसिद्धत्वात्, अन्यथाऽन्यतराभावापत्तेः तदात्मनापि विशेषात् तत्तथाऽभावेन तदद-त्त्वाच्चेति । स्यादेतद्धेत्वनिवृत्तिपक्षे तत्तादवस्थ्येन हेतुफलभावानुपपत्तेः निवृत्त्यनिवृत्तिपक्षस्य विरुद्धत्वात् तन्निवृत्तावेव तदनन्तरभावित्वेन तद्भावसिद्धेः गत्यन्तराभावादिति, न, अनेकदोषप्रसङ्गात्, तन्निवृत्तावेव तदनन्तरभावित्वे तस्य परमार्थतो-ऽसत एव सद्भावापत्तिः अपरस्य तथाभाविनोऽभावात्, सा चायुक्ता निरुपाख्यस्य खरविषाणादेरिव जन्मार्थविशेषायोगात्, अन्यथा सर्व एवासन्तो यतः कुतश्चिज्जन्मासादयेयुरिति हेतुफलनियमो न भवेत् । स्यादेतत्प्रतिनियतशक्तयो हि भावास्तेभ्यः कुतश्चित्किंचिदेवोत्पद्यते न सर्वमसत्त्वाविशेषेऽपीति, तदयुक्तम्, यदि हि कार्यैः संश्लिष्टमूर्त्तयः प्रत्ययाः स्युस्तदा तेषां प्रतिनि-यतकार्यसम्बन्धभावात् तस्मिन् कार्ये शक्तिनियमः स्यात् न चैतदेवं, सतोऽसता संश्लेषायोगात्, तस्मान्निरवधिकमेव सामर्थ्य-मवस्थितमिति सर्वतः सर्वस्योत्पत्तिप्रसङ्गो दुर्निवारः । स्यादेतन्न दुर्निवारः सामर्थ्यप्रतिनियमवर्मितेषु भावेषु तदप्रवृत्तेः,

यदेव हि यदुत्पादने शक्तं तत एव तदुत्पादो नान्यतः, सा च तस्य सामर्थ्यप्रतिनियतिः स्वहेतोः तस्याप्यात्मनिमित्तादित्य-नादित्वात् कार्यकारणपरम्परया नानवस्थापीष्टबाधिका, आदौहि परिकल्प्यमाने तस्याहेतुकत्वं स्यात्, तच्चायुक्तम्, नित्यं सदसत्त्वापत्तेरत एव न कार्य्यश्लेषाभावतः कारणस्य निरवधिकसामर्थ्यदोषः हेतुपरम्परातस्तस्यैव तथास्वभावत्वादिति। किञ्च कारणस्य कार्य्यस्वभावबियोगादेव कारणत्वव्यवस्थितिः, यदि हि कार्यस्वभावसंबद्धं कारणं भवेत् तदा कार्य्यमपि कारणवन्निष्पन्नमेवेति किं कुर्व्वत् कारणम्। किञ्च क्रियमाणं कार्यमिति व्यतिरिक्तावधित्रिकलमेवोक्तवद्विशिष्टं तत्सामर्थ्यमिति यथोक्तदोषाभावः, एतदप्यसमीचीनम्, प्रलापमात्रत्वात् तथा हि यदेव यदुत्पादने शक्तं तत एव तदुपादो नान्यत इत्यत्र न सामर्थ्यप्रतिनियतिस्तदतिरेकेण, अपितु तत्सत्तामात्रम्, तच्च सर्वासतामविशिष्टमिति कथं ततस्तस्यैवोत्पादः। तस्यैव तथास्व-भावत्वादिति चेत्, असत्तामात्रगोचरमिदमस्याकारणवत्सलत्वं न तदविशेषे विशेषप्रवृत्त्येदमपनेतुं न्याय्यम्। असतः को विशेष इति चेत्, वयमप्येतदेव ब्रूम इत्यनुपालम्भ एषोऽस्मद्विधानाम्। तत्तथास्वभावत्वविभवप्रतिनियमाददोष इति चेत्, भवत्यदोषो यस्य कस्यचिदसतः तत्सम्पादनेन नियमतत्सम्पादनं तु तद्विशेषाधायीति तद्विशेषत्वादेव न सर्वथा तदसत्त्व-मिति परिचिन्त्यतामेतत्। एवं च निरवधिकसामर्थ्यदोषस्तदवस्थ एव, सति हि बीजादिसत्ताकालेऽङ्कुरादीनां तथा भाविनापि रूपेण सर्वथाऽसत्त्वादङ्कुरादिप्रतिनियतशक्तीदं कारणमित्येवं सावधिकः सामर्थ्यनियमो नास्तीत्ययमर्थोऽस्माभि-र्विवक्षितः स चापरिहृतएव सर्वथा प्रतियोग्यभावादिति। स्यादेतदङ्कुरादौ यत्सामर्थ्यमुदितं बीजादेस्तत्तदा विशेषतो व्यपदेष्टु मशक्यम्, अवध्यनिष्पत्तेः तत्र तु तत्सिद्धमेव यतोऽनन्तरमङ्कुराद्युत्पत्तिः सति च तादृशि वस्तुनि तथा व्यपदेशनिवृत्तावपि न किञ्चिद्व्याहन्यते, नहि नामायत्ता वस्तूत्पत्तिस्तस्याप्रयोजकत्वात्, इत्येतदप्ययुक्तम्, तत्त्वतो विहितोत्तरत्वात्, तथाहि न

बीजादावुदितसामर्थ्यं तदतिरेकेण, अपि तु तत्सत्तामात्रमिति तदेवावर्त्तते, नचाङ्कुरादौ सामर्थ्यमिति तदा परिज्ञानोपायः सर्वासद्विविक्ततत्सत्तामात्रावेदनात्, न च तत् तत्स्वभावतया तदुपलम्भ एव, सर्वथाऽप्यभावे तत्तत्स्वभावतासिद्धेः, न च स्वहेतुसामर्थ्यतस्तत्सिद्धिः, तत्राप्युक्तदोषानतिवृत्तेः न च तत्रापि स्वहेतुसामर्थ्यमेव परिहारः, तुल्यदोषतयोपघातात्, न चानादिहेतुपरम्परोपघातत्राणम्, अतएव हेतोः, प्रमाणानुपपत्तेश्च, तस्मान्न तत्तथाभावसङ्गतान्तर्योग्यतां विहायापरस्तत्परिज्ञानोपायः, न विशिष्टं सामर्थ्यं न हेतुफलभावनियमः सर्वथाऽसदुत्पद्यत इति भ्रान्त्या न कश्चिद्व्यवस्थासिद्धिरिति । स्यादेतन्न चैकाचिदुत्पत्तिर्भावव्यतिरिक्तास्ति यामाविशदसदुत्पद्यते इत्युच्यते, किन्तु कुतश्चिद्वस्तुनोऽनन्तरं कस्यचिद्वस्तुनो नियमवतः सत्ता सैव तदात्मिकोत्पत्तिरभिधीयते, नत्वियं केनचित्सम्बद्धा सा च प्राग्नासीदित्यसदुत्पद्यत इति व्यवह्रियते न पुनरसतोऽवस्थान्तरावेशस्तादिति, अत्रोच्यते, यत्किञ्चिदेतदविचारितरमणीयत्वात्, तथाहि नोत्पत्तिर्भावव्यतिरिक्ता नचासौ गर्भवत्कारणान्निष्क्रामति नवाऽम्बरतलात्पतति न चास्ति सर्वथा प्राक् न चासत्सद्भवति भवति च कस्यचिदनन्तरं मरणसमयएवास्य रहितस्तदन्वयेन तत्सामर्थ्यमभवो नियमवांश्चेति कोन्वस्वमायमान इत्थं भाषते अबोधग्रहगृहीताच्चापरोऽनुवर्त्तीत्यपकर्ण्यमेतत् । आहैवमपि पारिशेष्यानाश्रयणे हेतुफलभावोच्छेददोषोऽनिवारितप्रसरः हेतुनिवृत्तिपक्षे तत्तादवस्थ्यात् निवृत्त्यनिवृत्तिपक्षस्य च विरुद्धत्वादिति, न, निवृत्त्यनिवृत्तिपक्षे विरोधासिद्धेः तस्यैव तथाभवनात् ॥ स्यादेतत्तथाभवनमित्यन्यथाभवनमेतच्च शब्दार्थाननुमतं तदेवान्यथाभवतीति, यदि तदेव कथमन्यथा भवत्यन्यथा चेद्भवति कथं तदेवेति, उच्यते कथञ्चिदन्यथा भवनाददोषः, तदतादवस्थ्योपलब्धेः, मृदाद्यात्मककपालादिवेदनात् उभयनिश्चयसिद्धिः अन्यतरस्यापि भ्रान्तत्वायोगात् इतरत्राप्यनाश्वासप्रसक्तेः तज्जातीयव्यभिचारदर्शनात् सतः सर्वथानापत्तेः कादाचित्कतया तदुत्पत्त्यादिप्रसङ्गात् असतोऽपि सत्ताऽयोगात् स्वभाववैकल्येन तद्भावनियमासिद्धेरिति । न चैतन्नशब्दार्थानुगतमपि, कथञ्चिदन्यथाभवनस्य

तदेवान्यथैवेत्येकान्तापोहेन प्रवृत्तेः, वस्तुन एव तत्स्वभावत्वात् प्रतीत्यनुग्रहसिद्धेः उभयनिमित्तभावात् अस्य च तदेवान्यथा भवतीत्यनेनैवाक्षेपोऽन्यथैतच्छब्दार्थायोगादिति पक्षान्तरोपपत्त्या पारिशेष्यानाश्रयणेऽपि न हेतुफलभावोच्छेददोष इत्यलं प्रसङ्गेन । न च कारणमप्यनेकस्वभावस्य कार्यस्य जनकम्, यदि स्यान्नेदानीं भिन्नस्वभावेभ्यः सहकारिभ्यः कार्योत्पत्तौ कारणभेदो भेदकः स्यात्, ततश्चाभेदोऽपि न भेदको भवेत्, कारणभेदेऽप्यभेदात् । यदि भेदाद्भेद एव स्यात् एवमभेदादभेदो युक्तः अव्यभिचारिनियमात्, इह तु नैवमित्यहेतुकौ विश्वस्य भेदाभेदौ स्याताम्, तद्व्यतिरिक्तश्च न कश्चिद्भाव इति सर्वे भावा अपरतन्त्रोत्पत्तयः स्युरिति । स्यान्मतं भिन्नस्वभावेभ्योऽभिन्नस्वभावमेव सञ्जायते कारणव्यापारविरचितानामसङ्कीर्णत्वात् कार्यस्वभावविशेषाणां, यथा विषयेन्द्रियमनस्कारबलभाविनो ज्ञानस्य विषयात् तदाभता नेन्द्रियान्न मनस्कारात्, इन्द्रियाद्विषयग्रहणप्रतिनियमो नान्यतस्तस्यैव मनस्कारोद्बोधरूपता न परतः, न च कारणव्यापारविषयनानात्वेऽपि कार्यस्वभावभेदः, निर्विभक्तरूपस्यैवोपलम्भात्, तदप्ययुक्तम्, सन्न्यायविरोधात्, कथं हि नामैकस्वभावं कार्यं विशेषाश्च तदव्यतिरिक्ता एव चित्रा इवेतिचिन्त्यम्, नानात्वैकत्वयोः परस्परव्याहतेः विषयनिर्भासितादयश्च विज्ञानाव्यतिरेकिणो यथा विषयादिभिः क्रियन्ते तद्वत्तदव्यतिरिक्तबोधरूपोपकारिभिर्मनस्कारादिभिरपीति सर्वसर्वजन्यत्वे तद्व्यवस्थानुपपत्तिः, तदनुपपत्तिश्च न विषयात्, तदाकारत्वसम्भवो बोधरूपाभेदात् न चासम्भवस्तदाकारत्वात् तथा मनस्कारो बोधरूपजनकः विषयाकाराव्यतिरेकात्, न चाजनकः, बोधरूपानन्यत्वादितीत्थमिन्द्रियादिष्वपि द्रष्टव्यमिति मिथो विरोधसम्भवेतरापत्तिदोषतस्तदनुपपत्तिः । अथ माभूदयं दोष इति विशेषाः कार्य्यतो व्यतिरिक्ता एव इष्यन्ते, एवमपि कारणव्यापारस्य तेष्वेवोपयुक्तत्वात् तत्कार्य्यमहेतुकमनुषज्यत इति यत्किञ्चिदेतत्, एतेनानेकस्वभावस्येत्येतदपि प्रत्युक्तम्, एकस्यानेकस्वभावत्वविरोधात् न चैकमेकस्वभावस्य कारणं कार्य्यस्य जनकम्, विश्वस्यान्धबधिरादिभावप्रसङ्गात् चक्षुरादीनां सजातीयक्षणोत्पा-

अ०ज० पताका०
॥ ६३ ॥

दकत्वे विज्ञानाजननात् विज्ञानजनकत्वे वा सजातीयक्षणाऽप्रतिसन्धानादिति । न चानेकरूपस्य, तदेकस्वभावतया केषांचिदहेतुकत्वापत्तेः, तथाविधैकस्वभावतयाऽभ्युपगमेतिप्रसङ्गात, सामग्र्याः क्रमेण कार्याणामुदयदर्शनाच्चेति । स्यादेतन्नामी कारणविकल्पाः सर्वे एव नो बाधायै, केषाञ्चिदनिष्टेः, आद्यस्यैवाभ्युपगमात् । यत्पुनरुक्तमनेकस्मादेककार्योत्पत्तौ न कारणभेदोभेदकः स्यादिति, सोऽप्रसङ्गः, तथेष्टेः, तथाहि न भिन्नस्वभावात्कारणाद्भिन्नस्वभावमभिन्नस्वभावाच्चाभिन्नस्वभावं कार्यमुत्पद्यत इति कारणभेदाभेदाभ्यां कार्यस्य भेदाभेदावुच्येते, किन्तु विलक्षणात्कारणकलापद्वयाद्विलक्षणमेव कार्य्यं जायत इत्येतावतांशेन हेतुभेदाभेदाभ्यां फलस्य ताविति तद्व्यतिक्रमे च नियमेन तदहेतुकत्वं प्रसज्यति । यथोक्तम् "अग्निस्वभावः शक्रस्य मूर्धा यद्यग्निरेव सः । अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेत्" इत्यादि । यदा तु भिन्नस्वभावेभ्यो निर्भागैकस्वभावकार्यप्रतिनियतेभ्यो विजातीयानेकपदार्थव्यावृत्तमविभक्तैकस्वभावमेवैकमाविर्भवति कार्य्यं तदा न कश्चिद्व्याघातः, तद्रूपकार्योत्पादननियतस्वभावाच्चानेकस्मादेककार्योत्पत्तावहेतुकत्वप्रसङ्गोऽप्यनवकाश एव इति भवत्यहेतुकत्वप्रसङ्गोऽप्यनवकाश एव इति । भवत्यहेतुकत्वप्रसङ्गो यद्येकानियतात् स्वहेतुप्रकृत्यनुविधायिनोऽनेकस्मादनेकतावदेकमनेकं चोपजायेत हेतुकर्मानुकारादिति । अत्रोच्यते यत्किञ्चिदेतन्न्यायानुपपत्तेः, तत्र यत्तावदुक्तं विलक्षणात्कारणकलापद्वयाद्विलक्षणमेव कार्य्यं जायत इत्यादि, अत्र न कारणकलापस्तत्कारणातिरिक्तस्तानि च भिन्नस्वभावानि कथं निर्भागैककार्य्यं प्रति नियतानि तद्भावे च कथं न व्याघातः सर्वेषां तज्जननस्वभावत्वे नैकोऽपि न तज्जनकस्तमन्तरेण तत्सर्वत्वायोगात् निर्भागं च तदित्थं कथमनेकेभ्यो जन्मासादयेत्, एकतोऽपि तस्य सर्वात्मनोत्पत्तेः तदपरैस्तदकरणात् । सर्वभूतिस्वभावत्वात् तस्यायमदोष इति चेत्, किमिदं तत्प्रत्येकतातोऽन्यत्तत्सर्वत्वं नाम ते च सर्वे जनकानैकोऽप्यजनक इत्युक्तदोषानतिवृत्तिः । यत एव सर्वे जनका अत एव नाननिवृत्तिरिति चेत्, यस्तर्ह्येकेन कार्यस्य स्वभावो जन्यते स एवापरेणापीत्येतत्प्राप्तम् । अस्त्ये-

तत्सिद्धसाध्यतेति चेत्, माहेश्वरजायाजारकारणिकनिवेदितपृष्टभौतसिद्धसाध्यताकल्पेयमुपहासस्थानमार्याणामित्यनुद्घोष्यैव तैः, तथाहि य एकेन जन्यते स एवापरेणापि, न खलु स तस्य स्वभावः तदपरत्वानापत्तेः, स्वभावान्तरस्य च तदपरस्वभावजन्यजनकत्वविरोधः उभयत्वहानेः, तद्वैलक्षण्याद्धि तस्य भावान्तरत्वं तज्जन्यजनकत्वे च तन्न पुष्कलम्, वैलक्षण्यमन्यजन्यविविक्ततया चेतरस्य तज्जन्यताऽन्यजन्यत्वेऽपि तु तदसिद्धेरतिप्रसङ्गादिति नोभयोरूपनियमः। एकाजनकत्वे च सर्वाजनकत्वमित्यहेतुकतद्भावापत्त्या न न्यायानुसारिविकल्पितमिति भावनीयम्। एतेन न ब्रूमोऽन्यस्य तज्जनकं रूपं नास्तीति, किन्तु यत्तदेकस्य जनकं तदन्यस्य नेत्यन्योऽपि स्वरूपेणैव जनको न पररूपेणेति अतद्रूपत्वात् तथथास्वं भिन्नाश्च जनकाश्च स्वभावेन, एकस्माद्धि जनकाद्व्यावर्त्तमानस्तद्रूपो न स्यान्नातत्कार्यः तेनैव तत्कार्यं कर्त्तव्यमिति कोऽत्र न्याय इत्यादि सर्वं प्रतिक्षिप्तम्, उक्तवदतद्रूपस्य तत्कार्यत्वविरोधात्, तेनैव तत्कार्यं कर्त्तव्यमिति निरंशत्वे सति ततो भावस्यैव न्याय्यत्वात् कृतकरणेतिप्रसङ्गात्, तथाहि तद्भिन्नः स एव करोति नान्ये, को ह्यत्र भेदाविशेषे विशेष इति वाच्यम् स्यादेतद्भेदाविशेषेऽपि कुतश्चिदात्मातिशयात् कश्चिज्जनको नान्ये सहि तस्यैव स्वभावो नान्येषां तथाविधहेत्वभावादिति, एतदप्यसत्, तदन्वयोपलब्धिमन्तरेण तावतान्तस्स्वभावत्वनियमे तत्समापकव्यतिरेकेण प्रतिपादनोपायाभावात्। किञ्चैवमप्यनेकैःकरणे न कारणभेदो भेदकः स्यादित्यनिवृत्तः प्रसङ्गः। स्यादेतत्कः पुनरत्र प्रसङ्गार्थः, यदि न विशेषकः स्यादित्ययमर्थः, तदप्ययुक्तम्, विजातीयानेकव्यावृत्तिमतः कार्यस्वभावस्योत्पादनात्। अथ न खण्डशो जनकः स्यादित्ययमर्थः, तथापि निरंशत्वाद्वस्तुरूपस्य भागश उत्पादनं नेष्टमेवेत्यप्रसङ्ग एव, एतदप्ययुक्तम्, उक्तदोषानतिवृत्तेः, अनेकस्मादेकोत्पादायोगाच्च, तथाहि भिन्नेभ्यस्तुल्यसामर्थ्येभ्योऽतुल्याभिन्नभावे कथमविरोध इति चिन्त्यम्। स्यादेतत्किमत्रचिन्त्यते एकस्मिन्नधिकरणे भेदाभेदयोर्विरोधात् इह तु कारणं भिन्नं कार्यं चाभिन्नमिति को विरोधः। अपि च हेतोः फलात्मापत्त्या कार्यकारणभावव्यवस्थायां

स्यादनेकस्मादेकोत्पत्त्ययोगो यथा परमते तत्र ह्येको हेतुः फलात्मतां प्रतिपन्न इत्यपरस्य कार्यात्मन्यवकाशासम्भवादानर्थक्यम्, यदा पुनः कारणानि स्वस्मिन्नेव स्वभावे व्यवस्थितानि कार्यमुत्पादयन्ति तदा कोऽयोगः, न च हेतोः फलात्मापत्तिः प्रतीतिसिद्धापि, बीजादेर्विसदृशाङ्कुरादिवेदनादिति, अत्रोच्यते सोऽयमपण्डत्वलक्षणोपत्यजन्मविरोधी दोषः, तथाहि हेतोः फलात्मापत्त्यां तत्स्वभावत्वपुंस्त्वे सति तत्तथाभवनेनाभवत्कार्य्यापत्यं स्वस्वभावानवस्थित्यपुंस्त्वयुक्ताच्छुक्राद्यभावे असत्सद्भ तीत्यतिसुभाषितमेतत् । न च सर्वेषां तदेकजननस्वभावत्वे तदपरोदयो न्याय्यः, तत्रैव सामर्थ्यनिरोधात् । अस्ति चायं तदैव स्वसन्ततावपि च चक्षुराद्युपपत्तेः न च रूपं येन स्वभावेन सभागक्षणं जनयति तेनैव विभागक्षणमालोकादि, एकस्यानेकजनकत्वायोगात् योगेऽपि तत्तुल्यतापत्तेः अतुल्याश्च रूपा लोकादयः, न च कारणाभेदे कार्यस्य भेद इति युक्तम्, अभ्युपगमप्रकोपात्, इष्टश्चायम्, तत एव सर्वतत्प्रसूतेः न चोपादाननिमित्तभेदात् तत्र सामग्रीभेदः, तेषामेकस्वभावत्वात् तत्कल्पनाबीजाभावात्, अन्यथा तद्भिन्नस्वभावतापत्तिरिति तद्भेदादपि फलभेदो दुःस्थित एव । सर्वेषां सर्वजननस्वभावत्वाददुःस्थित इति चेत्, न. तावद्भ्यस्तावदुत्पादे सर्वेषामेकस्वभावता तथैकोपयोगित्वं कार्याणां निरंशता प्रकटो जातिभेदस्तदेकैकापेक्षया सामग्रीभेदश्चेति शोभनमदुःस्थितत्वम्, अभिन्नतावत्स्वभावजत्वे ह्यमीषां तदन्यतरवत्सर्वेषां तत्तुल्यतापत्तिः तत्स्वभाववैचित्र्यं वेत्यलङ्घनीया न्यायमुद्रा । स्यादेतद्धेतुस्वभावसङ्क्रान्तिपक्षेऽयं दोषस्तत्रहि तस्यैव तथाभवनमिति कार्यतुल्यताऽत एव च तत्स्वभाववैचित्र्यं वेत्यनिवारितमेतत्, यदा तु तत्प्रतीत्योत्पादस्तद्भावस्तदा हेतूनां निमित्तमात्रत्वान्न कश्चिद्दोष इति । एतेन कारणानां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य भिन्ना एव विशेषा इत्येतदपि प्रत्युक्तमिति, अत्रोच्यते तदिदं पिशाचभयात्पितृवनसमाश्रयणम्, नहि कथञ्चिद्धेतुस्वभावसङ्क्रान्तिमन्तरेणासत्सद्भवनापत्त्या कार्यभाव एव युज्यत इत्युक्तप्रायम्, स उपलभ्यत इति चेत्, को वा किमाह, कथं न युज्यत इति भवन्नीत्यावेदितम्, कश्चायं तत्प्रतीत्योत्पाद-

स्तदनन्तरभावित्वं नेदं क्षणिकैकान्तवादिनोऽशेषतत्कालभाविभावसाधारणत्वेन तद्भावसिद्धये नियमहेत्वभावात्, तथाहि विवक्षितहेतुक्षणानन्तरं तत्कालभावि सर्वमेव भुवनोदरगतं क्षणजातमुत्पद्यते ततस्तत्स्वरूपाद्यननुवेधतुल्यतायामयमेवास्य हेतुरिदमेव चास्य फलमिति कुतोऽयं नियमः विधूय मोहतिमिरमालोच्यतामेतदिति, किमत्रालोच्यम्, तत्स्वभावत एव तन्नियमसिद्धेः सर्वस्य सुस्थितत्वात्, तथाहि तयोरेव हेतुफलयोः स स्वभावो येन स एव तस्यैव हेतुस्तदेव च तस्यैव फलमित्यतोऽशेषतत्कालभाविभावसाधारणत्वेऽपि तदनन्तरभावित्वस्याऽपरत्र तत्स्वभावत्वाभावात्, अस्यैव च नियमहेतुत्वात्तदभावसिद्धेरिति, तथाहि तस्यैवासौ स्वभावो येन तदनन्तरं भवत्तदेव तत्कार्यमितरदेव तत्कारणं नान्यदिति, अत्रोच्यते एतदपि यत्किञ्चिदन्वयापत्तेः अन्यथा शब्दार्थायोगात्, तथाहि स्वो भावः स्वभाव इत्यात्मीया सत्ता तस्यैव हेतोरियमात्मीया सत्ता यत्तदनन्तरं भवत्तदेतत्कार्यमिति तस्यैव तथा भवनेऽन्वयसिद्धिः अतत्स्वभावत्वे च तदनन्तरं न तद्भावो भावे वातिप्रसङ्ग इति कुतो हेतुफलभावनियमः। नन्वलमनेन वाक्छलेन तस्यायं स्वभावः स्वधर्मो यदपगच्छति तस्मिंस्तदनन्तरं तदेव भवति, स्यादेतदेवं, यदि तदाऽन्यत्र भवेत् भवति च। किं तेन भवता न तत्त इति चेत्, इतरस्य ततो भावे को हेतुः। तत्स्वभाव एवेति चेत्, न असौ तत्स्वरूपाद्यनुवेधवैकल्ये तदनन्तरभावित्वमन्तरेण गम्यते तच्चाशेषतत्कालभाविभावसाधारणमेवेति परित्यज्यतामसदभिनिवेशः। तेऽन्यदाऽन्यतोऽपि भवन्ति तत्तु तत एवेति विशिष्टतत्स्वभावत्वावगतेरदोष इति चेत्, न, विवक्षितानामन्यदाभावेनान्यतो भावासिद्धेः, सामान्येन तु तस्यापि सिद्धः एवमपि तदेव तज्जननस्वभावमितरदेव च तज्जन्यस्वभावमित्यभ्युपगमे न्यायबाधा, एवंभूतस्य वाङ्मात्रेण स्वभावान्तरस्यापि अभिधातुं शक्यत्वात्, तथाह्येवमपि वक्तुं पार्यत एव मृत्पिण्ड एव पटजननस्वभावः पट एव च तज्जन्यस्वभाव इत्येवं तंतव एव घटजननस्वभावा घट एव च तज्जन्यस्वभाव इति हेतुफलभावापत्त्या न्यायबाधेति, तद्देशे भेदेनेत्थं तत्तत्स्वभावत्वकल्पना विरुध्यत इति चेत्, न, तथा

तत्तत्स्वभाववैचित्र्यतस्तत्कालभेदेनैव वा विरोधासिद्धेः, तत्र तत्सत्तानुगमात्तदनुगमे तदुपादानत्वापत्तेः । कथं विरोधादिसिद्धिरिति चेत्, तत्स्वभावस्याचिन्त्यशक्तित्वात् पर्यनुयोगायोगात्, अतिप्रसङ्गात्, तस्यैव तथाभावमन्तरेण देशाभेदेऽपि समानत्वाच्च । तत्रैव तद्रूपानुकारो दृश्यते नेतरत्रेति चेत्, अस्त्येतत्किन्त्वसौ न तत्स्वरूपाद्यनुवेधमन्तरेण । ततः किमिति चेत्, अनिवारितोऽन्वयः, एतेन बीजादेर्विसदृशाङ्कुरादिदर्शनं प्रत्युक्तम्, तस्यैव तथाभवनात्, अन्यथा तदनुपपत्तेः तथाभाविहेतुभावात्, तुच्छप्रागभावे तदभवनमात्रतया प्रध्वंसाभाववत्तदनुपपत्तेरिति भेदकहेतुभावतः कथञ्चित्तद्रूपानुकारिसिद्धेरिति । यच्चोक्तमेतेन कारणानां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य भिन्ना एव विशेषा इत्येतदपि प्रत्युक्तमिति, एतदप्ययुक्तं, कारणानां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य तस्य तदविरोधात् तदेकानेकस्वभावत्वात् तथोपलब्धेः धर्मकीर्त्तिनाप्यभ्युपगतत्वात् हेतुबिन्दौ, भिन्नस्वभावेभ्यश्चक्षुरादिभ्यः सहकारिभ्य एककार्योत्पत्तौ न कारणभेदात् कार्यभेदः स्यादित्याशङ्क्य न यथास्वं स्वभावभेदेन तद्विशेषोपयोगतस्तदुपयोगकार्यस्वभावविशेषासङ्करादित्यादेः स्वयमेवाभिधानात् । स्यादेतदभिहितमिदमन्यार्थं त्वभिहितं, कस्तर्ह्यस्यार्थः, स हि न कारणभेदो भेदकः स्यादिति चोद्यं तत्रैव सामर्थ्याभापरापरजननमित्यनेनैवानवकाशं मन्यते एवं स्पष्टीकृतमप्यर्थतत्त्वं यो नाम स्वदर्शनानुरक्तमतिस्तत्र विश्वशक्तिवैकल्यं न प्रतिपद्यते धावति च चोद्यं कर्त्तुं समुग्धबुद्धिरित्थमपि शक्यः तूष्णीमित्युपहासपरं कारणोपयोगकृतं कार्यस्वभावविशेषासङ्करमुक्तवान्, परमार्थतस्तु न भवन्त्येव कारणानां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य भिन्ना एव विशेषा इत्ययमर्थ इति । अत्रोच्यते उपहासपरमित्येतत्सत्यं, समुग्धबुद्धिरित्थमपि शक्यः तूष्णीमित्येतदप्येवम्, तस्य विशिष्टबोधाभावात्, यस्तु सन्न्यायकुशलः कुशाग्रीयबुद्धिः सकथमधिकृतचोद्यं तत्रैव सामर्थ्यादित्यादिनानवकाशं मन्येत, तत्रैव सामर्थ्ये तत्समानजातीयापरापरजननमपीति किं न पश्यत्यसौ येन तथा मन्यत इत्युक्तप्रायं चात्र, तस्मान्न श्रौतशब्दार्थातिरेकेण तन्मतात्याग इति तदत्यागिनो न युक्तमेव-

मादिप्रलपनम्, श्रौतशब्दार्थाङ्गीकरणे चोक्तवन्मदीयाभ्युपगमाश्रय इति यथा यथा विचार्यते तथा तथा न परमते कार्यकारणभावो युज्यते, योगेऽपि न तन्निश्चये कश्चिदुपायः । स्यादेतत्प्रत्यक्षानुपलम्भसाधनः कार्यकारणभाव इत्युपायः, इह च प्रत्यक्षमेव प्रमाणं प्रत्यक्षानुपलम्भशब्दाभ्यामुच्यते, तथाहि कार्यकारणाभिमतपदार्थाकारं प्रत्यक्षं तद्विविक्तवस्त्वाकारमनुपलम्भ इति एतौ च प्रत्यक्षानुपलम्भौ परस्परसहायौ, सहायं कदाचिदनुपलम्भपुरस्सरं प्रत्यक्षम्, यथाह न्यायवादी येषामुपलम्भे तल्लक्षणमनुपलब्धमुपलभ्यत इत्यादि । एतेन चोपलब्धिलक्षणप्राप्तानुपलम्भेन तत्र तस्य स्वहेतोस्सान्निधानात् प्रागपि सत्त्वमन्यतो देशादागमनं प्रागवस्थितकटकुड्यादिहेतुत्वं चापाकृतमिति तथा कदाचित्प्रत्यक्षपुरस्सरोऽनुपलम्भः, यथोक्तम् " तत्रैकाभावेऽपि नोपलभ्यते तत्तस्य कार्यमिति, एतदुक्तं भवति, येषां सन्निधानेन प्रवर्त्तमानं यद्दृष्टं तेषु मध्ये यद्येकस्याप्यभावो भवति तदा नोपलभ्यते तत्तस्य कार्यम्, यथा धूमो हुतभुजः, घटादि मृदादीनामित्युपायभावान्नास्ति दोष इति, अत्रोच्यते यत्किञ्चिदेतदुपलम्भस्य दर्शनत्वात् अनुपलम्भस्य चादर्शनत्वात् दर्शनादर्शनयोश्च व्यभिचारतः परेण प्रतिक्षेपात् तदतिरिक्तस्य चेहाप्यभावादिति । स्यादेतन्नाभावः, उपलब्धिलक्षणप्राप्तानुपलब्धस्य दर्शनात् दृष्टस्य चादर्शनात्, नोऽपलब्धिलक्षणप्राप्तस्यानुपलम्भासिद्धेः उपलब्धिलक्षणप्राप्तिर्ह्युपलम्भप्रत्ययान्तरसाकल्यम्, तेषामुपलम्भजननस्वभावत्वे कथं तदनुपलम्भः अतत्स्वभावत्वे वा तत्प्रत्ययान्तरत्वं कथम् । स्यादेतत्सहार्थेन तज्जननस्वभावानि, यथाह " स्वभावविशेषश्च यः स्वभावः सत्स्वन्येषूपलम्भप्रत्ययेषु सन् प्रत्यक्ष एव भवति, तदप्यसारम्, इत्थमप्युभयस्योपलब्धिलक्षणप्राप्तिशब्देनाभिधानात् तद्भावे चानुपलम्भायोगात् न तदा तद्भाव एवापि तु विद्यमानः प्रत्यक्षो भवतीति चेत्, कथं तानि तदुपलम्भप्रत्ययान्तराणि । सह तेन तज्जननस्वभावत्वात् तथोच्यन्त इति चेत्, कथं न तदा तद्भावोऽभावे वा सह तेन तज्जननस्वभावानि । तत्तद्दृश्यत्वेन योग्यतापेक्षयेति चेत्, कथमुपलम्भाभावे न त्वेतदधिगतिः । प्रबन्धमाश्रित्य तथोपलब्ध्येति चेत्, किं सा न गोसन्निधाना-

ऽसन्निधानोपलब्धानुपलब्धाश्वादिदर्शन इति संभवत्येव क्वचिदिति, एवं च यदि तत्राप्यश्वस्य प्रागसत्त्वमन्यतो देशादनागमनमन्याकारणत्वं च सन्तानस्य शक्यते निश्चेतुं भवतु न तत्रापि हेतुफलभाव इति एतदसमीक्ष्यैवोक्तम्, तदोपलब्धस्य प्रागसत्त्वात् अन्यदेशादनागतेः अन्याकारणत्वस्याप्यत एव निश्चयात् उपायाविशेषात् अन्यत्राप्येवमेवावगतेः । अन्यदान्यतोऽपि भावादनिश्चय इति चेत्, न, तस्यान्यदा भावासिद्धेः। सन्तानापेक्षयासिद्धिरिति चेत्, क एतद्वेद, इति निभाल्यतां स्वतन्त्रम्। विशिष्टबोधसन्तानजो विकल्प इति चेत्, कुतस्तस्यान्यतरैकबोधजत्वे तथा वैशिष्ट्यम् । तथाविधहेतुभ्यस्तद्धेतुभावादिति चेत्, एतदपि प्रतिनियतार्थतया भवद्विज्ञानगोचरातीतमेव किं तेन। प्रतीतिरियमीदृशीति चेत्, अस्त्येषां तन्त्रत्यागिनी तु न युक्तोपन्यसितुम्, न ह्येषा तथानुभवप्रतीयमानाऽन्यथा सर्वथा तद्ग्राहिबोधविकलाद् बोधमात्राद्भवितुमर्हति, न चैकजातीया अपि न भिन्नहेतुजा वह्न्यरणिसूर्योपलादिभ्योऽनलाद्युदयदर्शनात्, न चैनेषां जातिभेदोऽपि, तुल्यतया प्रतीतेः, न चैवं तत्रापि तथाभावे कश्चिद्विरोधो भवेत्, न्यायाविशेषात् न चात्र लोकानुसारो विशेषक इति, अभ्युपगमविचारादिति। किञ्च ज्ञानार्थयोः क्षणिकत्वादेकैकेनैकैकग्रहणे सत्यपि तत्कारणमिदं कार्यमिति कुतोऽवसायः। स्यादेतत्तयोरेव तथाग्रहणेन, तथाहि कारणज्ञानं कारणं गृह्णात्यन्यथा तदग्रहणप्रसङ्गात्। एवं कार्यमपि विशिष्टकारणजन्यस्वभावमिति तथैव गृह्यते तत्सामर्थ्यप्रभवश्च विकल्पस्तथैव प्रवर्त्तत इति न्याय्यस्तदवसाय इति, अत्रोच्यते, विशिष्टकार्यजननस्वभावग्रहणं विशिष्टकारणजन्यस्वभावग्रहणं चेतरेतरग्रहणात्मकं न वः स्वराद्धान्तनीत्योपपद्यत इत्युक्तप्रायम्, उपपत्तावपि सर्वत्र तथाग्रहणात् अविनाभावग्रहणमन्तरेणापि धूमादिग्रहणादेवानलादिगतिरनिवारणीया । समनन्तरवैकल्यात् नेति चेत्, न, क्वचित्तुल्यतायामप्यभावात् समुद्रदर्शनानन्तरं धूमग्राहिषु तत्तुल्यतोपपत्तेः, तत्राप्यगृहीताविनाभावस्यासम्भवादिति। तत्रापि तत्तुल्यतायास्तत्त्वतोऽसिद्धिरिति चेत्, किमत्रक्षुण्णमित्यालोच्यवाच्यम्। नैकस्य कारणकारणं तद्धेतुहेतुविषयमिति चेत्, सम्भवत्यपि केवलानलग्राहिणः।

तदपि न तथाविधधूमज्ञानसमनन्तर इति चेत्, न तु तथेति कोऽर्थः तदनन्तरं तद्भावेनेति चेत्, किमिदं तदानन्तर्यम्। तदनन्तरसमये तद्भाव इति चेत्, तदभावे तद्भावः, इष्यत एवैतदिति चेत्, स इतरस्यापि तुल्यः। तदनन्तरं तद्भावेनातुल्य इति चेत्, तदभावभाविनः किमनेन। सोऽनन्तरभावी तद्धेतुर्भवतीति चेत्, न असत्सद्भाविन इत्युक्तम्, स तस्य जनक इति चेत्, न किञ्चित्तल्लक्षणमस्य। ततस्तद्भाव एवेति चेत्, भूतेनापि किं तेन तदितरबोधवैकल्यात् धूममात्रग्रहणरूपत्वात् तदितरत्रापि तदुपपत्तेः, न चैवमपि तत्तत्स्वभावतावगमः, तथाप्रतीतेः, तदितरावगमाभावादिति तस्यैव तद्भावादावन्वयादिसिद्धिः। आद्यान्वयपक्षेऽपि केवलधूमादिग्रहणेऽनलादिगतिरनिवारणीया, पारम्पर्येण तत्राप्यन्वयोपपत्तिरिति नानिवारणीया, नह्यसावन्वयमात्रनिबन्धनैवापि त्वागमादिजविशिष्टक्षयोपशमनिबन्धनापि तमन्तरेणानन्तर्यत उभयदर्शिनोऽपि तदनुपपत्तेः, क्वचित्तथा दर्शनात्, न खलु समयादिनाऽनभिव्यक्तक्षयोपशमः पश्यन्नप्युत्तराधरभावेन धूमानलौ तदन्यभावाविव कश्चित्तयोर्हेतुहेतुमद्भावं प्रतिपद्यते, भूयो धूमदर्शनात्तदनवगतेरिति, क्षयोपशमसामर्थ्यादेव तथान्यतरग्रहणतोऽपि तद्भावावगमे को दोषः, न कश्चिदन्योऽपि तु ना(न)दलात्तदुत्पत्तिरित्यसकृन्निदर्शित एव, यदा हेतुफलयोरणीयसापि कालेन न व्यवधानं न च ध्वंसनाम्नो विनाशस्य हेतुत्वं तदानीं कथमदलात्तस्यैव तथाभावाभावनोऽसत्सद्भवनेनेत्यलमनेन पुनः पुनरभिहितेनालोच्यतां वस्तुतत्त्वमित्यतः, प्रत्यक्षानुपलम्भसाधनः कार्यकारणभाव इति वचनमात्रमेव। इतश्चैतदेवं तयोर्निराकारसाकारयोस्तद्ग्राहकत्वायोगात् अयोगश्च विषयकृतनिर्भासविरहेऽर्थप्रत्यासत्तिनिबन्धनाभावेनेदमस्य संवेदनमिति व्यवस्थानुपपत्तेः, आकारस्य चानर्थकेष्वपि स्वप्नादिप्रत्ययेषु भाविनो वस्तुव्याप्त्यभावात्, स्थूलविचित्राकाराणां चैकत्र विज्ञाने भावतः सम्भवायुक्तेरिति। स्यादेतन्नेदमद्वयज्ञानवादिनः कथञ्चिद्बाधकम्, तस्य हि सर्व एव भावाश्चित्तमात्रसारशरीरा हेतुफलतां बिभ्रतीतिमतम्, बुद्धयश्च स्वसंवित्प्रत्यक्षप्रमाणसिद्धसद्भावाः स्वरूपप्रतिपत्तये नापरं प्रकाशकं प्रतीक्षन्त इति या यथा सा तथैव संवे-

द्यते, कारणबुद्धिः कारणात्मना कार्यबुद्धिश्च कार्यात्मनेति प्रत्यक्षानुपलम्भसाधनस्तद्भाव इति गीयते, कोऽन्योऽद्वयज्ञानवादिन एवं ब्रूयात् अद्वया कारणाद्यात्मना च वेद्यत इति सुभाषितमेतत्, कीदृक् खल्वद्वयाया वेदनम्, यदपि गगनतलवर्त्या लोकवत्प्रकाश्यप्रकाशकान्तरविरहेणाजडरूपतया जन्मैव तथोच्यते, तदपि तत्त्वतः कर्मकर्तृभावे वेदनायोगेन स्वत एव दुःस्थितमिति नार्थान्तरग्रहणसाध्यं हेतुफलव्यवहारोपकारं कर्तुमलमित्यनुपन्यसनीयमेव विद्वज्जनसमाजे, न चाद्वयमात्रतत्त्वाया भेदकमन्तरेण तथाविधविकल्पोदयो न्याय्यः, न च सति भेदके भाषाद्व्यादौ तन्मात्रतत्त्ववादः, न च सत्यपि विकल्पोदये क्षणभेदेन पूर्वापरालोचनं, न चासत्येवास्मिंस्तथा तत्त्वव्यवस्थोपपत्तिः, न चेदं तथानुभूयमानबोधान्वयातिरेकेण, न चायमभ्युपगमप्रक्रमागत एव भवतामिति दुःस्थिते स्वतन्त्रभेदव्यवहारे कथं प्रत्यक्षानुपलम्भसाधनः कार्यकारणभाव इत्युच्यमानं न ज्ञानमानिनो व्रीडाकरमिति परिचिन्त्यतामेतत्। अतस्तथानुभूयमानतयाऽपास्तभ्रान्ततापराधः परोक्त इति विहाय मत्सरं सौविहित्यकारीति निवेश्य मानसं बोधान्वयोऽभ्युपगन्तव्यस्तत्त्वालोचनमार्गोऽपरित्याज्य इत्यलं प्रसङ्गेन। अङ्गीकृतश्चायं परेणापि परमार्थतः क्षणभेदेऽप्युपादानोपादेयभावेनेत्याद्यभिदधता, तथाहि य एव सन्तानः कर्त्ता स एवोपभोक्तेत्युक्तम्, न च हेतुफलभावतोऽन्यः सन्तानः, न च हेतुफलयोरेव कर्तृत्वभोक्तृत्वे, प्रत्येकमुभयाभावात् अन्यकालेऽन्यानभ्युपगमात्, य एव स एवेति वाग्वैयर्थ्यप्रसङ्गात् अतस्तस्यैव तथाभवनेन हेतोरेव कार्य्यभावे य एव स एवेत्युपपद्यते नान्यथा सन्तत्यन्तरवन्नानात्वाबाधनादिति। तथेदं चोक्तं, यः कुशले प्रवर्त्तते स यद्यपि तदैव सर्वथा विनश्यति तथापि निरुध्यमानः स्वानुरूपकार्य्योत्पादनसमर्थं सामर्थ्यं विज्ञानसन्ततावाधाय निरुध्यते इत्यादि, अत्रापि नहि तत्सामर्थ्यं कुशलादन्यदेव स्वानुरूपकार्योत्पादनसमर्थता वा ततः विज्ञानसन्ततिरपि, तदुत्तरं ज्ञानमेव, भूयसां तदानीमभावात्, ततश्च तत्कुशलमेवोत्तरविज्ञानमाधत्त इति तदेव तद्युक्तं तथा भवतीत्येवमुत्तरोत्तरभावेन

युक्तमिष्टानिष्टफलजन्म, अन्यथोक्तवत्तदयोगादिति । एवं समुपरोधहेतुभ्यः पीडा मतिकलमवदायमानता चान्वयानुसारिण्येव, अन्यथा पीडाद्युत्कर्षासिद्धेः, न ह्येकगुणतीव्रताभावेन द्विगुणादितीव्रता भवति, अनुभवसिद्धा चेयं सहतारतम्येन एकगुणशुद्धियुक्ताच्च द्विगुणशुद्धियुक्तजन्मेत्यपि व्यवस्थापनमेकगुणाक्षेपोभयविषयसंवेदननान्तरीयकमेवेत्यन्वयसाधनमेव । अपि च किं बहुना जल्पितेन न विहायाऽन्वयमेकाधिकरणौ बन्धमोक्षावपि युज्येते, यदा च बद्ध एव न मुच्यते तदा व्यर्थैव बन्धमोक्षचिन्तेति, एतेन नाशहेत्वयोगार्थक्रियासामर्थ्यपरिणामा(न्त)न्त्यक्षयेक्षणादि क्षणभङ्गसाधनं निराकृतमेव, तथापि लेशतो निराकरणमार्गः प्रदर्श्यते, तत्र यदुच्यते नाशहेतवो हि नश्वरेनरनाश्यापेक्षया तद्व्यतिरिक्तादिनाशापेक्षया च न युज्यन्त इत्येतज्जातिमात्रम्, तदुत्पादहेतुष्वपि समानत्वात् तेषामपि सत्स्वभावेतरजन्यापेक्षया तद्व्यतिरिक्ताद्युत्पादापेक्षया वा युज्यमानत्वात्, तथाहि न सत्स्वभावस्योत्पादकास्तद्वैकल्यप्रसङ्गात् अनवस्थापत्तेश्च, नासत्स्वभावस्य तत्प्रकृत्यन्यथाकरणात् अभ्युपगमविरोधाच्च । अनुत्पन्नस्यासत्त्वादुत्पन्नस्य च सत्स्वभावत्वाद्व्यर्थो विकल्पयुगलकोपन्यासपरिश्रम इति चेत्, न, नष्टेतरविकल्पापेक्षयाऽस्य नाशेऽपि तुल्यत्वात्, एवमुत्पाद्यमानव्यतिरिक्तोत्पादजनकत्वेन तदुत्पादस्तस्येति संयोगायोगात्, तद्व्यतिरिक्तोत्पादजनकत्वे तूत्पद्यमानजनकत्वतस्तदनुत्पादः, उत्पन्नव्यतिरिक्तोत्पादायोगात्, सत्स्वभावादिजन्योपादानहेतुग्राहकप्रमाणाभावतस्तद्व्यवहारनिषेधतो नाविषया विकल्पाः, प्रमाणविवेकतज्ज्ञानशब्दव्यवहारनिषेधाविरोधाच्च, किञ्च निर्हेतुकविनाशवादिनो हिंसासम्भव इति तद्विरतिदेशनावैयर्थ्यमेव । सन्तानान्तरोत्पादक एव हिंसक इति चेत्, न सन्तानस्य संवृत्तिसत्त्वेनोत्पादायोगात् । विजातीयक्षणोत्पादक एवेति चेत्, न, तस्यापि निराकृतत्वात् तद्भावेऽप्युपादानजनकयोर्हिंसकत्वापत्तिः, न चेयं न्याय्या, महासत्त्वोपादानजनकयोरहिंसकत्वेन कुशलयुक्तत्वाभ्युपगमात्, न च हन्मीति सङ्क्लेशाद्धिंसकत्वम्, असङ्क्लिष्टानुपपत्तेः, तदुत्पादनिमित्तस्य निराकृततत्वादित्यतः स्वहेतुभ्य एव नाशहेतुमवाप्य तथा नाशस्वभाव

अ० ज० पताका० ॥ ६८ ॥

उत्पाद्यते इति त्वयाऽप्यङ्गीकर्त्तव्यम्, अन्यथोक्तदोषानतिवृत्तिः, यस्य तु कार्योत्पाद एव कथञ्चित्कारणनिवृत्तिस्वभावो नाशस्तस्योक्तदोषानुपपत्तिरेवेत्युक्तप्रायम् । तथा नित्यानित्यदेहभिन्नाभिन्नत्वे चास्य पीडाकर्तृत्वादिना तत्कर्मविपाकभावेऽपि तन्निमित्तत्वनियोगाद्दुष्टानुबन्धतोऽस्यैव हिंसेति सदुपदेशादेः क्लिष्टकर्मवियोगात् शुभभावानुबन्धतोऽस्याविरतिरपीति न कश्चिद्दोष इति । अर्थक्रियासामर्थ्यमपि क्षणिकस्यानुपपन्नमेव, विकल्पायोगात्, अर्थक्रिया हि स एव भावो भावान्तरं वा, यदि स एव कथमस्यात्मनि सामर्थ्यम् । अन्यथेदं तदात्मा स्यात् स्थितिर्वा, यद्यात्मा न तत्र सामर्थ्यम्, अन्यतो भावात्, न स्थितौ, अनन्तरमेव नाशात्, अथ भावान्तरं, कथमन्यस्यान्यत्र सामर्थ्यं, तथाहीदं ततो व्यतिरिक्तमव्यतिरिक्तं वा, यदि व्यतिरिक्तं, तस्येति सम्बन्धायोगः, अव्यतिरेके न भावान्तरोपयोगिता, तदुत्तरभूतिरेवेयमिति चेत्, न, तस्याः खपुष्पवदसत्त्वेनामुष्य भूतिरिति व्यवस्थानुपपत्तेः, कर्तृभोक्तृद्वारेण चायोगात्, तथाहि सा कर्तृभूतिः स्याद्भोक्तृभूतिर्वा । कर्तृभूतिरिति चेत्, न तर्हि भोक्तृभूतिरित्यभ्युपगमहानिः, सर्वक्षणानां भोक्तृत्वाभ्युपगमात्, अथ भोक्तृभूतिः, न तर्हि कर्तृभूतिरित्यभ्युपगमहानिरेव, संसारिक्षणानां प्रायः कर्तृत्वाभ्युपगमात् । उभयस्वभावत्वे तद्व्यतिरिक्तेतरादिदोषः, अनुभयस्वभावत्वेऽवस्तुतेत्यन्वयिन्येवार्थक्रियासिद्धिः, तस्यैव तथाभवनात्, क्रमयौगपद्यसाध्यानां क्रमयौगपद्याभ्यामेव करणात्, तथास्वभावत्वादिति परिणामोऽपि क्षणक्षयिण्यसङ्गत एव क्षणानामत्यन्तभेदात्, वृद्ध्यनुपपत्तेः सहकारिणोऽयोगात् अणोर्म्महद्भावासिद्धेः, अतिप्रसङ्गात्, हेतुकर्म्मान्वयानुपपत्तेः तेषां चोपलम्भात् तथाप्रतीतेरिति । कथं तथाप्रतीतिरिति चेत्, पिण्डघटयोर्मृत्त्वदर्शनात्, अन्वयरहितेऽपि तदास्त्येवेति चेत्, क्वास्तीति सुविचार्य वक्तव्यम् । तदकार्ये घटान्तर इति चेत्, न तद्धेतुकं तदिति चिन्त्यम् । तद्धेतुकत्वेऽपि भेदोविशिष्ट इति चेत्, कथमविशेषे परिणामादिविशेषः अस्ति चायं नियमेनातस्यैव तथाभवनात् तत्परिणामजात्युपपत्तेः अविगानेन दर्शनात् तथातद्व्यवहारसिद्धेः दर्शनस्याभ्रान्तत्वात् अन्यथा

तदनुपपत्तेः तन्नियमवन्निमित्ताभावात् तत्तथाभावाभावे च तदसिद्धेरिति, नासिद्धिः असतोऽपि भावाभ्युपगमादिति चेत्, कस्यासत एव भावाभ्युपगमः। तत्तथाभवने संस्थानादेरिति चेत्, नहि तत्र तद्धर्म इति नासदेव, तस्यापि भावे कारणवत्तदासिद्ध्यादिसङ्ग इति चेत्, तथास्वभावत्वेनास्यायमदोषः। कथमिति न सम्यगवगच्छाम इति चेत्, तस्यैवासौ स्वभावो येनान्यदा तत्सिद्ध्यादीति, न चैतावता सर्वथाऽसम्भवनं, तदनुवेधासिद्धेः, तदपेक्षायोगात्, तथाभावोपलब्धेः, तद्वतादवस्थ्यात्, अन्यथा तदसिद्धेः, वस्तुधर्मत्वात्, निबन्धनोपपत्तेः, प्रतीत्यनुग्रहादित्यन्वयिन्येव संयोगेपचयात् परिणामसिद्धिः। अन्तक्षयेक्षणमप्यतत्स्वभावस्यावस्तुनस्तदभावान्न क्षणिकत्वसाधनम्। प्रतिक्षणं तत्तत्स्वभावमिति चेत्, कथमन्तवत्तदनुपलम्भः। सादृश्यविप्रलम्भादिति चेत्, उभयाग्रहे क एतद्वेद, न च तयोस्तत्त्वेऽन्यतरग्रहणेऽप्यदोषः, तत्तत्त्वाप्रतीतेः, न च कथञ्चिदेकेनैकोभयग्रहणम्, अनभ्युपगमात् कश्चायं क्षयो नाम, ननु विनाशः, कथमस्येक्षणं स्यात्, भावे को दोषः, इन्द्रियस्य तुच्छे प्रवृत्तिः, न चैव स तुच्छः, ननु किमन्तेक्षणेन, स विजातीयस्तस्य नाशत्वेऽन्वयः स पूर्वाभावः, नान्येक्षणे तदीक्षणं, तत एव, तत् कथं प्रतिबन्धाभावे तत्तत्स्वाभाव्यात् न तस्यैकान्ततुच्छत्वं, ततः किमिति, तदतदात्मको नाशः, स एवं दोषः, गुणः, असद्दर्शनत्यागात्, कथं तत्त्यागः, न विनाशो नामान्य एव कश्चिद्भावात्, स्वभाव एव हि नाशः स एव क्षणस्थायी जात इति तमस्य मन्दाः स्वभावमूर्ध्वं वावस्यन्ति न प्राग्दर्शनेऽपि पाटवाभावादिति तद्दर्शन पश्चाद्व्यवस्थाप्यते "विकारदर्शनेनैव विपर्यः" इति वचनात् इह भावएव क्षणस्थायी नाशो न तन्निवृत्त्यात्मकोऽन्यः तस्य अन्यधर्मत्वानभ्युपगमात् अभ्युपगमे च तस्यान्वयापत्तिः तदनिवृत्तेरिव तन्निवृत्तेर्भावस्वभावत्वेन तस्यैव तथाभवनादिति। यच्चेदमुक्तं तमस्य मन्दाः स्वभावमूर्ध्वं व्यवस्यन्ति, तदयुक्तम्, ऊर्ध्वं तदभावात् तस्यैवतत्त्वाध्यवसायायोगात्, निर्विषयत्वात्, ततश्चैतदप्यनालोचिताभिधानमेव, न प्राग्दर्शनेऽपि, दर्शनस्यैव व्यवसायत्वात्, तद्याथात्म्यप्रतिभासनात्, पाटवाभावादित्यपि तदेकस्वभावत्वाद्भा-

हकभेदायोगादित्यतस्तद्वशेन पश्चाद्व्यवस्थाप्यत इत्यप्यपाटवाभावादुक्तवत्तदयोगादिति । विकारदर्शनेनेव विषमद्वैरित्यसुन्दरं ज्ञातम्, तत्र प्राक् सर्वथा धारणात्मकशक्त्यभावात्, समग्रभावे विकारदर्शनात्, असमग्राया अदर्शनात्, तद्वत्तदितरत्र तथानिश्चयाभावादित्यन्वयिन्येव तथा समानोपलब्ध्यां तत्क्षयेक्षणमित्यलं प्रसङ्गेन । यच्चोक्तमन्यथात्मनो व्यवस्थितत्वाद्वेदनाभावाभावेऽपि विकारान्तराभावात् प्रतिपक्षाभ्यासेनाप्यनाधेयातिशयत्वाच्च मुक्त्यसम्भव, इत्येतदपि न नः क्षतिमावहति, अनभ्युपगमात्, नह्येकान्तनित्यमस्माभिरात्मादि वस्त्विष्यते किं तर्हि, कथंचिद्यथास्य नित्यानित्यता तथोक्तमेव, नित्यानित्य एव ग्राह्यग्राहकस्वभावस्वकृतकर्मफलभोगादयो युज्यन्ते, कथञ्चिदवस्थितत्वात्, तस्यैव तथाप्रवृत्तेः, अनुभवसिद्धत्वात्, अतो विरोधिधर्माध्यासितस्वरूप एव वस्तुन्यनेकान्तवादिन एव सकलव्यवहारसिद्धिः, पीडानिर्वेदमार्गज्ञानभावनादीनामपि अकिञ्चिदेकाधिकरणत्वेन मुक्त्युपपत्तेरिति । न चानुभवसिद्धवस्तुतथाभावे विरोधिधर्माध्यासितस्वरूपाभिधानं न्याय्यम्, अतथाभावे तदभावप्रसङ्गतो विरोधासिद्धेरिति निदर्शितं प्राक् । न च परैरपि स्वलक्षणेषु साधारणा प्रमेयता भ्रान्तौ वाऽभ्रान्ता स्वसंविन्नेष्यते, तत्तथाभावापत्तेरिति न विपश्चितस्तथा विरोधिधर्माभिधानं वैपश्चित्याविरोधि, तत्तथाभावे सकलव्यवहाराभावप्रसङ्गात्, अप्रमेयत्वेन स्वलक्षणेषु प्रमाणाप्रवृत्तेः भ्रान्तौ च स्वसंविदभावप्रसङ्गादिति, न चैतदास्पाकृन्गामवनर्मणिकनकधनधान्यादिकमनात्मकमनित्यमशुचि दुःखमेव, अन्वयस्यैवात्मत्वात्, तस्य च व्यवस्थापितत्वात् । एवं नानित्यमेव, तद्तादवस्थ्यात्, अन्यथा तदनुत्पत्तेः, एवं नाशुच्येव, शुचिपरिणामभावात्, लोके तथोपलब्धेः । एवं न दुःखमेव मुक्तिसुखजनकत्वात्, पारम्पर्येण तत्तत्स्वभावत्वादिति । किञ्चानात्मकं शून्यं असदित्यभिप्रायोऽर्थः, अनित्यमस्थिरं सदिति च, ततश्च यद्यनात्मकं कथमनित्यमथानित्यं कथमनात्मकमिति, कथं च बुद्धधर्मसंघलक्षणे परमनिर्वृत्तिहेतौ दोषकलङ्करहिते महारत्नत्रये सति वचनमार्गकुशलस्य तदपायभीरोः

अपास्ताशङ्कमिदं वक्तुमुचितं यदुत सर्वमेवाशुचि सर्वमेव दुःखमिति तदाशातनापत्तेः, असदभिधानात् अन्यथा-रत्नत्रयायोगः तदन्याशुच्यादविशेषात्, योगेवातिप्रसङ्ग इति । एवं च तथा ह्येतदात्माङ्गनाभवनमणिकनकधनधान्यादिकमनात्मकमनित्यमशुचि दुःखमिति कथञ्चिद्विज्ञाय तथैव भावयतो वस्तुतस्तत्राभिष्वङ्गास्पदाभावाद्भावनाप्रकर्षविशेषतो वैराग्यमुपजायते ततो मुक्तिः, तथाह्यात्मात्मीयदर्शनमेव मोहस्तत्पूर्वक एवात्मीयस्नेहो रागस्तत्पूर्विकैवानुरागविषयोपरोधिनि-प्रतिहतिर्द्वेष इति कृत्वेति, यदुक्तं, तत्परपक्षे उक्तिमात्रमेव, उक्तवन्निर्विषयत्वात् । यच्चेदमुक्तं यदा तु तदात्माङ्गनादिकं सात्मकाद्यपि तदा यथोक्तभावनाभावाद्भावेऽपि मिथ्यारूपत्वाद्वैराग्याभावस्तदभावाच्च मुक्त्यभाव इति, तदेतदत्यन्तनिःस्वस्य महाधने दानभोगवति स्वदोषापादकम्, तथाहि कथंचित्सात्मकादावेव तस्मिन्भावकविषयभावेनानुपचरितरूपा सम्भवति भावना नान्यथेति कथं यथोक्तभावनाभावः, कथं वा पररूपेणानात्मके तत्तत्संयोगापेक्षयाऽनित्ये तदशुचिपरिणामभावादशुचौ तथा सन्तापकरत्वेन दुःखे सत्यस्याः मिथ्यारूपत्वम्, कथं वा तस्यास्तथाविधनिर्वेदभावेन विरतिपरिणामयोगात् तत्त्वज्ञानसम्भवेन वस्तुयाथात्म्यावसायादौदासीन्यभावत उपायप्रवृत्त्या तत्प्रकर्षरूपवैराग्याभावः, कथं वा सत्यस्मिन् असत्प्रवृत्तिरहितस्य निस्सङ्गभावात् साम्परायिकबन्धशून्यस्य परमार्थगुणस्थानयोगतोऽपचीयमानकर्म्मराशेः सर्वपरिशातभावतो मुक्त्यभाव इति परिचिन्त्यतामेतत् । यदा तु तदात्माङ्गनादिकमनात्मकाद्येव तदोक्तवद्युक्तो भावनाभावः, भावेऽपि मिथ्यारूपता वैराग्याभावो मुक्त्यभावश्चेति । इतश्चैतदेवं सर्वथाऽनात्मकत्वे निःस्वभावत्वेनानित्यत्वासिद्धेः, अनित्यत्वस्य वस्तु धर्म्मत्वात्, अतद्धर्म्मत्वे तदभावेन वस्तुनो नित्यत्वापत्तेः, तद्धर्मत्वे च तदव्यतिरेकतः कथमनात्मकत्वं वस्तुन एवात्मकत्वात् । द्वितीयक्षणे यतस्तदेव न भवत्यतस्तदनात्मकमनित्यमिति चोच्यत इति चेत्, यदेव भवति तदेव न भवतीत्येकत्र भवनाभवनयोर्विरोधः । यदा भवति न तदा न भवति यदा न च भवति न तदा भव-

तीति विरोधाभाव इति चेत्, एकाधिकरणत्वनिबन्धनोऽयम्, न च तदेवमपि नेति निभाल्यतामेतत्। अभवनस्याभावाद्भवनमात्रस्यैव वस्तुत्वादुक्तदोषाभाव इति चेत्, तदभावेन सदाभवनापत्तिर्नाम दोषान्तरमिति यत्किञ्चिदेतत्। तस्यैव क्षणभवनस्वभावत्वात् तदतिरिक्ताभवनाभावान्न दोषान्तरमिति चेत्, एवमपि क्षणादूर्ध्वं तदेव न भवतीति उक्तदोषानतिवृत्तिः। स्यादेतदेककाले खलु भवनाभवनयोर्विरोधः क्षणिकेऽनु भवने क्षणादूर्ध्वमवश्यमेव तन्न भवति, अन्यथा क्षणिकत्वविरोधादित्युक्तदोषाभावः, यत्किञ्चिदेतदधिकदोषापत्तेः, एवं हि न यदेव भवति तदेव न भवत्यपितूर्ध्वमतः कादाचित्कं तदभवनमिति कादाचित्कत्वत एव तदुत्पत्तेः, अत एव नाशयोगाद्भावोन्मज्जनप्रसङ्ग इत्यधिकदोषापत्तिर्निर्लोठितं चैतदधः, अतस्सर्वथा अनात्मकत्वे निःस्वभावत्वेनानित्यत्वासिद्धिः, अतो वस्त्वेव तत्स्वभावत्वात् तथा तथा भवत्पूर्वपूर्वपर्यायनिवृत्तिस्वभावं कथञ्चिदनित्यं, तथाप्रतीतेरिति, एवं यदि सर्वथाऽशुचि दुःखं च कथं वस्तुक्षये तत्क्षयः। केन वाऽयमिष्ट इति चेत् कथं तद्विकलस्य भगवतो वस्तुत्वम्, असंस्कृतत्वादिति चेत्, एतदेव कथमिति चिन्त्यम्, सम्भूय प्रत्ययाभूतेरिति चेत्, सामग्रीजनिकेति त्यक्तोऽभ्युपगमः। पाक्षिक एवायमिति चेत्, किमत्र ज्ञापकमिति वाच्यम्, असंस्कृतप्रभाविता ह्यार्यपुद्गला इति वचनम्, कः खलु अस्यार्थः, किमुपादानमात्रजन्मानः किं वा सन्त एवेति, यद्याद्यः पक्षो बोधमात्राद्बोधमात्रजन्मेति न तेन कस्यचिदवगमः ततश्च परित्यक्तमस्य सर्वज्ञत्वमसमञ्जसं चैतत्, न च तदपरग्राह्यमित्यज्ञातप्रलापोक्तिमात्रं तदभ्युपगमः, न चेदं परमगुनिवचने बुद्धिमत आपादयितुं न्याय्यमिति परिभाव्यतामेतत्। अथापरः पक्षः, कथमसतां वस्तुत्वं, कथं वा न पुष्करपुष्करादीनां, कथं वा सत्सर्वथा सद्भवतिं कथं वा नासदपि सत्, ततश्च नानादित्वमपि सन्तानानां प्राप्तमित्ययं सुतरामसमञ्जसकारी न चासतो ग्रहणमपीत्यप्रमाणकमेतत्। नाप्रमाणकं सत्संवेदनस्यैवात्र प्रमाणतोपपत्तेः तथाहि तदेव तथास्वभावं यदियता कालेन परम्परयाप्यजनकमिति स्वमात्रपरिच्छेदकत्वेऽप्यनेन तद्ग्रहणमिति, न, वचनमात्रत्वात्, तावत्का-

त्वाजनकत्वेऽस्य निरुपाख्यत्वप्रसङ्गात्, सोपाख्यत्वे च तत्तुच्छत्वविरोधात्, सर्वथैकस्वभावत्वेनास्यैव तत्त्वात्, अन्यथा तत्तद्भावासिद्धेः, स्वनिवृत्त्यपरजननस्वभावभेदाभेदयोस्तद्भेदाभेदाभ्यां विरोधान्वयापत्त्यादिदोषतोऽस्यैवायोगाच्च । स्यादेतत्स एव स्वनिवृत्तिस्तस्यैव तदवधिकत्वात् अपरजननं च जनयतीति जननात्, नैतदेवं भावस्यैव तदभावत्वविरोधात्, स एव स्वनिवृत्तिरित्यभ्युपगमे चैतदापत्तेः तदवधिकत्वायोगात् तदाभावे प्रागूर्ध्वं च तदभावे तदुपपत्तेः निवृत्तेः प्रसज्यप्रतिषेधत्वाभ्युपगमाच्च, नहि कस्यचिद्भावेन भावो न भूतो नाम तदा न भूतो यदि स्वयं न भवेत् न भवतीति च प्रसज्यप्रतिषेध एव न पर्युदास इति वचनादिति निर्लोठितमेतत् आत्मसिद्धावित्यलं प्रसङ्गेन । यच्चोक्तं स्यादेतत्किमनेनासम्भाविना मुग्धविस्मयकरेण भावनावादेन कृत्स्नकर्मक्षयान्मोक्षः स च कायसन्तापलक्षणेन तपसा प्रागुपात्ताशुभकर्मनिर्जरणतोऽनागतस्य चाकरणेनेत्याशङ्क्य तदप्यसत् कायसन्तापस्य कर्मफलत्वादित्यादि, तदपि भगवदर्हन्मताश्रवणसूचकमेव केवलं नेष्टार्थसाधकमपि, तपः स्वरूपापरिज्ञानात्, न खलु कायसन्तापरूपं तप इत्यार्हतः कृतान्तः, किं तर्हि ज्ञानसंवेगशमगर्भं क्षायोपशमिकभाववृत्ति क्लिष्टकर्मक्षयहेतु विशिष्टावबोधकारणं परमपदासन्नताकर्तृ दैन्यौत्सुक्यवर्जितम् पारमार्थिकसुखवृत्ति महासत्त्वसेवितं सदनुष्ठानहेतु शुभात्मपरिणामरूपं तप इति, न चैवम्भूतपरिणामरूपमेतत्कायसन्तापलक्षणमिति युज्यते वक्तुम्, अत एव नेदं कर्मफलमेव, तत्क्षयोपशमतः प्रवृत्तेस्तत्त्वत आत्मधर्मत्वात्, न चैवंविधपरिणामवतः सदनशनाद्यनुष्ठानेन प्रायः कायसन्तापोऽपि भवति, न चासौ सन्नपि शुभाशयविवृद्धिहेतुत्वात् चित्तसन्तापाय, न च तत्सन्तापरहितः कायखेदोऽपि परमार्थतः खेद एव, न च सन्तापकृदपि, तदिष्टं परमज्ञानदर्शनधरैस्तीर्थकृद्भिस्तद्वचनप्रामाण्यात् मनोमङ्गुलकर्तृतपः प्रतिषेधात्, चित्तेन्द्रियवश्यमात्रविधानात्, अन्यथार्त्तध्यानापत्तेः, न चाल्पकायखेदेऽपि महाव्याधिपीडितस्येव तद्दुःखज्ञातुस्ततो निर्विण्णस्य सुवैद्योपदेशात् तन्निवृत्त्युद्यतस्य लङ्घनौषधपानाद्यैः दुःखनिवृत्तिदर्शिनः तथाविधारोग्यभाजः समुपजातरसान्तरस्य चित्तखेदः,

एवं भावतपस्विनः संसारमहाव्याधिपीडितस्य मिथ्याविकल्पदुःखज्ञातुस्तत्त्वतस्ततो निर्विण्णस्य भाववैद्यतीर्थकरोपदेशात् स-
म्यक् तन्निवृत्त्युयुक्तस्य तथाविधविहितानुष्ठानात् मिथ्याविकल्पदुःखनिवृत्तिदर्शिनः तत्त्वसंवेदनभावारोग्यभाजः समुद्भूतशमर-
सान्तरस्य न भवति चित्तसन्तापोऽपि तु तथाविधव्याबाधानिवृत्तितस्तथानुभवसिद्धा भवति परमनिर्वृतिरिति । दृष्टा चे-
ष्टार्थसंसिद्धावन्यत्रापि रत्नवणिक्प्रभृतीनां तथाऽनशनादिकायपीडा मनोनिर्वृतिहेतुरिति न कायसन्तापलक्षणं तपो जैना-
नामिति, भवति चानेन प्रागुपात्तकर्म्मनिर्जरणमनुतापभावादाग्रहनिवृत्तेः, कुशलपरिणामयोगाद्भावनासिद्धेराज्ञाराधनात्
सर्वतो निवृत्तेः सद्ध्यानयोगान्निराकाङ्क्षत्वादनागतस्य चाकरणमित्यतः कृत्स्नकर्मक्षयान्मोक्ष इति युक्तियुक्तमेव । एतेन
यत्परैश्चोद्यते भावनाहेयाः क्लेशाः किमत्र कायसन्तापेनेत्यादि, तदपि परिहृतमेव, कायसन्तापस्य तत्त्वतः तपस्त्वानभ्युपग-
मात् तस्योक्तवत्कुशलपरिणामरूपत्वात्, तदनङ्गत्वेन तु ब्रह्मचर्यभिक्षाटनादिवत्तदभिधानादिति । किञ्च भावनापि नस्तपो
भेद एव ध्यानस्य तपोरूपत्वात्, तस्य च भावनापूर्वकत्वात् तदनिष्पत्तौ ध्यानासिद्धेः । न च सर्वथा योगनिरोधलक्षण
लेश्यातीतानुपमशुक्लध्यानव्यतिरेकेण मोक्षः, क्रियाभावे तन्निबन्धनकर्मबन्धानुपरतेः, अन्यथा न तस्या मनागपि कर्महेतुत्वं,
न चैतद्दृष्टेष्टविरोधि तथा लोकाभ्युपगमक्षतेरित्येतदङ्गत्वेन मोक्षविघ्नासाधनपूर्वक्रियारूपैवानित्यत्वादिभावना, तथावि-
धपरिणामजनकत्वेन क्लिष्टानुष्ठाननिवृत्तिहेतुत्वात्, विदिततत्त्वानां तु न किञ्चिदनया तदनुवादरूपया, निरतिचारसामायि-
कगर्भमेकाग्रं चित्तनिरोधलक्षणं तथा सूक्ष्मप्रवृत्तिभावतः प्रचुरकर्मक्षयहेतुः ध्यानमेव प्रधानसिद्ध्यङ्गभूतं श्रेयः । एतद्धि
निरुपमं कर्मामयभेषजं विख्यातं विपश्चितां फलं सच्चेष्टितस्य प्रकर्ष उपादेयानां निराबाधं प्रकृत्या एकान्तेनापरोपतापि
प्रशमसुखसंगतं समुल्लसद्यथावस्थितसज्ज्योतिरित्यस्मात् तत्प्रकर्षमासादयतोऽक्षेपेण केवलं प्रकृष्टाच्च मोक्ष इति । एतेन
नारकादिकायसन्तापवत्तत्त्वतस्तपस्त्वायोगात् इत्यादि यावदतपस्विनश्चैवं योगिनःस्युः कायसन्तापाभावात् न चैतदपि

न्याय्यमभ्युपगमादिविरोधादेवेति निराकृतमवगन्तव्यम्, अनभ्युपगमेनाभावतो निरवकाशत्वादिति । यच्चोक्तम्, अथ न कायसन्तापस्तप इत्यपि त्वन्यदेवेत्येतदाशङ्क्य हन्तैवमपि न तदेकरूपं चित्रशक्तिकस्य कर्म्मणः क्षयायालमन्यतमशक्तितोऽभावादित्यादि, तदप्ययुक्तं, तस्यैकान्तत एकरूपत्वासिद्धेः चित्रकुशलात्मपरिणामरूपत्वात् तत्तद्वचनादिनिमित्तभेदोपपत्तेः, अनशनप्रायश्चित्तादिभेदाभ्युपगमादिति । न चास्य कर्म्मशक्तित एव भावः, तत्क्षयोपशमतः प्रवृत्तेः तत्त्वतः आत्मधर्म्मत्वात्, आवरणात् तदनभिव्यक्तेः तदपगमादभिव्यक्तिभावादिति । आह कः पुनरस्यावगमहेतुः, परमगुरुवचनश्रवणादिः, तदवाप्तावपि क इति वाच्यम्, तथा भव्यसहकारिणः कालस्वभावादयः, किं पुनरवेत्थंभूतभावावगमनिमित्तम्, न परमगुरुवचनतोऽन्यत्, कथमर्वाग्दृशान्तदवसायः, तथाविधक्लिष्टकर्मविगमात्, तस्यापि च तथाविधकालस्वभावादिहेतुत्वात् परमगुरुवचनप्रामाण्यात्, अन्यथैवंविधव्यवहारोच्छेदापत्तेः, सर्वत्र संशयानिवृत्तेरिति । एवं कुशलपरिणामरूपाच्च तपसः तथास्वभावत्वेन न न युक्तः सकलकर्मविगमः, न च तस्येत्थमफलता, व्यवहारतस्तथा प्राप्तफलानामपि योग्यतया लोके सफलतासिद्धेः, उद्यमे निष्फलारम्भाङ्कुराजनकबीजादीनां फलवत्प्रतिप्रवृत्तेः, निश्चयतस्तु तावत्सामग्र्यन्तर्गतस्य तथापगमभावात्, न न तथास्वभावत्वमपि, तदभावेन तदपगमानुपपत्तेः, अपगमे वातिप्रसङ्गात् सर्वेषां तदपगमनापत्तेः, असमञ्जसत्वमिति सूक्ष्मधिया भावनीयम् । एतेन सर्वशक्तिविरोधासिद्धेरित्यादिवत्तपः कर्म्मक्षयवादोऽप्यबुधजनमनोहर एवेत्यपकर्णयितव्य, इत्येतद्व्युदस्तं प्रत्येतव्यम्, उक्तवत्सर्वशक्तिविरोधोपपत्तेः, तथाविधकुशलपरिणामस्य तत्प्रच्यावकत्वादिति । यच्चोक्तं न चास्मिन् सत्यपि मोक्षसौविहित्यं अनेकान्तोपद्रवानिवृत्तेः तथा हि मुक्तोऽपि न मुक्त एव अनेकान्तवादहानेः अपि त्वमुक्तोऽपीत्यादि तदप्ययुक्तं, न मुक्त एवेत्यवधारणनिषेधेनैवानेकान्तवादसाफल्यात्, अमुक्तोऽपीति विधानासिद्धेः । आह कथं न मुक्त एवेत्यनेकान्तवादसाफल्यम्, उच्यते स्यान्मुक्त इति वाक्यार्थापत्तेः, वा-

अ०ज०
पताका०
॥ ७२ ॥

क्यार्थापत्तिश्च स्वमुक्तत्वेनैव मुक्तत्वात् मुक्तान्तरमुक्तत्वेन तदयोगात् स्वपरभावाभावोभयाधीनात्मकत्वात् सर्ववस्तूनामिति निर्णीतमेतत् । अथवा सत्त्वचैतन्यसर्वज्ञत्वासङ्ख्यातप्रदेशत्वादिभ्यो मुक्तामुक्तसामान्यादमुक्तपर्यायेभ्यः कथञ्चिद्व्यतिरिक्तत्वात्सकलकर्मक्षयाभिव्यक्तमुक्तपर्यायस्य स्यान्मुक्तः स्यादमुक्त इति न कश्चिद्दोषः । न च य एव सत्त्वादि पर्यायः स एव मुक्तपर्यायः, प्रतीतिभेदात् एकान्तैकत्वे सत्त्वादेरेव मुक्तत्वप्रसङ्गात् । अस्त्वेवमपि न दोष एवेति चेत्, न, देवदत्तादिषु सत्त्वादिभावेन तद्भावप्रसङ्गात् । सोऽन्य एव सत्त्वादिरिति चेत्, कः स, मुक्तत्वाऽमुक्तत्वे एवेति चेत् न, तयोस्तदन्यत्वे हेतुत्वेन तद्भेदसिद्धेः, सर्वथैकत्वे तु द्वयोरपि सत्त्वादिमात्रत्वाविशेषाद्भेदाभावस्तथा च सत्युक्तो दोष इति, सत्त्वाद्यन्यत्वे तु तस्यासत्त्वादित्वप्रसङ्ग इति चेत्, क एव माह तदन्यदेव तदऽपि तु स्याद्वादः कथंचिदन्यत्कथञ्चिदनन्यत्, एकान्तान्यत्वानन्यत्वयोस्त्वितरेतरविकलतोभयस्वरूपानुपपत्तिभ्यां तदसत्त्वापत्तिलक्षणो निवारितप्रसरो दोषः सूक्ष्मधिया भावनीय इति । एवमनेकान्तत एव भावतो मुक्तिसिद्धिः, अन्यथायोगात् सकलकर्मविगमाच्च सर्वथा सङ्क्लेशाभावान्नेदमपुष्कलमिति कथं नोपादेयफलप्रकर्षः, उक्तवत्तदन्यसाधारणत्वासिद्धेः नेदं सापवादमिति कथमस्य संसारिष्वपि भावः । एतेन तथाहि न वः संसार्यपि सर्वथा संसार्येव एकान्तवादापत्तेः अपि त्वसंसार्यपीति नेदमकृत्स्नं हेयानर्थोत्कर्षः, इत्येतदपि प्रत्युक्तम् अर्थतस्तुल्ययोगक्षेमत्वात्, संसार्युत्तररूपेणासंसारित्वम्, अन्यथा तद्भावप्रसङ्ग इत्युक्तप्रायम् । सङ्क्लेशकृत्कर्मयोगश्च संसारित्वमिति तद्भावेन नेदमकृत्स्नमपि तु कृत्स्नमेवेदमिति कथं न हेयानर्थोत्कर्ष इति भावनामात्रमेतत् । यच्चोक्तं किञ्चानेकान्तवादिनो मानमपि न मानमेव स्यान्मानमिति तत्त्वनीतेरित्थं तदाभासमपि ततश्चैवं तदतदात्मके प्रमाणप्रमेयरूपे सर्वस्मिन्नेवास्मिन्वस्तुतत्त्वे विरोधभाजि अस्य तदतद्वादिनो निष्कलङ्कमतिसमुल्लेखितसत्न्यायानुसारतः सर्वमेव प्रमाणप्रमेयादि प्रतिनियतं न घटत

इति, एतदप्ययुक्तम् अनेकान्तवादापरिज्ञानात् प्रलापमात्रत्वात् तज्ज्ञाने सत्यस्याप्रवृत्तेः। तत्र यत्तावदुक्तम् अनेकान्तवादिनो मानमपि न मानमेवेत्यत्र सिद्धसाध्यता विजातीयादिमानान्तरत्वेनामानत्वात्, अन्यथा तदभावप्रसङ्गात् इतरेतररूपतापत्तेः तथाहि प्रत्यक्षं प्रत्यक्षमानत्वेन मानमनुमानादिमानत्वेनामानमेवमनुमानाद्यपि, अन्यथा तत्प्रतिनियतत्वाभाव इति स्यान्मानमिति शोभनैव तत्त्वनीतिः। कथञ्चित्स्वव्यक्तिमानत्वेन मानत्वात् मानान्तरमानत्वेन त्वमानत्वात् इत्थं तदाभासमपि भावनीयम्। तस्याप्यनेकात्मकत्वात् विसंवादेन तदाभासतया व्याप्तेः, तत्राव्यभिचारेण मानलक्षणयोगः तस्यापि ज्ञेयत्वात् ततस्तत्प्रतीतेश्चेति भावना। न च प्रमेयवदपरिच्छित्त्यात्मकमेवैतत्, तथा प्रतीतिर्लोकादिविरोधात् अदृष्टविभ्रमप्रतीत्यात्मकतया तु तदाभासता। एवं हेत्वाभासेऽप्यसिद्धादौ साध्यविपर्ययप्रतिबद्धतया तत्र हेतुत्वेऽन्यत्राहेतुत्वमित्यनेकात्मकता। ततश्चैवं तदतदात्मकमेव प्रमाणप्रमेयरूपं सर्वं वस्तुतत्त्वं, न च विरोधभाग्, विरोधासिद्धेः, सदसदादीनामितरेतरानुवेधात्। अन्यथा तदनुपपत्तेः प्रमाणाविरोधात्, तथैव तत्प्रवृत्तेः, प्रतिनियतस्ववेदनादन्वयव्यतिरेकसिद्धेः, अन्यथा प्रतीत्यभावात् वस्तुन एवानुपपत्तेः, नियमतो विरोधात्, सर्वत्रैकान्तवादिनस्तदसत्त्वापत्तिलक्षणो विरोध इति निदर्शितं प्राक्। एतेनैकदा वस्तुवस्त्वन्तरानापत्तिलक्षणो विरोधः प्रत्युक्तः, य उच्यते परैः छायातपवच्छीतोष्णवत्सुखदुःखवद्वेति कुतः, असमानत्वात् नहिच्छायातपादिवदितरेतरानुविद्धाः सदसदादयस्तद्वदेकत्वानुपलम्भात्तथास्वभावत्वात् तथानुभवसिद्धेरिति छायातपानुविद्धा न भवतीति विरोधकल्पनायामपि कः प्रसङ्गः सदसदादिषु, नह्यणुरचेतन इति ज्ञानेऽपि तत्तद्विरोधाभिधानं युक्तम्, तत्स्वभावभेदोपपत्तेः, इत्येवं शीतोष्णादिष्वपि योज्यम्। एवं चास्य तदतद्वादिनो निष्कलङ्कमतिसमुत्प्रेक्षितसन्न्यायानुसारतः सर्वमेव प्रमाणप्रमेयादि प्रतिनियतं न घटत इति वचनमात्रं, तदतद्वादिन

अ०ज० पताका० ॥ ७३ ॥

एव स्वपरभावाभावोभयात्मकतया सर्ववस्तूनां प्रतिनियतत्वसिद्धेः, अन्यथा चासिद्धेः, इतरेतरात्मकत्वेन तत्स्वरूपहानिप्रसङ्गात् । एतेन यः पश्यत्यात्मानमित्ययमपि सङ्ग्रहग्रन्थः प्रत्युक्तः, उक्तार्थसंग्रहपरत्वात् तस्य च निराकृतत्वात् , अतोऽनेकान्तात्मक एव वस्तुतत्त्वे प्रमाणप्रमेयव्यवहारसिद्धिरुक्तवत्सकलदोषविरहादिति ॥ एवमनेकान्तात्मकमिह तत्त्वं दर्शितं मया लेशात् । जडजनहिताय कृपया गुरुप्रसादात् जडेनापि ॥ १ ॥ प्रतिपक्षदोषवत्या ये खल्वेकान्तवादयुक्त्यापि । विस्मयमुपनीयन्ते त इह जडाः प्रस्तुता नान्ये ॥ २ ॥ प्रतिपक्षदोषदर्शनविधिना शक्यं च कर्तुमेतेषाम् । सद्बोधहितं प्रायः कृपाप्यतस्सङ्गतैतेषु ॥ ३ ॥ जातो गुरुप्रसादादेतत्सम्पादने समर्थोहम् । न च चित्रं सत्सङ्गो ह्यसतोऽपि न निष्फलो भवति ॥ ४ ॥ मन्दनयनोऽपि लोके सहस्ररश्मिप्रभावतो नियमात् । पश्यति किञ्चिदवितथं वस्तूनि सर्वत्र सिद्धमिदम् ॥ ५ ॥ सद्गुरुयोगेनापि च न यतो मे तदनुरूपबोधाप्तिः । स्वकृतापराधतस्तज्जड एवास्मीत्यसन्दिग्धम् ॥ ६ ॥ न च तस्यैवायं खलु दोषो यद्विषययोग्यतासदृशः । कृत एव हि तेन गुणः स्ववीर्यतः समधिको मन्ये ॥ ७ ॥ आलोच्यमनो ह्येतत्प्रकरणमजडैरपि प्रसादपरैः । जडजनहितार्थमेते शिष्टाहतवल्लभाः प्रायः ॥ ८ ॥ न च शिष्टानामुचितं स्खलितं परहितनिबद्धकक्षाणाम् । अभ्यर्थना पुनरियं तत्स्मृतये प्रकरणसमाप्तौ ॥ ९ ॥ कृत्वाप्रकरणमेतद्यदवाप्तं कुशलमिह मया तेन । मात्सर्यदुःखविरहाद्गुणानुरागी भवतु लोकः ॥१०॥ नमः श्रुतदेवतायै । समाप्तश्चेदमनेकान्तजयपताकाख्यं प्रकरणम् कृतिरियं श्वेतभिक्षुश्रीहरिभद्राचार्यस्येति । मतिर्बौद्धाः शुद्धा प्रभवति कथं सात्र भवतां विचारश्चार्वाकाः प्रचरति कथं चारुचतुरः । कुतर्कैस्तर्कज्ञाः किमपि स कथं तर्कयति वः सति स्याद्वादाङ्के प्रकटहरिभद्रोक्तवचने ॥ १ ॥ ग्रावग्रंथिप्रमाथिप्रकटपटुरणत्कारवाग्भारतुष्टप्रेङ्खद्दर्पिष्ठदुष्टप्रमदवशभुजास्फालनोत्तालवालाः । यद् दृष्ट्वा मुक्तवन्तः स्वयमननुमदं वादिनो हारिभद्रं तद्गम्भीरप्रसन्नं न

हरति हृदयं भाषितं कस्य जन्तोः ॥ २ ॥ यथास्थितार्हन्मतवस्तुवेदिने निराकृताशेषविपक्षवादिने । विदग्धमध्यस्थनृमूढतारये नमोऽस्तु तस्मै हरिभद्रसूरये ॥ ३ ॥ सितपटहरिभद्रं ग्रन्थसन्दर्भगर्भं विदितमभयदेवं निष्कलङ्काकलङ्कम् । सुगतमतमथालङ्कारपर्यन्तमुच्चैः त्रिविधमपि च तर्कं वेत्ति यः साङ्ख्यभट्टौ ॥ ४ ॥ श्रीमत्सङ्गमसिंहसूरिसुकवेस्तस्यांह्रिसेवापरः शिष्यः श्रीजयसिंहसूरिविदुषस्त्रैलोक्यचूडामणेः । यः श्रीनागपुरे प्रसिद्धसुपुरस्थायी श्रुतायागनः श्लोकान्पञ्च चकार सारजडिमाऽसौ यशदेवो मुनिः ॥ ५ ॥

॥ इति अनेकान्तजयपताकाख्यं प्रकरणम् ॥

॥ श्रीः ॥

अ०ज० पताका० ॥ ७४ ॥

पदवाक्यप्रमाणपारावारपारीणलोकानुग्रहकृतानेकग्रन्थाप्रतिमप्रभावाचार्यवर्य-

श्रीहरिभद्रसूरिकृताऽनेकान्तजयपताका समाप्ता.

श्रीपोरवाडवणिग्वंशावतंसश्रेष्ठिवर्यश्री-मगुभाइ-तनुजनुषा श्रीमनसुखभाइ-

श्रेष्ठिवरेण मुद्रापिता.

श्री "सीटी प्रीन्टींग प्रेस—अमदावाद.

॥ ॐ नमः ॥

# ॥ अथ भाषारहस्यम् ॥

ऐन्द्रवृन्दनतं पूर्णज्ञानं सत्यगिरं जिनम् ।
नत्वा भाषारहस्यं स्वं विवृणोमि यथामति ॥ १ ॥

इह खलु निःश्रेयसार्थिनां भाषाविशुद्धिरवश्यमादेया वाक्समितिगुप्त्योस्तदधीनत्वात्तयोश्च चारित्राङ्गत्वात्तस्य च परमनिःश्रेयसहेतुत्वादिति, न च वचनविभक्त्यकुशलस्य मौनमात्रादेव वाग्गुप्तिसिद्धेर्गुणः, सर्वथा मौने व्यवहारोच्छेदादनिष्णातस्य गुप्त्यनधिकारित्वाच्च, तदुक्तम् "वयणविभत्तिअकुसलो वओगयं बहुविहं अयाणंतो । जइवि न भासइ किंची न चेव वयगुत्तयं पत्तो त्ति," प्रत्युतावाग्गुप्तस्य वाग्गुप्तत्वाभिमानादिना दोष एव । तदिदमाहोक्तगाथापातनिकायां चूर्णिकारः । "आह जइ भासमाणस्स दोसो तो मोणं कायव्वं आयरिओ भणइ मोणमवि अणुवाएण कुणमाणस्स दोसो भवइ त्ति," विशुद्धया तु सुचिरं भाषमाणस्यापि धर्मदानादिना गुण एव, तदिदमुक्तम् "वयणविभत्तीकुसलो वओगयं बहुविहं वियाणंतो । दिवसं पि भासमाणो तहावि वयगुत्तयं पत्तो त्ति," ततो भाषाविशुद्ध्यर्थं रहस्यपदाङ्किततया चिकीर्षिताष्टोत्तरशतग्रन्थान्तर्गतभाषारहस्यस्याद्वादरहस्यादिसजातीयं प्रकरणमिदमारभ्यते तस्य चेयमादिगाथा ।

पणमिय पासजिणिन्दं, भासरहस्सं समासओ वुच्छं ।
जं नाऊण सुविहिआ, चरणविसोहिं उवलहन्ति ॥ १ ॥

अहं भाषारहस्यं समासतः शब्दसंक्षेपतो वक्ष्ये इत्यन्वयः. इयं च प्रतिज्ञा सा च तदर्थिनां शिष्याणामवधान-फलिका, किं कृत्वा प्रणम्य प्रकर्षेण नत्वा, कं पार्श्वजिनेन्द्रं जयन्ति रागादिशत्रूनिति जिनाः सामान्यकेवलिनस्तेष्विन्द्र इव प्राधान्याज्जिनेन्द्रः. पार्श्वश्चासौ जिनेन्द्रश्च पार्श्वजिनेन्द्रस्तम्, अनेन च समुचितेष्टदेवतानमस्काररूपं मङ्गलं कृतं तेन च शिष्टाचारः परिपालितो भवति । अथ शिष्टाचारपरिपालनं न स्वतः प्रयोजनम्, सुखदुःखाभावयोरन्यतरत्वाभावात्, न चापूर्वजनकतया तस्य फलहेतुत्वम्, तद्धि अपूर्वं विघ्नमविनाश्य फलं जनयेद् विनाश्य वा, नाद्यः, सति प्रतिबन्धके हेतु-सहस्रादपि फलानुत्पत्तेः, नान्त्यः, आवश्यकत्वाद्विघ्नध्वंसस्यैव मङ्गलफलत्वेऽपूर्वकल्पनावैयर्थ्यादितिचेन्न, शिष्टाचारपरिपाल-नद्वारा मंगलस्यापूर्वजनकत्वेऽपि विघ्नध्वंसहेतुत्वाविरोधात्पुण्यप्रकृतिबन्धपापप्रकृत्युच्छेदयोर्युगपद्भावात्, न च विघ्नध्वंसेनैव फलोपपत्तावपूर्वकल्पनावैयर्थ्यम्, विहितत्वेन तस्याऽवश्यं पुण्यजनकत्वादित्यधिकं मत्कृतमङ्गलवादे । पश्चार्द्धेन प्रयोजनमाह यद् भाषारहस्यं ज्ञात्वा विदित्वा सुविहिताः सदाचाराः चरणविशुद्धिं चारित्रनैर्मल्यम् उपलभन्ते प्राप्नुवन्ति ॥ १ ॥

अथ भाषामेव तावन्निक्षेपतो निर्दिशति

नामाईनिक्खेवा. चउगे चउरेहि एत्थ णायव्वा ।
दव्वे तिविहा गहणं. तहय निसिरणं पराघाओ ॥ २ ॥

अत्र, भाषायां निरूपणीयायां, नामादयश्चत्वारो निक्षेपाः, चतुरैः, अनुयोगकुशलैः, ज्ञातव्याः, नामभाषा, स्थापनाभाषा, द्रव्यभाषा, भावभाषा, चेति, तत्र नामस्थापने आगमनोआगमज्ञात्रनुपयुक्तज्ञशरीरभव्यशरीरद्रव्यभाषा-स्वरूपं च सुगमत्वादुपेक्ष्य तद्व्यतिरिक्तद्रव्यभाषाभेदानाह, द्रव्ये च, ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्ये च विषये, त्रिविधा, त्रिप्रकारा, भाषेत्यस्य पूर्वतो विपरिणतानुषङ्गः। कास्तिस्रो विधा इत्याह ग्रहणं, वचोयोगपरिणतेनात्मना गृहीतान्यनिसृष्टानि भाषाद्रव्याणि, तथाचेति समुच्चये निसरणम्, उरः कण्ठादिस्थानप्रयत्नाद्यथाविभागं निसृज्यमानानि तान्येव, पराघातश्च, तैरेव भाषाद्रव्यैर्निसृष्टैः प्रेर्यमाणानि भाषापरिणतिप्रायोग्याणि द्रव्यान्तराणि। आह च निर्युक्तिकारः "दव्वे तिविहा गहणे निसिरणे तह भवे पराघाये त्ति" अत्र च विषये सप्तमी ग्रहणादिक्रियामाश्रित्य वृत्तौ ग्रहणे चेत्यादिव्याख्यानात्, अन्यथा तु "तिविहा भासा गहणं निसरणं पराघातो त्ति" चूर्णिदर्शनात्प्रथमापि नानुपपन्नैवेति-ध्येयम्॥ २॥

अथ कीदृशानि भाषाद्रव्याणि गृह्णातीत्याह

गेण्हइ ठियाइ जीवो, णेव य अठियाइ भासदव्वाइं।
दव्वाइचउविसेसो, णायव्वो पुण जहाजोगं॥ ३॥

जीवो भाषाद्रव्याणि स्थितानि गृह्णाति नैव चास्थितानि गमनपरिणामवन्ति। अथ यानि स्थितानि गृह्णाति तानि द्रव्यतः किमेकप्रदेशकानि यावदनन्तप्रदेशकानि वा क्षेत्रतश्चैकप्रदेशावगाढानि यावदसङ्ख्येयप्रदेशावगाढानि वा काल-तश्चैकसमयस्थितिकानि यावदसङ्ख्येयसमयस्थितिकानि वा भावतश्च वर्णवन्ति गन्धवन्ति रसवन्ति स्पर्शवन्ति चेति जिज्ञासा-

यामाह, द्रव्यादिचतुर्विशेषः पुनर्यथायोगं सूत्रोक्तनीत्या यथासम्भवं ज्ञातव्यः, तथाहि द्रव्यतस्तावदनन्तप्रदेशकान्येव गृह्णाति नैकपरमाण्वाद्यात्मकानि स्वभावत एव तेषां ग्रहणायोग्यत्वात्, क्षेत्रतस्त्वसङ्ख्येयप्रदेशावगाढान्येव, एकप्रदेशाद्यवगाढानां ग्रहणायोग्यत्वात्, कालतस्त्वेकसमयस्थितिकान्यपि यावदसङ्ख्येयसमयस्थितिकान्यपि पुद्गलानामसङ्ख्येयमपि कालं यावदवस्थानसम्भवात्। "निरेए जहन्नेणं एक्कं समयं उक्कोसेणं असंखेज्जं कालम्" इतिव्याख्याप्रज्ञप्तिवचनात् एकसमयस्थितिकत्वं च ग्रहणानन्तरमेव निसर्गे ग्रहणसमय एवावस्थानात्प्रतिपत्तव्यम्। एकप्रयत्नगृहीतानामप्याद्यभाषापरिणामस्थितिवैषम्यादेकसमयस्थितिकान्यपीत्यन्ये। भावतस्तु वर्णवन्त्यपि यावत् स्पर्शवन्त्यपि। वर्णगन्धरससङ्ख्यामाश्रित्य तु समुदायविवक्षायां नियमात् पञ्चद्विपञ्चवर्णगन्धरसवन्त्येव, ग्रहणद्रव्याण्याश्रित्य तु कानिचिदेकद्व्यादितद्वन्त्यपीत्यूहनीयम्। कालादीन्यप्येकगुणकालादीनि यावदनन्तगुणकालादीन्यपीति द्रष्टव्यम्। स्पर्शसङ्ख्यामाश्रित्य च ग्रहणद्रव्याणि प्रतीत्य कानिचिद् द्विस्पर्शवन्ति न त्वेकस्पर्शवन्ति। एकस्यापि परमाणोरवश्यं स्पर्शद्वयसद्भावात्। द्वौ च स्पर्शौ मृदुशीतौ मृदूष्णौ वा कानिचित्रिस्पर्शान्यपि, त्रिस्पर्शत्वं, कानिचिन्मृदुशीतस्पर्शानि कानिचिन्मृदुस्निग्धस्पर्शानीत्यादिदिशा मृदुस्पर्शावयवानां स्पर्शान्तरयोगे समुदायमधिकृत्य भावनीयम्। कानिचिच्चतुःस्पर्शान्यपि। समुदायमधिकृत्य तु चतुःस्पर्शान्येव तत्र चतुःस्पर्शेषु द्वौ मृदुलघुरूपाववस्थितौ स्पर्शौ अन्यौ तु द्वौ स्निग्धोष्णौ स्निग्धशीतौ रूक्षोष्णौ रूक्षशीतौ चेति। अत्र चावस्थितयोः स्पर्शयोर्व्यभिचरितत्वेनागणनाद्वैकल्पिकस्पर्शमाश्रित्य चतुःस्पर्शवन्तीति निर्देश इति सम्प्रदायः। न चायं पर्यनुयोज्यो विचित्रत्वात्सूत्रगतेरिति भावनीयम्। शीतस्पर्शादीन्यपि चैकगुणशीतस्पर्शादीनि यावदनन्तगुणशीतस्पर्शादीन्यपीति द्रष्टव्यम्। आलापकश्चात्र विषये प्रज्ञापनायामनुसन्धेयः ॥ ३ ॥

अथ स्पृष्टास्पृष्टादिजिज्ञासायामाह

पुट्ठोगाढअणंतरअणुबायरउड्ढमहतिरियगाइं ।
आइविसयाणुपुव्वीकलिआइं छद्दिसिं चेव ॥ ४ ॥

उक्तलक्षणानि भाषाद्रव्याणि स्पृष्टान्येव आत्मप्रदेशैः सह सङ्गतान्येव गृह्णाति नास्पृष्टानि, तान्यप्यवगाढान्येवात्मप्रदेशैः सहैकक्षेत्रावस्थितान्येव न त्वात्मप्रदेशैः स्पृष्टान्यप्यात्मप्रदेशावगाहक्षेत्राद्बहिरवस्थितानि, तान्यप्यनन्तरावगाढान्येव न परम्परावगाढानि येष्वात्मप्रदेशेषु यानि भाषाद्रव्याण्यवगाढानि तैरात्मप्रदेशैस्तान्येव गृह्णाति, न त्वेकद्वित्र्यात्मप्रदेशव्यवहितानि, तान्यपि भाषायोग्यस्कन्धानां मिथ एव प्रदेशस्तोकबाहुल्यापेक्षयाऽणूनि बादराणि च, न त्वन्यथा, तानि च जीवस्य यावति क्षेत्रे ग्रहणयोग्यानि भाषाद्रव्याण्यवस्थितानि तावत्येव क्षेत्रे ऊर्ध्वाधस्तिर्यग्गानि तानि चान्तर्मुहूर्त्तिकस्य ग्रहणोचितकालस्यादावपि मध्येपि तिर्यगपि आदिशब्दस्योपलक्षणत्वात् तान्यपि स्वविषयाणि स्पृष्टादीनि न पुनरविषयाणि तद्व्यतिरिक्तानि तान्यप्यानुपूर्वीकलितानि, आनुपूर्व्वी, नामग्रहणापेक्षया यथासन्नत्वं तया कलितानि न पुनरनीदृशानि तानि च नियमात् षड्दिग्भ्य आगतानि गृह्णाति न तु तिसृभ्यश्चतसृभ्यो वा दिग्भ्यः, भाषकाणां नियमात् त्रसनाड्यामवस्थानेन तेषां षड्दिग्गतानामेव पुद्गलानां ग्रहणसम्भवात्, आलापकश्चात्र प्रज्ञापनायामेवानुसन्धेयः ॥ ४ ॥

तदेवमुक्तं कीदृशानि गृह्णातीति अथ कीदृशानि निसृजन्तीत्याह

भिन्नाइ कोइ णिसिरइ, तिव्वपयत्तो परो अभिन्नाइं ।
भिन्नाइ जंति लोगं, अणंतगुणवुड्ढिजुत्ताइं ॥ ५ ॥

कश्चिन्नीरोगतादिगुणयुक्तस्तथाविधादरात्तीव्रप्रयत्नो वक्ता भिन्नानि आदाननिसर्गप्रयत्नाभ्यां खण्डशः कृतानि भाषाद्रव्याणि निसृजति परो व्याधिग्रस्ततयाऽनादरतो मन्दप्रयत्नोऽभिन्नानि तथाभूतस्थूलखण्डात्मकानि तानि निसृजति तत्र भिन्नानि भाषाद्रव्याणि सूक्ष्मबहुत्वाभ्यामन्यद्रव्यवासकत्वादनन्तगुणवृद्धियुक्तानि सन्ति लोकं यान्ति षट्सु दिक्षु लोकान्तं व्याप्नुवन्तीत्यर्थः तथाच पारमर्षम्, जीवेणं भंते जाइं दव्वाइं भासत्ताए गहिआइं णिसिरइ ताइं किं भिण्णाइं णिसिरइ अभिण्णाइं णिसिरइ गोयमा–भिण्णाइं पि णिसिरइ अभिण्णाइं पि णिसिरइ जाइं भिण्णाइं णिसिरइ ताइं अणंतगुणपरिवुड्ढिए परिवुड्ढमाणाइं लोअंतं फुसंति त्ति । भाष्यकारोप्याह, कोइं मंदपयत्तो, णिसिरइ सकलाइ चेव दव्वाइं । अन्नो तिव्वपयत्तो, सो मुंचइ भिंदिउं ताइं ॥ १ ॥ भिन्नाइ सुहुमयाए, अणंतगुणवड्ढियाइ लोगंतं । पावंति पूरयंति य, भासाइ णिरंतरं लोगंत्ति ॥ २ ॥

अथाभिन्नानि कथं भवन्तीत्याह

भिज्जंति अभिन्नाइं, अवगाहणवग्गणा असंखिज्जा ।
गंतुं व जोयणाइं, संखिज्जाइं विलिज्जंति ॥ ६ ॥

अभिन्नानि भाषाद्रव्याण्यसङ्ख्येया अवगाहनावर्गणाः अवगाहना नामैकैकस्य भाषाद्रव्यस्याधारभूता असङ्ख्येयप्रदेशात्मकक्षेत्रविभागरूपास्तासां वर्गणाः समुदायास्ता गत्वा अतिक्रम्य भिद्यन्ते विशरारुभावं बिभ्रति, विशरारूणि च पुनस्तानि सङ्ख्येयानि योजनानि गत्वा विलीयन्ते शब्दपरिणामं विजहतीत्यर्थः । तथाच सूत्रम् "जाइं अभिण्णाइं णिसिरइ ताइं असंखेज्जाओ ओगाहणवग्गणाओ गंता भेदमावज्जंति संखेज्जाइं जोयणाइं गंता विद्धंसमावज्जंति त्ति"

भाषा
रहस्यम्०
॥ ३ ॥

भाष्यमपि, गंतुमसंखेज्जाओ, अवगाहणवग्गणा अभिन्नाइं । भिज्जंति धम्ममेति य, संखेज्जा जोयणा गंतुं त्ति " ॥ ६ ॥

अथ योयं भाषाभेदः क्रियते स कतिविध इति प्रसङ्गादाह

**से भेए पंचविह खंडे पयरे अ चुन्निआभेए ।**
**अणुतडियाभेए तह, चरिमे उक्कारिआभेए ॥ ७ ॥**

स पूर्वोक्तो भेदो भाषाद्रव्याणां यथावस्थितानामवयवविभागः पञ्चविधः पञ्चप्रकारः खंडे त्ति खण्डभेदः प्रथमः पयरे त्ति प्रतरभेदो द्वितीयः चूर्णिकाभेदस्तृतीयः तथेति समुच्चये अनुतटिकाभेदश्चतुर्थः चरमः सूत्रोक्तक्रमापेक्षयान्तिम उत्कारिकाभेद इति । तथाच पारमर्षम्, एतेसिं णं भंते दव्वाणं कतिविहे भेदे पण्णत्ते, गोयमा–पंचविहे भेए पण्णत्ते, तं जहा खंडाभेए पयरभेए चुण्णिआभेए अणुतडियाभेए उक्कारियाभेए त्ति ॥ ७ ॥

अथैतेषामेव लक्षणान्याह

**अयखंडवंसपिप्पलिचुण्णदहेरंडबीअभेअसमा ।**
**एए भेअविसेसा, दिट्ठा तेलुक्कदंसीहिं ॥ ८ ॥**

एते भेदविशेषास्त्रैलोक्यदर्शिभिर्भगवद्भिरयःखण्डवंशपिप्पलीचूर्णह्रदैरण्डबीजभेदसमा दृष्टाः । तथा चायःखण्डादिभेदवदितरभेदापेक्षम् भेदनिष्ठं प्रतिनियतं वैलक्षण्यमेव खण्डभेदादीनां लक्षणम् तच्च जातिरूपमुपाधिरूपं वेत्यन्यदेतत्तथाचाभिहितम् "से किं तं खंडभेए, भेए जण्णं अयखंडाण वा तओखंडाण वा तंबखंडाण वा सीसखंडाण वा जातरूवखंडाण वा

खंडएण भेदे भवति से त्तं खंडभेए ॥ १ ॥ से किं तं पयरभेए, जण्णं वंसाण वा वेत्ताण वा णलाण वा कदलीथंभाण वा अब्भपडलाण वा पयरएणं भेदे भवति से त्तं पयरभेदे ॥ २ ॥ से किं तं चुण्णिआ भेदे, भेदे जण्णं तिलचुण्णाण वा मुग्गचुण्णाण वा मासचुण्णाण वा पिप्पलीचुण्णाण वा मरियचुण्णाण वा सिंगबेरचुण्णाण वा चुण्णीआए भेदे भवति से त्तं चुण्णिआभेदे ॥ ३ ॥ से किं तं अणुतडियाभेदे, भेदे जण्णं अगडाण वा तलागाण वा दहाण वा नदीण वा वावीण वा पुक्खरिणीण वा दीहिआण वा गुंजाण वा सराण वा सरसरपंतिआण वा अणुतडियाभेदे भवति से त्तं अणुतडियाभेदे ॥ ४ ॥ से किं तं उक्कारियाभेए भेए जण्णं मूससिंगाण वा तिलसिंगाण वा मुग्गसिंगाण वा मासससिंगाण वा एरंडबीआण वा फुडिया उक्कारिआए भेए भवति से त्तं उक्कारिआ भेए त्ति । न च वाच्यमेवं भिद्यमानानां भाषाद्रव्याणामेव नाशापत्तिरवयवविभागाद्रव्यासमवायिकारणीभूतविजातीयावयवसंयोगनाशादिति । घटे छिद्रपर्यायवत्तत्र भेदपर्यायोत्पादेऽपि द्रव्यान्तरोत्पादानभ्युपगमाद्विशिष्टोत्पादस्य च विशिष्टध्वंसप्रयोजकत्वेनाविशिष्टावस्थानाऽप्रतिपन्थित्वात्, अन्यथा द्वितीयादिसमयेष्ववस्थितस्यैव घटस्य द्वितीयादिसमये विशिष्टतयोत्पादेन ध्वंसव्यवहारप्रसङ्गात् । न च छिद्रघटोऽपि तद्घटभिन्न एवोत्पद्यत इति वाच्यं दण्डाद्यव्यापारेण तदुत्पादस्याकस्मिकत्वात्, अथ दण्डादिकं हेतुर्घटविशेष एव न त्वत्रापीति चेत्, अपूर्वेयं कल्पना, अस्तु वा तथा तथापि घटे छिद्रमुत्पन्नं न तु घटो विनष्ट इति व्यवहारः कथमुपपादनीय इत्यधिकं सम्मतिटीकायाम् । वस्तुतः संयोगनाशस्य न द्रव्यनाशकत्वम् किन्त्वावश्यकत्वाद्भेदस्यैव तस्य च न भेदत्वेन तथात्वं किन्तुभेदविशेषत्वेन तथाच मन्दप्रयत्नोच्चारितभाषाद्रव्याणां गतिविशेषप्रयुक्तभेदस्य तद्ध्वंसजनकत्वेऽप्यादाननिसर्गप्रयत्नजनितभेदस्य न तथात्वमिति यथासूत्रं युक्तमुत्पश्यामः ॥ ८ ॥

अथैतैरेव भेदैर्भिद्यमानानां मिथोऽल्पबहुत्वमाह

हुंति अणंतगुणाइं, दव्वाइं इमेहि भिज्जमाणाइं ।
पच्छाणुपुव्विभेआ, सव्वत्थोवाइं चरमाइं ॥ ९ ॥

एभिर्भेदैर्भिद्यमानानि द्रव्याणि पश्चानुपूर्वीभेदात् पश्चानुपूर्व्यैव भेदो यथासङ्ख्यं गणनप्रकारस्ततोऽनन्तगुणानि भवन्ति तत्र च सर्वस्तोकानि चरमाणि उत्कारिकाभेदेन भिद्यमानानि । तथाचालापकः " एएसिं णं भंते दव्वाणं खंडाभेएणं पयराभेदेणं चुन्निआभेदेणं अणुतडिआभेदेणं उक्कारिआभेदेणं भिज्जमाणाणं कतरे(हिंतो) कतरेहिंतो, गोयमा सव्वत्थोवाइं दव्वाइं उक्कारिआभेदेणं भिज्जमाणाइं अणुतडियाभेदेणं भिज्जमाणाइं अणंतगुणाइं चुण्णिआभेदेणं भिज्जमाणाइं अणंतगुणाइं पयराभेदेणं भिज्जमाणाइं अणंतगुणाइं खंडाभेदेणं भिज्जमाणाइं अणंतगुणाइं त्ति " इदं चाल्पबहुत्वं सूत्रप्रामाण्यादेव युक्तेरविषयत्वादिति सम्प्रदायः ॥ ९ ॥

तदेवमुक्तं समसङ्गं कीदृशानि निसृजतीति, अथ कैः केषां पराघात इत्याह

दव्वेहिं णिसिट्ठेहिं, तप्पाओगाण किर पराघाओ ।
वीसेदीए इक्को, मीसो य समाइ सेढीए ॥ १० ॥

निसृष्टैस्तात्वादिप्रयत्नपूर्वमुच्चरितैर्द्रव्यैस्तत्प्रायोग्यानां वासनायोग्यानां द्रव्याणाम्, किलेति सत्ये, पराघातो नाम वासना भवति, स च विश्रेण्यामेको निसृष्टद्रव्याकरम्बितो भवति निसृष्टानां भाषाद्रव्याणां सूक्ष्मतयाऽनुश्रेण्यैव गमनात् । " जीवसूक्ष्मपुद्गलयोरनुश्रेणि गतिः " इति वचनात् । समायां भाषकदिगपेक्षायां प्रथ्वरायां श्रेण्यां मिश्रो निसृष्टद्रव्यकर-

श्रितो भवति । तथाचोक्तं निर्युक्तिकृता " भासासमसेढीओ, सद्दं जं सुणई मीसयं सुणई । वीसेढी पुण सद्दं, सुणेइ णियमा पराघाए " त्ति ॥ १० ॥

तदेवमुक्तं कैः केषां पराघात इत्यपि, अथ ग्रहणादीनां द्रव्यभाषात्वमेव समर्थयति

पाहन्नं दव्वस्स य, अप्पाहन्नं तहेव किरिआणं ।
भावस्स य आलंबिय, गहणाइसु दव्ववएसो ॥ ११ ॥

द्रव्यस्य प्राधान्यं तथैव क्रियाणां ग्रहणादिरूपाणां भावस्य च भाषापरिणामलक्षणस्याप्राधान्यं आलम्ब्य विवक्षा-विपर्यीकृत्य ग्रहणादिषु द्रव्यव्यपदेशः । तथाचोक्तं दशवैकालिकवृत्तौ " एषा त्रिप्रकारापि क्रिया द्रव्ययोगप्राधान्येन विवक्षितत्वात् द्रव्यभाषेति भाव इति "

अन्यथाङ्गीकारे दोषमाह

अण्णह विरुज्झए किर, दोहि अ समएहि भासए भासं ।
वयजोगप्पभवा सा, भासा भासिज्जमाणित्ति ॥ १२ ॥

अन्यथा विरुद्धयते किल द्वाभ्यां समयाभ्यां भाषते भाषामिति । इदं हि प्रथमसमये भाषाद्रव्याणि गृहीत्वा द्वितीयसमये भाषात्वेन परिणमय्य निसर्गाभिप्रायेण सङ्गच्छते । एवं च निसर्गसमये भाषाद्रव्याणां भावभाषात्वमेवेति ग्रहण-मेव द्रव्यभाषा स्यान्न निसर्गादीन्युक्तविवक्षैवादरणीया । एवं वचोयोगप्रभवा भाषेत्यपि निसर्गकाले भावभाषानभ्युपगमे

विरुद्धयेत वचोयोगो हि निसर्गानुकूलः कायसंरम्भः काययोगाहृतवाग्द्रव्यसमूहसध्रीचीनजीवव्यापारो वेत्यन्यदेतत्, उभयथापि तज्जन्या भावभाषेत्युपेयम्, अन्यथा भाषापरिणत्यनुकूलवाग्योगवैकल्यात्, किं बहुनैवं हि भाष्यमाणा भाषेति भागवतमपि वचनं विरुद्धयेत । अत्र भावभाषात्वस्यैव विधेयत्वात्, अन्यथा न पूर्वं नापि पश्चादित्यवधारणानुपपत्तेः । अथ भाष्यमाणा भाषेति कथम् नहि भाषैव भाष्यते किन्तु विषय इति चेत्, सत्यं भाषापदसमभिव्याहारे वचनार्थकधातोर्यत्नविशेषपरत्वात्, अत एव वाचमुच्चरतीत्यादिर्लोकेपि प्रयोगः । ननु तथापि कथमेतदभिन्नानामेव भाषाद्रव्याणामारम्भतः शब्दपरिणामत्यागात् भिन्नानां तु लोकाभिव्याप्त्यादिना परतोपि तत्परिणामावस्थानान्निसर्गसमय एव भाषेति प्रतिज्ञाविरोधात् । न च निसर्गोत्तरं वासनयैव भाषापरिणामाद्विशेषोऽभिधेयः, तथा द्रव्यान्तराणां भाषापरिणामाधानेपि निसृष्टद्रव्याणां तदपरित्यागात्, न च सूक्ष्मर्जुसूत्रनयेनोपपत्तिः, तन्नयेपि परतस्तत्परिणतिधाराऽविच्छेदात्, नापि स्थूलकालमादाय वर्त्तमानत्वोपग्रहान्न दोष इति वाच्यं, वर्त्तमानयत्नोपरमेपि भाषापरिणामानुपरमादिति चेत्, न, अत्र क्रियारूपभावभाषाया एव ग्रहणाच्छब्दार्थोपपत्तेरिति, हेत्वभिधानाद्भाषापरिणामस्य तदुत्तरकालमप्यप्रत्यूहात् शब्दार्थवियोगादिति हेतुना तदा क्रियारूपभावभाषाया एव निषेधादित्याकलयामः ॥ १२ ॥

अथ भावभाषामाह

उवउत्ताणं भासा, णायव्वा एत्थ भावभासत्ति ।
उवओगो खलु भावो, णुवओगो दव्वमिति कट्टु ॥ १३ ॥

अत्र भाषानिक्षेपप्रक्रमे उपयुक्तानामिदमित्थं मया भाषितव्यमित्थमेव भाष्यमाणं श्रोतृपरिज्ञानाय भविष्यतीत्यादि

सम्यगुपयोगशालिनां भाषा भावभाषेति ज्ञातव्या, कुत इत्याह खल्विति निश्चये उपयोगो भावोऽनुपयोगश्च द्रव्यमिति कृत्वा तदिदमभिप्रेत्योक्तं वाक्यशुद्धिचूर्णौ 'भावभासा णाम जेणं? जेणाहिप्पाएण भासा भवइ सा भावभासा कहं जो भासिउमिच्छइ सो पुव्वमेव अत्ताणं पत्तियावेइ जहा इमं मए वत्तव्वंति भासमाणो परं पत्तियावेइ एवं भासाए पओअणं जं परमप्पाणं च अवबोधयति त्ति" अथानुपयोगस्य भावाभित्वबद्धाणोपयोगस्य भावभाषात्वमुच्यतां न तूपयोगविषये वचनइति चेन्न भाव एव भाषेति भङ्ग्योक्तार्थानुपपत्तावपि भावेन भाषेति भङ्ग्या अकृतोपपत्तेः परिभाषकेच्छायाश्चानिप्रसङ्गभङ्गकत्वादिति दिग् ॥ १३ ॥

ननु भाषा न निर्णायिका तादात्म्यतदुत्पत्तिविरहेण शब्दार्थयोरसम्बन्धात्प्रतिनियतावबोधानुपपत्तेः, नचैवं शब्दानामेवानुत्पत्तिप्रसङ्गोऽर्थबोधकत्वं प्रतिसन्धायैव तदुच्चारादिनिवाच्यम्, विकल्पेभ्य एव तदुत्पत्तेस्तेषामपि च विकल्पजननेनैव चरितार्थत्वात् । उक्तंच, "विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः । कार्यकारणता तेषां नार्थं शब्दाः स्पृशन्त्यपि" इति । एवं च न गामानयेत्यतः प्रवृत्त्यनुपपत्तिरपि, न चैवमनुमानोच्छेदः, तत्रानुभवसिद्धप्रमाविशेषकारणस्य व्याप्त्यादेरबाधादत्र तु सङ्केतिबाधस्योक्तत्वादित्यत आह.

ओहारिणी य एसा, सुआउ णायं इमंति ववहारा ।
संभावणा य निण्णय,–हेतुअसज्झत्ति दट्ठव्वं ॥ १४ ॥

एषा च भाषा अवधारिणी निश्चायिका पदपदार्थयोः सङ्केतरूपसम्बन्धव्यवस्थापनेन हेत्वनुपपत्तिनिरासात्, न चानाकाङ्क्षादिपदेष्वप्रत्यायकत्वदर्शनादन्यत्रापि प्रमाणत्वसंशयः, प्रत्यक्षेपि तदनुद्धारात्, नच शास्त्रोक्तार्थानां विसंवाद-

दर्शनात्तदऽप्रामाण्यम्, तद्विसंवादस्यैवासिद्धेः, क्वचिद्विहितकर्मणः फलाभावस्याङ्गवैकल्याद्यधीनत्वादिति दिग्। अथास्तु शब्दप्रामाण्यं तथापि न स्वतन्त्रतया किंत्वनुमानविधया, न च शब्दस्यार्थाव्याप्यत्वात्कथं ततस्तदनुमानमिति वाच्यम् एते पदार्था मिथः संसर्गवन्तः आकांक्षादिमत्पदस्मारितत्वादित्यादिदिशानुमानादितिचेत्, अत्राह श्रुतात् ज्ञातमेतदिति व्यवहारात्, यथा हि अनुमिनोमीति धिया प्रमाविशेषसिद्धेः प्रमाणान्तरसिद्धिस्तथा शब्दात्प्रत्येमीति धिया प्रमाविशेषसिद्धेः, तत्रापि प्रमाणान्तरसिद्धिरप्रत्यूहैव, व्याप्त्यादिज्ञानं विनापि शब्दादाहत्यार्थप्रतीतेश्च न तस्यानुमानत्वमिति दिग्। लोकायतिकस्त्वाह अनुमानमपि न प्रमाणं कुतस्तरां शब्दो धूमादिदर्शनानन्तरमग्न्यादिव्यवहारस्यापि सम्भावनयैवोपपत्तेरिति, तत्राह सम्भावना च निर्णयहेत्वसाध्येति द्रष्टव्यम्। सम्भावना हि संशयरूपैव सा च न परामर्शादिनिश्चयहेतुसाध्या निश्चयसामग्र्यां सत्यां संशयानुत्पादात्, अन्यथा वक्रकोटरादिज्ञाने सत्यपि स्थाणौ पुरुषत्वसंशयोत्पादप्रसङ्गात्। अथ भावांशे उत्कटकोटिकसंशय एव सम्भावना उत्कटत्वं च निष्कम्पप्रवृत्तिप्रयोजको धर्मविशेषस्तत्प्रयोजकतया च धूमदर्शनाद्यादरो, न च धूमादेरग्न्यादिसम्भावनाहेतुत्वे गौरवम्, तदभावाप्रकारकत्वघटितनिश्चयत्वापेक्षया तदभावप्रकारकत्वघटितसंशयत्वस्य लघुत्वादितिचेन्न, संशयव्यावृत्तानुमितित्वस्यैव व्याप्तिज्ञानादिजन्यतावच्छेदकत्वात्। सम्भावनायास्तज्जन्यत्वे तद्घटितनिश्चयसामग्रीप्रतिबध्यतावच्छेदककोटावनुत्कटकोटिकत्वादिप्रवेशे गौरवादिदमित्थमेवेत्यवधारणस्य न सन्देग्धि किंतु निश्चिनोमीत्याद्यनुव्यवसायस्य चानुपपत्तेरित्यन्यत्र विस्तरः। तदिदमभिप्रेत्योक्तं भगवता श्यामाचार्येण "से नूणं भंते मण्णामीति ओहारिणी भासा चिंतेमीति ओहारिणी भासा अह मण्णामीति ओहारिणी भासा अह चिंतेमीति ओहारिणी भासा तह मण्णामीति ओहारिणी भासा तह चिंतेमीति ओहारिणी भासा हंता गोयमा मण्णामीति ओहारिणी भासा चिंतेमीति ओहारिणी भासा अह मण्णामीति ओहारिणी भासा अह चिंतेमीति ओहारिणी भासा तह मण्णामीति ओहा-

रिणी भासा तह चिंतेमीति ओहारिणी भासत्ति " ॥ १४ ॥

उक्ताया एव भावभाषाया भेदानाह

भावे वि होइ तिविहा, दव्वे अ सुए तहा चरित्ते य ।
दव्वे चउहा सच्चा,—सच्चा मीसा अणुभया य ॥ १५ ॥

भावेपि भावनिक्षेपेपि भवति त्रिविधा त्रिप्रकारा भाषा द्रव्ये च श्रुते तथा चरित्रे च, द्रव्यं प्रतीत्य भावभाषा, श्रुतं प्रतीत्य चारित्रं प्रतीत्य च सेत्यर्थः द्रव्ये चतुर्द्धा सत्याऽसत्या मिश्रानुभया च एतासां लक्षणं यथावसरं वक्ष्यामः ॥ १५ ॥

एता एव द्वाभ्यां भेदाभ्यां संगृह्णाति

पढमा दो पज्जत्ता, उवरिल्लाओ अ दो अपज्जत्ता ।
अवहारेउं सक्कइ, पज्जत्तण्णा य विवरीआ ॥ १६ ॥

प्रथमे द्वे सत्यासत्ये भाषे पर्याप्ते उपरितने द्वे सत्यामृषे अपर्याप्ते, तत्रावधारयितुं शक्यते या सा पर्याप्ता च पुनः विपरीता चावधारयितुमशक्या चान्याऽपर्याप्ता । तदुक्तं वाक्यशुद्धिचूर्णौ " पज्जत्तिगा णाम जा अवहारेतुं सक्कइ जहा सच्चा मोसा वा एसा पज्जत्तिगा जा पुण सच्चा वि मोसा वि दुपक्खगा वि सा न सक्कइ विभाविउं जहा एसा सच्चा मोसा वा सा अपज्जत्तिगत्ति " अवधारणीयत्वं च सत्यासत्यान्यतरत्वप्रकारकप्रमाविषयत्वम्, अनवधारणीयत्वं च

तद्भावस्तेन न तदन्यतरभ्रमविषयत्वेनापर्याप्तायाः पर्याप्तत्वं न वा तत्संशयविषयत्वेन पर्याप्ताया अपर्याप्तत्वमित्याद्यूह्यम् अन्यतरव्यवहार एवावधारणमित्यपरे ॥ १६ ॥

अथ प्रागुक्तमेव भाषाविभागं निश्चयव्यवहाराभ्यां विवेचयति

**भासा चउव्विहत्ति य, ववहारणया सुअम्मि पन्नाणं ।**
**सच्चा मुसत्ति भासा, दुविहच्चिय हंदि णिच्छयओ ॥ १७ ॥**

भाषा चतुर्विधेति च व्यवहारनयात् श्रुते प्रज्ञानम् इह खलु विप्रतिपत्तौ वस्तुप्रतितिष्ठासया यथाश्रुतं यदुच्यतेऽस्ति-जीवः सदसद्रूप इति तदेव सत्यं परिभाष्यते आराधकत्वात्, यत्तु तदा श्रुतोत्तीर्णमुच्यतेऽस्तिजीव एकांतनित्य इत्यादि तदसत्यं विराधकत्वात्, यच्च धवादिवृक्षसमूहेऽप्यशोकबाहुल्यादशोकवनमेवेदमित्युच्यते तन्मिश्रम्, यच्च वस्तुमात्रपर्यालोचनपरं हे देवदत्त घटमानयेत्यादि तदनुभयत्वस्वभावमिति अत्र च परिभाषैव शरणं परिभाषा च व्यवहार एवेति द्रष्टव्यम् । हन्दीत्युपदर्शने निश्चयतो द्विविधैव भाषा सत्या मृषेति, सत्यामृषाभाषायास्तात्पर्यबाधेनासत्यायामेवान्तर्भावात्, अबाधिततात्पर्यस्यैव शब्दस्य सत्यत्वादन्यथा द्रव्यं रूपवदित्यस्य देशकात्स्न्यतात्पर्यभेदेन प्रामाण्याप्रामाण्यद्वैविध्यानुपपत्तेरित्यन्यत्र विस्तरः । अत्र च वने वृक्षसमूहरूपेऽशोकाभेदतात्पर्यबाधेन मृषात्वस्य स्पष्टत्वात्, उक्तं च, पञ्चसङ्ग्रहटीकायां, व्यवहारनयमतापेक्षया चैवमुच्यते परमार्थतः पुनरिदमसत्यमेव यथाविकल्पितार्थायोगादिति । न च समूहदेश एवाशोकाभेदान्वयान्न बाधः, तथा समभिव्याहारे देशान्वयस्याव्युत्पन्नत्वात् । यदा त्वशोकप्रधानं वनमिति विवक्षया प्रयोगस्तदा श्रमणसङ्घ इत्यादिवद् व्यवहारसत्यतापि न विरुद्ध्यत इत्याभाति असत्यामृषापि विप्रलिप्सादिपूर्विकाऽसत्य एवान्या च सत्य एवान्तर्भवति,

तदुक्तं, पञ्चसङ्ग्रहटीकायामेव । इदमपि व्यवहारनयमतापेक्षया द्रष्टव्यमन्यथा विप्रतारणादिबुद्धिपूर्वकमसत्येऽन्तर्भवति अन्यस्तु सत्य इति ॥ १७ ॥

उक्तार्थे सूत्रोपष्टम्भमाह

एत्तो च्चिय आणमणी, जाईए केवलाय णिद्दिट्ठा ।
पण्णवणी पण्णवणा.–सुत्ते तत्तट्ठ दंसीहिं ॥ १८ ॥

यतो निश्चयनयेन चरमभाषाद्वयं पूर्वभाषाद्वयेऽन्तर्भावितम्, इत एवाज्ञापनी असत्या मृषाभेदान्तः परिगणितापि जात्या सामान्यपुरस्कारेण केवला तद्विनिर्मुक्ता च प्रज्ञापनासूत्रे तत्त्वार्थदर्शिभिः श्यामाचार्यैः प्रज्ञापनी निर्दिष्टा, तथाहि " अह भंते जातीति इत्थिआणमणी जातीति पुमआणमणी जातीति णपुंसगआणमणी पण्णवणी णं एसा भासा ण एसा भासा मोसा, हंता गोयमा जातीति इत्थिआणमणी जातीति पुमआणमणी जातीति णपुंसगआणमणी पण्णवणी णं एसा भासा ण एसा भासा मोसत्ति, अह भंते जा य इत्थिआणमणी जा य पुमआणमणी जा य णपुंसगआणमणी पण्णवणी णं एसा भासा ण एसा भासा मोसा, हंता गोयमा–जा य इत्थिआणमणी जा य पुमआणमणी जा य णपुंसग आणमणी पण्णवणी णं एसा भासा ण एसा भासा मोसत्ति " च अत्र च यद्यपि केवलसूत्रमाज्ञाप्येन कार्याकरणे मृषात्वाशङ्कया प्रश्नकरणात् विनीतविषयत्वान्न मृषात्वमन्यथा त्वविनीताज्ञापनस्य स्वपरपीडानिबन्धनत्वात् पारिभाषिकं मृषात्वमेव तदुक्तम् । " अविणीयमाणवंतो, किलिस्सई भासई मुसं चेव । घंटालोहं नाउं, केकड करणे पवत्तिज्जा " इत्यभिप्रायेण प्रतिवचनौचित्याच्च समर्थितं जातिसूत्रमप्येवमेव, नवरं सर्वत्राज्ञापनयोग्यत्वासम्भवेपि सम्भवाभिप्रायग्रहणान्नासम्भव इति तथापि सत्यासत्यान्यतरत्वे-

ऽविवाद एवान्यथाऽसत्यामृषात्वेनैव सत्यत्वव्यतिरेकनिश्चयात्प्रश्ननिबन्धनसत्यत्वसन्देहस्यैवानुपपत्तेः । इदमुपलक्षणं प्रज्ञापन्या अपि " जा य इत्थिपण्णवणी " इत्यादिप्रबन्धेन सत्यत्वाभिधानाच्छाब्दव्यवहारानुगतं स्त्र्यादिलक्षणमादाय तस्या असत्यत्वेपि वेदानुगतं तदादाय सत्यत्वस्य युक्तत्वाच्च प्रागुक्तमेव युक्तमित्यपि द्रष्टव्यम् ॥ १८ ॥

अथाराधकत्वविराधकत्वदेशाराधकविराधकत्वानाराधकविराधकत्वोपाधिभिश्चतुर्द्धैव विभागो युक्तो न तु द्विधेत्यत आह

**आराहणं पडुच्च वि, परिभासा चेव चउविहविभागे ।**
**सच्चंतब्भावे च्चिय, चउण्ह आराहगत्तं जं ॥ १९ ॥**

आराधनां प्रतीत्यापि चतुर्विधविभागे परिभाषैव । निश्चयतस्त्वाराधकत्वानाराधकत्वाभ्यां च द्विविधैव भाषा, वस्तुतो भाषानिमित्तयोः शुभाशुभसङ्कल्पयोरेवाराधकत्वं विराधकत्वं वा न तु भाषायाः । अथ मन्दकुमारादीनां करणापटिष्ठतादिनाऽहमेतद्भाषे इत्यादिज्ञानशून्यानां या भाषा तन्निबन्धनाशुभसङ्कल्पाभावात्कथं तत्र विकल्पेन भाषोपक्षय इति चेन्न अनायुक्तपरिणामस्यैव कर्मबन्धहेतुत्वेन विराधकत्वात्तेन तदुपक्षयात् । समर्थितं चेदं " निच्छयओ सकयं चिय " इत्यादिना महता प्रबन्धेन स्वोपज्ञाऽध्यात्ममतपरीक्षायामिति नेह प्रतन्यते । अत्रैव हेतुमाह सत्यान्तर्भाव एव, यद् यस्मात्कारणाच्चतसृणां भाषाणामाराधकत्वम् । अयं भावः " इच्चेयाइं भंते चत्तारि भासज्जायाइं भासमाणे किं आराहए विराहए, गोयमा इच्चेयाइं चत्तारि भासज्जाताइं आउत्तं भासमाणे आराहए णोविराहएत्ति " प्रज्ञापनासूत्रे सर्वा अपि भाषा आयुक्तं भाषमाणस्याराधकत्वोपदेशात्क्रियाद्वयस्य समानकालीनत्वलाभादौत्सर्गिकहेतुहेतुमद्भावसिद्धिः । अत्र चायुक्तमिति पदं सम्यक् प्रवचन-

मालिन्यादिरक्षणपरतयेत्यर्थकम् तथाचायुक्तं भाष्यमाणाः सर्वा अपि भाषाः सत्या एवेति पर्यवसितम् । अत एव "दो न भासिज्ज सव्वसो" इत्यस्यापि न विरोधोऽपवादस्तद्भाषणेऽप्युत्सर्गानपायात्, द्वे इत्यत्रैव धर्मोविरोधित्वं विशेषणमित्यन्ये एवमनायुक्तं भाष्यमाणानां सर्वासामपि विराधकत्वेन मृषात्वमेव । तदुक्तं "तेण परं अस्संजयअविरयअप्पडिहय-पच्चक्खायपावकम्मे सच्चं भासं भासउ मोसं वा सच्चा मोसं वा असच्चामोसं भासतु णो आराहए विराहएत्ति" इत्थं चाराधकत्वानाराधकत्वाभ्यामपि सत्यासत्ये द्वे एव भाषे निश्चयतः पर्यवसन्ने इति ॥ १९ ॥

नन्वेवं चातुर्विध्यं कल्पितमेवेत्याशङ्कायामाह

**एवं चउव्विहत्तं, पकप्पियं होज्ज जइ मई एसा ।**
**सा ण जओ ववहारा—णुगयं वत्थुं वि सुयसिद्धं ॥ २० ॥**

एवं निश्चयनयस्य पारमार्थिकत्वे चतुर्विधत्वं चतुष्प्रकारत्वं प्रकल्पितं तुच्छं वासनामात्रसमुत्थमरूपणत्वात् यदि एषा मतिर्भवेत् सा न यतो व्यवहारानुगतमपि वस्तु श्रुतसिद्धं, तथाहि खट्वाघटकुड्यादिषु स्त्रीत्वपुंस्त्वक्लीबत्वानि न प्रसिद्धानीति न तुच्छानि लिंगानुशासननियन्त्रितसङ्केतविशेषविषयशब्दाभिधेयत्वरूपस्त्रीत्वादीनामपि वास्तवत्वात् स्त्र्यादिपदानां नानार्थकत्वात् । न च पारिभाषिकं स्त्रीत्वादि शब्दनिष्ठमेवेति वाच्यं स्त्रीत्वादियोगिनि वस्तुन्येवेयमित्यादिव्यवहारात्, तदिदमुक्तं शकटसूनुनापि "इयमयमिदमिति शब्दव्यवस्थाहेतुरभिधेयधर्म उपदेशगम्यः स्त्रीपुंनपुंसकत्वानीति" एतदभिप्रायेण सूत्रमप्येवं व्यवस्थितम् । "अह भंते जा य इत्थिवऊ जा य पुमवऊ जा य णपुंसगवऊ पण्णवणीणं एसा भासा ण एसा भासा मोसा, गोयमा जा य इत्थिवऊ जा य पुमवऊ जा य णपुंसगवऊ पण्णवणीणं एसा भासा ण एसा भासा मोसत्ति" एवं भाषाचातुर्वि-

व्यमपि व्यवहारानुगतं श्रुतमूलकतया नावास्तवमिति भावः । अथ निश्चयव्यवहारयोरेकमवश्यमप्रमाणमेवान्यथा वस्तुनस्त-दभिमतद्वैरूप्यानुपपत्तेरिति चेत्, न, वस्तुनोऽनन्तधर्मात्मकत्वस्य प्रामाणिकत्वात्, अन्यथैकस्यैव पितृपुत्रादिव्यवस्थानु-पपत्तेस्तत्तद्धर्मगौणमुख्यत्वोपपत्त्यर्थमेव नयभेदानुसरणादित्यन्यत्र विस्तरः ॥ २० ॥

तदेवं समर्थितं नयभेदेन भाषाया द्वैविध्यं चातुर्विध्यं च अथ सौत्रविभागमनुसृत्योद्देशक्रमप्रामाण्यात्, सत्याया एव लक्षणाभिधानपूर्वकं विभागमाह

तम्मी तव्वयणं खलु, सच्चा अवहारणिक्कभावेणं ।
आराहणी य एसा, सुअंमि परिभासिया दसहा ॥ २१ ॥
जणवयसंमयठवणा—णामे रूवे पडुच्चसच्चे य ।
ववहारभावजोए, दसमे ओवम्मसच्चे य ॥ २२ ॥

खल्विति निश्चये अवधारणैकभावेन तस्मिंस्तद्वचनं सत्या, अवधारणैकभावेनेत्यसत्यामृषाव्यवच्छेदार्थं तस्या आमन्त्र-णाद्यभिप्रायेणैव प्रयोगात्, अवधारणस्य च वस्तुप्रतितिष्ठासायामेवैवकाराद्यध्याहारात्संसर्गमाहिम्ना वा लाभात्तस्मिंस्तद्वचनं च तद्धर्मवति तद्धर्मप्रकारकशाब्दबोधजनकः शब्दोऽनन्तधर्मात्मके वस्तुन्येकधर्माभिधानं च न सत्यम् अवधारणबाधादित्या-यूक्तम् । एषा च श्रुते आराधनी परिभाषिता परिभाषितत्वानुधावनं च पारिभाषिकाराधकत्वेन लक्षणत्वोपदर्शनार्थम्, अन्यथा विहितत्वेनाराधकत्वस्यासम्भवात्, विहितत्वं हि विधिबोधितकर्त्तव्यताकत्वं तच्च सत्यभाषाघटितमित्यन्योन्याश्रयात् सम्यगु-

पयोगपूर्वकत्वेन प्रातिस्विकरूपेण वाराधकशब्दत्वस्य वा सत्याद्यतिव्याप्तेरिति दिग् । सा च दशधा जनपदसत्या, सम्मतसत्या, स्थापनासत्या, नामसत्या, रूपसत्या, प्रतीत्यसत्या, व्यवहारसत्या, भावसत्या, योगसत्या, औपम्यसत्या चेति ॥ २२ ॥

तत्र पूर्वं जनपदसत्याया एव लक्षणमाह

जा जणवयसंकेया, अत्थं लोगस्स पत्तियावेई ।
एसा जणवयसच्चा, पण्णत्ता धीरपुरिसेहिं ॥ २३ ॥

या जनपदसङ्केताल्लोकस्यार्थं प्रत्याययति सैषा भाषा धीरपुरुषैस्तीर्थकरगणधरैर्जनपदसत्या प्रज्ञप्ता तथा च जनपदसङ्केतमात्रप्रयुक्तार्थप्रत्यायकत्वमेतल्लक्षणम् मात्रपदमनादिसिद्धसङ्केतव्यवच्छेदार्थम् अस्ति चात्रेदं लक्षणं कोङ्कणादिसङ्केतज्ञानादेव पिच्चादिपदात्पयः प्रभृति प्रतीतेः । स्यान्मतमपभ्रंशे शक्त्यभावादबोधकत्वं यदि च ततोपि बोधस्तदा शक्तिभ्रमादेवेति, मैवमीश्वरासिद्धौ तत्तत्पदबोद्धव्यत्वप्रकारित्वावच्छिन्नेश्वरेच्छारूपशक्तेरप्यसिद्धेः, सङ्केतज्ञानत्वेनैव शाब्दबोधहेतुत्वात् । संस्कृतसङ्केतस्यैव सत्यत्वं नापभ्रंशसङ्केतस्येत्यर्थस्य विनिगन्तुमशक्यत्वाच्चेत्यन्यत्र विस्तरः ॥ न चेयं तत्तद्देश एव सत्या न तु शास्त्रेपि शक्तशब्दान्तरमध्यपतितापीति वाच्यम् अविप्रतिपत्त्याऽदुष्टविवक्षाहेतुत्वेनान्यत्रापि तस्याः सत्यत्वात्, अन्यथा देशीयशब्देन कुत्राप्यन्वयानुपपत्तिप्रसङ्गात् ॥ २३ ॥

उक्ता जनपदसत्या, अथ सम्मतसत्यां निरूपयन्ति

भाषा रहस्यम्० ॥ १० ॥

णाइक्कमित्तु रूढिं, जा जोगत्थेण णिच्छयं कुणइ ।
सम्मयसच्चा एसा, पंकयभासा जहा पउमे ॥ २४ ॥

या रूढिमतिक्रम्य योगार्थेन व्युत्पत्त्यर्थसम्भवमात्रेण न निश्चयं करोति एषा सम्मतसत्या यथा पद्मे पङ्कजभाषा इयं हि शैवालादीनामपि समाने पङ्कसम्भवत्वेऽरविन्द एव प्रवर्त्तते न तु शैवालादाविति सम्मतसत्या एवं च समुदायशक्तिप्रतिसन्धानवैकल्यप्रयुक्ताबोधकत्ववत्पदघटिता भाषा सम्मतसत्येति फलितम् अथैवं जनपदसत्यातिव्याप्तिः, न चावयवशक्त्यतिप्रसङ्गभञ्जकत्वेन समुदायशक्तेरुपादानान्न दोषः, व्युत्पत्तिविरहितरूढशब्दाव्याप्तेरिति चेन्न शक्तिर्हि न सङ्केतमात्रं किं त्वनादिः शास्त्रीयोऽबाधितः सङ्केतोऽन्यथा लक्षणाद्युच्छेदादित्यनतिप्रसङ्गादिति दिग् ॥ २४ ॥

उक्ता सम्मतसत्याऽथ स्थापनासत्यामाह,

ठवणाए वट्टंती, अवगयभावत्थरहियसंकेया ।
ठवणासच्चा भन्नइ, जह जिणपडिमाइ जिणसद्दो ॥ २५ ॥

स्थापनायां वर्त्तमाना स्थापनासत्या भण्यते कीदृशी अवगतः प्रमितो भावार्थरहितो योगार्थविनिर्मुक्तः सङ्केतो यस्याः सा, उदाहरणमाह यथा जिनप्रतिमायां जिनशब्द इति । अयम्भावः जिनशब्दो यथा भावजिने प्रवर्त्तते तथा स्थापनाजिनेपि निक्षेपप्रामाण्यात्, नानार्थानां च शब्दानां प्रकरणादिमहिम्नैव विशेषे नियमनमिति, यत्र प्रकरणादिबलादद्धुवी भावे प्रवर्त्तमानानामपि शब्दानां नियन्त्रितशक्तिकतया स्थापनाप्रतिपादकत्वप्रतिपत्तिस्तत्र स्थापनासत्य-

पयोगपूर्वकत्वेन प्रातिःस्विकरूपेण वाराधकशब्दत्वस्य वा सत्याद्यतिव्याप्तेरिति दिग् । सा च दशधा जनपदसत्या, सम्मतसत्या, स्थापनासत्या, नामसत्या, रूपसत्या, प्रतीत्यसत्या, व्यवहारसत्या, भावसत्या, योगसत्या, औपम्यसत्या चेति ॥ २२ ॥

तत्र पूर्वं जनपदसत्याया एव लक्षणमाह

जा जणवयसंकेया, अत्थं लोगस्स पत्तियावेई ।
एसा जणवयसच्चा, पण्णत्ता धीरपुरिसेहिं ॥ २३ ॥

या जनपदसङ्केताल्लोकस्यार्थं प्रत्याययति सैषा भाषा धीरपुरुषैस्तीर्थकरगणधरैर्जनपदसत्या प्रज्ञप्ता तथा च जनपदसङ्केतमात्रप्रयुक्तार्थप्रत्यायकत्वमेतल्लक्षणम् मात्रपदमनादिसिद्धसङ्केतव्यवच्छेदार्थम् अस्ति चात्रेदं लक्षणं कोङ्कणादिसङ्केतज्ञानादेव पिच्चादिपदात्पयः प्रभृति प्रतीतेः । स्यान्मतमपभ्रंशे शक्त्यभावादबोधकत्वं यदि च ततोपि बोधस्तदा शक्तिभ्रमादेवेति, मैवमीश्वरासिद्धौ तत्तत्पदबोद्धव्यत्वप्रकारित्वावच्छिन्नेश्वरेच्छारूपशक्तेरप्यसिद्धेः, सङ्केतज्ञानत्वेनैव शाब्दबोधहेतुत्वात् । संस्कृतसङ्केतस्यैव सत्यत्वं नापभ्रंशसङ्केतस्येत्यर्थस्य विनिगन्तुमशक्यत्वाच्चेत्यन्यत्र विस्तरः ॥ न चेयं तत्तद्देश एव सत्या न तु शास्त्रेपि शक्तशब्दान्तरमध्यपतितापीति वाच्यम् अविप्रतिपत्त्याऽदुष्टविवक्षाहेतुत्वेनान्यत्रापि तस्याः सत्यत्वात्, अन्यथा देशीयशब्देन कुत्राप्यन्वयानुपपत्तिप्रसङ्गात् ॥ २३ ॥

उक्ता जनपदसत्या, अथ सम्मतसत्यां निरूपयन्ति

भाषा
रहस्यम्०
॥ १० ॥

णाइक्कमित्तु रूढिं, जा जोगत्थेण णिच्छयं कुणइ ।
सम्मयसच्चा एसा, पंकयभासा जहा पउमे ॥ २४ ॥

या रूढिमतिक्रम्य योगार्थेन व्युत्पत्त्यर्थसम्भवमात्रेण न निश्चयं करोति एषा सम्मतसत्या यथा पद्मे पङ्कजभाषा इयं हि शैवालादीनामपि समाने पङ्कसम्भवत्वेऽरविन्द एव प्रवर्त्तते न तु शैवालादाविति सम्मतसत्या एवं च समुदायशक्तिप्रतिसन्धानवैकल्यप्रयुक्ताबोधकत्ववत्पदघटिता भाषा सम्मतसत्येति फलितम् अथैवं जनपदसत्यातिव्याप्तिः, न चावयवशक्त्यतिप्रसङ्गभञ्जकत्वेन समुदायशक्तेरुपादानान्न दोषः, व्युत्पत्तिविरहितरूढशब्दाव्याप्तेरिति चेन्न शक्तिर्हि न सङ्केतमात्रं किं त्वनादिः शास्त्रीयोऽबाधितः सङ्केतोऽन्यथा लक्षणाद्युच्छेदादित्यनतिप्रसङ्गादिति दिग् ॥ २४ ॥

उक्ता सम्मतसत्याऽथ स्थापनासत्यामाह,

ठवणाए वट्टंती, अवगयभावत्थरहियसंकेया ।
ठवणासच्चा भन्नइ, जह जिणपडिमाइ जिणसद्दो ॥ २५ ॥

स्थापनायां वर्त्तमाना स्थापनासत्या भण्यते कीदृशी अवगतः प्रमितो भावार्थरहितो योगार्थविनिर्मुक्तः सङ्केतो यस्याः सा, उदाहरणमाह यथा जिनप्रतिमायां जिनशब्द इति । अयम्भावः जिनशब्दो यथा भावजिने प्रवर्त्तते तथा स्थापनाजिनेपि निक्षेपप्रामाण्यात्, नानार्थानां च शब्दानां प्रकरणादिमहिम्नैव विशेषे नियमनमिति, यत्र प्रकरणादिबलाद्भुवो भावे प्रवर्त्तमानानामपि शब्दानां नियन्त्रितशक्तिकतया स्थापनाप्रतिपादकत्वप्रतिपत्तिस्तत्र स्थापनासत्य-

त्वमिति, एतेनाचेतनायां प्रतिमायामर्हदादिपदं प्रतिपादयतामजीवे जीवसंज्ञेति वदतामपहृतं सर्वस्वम् एवम्भाषणे स्थापनासत्यत्वप्रतिपादकसूत्रोन्मूलनेनार्हदादीनामाशातनयाऽनन्तसंसारित्वप्रसङ्गादित्यन्यत्र विस्तरः ॥ सद्भावस्थापनायां च शक्तिः व्यक्त्याकृतिजातयः पदार्थ इति वदतां गौतमीयादीनामप्यभिमता, न च गवादिपदानां लाघवाद्गोत्वादिविशिष्ट एव शक्तिः, आकृत्यादौ तु लक्षणैव सूत्रं त्वन्याभिप्रायकमिति वाच्यम्, आनुशासनिके गुरावप्यर्थे शक्त्यङ्गीकाराभिक्षेपानुशासनस्य च स्थापनायामपि सत्त्वात्, असति बाधके तत्रापि शक्तेरिति दिग् । अस्तु वा तत्र निरूढलक्षणा तथापि सङ्केतपदेन तदाश्रयणान्न दोष इति दिग् ॥ अथ सम्मतसत्यालक्षणाक्रान्तैवेयमितिचेन्न, उपधेयसाङ्कर्येऽप्युपाध्योरसाङ्कर्यात् ॥ २८ ॥

उक्ता स्थापनासत्याऽथ नामसत्यामाह

भावत्थविहूणच्चिय, णामाभिप्पायलद्धपसरा जा ।
सा होइ णामसच्चा, जह धणरहिओ वि धणवंतो ॥ २६ ॥

भावार्थविहीन एव या भाषा नामाभिप्रायलब्धप्रसरा नामसङ्केतमात्रादेव योगार्थबाधमवगणय्य स्वप्रतिपाद्यं प्रतिपादयतीति यावत् सा भवति नामसत्या यथा धनरहितोपि नाम्ना धनवानिति । हन्त यदीयं सत्या कथं तर्हि तत उपहास इतिचेत्, मध्यस्थानां न कथञ्चित्, अन्येषां तु नवकम्बलोयमित्यादाविवाभिप्रायान्तरावलम्बनेन वाक्छलादिति गृहाण विचित्रो हि महामोहशैलूषस्य नर्त्तनप्रकार इति । यत्तु नाम यथार्थं तत्र न नामसत्यैव किंतु परिणामसत्यत्वम्, एवम्भूताभिप्रायेण क्रियाविरहकाले त्वतथात्वमपीत्याद्यूह्यम् ॥ २६ ॥

उक्ता नामसत्या, अथ रूपसत्यामाह

एमेव रूवसच्चा, णवरं णामंमि रूवअभिलावो ।
ठवणा पुण ण पवट्टइ, तज्जातीए सदोसे अ ॥ २७ ॥

एवमेव नामसत्यावदेव रूपसत्या ज्ञेया नवरं केवलं नाम्नि नामस्थले रूपाभिलापः रूपशब्दप्रयोगः कर्त्तव्यः, तथाच भावार्थबाधप्रतिसन्धानसध्रीचीनतद्रूपवद्गृहीतोपचारकपदघटितभाषात्वं तल्लक्षणम् । अस्ति च प्रकटप्रतिषेविणि अयं यतिरिति यतिपदस्य तद्रूपवत्युपचारः श्रामण्यव्याप्यसदालयविहारादिप्रतिसन्धानबलान्मुख्यार्थाबाधदशायां तादृशे तत्पदप्रयोगे तु परमार्थतोऽसत्यभाषाप्रवृत्तावप्यसंक्लेशपरिणामेन न कर्मबन्धः प्रत्युत विधिविशुद्धपरिणामान्महानिर्जरैवेति ध्येयम् । नन्वत्र स्थापनासत्यमेवास्तु भावयतित्वबाधे स्थापनायतित्वाश्रयणस्यैव युक्तत्वादित्यत आह स्थापना पुनर्न प्रवर्त्तते तज्जातीये सदोषे च स्थापना हि तज्जातीयभिन्ने दोषरहिते च प्रवर्त्तते न त्वन्यत्र तत्र तथाविधाभिप्रायाभावात्, तदिदमुक्तम्, " उभयमवि अत्थि लिंगे, ण य पडिमासूभयं अत्थित्ति " यथा चैतत्तत्त्वं तथा प्रपञ्चितमध्यात्ममतपरीक्षायाम् । एवञ्चा-तद्द्रव्ये तदाकारः स्थापना कूटद्रव्यं च रूपमिति प्रतिविशेषो ज्ञेयः ॥ २७ ॥

उक्ता रूपसत्याऽथ प्रतीत्यसत्यामाह

अविरोहेण विलक्खण-पडुच्चभावाण देसिणी भासा ।
भन्नइ पडुच्चसच्चा, जह एगं अणु महंतं च ॥ २८ ॥

अविरोधेन निमित्तभेदोपदर्शनाद्विरोधपरिहारेण विलक्षणानां निमित्तभेदमन्तरेणैकप्रतिसन्धानाऽगोचराणां प्र-

तीत्यभावानां समतियोगिकपदार्थानां दर्शिनी भाषा यथा एकं फलादि फलान्तराद्यपेक्षयाऽणु महच्चेति, एवमनामिका कनिष्ठापेक्षया दीर्घा मध्यमापेक्षया ह्रस्वा चेत्याद्यप्यूह्यम् । निमित्तान्तरोपदर्शने तु मृषैवेयम् ॥ २८ ॥

नन्वेकस्यैव कथमणुत्वमहत्वादिनानापरिणामसमावेशो विरोधात्, नचैकज्ञानज्ञेयत्वान्न विरोधः, तज्ज्ञानाममात्वस्यैवापाद्यत्वादित्याशङ्कायामाह

भिण्णणिमित्तत्तणओ, ण य तेसिं हंदि भण्णइ विरोहो ।
वंजयघडयाईयं, होइ णिमित्तं पि इह चित्तं ॥ २९ ॥

नच तेषां विलक्षणप्रतीत्यभावानां हंदीत्युपदर्शने भण्यते विरोधः कुतः भिन्ननिमित्तकत्वात्, एवं चाणुत्वमहत्वादयो न विरुद्धाः भिन्ननिमित्तकत्वात् सत्त्वासत्त्ववदिति प्रयोगो द्रष्टव्यः । ननु सत्त्वासत्त्वयोरिव चाणुत्वमहत्वयोर्नैकरूपं भिन्ननिमित्तकत्वम् अयमस्मादणुरितिवदयमस्मात्सन्नित्यव्यपदेशादिति वैषम्यमित्यत आह इह प्रकृते निमित्तमपि व्यञ्जकघटकादिकं चित्रम् अनेकप्रकारं भवति तथाहि अणुत्वमहत्वादीनां व्यञ्जकप्रतियोग्यादिरूपनिमित्तभेदः सत्त्वासत्त्वादीनां च द्रव्यक्षेत्रकालभावरूपघटकस्वभावनिमित्तभेदः द्रव्यादीनां सत्त्वासत्त्वघटकत्वं च तदव्यतिरेकादतिरिक्तसत्त्वनिषेधादित्यन्यत्र विस्तरः । एकत्रैव महीरुहे मूलशाखाद्यवच्छिन्नसंयोगतदभावादीनामवच्छेदकरूपनिमित्तभेद इत्याद्यूहनीयम् । अणुत्वमहत्वादीनां विरोध एव न कल्प्यत इति किममुना प्रयासेनेति चेत्, हन्त, तर्हि कनिष्ठापेक्षयापि ह्रस्वत्वमनामिकायां किं न स्यादिति दिग् ॥ २९ ॥

नन्वणुत्वमहत्वादयो न भावाः, परापेक्षप्रतिभासविषयत्वात् ये ये भावास्ते न परापेक्षप्रतिभासविषया यथा

रूपादयः, तथा च प्रतीत्यभाषाप्यसत्यैव तुच्छविषयत्वादिति चेत् . उच्यते ।

**ते होंति परावेक्खा, वंजयमुहदंसिणो त्ति ण य तुच्छा ।**
**दिट्ठमिणं वेचित्तं, सरावकप्पूरगंधाणं ॥ ३० ॥**

ते प्रतीत्यभाषाः व्यञ्जकमुखदर्शिनः प्रतिनियतव्यञ्जकव्यङ्ग्याः सन्तः परापेक्षा इति न च नैव तुच्छाः, प्रतियोग्यनुस्मरणमत्र सप्रतियोगिकज्ञानसामग्रीसम्पादनार्थं न तु विकल्पशिल्पकल्पनार्थमिति भावः । अथ धर्मिज्ञानसामग्र्या एव धर्मज्ञानसामग्रीत्वात्कथमणुत्वमहत्त्वादिधर्मिज्ञाने तज्ज्ञानहेतुविलम्ब इत्यत आह दृष्टं साक्षात्कृतमिदं वैचित्र्यं केचिद्भावाः सहकारिव्यङ्ग्यरूपाः केचिच्च न तथेति वैलक्षण्यं शरावकर्पूरगन्धयोः कर्पूरगन्धो हि स्वरसत एव भासते शरावगन्धस्तु जलसम्पर्कादिति, न च जलसम्पर्काच्छरावेऽभिनवगन्ध एवोत्पद्यते न तु प्रागुत्पन्न एव गन्धोऽभिव्यज्यत इति, पृथिवीत्वेन पूर्वमपि तत्र गन्धावश्यकत्वात्, तन्नाशादिकल्पनायां मानाभावाद्विलक्षणाग्निसंयोगादीनामेव पृथिवीगन्धनाशकत्वाच्चेति दिग् । एवं द्वित्वादिकमप्यपेक्षाबुद्धिव्यङ्ग्यमेव न तु तज्जन्यं चैत्रीयापेक्षाबुद्धिजनितद्वित्वस्य मैत्रस्यापि प्रत्यक्षत्वप्रसङ्गात् । द्वित्वे च न चैत्रीयत्वमस्ति येन चैत्रीयद्वित्वे चैत्रीयापेक्षाबुद्धेश्चैत्रीयद्वित्वप्रत्यक्षे चैत्रीयद्वित्वस्य च हेतुत्वं स्यादित्यन्यत्र विस्तर इति किमतिप्रसङ्गेन ॥ ३० ॥

उक्ता प्रतीत्यसत्याऽथ व्यवहारसत्यामाह ।

**ववहारो हु विवक्खा, लोगाणं जा पउज्जए तीए ।**

पिज्जइ णईय डज्झइ, गिरि त्ति ववहारसच्चा सा ॥ ३१ ॥

व्यवहारो हि लोकानां विवक्षा वक्तुमिच्छा विवक्षा सा चात्र नद्यादिपदं नदीगतनीरादिकं बोधयत्विति प्रयोक्तिच्छा ततो नद्यादिपदान्नदीगतनीरादिप्रतिपत्तेः, नदीतन्नीरादीनामभेदप्रतिपत्तिरित्येके, नद्यादिपदं नद्यभिन्नत्वेन नदीगतनीरादिकं बोधयत्वित्याकारैव विवक्षेत्यपरे, तया विवक्षया या भाषा प्रयुज्यते सा पीयते नदी दह्यते गिरिरिति तत्र व्यवहारसत्या, अत्र पीयते नदीत्यस्य नदीगतं नीरं पीयत इति दह्यते गिरिरित्यस्य च गिरिगतं तृणादिकं दह्यत इत्यर्थः । इदमुपलक्षणम् गलति भाजनमनुदरा कन्याऽलोमा एडकेत्यादीनां भाजनगतं जलं गलति सम्भोगजबीजप्रभवोदराभाववती कन्या लवनयोग्यलोमाभाववत्येडकेत्याद्यर्थानामुदाहरणानाम्, न च गिरितृणादीनामभेदाभिधानान्मृषावादित्वप्रसङ्गः, व्यावहारिकाभेदाश्रयणेनादोषत्वात् लोकविवक्षाग्रहणाच्च न रूपसत्याद्यतिव्याप्तिः, एवमामलक्यादौ एकेन्द्रियत्वेन नपुंसकत्वेपि स्त्र्याद्यभेदविवक्षया स्त्रीत्वादिप्रतिपादनमपि व्यवहारसत्यमेवेति द्रष्टव्यमिति दिग् ॥ ३१ ॥

उक्ता व्यवहारसत्याऽथ भावसत्यामाह ।

सा होइ भावसच्चा, जा सदभिप्पायपुव्वमेवुत्ता ।
जह परमत्थो कुंभो, सिया बलाया य एसत्ति ॥ ३२ ॥

सा भवति भावसत्या या सदभिप्रायपूर्वमेवोक्ता, अभिप्रायस्य सत्त्वं च पारमार्थिकभावविषयत्वेन शास्त्रीयव्यवहारनियन्त्रितत्वेन च, अत एवोदाहरणद्वैविध्यमाह यथा परमार्थः कुम्भः सिता बलाका च एषेति । अत्र प्रथममुदाहरणं पा-

रमार्थिककुम्भबोधनाभिप्रायेण कुम्भपदप्रयोगात्सत्यत्वोपदर्शनार्थम्, द्वितीयं च सत्यपि बलाकायां पञ्चवर्णसम्भवे शुक्लवर्णावधारणस्योत्कटशुक्लपरतया तदुपदर्शनार्थम्। न चैवं द्वितीयं व्यवहारसत्य एवान्तर्भाव्यतामिति वाच्यम्, तस्य लोकविवक्षाघटितत्वात्, अथ द्वितीयमेवोदाहरणमन्यत्र प्रकृते प्रदर्शितमिति प्रथमोदाहरणप्रदर्शनं स्वच्छन्दमातिविकल्पितमिति चेन्न "भावसच्चं णाम जमहिप्पायतो जहा घडमाणेहि त्ति अभिप्पायतो घडमाणेहि त्ति भणियं गावी अभिप्पायेण गावी अस्सो वा अस्सो भणिओ एवमादि त्ति" चूर्णिकारवचनात्, अथ बलाकायाः पञ्चवर्णत्वं न युक्तिमत् (किं) शुक्लेतररूपस्य शुक्लरूपप्रतिबन्धकत्वात्, अन्यथा चित्ररूपोच्छेदात्, शुक्लादौ नीलादिसत्त्वे तत्प्रत्यक्षप्रसङ्गाच्चेति चेन्न, शुक्लघटारम्भकपरमाणूनामेव कालान्तरे नीलघटाद्यारम्भकत्वेन नियमन एकत्र पञ्चवर्णत्वव्यवस्थितेः, न च शुक्लारम्भका न तदितरारम्भका इति वाच्यम्, नियतारम्भमतनिरासात्, अवयवगतशुक्लेतरस्य च न शुक्लप्रतिबन्धकत्वम्, मानाभावात्। न च चित्ररूपान्यथानुपपत्तिर्मानम्, नीलपीतादिरूपसमुदायेनैव चित्रव्यवहारोपपत्तावतिरिक्तचित्रे मानाभावादित्यधिकं मत्कृतवादमालायाम्। शुक्लघटे रूपान्तराप्रत्यक्षत्वं चोत्कटरूपत्वेन योग्यत्वात्, परेणाप्युद्भूतरूपस्यैव तथात्वोपगमात्, न चावयवगतानुत्कटरूपस्याऽवयविन्युत्कटरूपप्रतिबन्धकत्वादुक्तानुपपत्तिः, अन्यथा पिशाचेऽप्युत्कटरूपप्रसङ्गादिति वाच्यम्, उत्कटत्वस्य परिणामविशेषप्रयोज्यत्वेन तथाप्रतिबन्धकत्वाकल्पनात्, अन्यथा भर्जनकपालस्थानुद्भूतरूपवह्नेस्तप्ततैलसंसर्गादुद्भूतरूपानुपपत्तिप्रसङ्गादिति दिग्। उत्कटत्वं तादृशवह्नवयवकत्वं न तु जातिरित्यन्ये तत्त्वमत्रत्यं मत्कृतवादरहस्यादवसेयम् ॥ ३२ ॥

उक्ता भावसत्याऽथ योगसत्यामाह।

**सा होइ जोगसच्चा, उवयारो जत्थ वत्थुजोगम्मि।**

छत्ताइअभावे विहु, जह छत्ती कुंडली दंडी ॥ ३३ ॥

सा भवति योगसत्या यत्र यस्यां वस्तुयोगे उपचारः, अतीतसम्बन्धवल्लाक्षणिकपदघटिता योगसत्येत्यर्थः । अन्यथा वस्तुद्वयात्मकसम्बन्धस्यैकतराऽभावेऽभावात् कुत्रोपचारः । न यदि च विशेषणविरहेप्यर्थान्तररूपः सम्बन्धोऽस्तीत्युपेयते तदा इदानीं न छत्रीति च तत्र स्यादिति ध्येयम् । उदाहरणमाह छत्राद्यभावेपि यथा छत्री कुण्डली दण्डीति ॥ ३३ ॥

उक्ता योगसत्याऽथौपम्यसत्यामाह तत्रौपम्यमुपमानापेक्षम्, उपमानं ज्ञातमुदाहरणं निदर्शनं दृष्टान्तो वेति तु पर्यायाः, तथाचाह भगवान् भद्रबाहुः "नायं आहरणं ति य दिट्ठंतोवमनिदरिसणं तह य एगट्ठत्ति" तच्चोपमानं सामान्यतो द्विविधमित्याह ।

चरियं च कप्पियं तह, उवमाणं दुविहमेत्थ णिद्दिट्ठं ।
कप्पियमवि रूवयमिव, भावाबाहेण ण णिरत्थं ॥ ३४ ॥

चरितं च पारमार्थिकं च यथा महारम्भो ब्रह्मदत्तादिवद्दुःखं भजत इति, तथा कल्पितं स्वबुद्धिकल्पनाशिल्पनिर्मितं यथाऽनित्यतायां पिप्पलपत्रोपमानम् उक्तं च "जह तुम्हे तह अम्हे, तुम्हे विय होहिधा जधा अम्हे । अप्पाहेंति पडंतं, पंडुयपत्तं किसलयाणं ति," ननु कल्पितं न प्रयोज्यं बाधितार्थत्वादित्यत आह–कल्पितमपि रूपकमिव भावाबाधेन न निरर्थमिति, अयं भावः—यथा संसारः समुद्र इति रूपकप्रयोगोऽभेदबाधेप्यनाहार्यज्ञान एव बाधधियः प्रतिबन्धकत्वादाहार्यशाब्दबोधद्वारा संसारस्य दुस्तरत्वव्यञ्जकतायां पर्यवस्यन्न निष्प्रयोजनस्तथोक्तचरितोपमानप्रयोगोपि मुख्यार्थबाधेप्याहार्यशाब्द-

बोधद्वाराऽनित्यताप्रतिपत्तिपर्यवसायितया नानर्थ इति, अत एवोक्तम् "णवि अत्थि णवि अ होही, उल्लावो किसलपंडुपत्ताणं। उवमा खलु एस कया, भवियजणविबोहणट्ठाए त्ति"। एवं च कल्पितोपमानं स्वतो नादरणीयं किंचिदिष्टार्थसाधकतया, अत एवोक्तम् "अत्थस्स साहणठाइं धगमिव ओदणट्ठाए त्ति" चरितोपमानं तु स्वतोप्यादरणीयमिति ध्येयम् अनयैव दिशा प्रयोगेपि खरविषाणादिदृष्टान्तसप्रयोजनता यथाकथञ्चित्परिभावनीया बहुश्रुतैरिति दिग् ॥ ३४ ॥

तदप्येकैकं चतुर्विधमित्याह ।

आहरणे तद्देसे, तद्दोसे तह पुणो उवन्नासे ।
एकेक्कं तं चउहा, णेयं सुत्ताउ बहुभेयं ॥ ३५ ॥

उक्तयोः चरितकल्पितयोरुपमानयोर्मध्ये एकैकं चतुर्विधं क विषय इत्याह—उदाहरणे तद्देशे तद्दोषे तथा पुनरुपन्यासे ज्ञेयं ज्ञातव्यं सूत्रात्सिद्धान्तात् कीदृशं बहुभेदं बहवो भेदा अवान्तरप्रकारा यस्य तत्, तथाहि आहरणं संपूर्ण प्रकृतोपयोगी दृष्टांतः, स च चतुर्द्धा अपायोपायस्थापनाप्रत्युत्पन्नविन्यासभेदात्तत्राऽपायोऽनिष्टप्राप्तिस्तद्विषयमुदाहरणमपायोदाहरणम् । स च चतुर्द्धा द्रव्यापायः क्षेत्रापायः कालापायो भावापायश्चेति । तत्र द्रव्यापाये धननिमित्तं परस्परवधपरिणतौ द्वौ भ्रातरावुदाहरणम् । क्षेत्रापाये दशारवर्गः, कालापाये द्वैपायनो, भावापाये च मण्डूकिकाक्षपकः कूरगडुकजीव इतिध्येयम् । एतत्कथानकोपदर्शनं च श्रोतॄणां संवेगस्थैर्यार्थम् । इदं च चरणकरणानुयोगमधिकृत्योक्तम् । द्रव्यानुयोगमधिकृत्य तु द्रव्याद्यपेक्षयात्मादेरेकान्तनित्यतादिवादिनां सुखदुःखाभावप्रसङ्गादिनिदर्शनं द्रष्टव्यम् । उपायोऽभिलषितवस्त्ववाप्त्यर्थो व्यापारस्तद्विषयमुदाहरणमुपायोदाहरणं सोपि च द्रव्यादिभेदादपायवच्चतुर्विधस्तत्र द्रव्योपायो लोके धातुवादादिः लोकोत्तरे त्वध्वादौ

पटलादिप्रयोगतः प्रासुको(दो)दककरणादिः, क्षेत्रोपायो लौकिको लाङ्गलकुलिकादिः लोकोत्तरस्तु विधिना प्रातरशनाद्यर्थमटनादिना क्षेत्रसञ्चारः, कालोपायो नाडिकादिर्लौकिकस्तस्य तज्ज्ञानोपायत्वेन तथाव्यपदेशात् लोकोत्तरस्तु सूत्रपरावर्तनादिः, भावोपायस्तु देवनिर्मितैकस्तम्भप्रासादोपशोभितसर्वर्तुकारामस्थरसालपादपस्य फलप्रवनामिन्या विद्यया गुर्विण्याः स्वगृहिण्या दोहदपूरणार्थं गृहीतवतश्चाण्डालचौरस्याभिप्रायपरिज्ञानार्थमभयस्येवाख्यायिका प्रबन्धोपदर्शनादिक इति । इदं च लौकिकमर्थाक्षिप्तं चरणकरणानुयोगमधिकृत्य चोक्तम् । द्रव्यानुयोगमधिकृत्य पुनरादानाद्युपायेनात्मास्तित्वसाधननिदर्शनं द्रष्टव्यम् । स्थापना च दोषाच्छादनेनाभीष्टार्थप्ररूपणा तत्र लोके हिङ्गुशिवप्रवर्त्तकस्य निदर्शनम्, लोकोत्तरे च प्रमादवशाद्गच्छस्खलितस्य छादनेन कयाचित्कल्पनया प्रवचनं प्रभावयत इति चरणकरणानुयोगं लोकं चाधिकृत्य । द्रव्यानुयोगमधिकृत्य तु नयभेदमतापेक्षया दुष्टहेत्वभिधानेपि तथाविधाभिप्रायेण तत्समर्थनं द्रष्टव्यम् । प्रत्युत्पन्नविन्यासश्च तदात्वोपस्थितानिष्टनिरासः, तस्योदाहरणमेकस्य वणिजो गृहसमीपे बद्धगानतानानां गान्धर्विकाणां गीतश्रवणेनोत्पन्नकामोद्रेकनिजकामिनीपरिजनरक्षणार्थं पृष्टमित्रदत्तोपायस्य गृहसमीपे निर्मापितव्यन्तरभवनस्य गान्धर्विकाणां गानसमये व्यन्तरगृहे पटहादिध्वानेन तेषां क्षोभमुत्पादयतः, लोकोत्तरे तु शिष्यस्यापि कदाचिदभ्युपपन्नस्य सूत्रोक्तदिशा वारयतो धर्माचार्यस्य । इदं च लोकं चरणकरणानुयोगं चाधिकृत्य । द्रव्यानुयोगमधिकृत्य तु यदि नास्तिको वदेद्भावा एव न सन्ति आत्मा तु सुतरां नास्तीति, तदा तमेवं निवारयेत् किमेतत्तव वचनमस्ति नास्ति वा, आद्ये प्रतिज्ञाहानिः, द्वितीये च निषेधकस्यैवासत्त्वे किं केन निषेधनीयं किं नास्त्यात्मेति । (किंच नास्त्यात्मेतिप्रतिषेधको ध्वनिः शब्दः) शब्दश्च विवक्षापूर्वक इति नाजीवोद्भव इति प्रतिषेधध्वनेरेव सिद्ध आत्मेति ॥ दर्शितं सभेदमुदाहरणम् । तद्देशश्च निगमनोपयोगिदेशघटितो दृष्टान्तः । स चतुर्द्धा अनुशास्तिः १ उपालम्भः २ पृच्छा ३ निश्रावचनं ४ चेति ।

तत्र सद्गुणोत्कीर्तनेनोपबृंहणमनुशास्तिः। अत्र च सुभद्राकथानकं वक्तव्यम्, तत्रापि तस्याः शीलगुणदृढत्वपरीक्षोत्तरं लोकप्रशंसा एकदेशस्यैव प्रकृतोपसंहारोपयोगित्वादुदाहरणैकदेशता, एवं भरतकथानकेनापि एकदेशेन वैयावृत्त्यगुणोपसंहाराद् गुरोः शिष्यामप्रमादोपबृंहणमुचितम्, इदमपि लौकिकं चरणकरणानुयोगं चाधिकृत्योक्तम्। द्रव्यानुयोगमधिकृत्य पुनरात्मास्तित्ववादिनस्तन्त्रान्तरीयान् प्रति वक्तव्यम्, यदुत साध्वेतत् यदात्मास्तीत्यभ्युपगतं किंत्वकर्त्तायं न भवति ज्ञानादीनां कृतिसामानाधिकरण्यनियमादित्यादि, उदाहरणदेशता त्वस्यात्मनः कर्तृत्वदेशसाधन एव निदर्शनाभिधानादित्यवधेयम्। उपालम्भो दोषोपदर्शनम्। तत्र मृगाव(प?)तिदेव्युदाहरणम्, एवं प्रमाद्यन् शिष्योऽप्युपालब्धव्य इति चरणकरणानुयोगमधिकृत्य। द्रव्यानुयोगमधिकृत्य तु बहुधा नास्तिकवादप्रकटनलम्पटस्य चार्वाकस्यात्मनास्तित्वकथायामेव वक्तव्यं यदुतात्माभावेऽस्त्यात्मेति वितर्को नास्त्यात्मेति कुविज्ञानं च नोपपद्येत धर्म्यभावे धर्मस्यैवासम्भवादित्यादि, उदाहरणदेशता चास्य परलोकादिप्रतिषेधवादिनो नास्तिकस्य जीवसद्भावसाधनाद्भावनीया। पृच्छा प्रश्नः। तत्र क्वाहमुत्पत्स्य इति भगवति पृष्टे षष्ठ्यां नरकपृथिव्यामिति भगवतोत्तरितः सप्तमनरकपृथिवीगमननिमित्तचक्रवर्त्तिसाम्राज्यसम्पादनायाभ्युद्यतः कृतमालेन हतः कूणिक उदाहरणं लोके। लोकोत्तरेपि प्रष्टव्या आचार्या जिज्ञासितमर्थम्, पृष्ट्वा च समाचरणीयानि शक्यानि [अशक्यानि वा परिहर्त्तव्यानि ?], उदाहरणदेशता चास्याभिहितैकदेश एव प्रष्टुराग्रहात्तेनैव चोपसंहारादवसेया। इदमपि लोकं चरणकरणानुयोगं चाधिकृत्य। द्रव्यानुयोगमधिकृत्य तु नास्त्यात्मेति वादी नास्तिकः पृच्छ्यते, कुतो नास्त्यात्मेति, स चेद् ब्रूयात् सतोऽपरोक्ष इति तदाभिधेयम्, भद्र कुविज्ञानमेतत्ते, विवक्षाभावे विशिष्टशब्दानुपपत्तेरित एवात्मसाधनादिति। निश्रावचनं च तत् यदेकं कंचन निश्राभूतं कृत्वा विचित्रप्रतिपादनम्। यथा द्रुमपत्रकाध्ययने भगवता गौतमनिश्रयाऽन्येप्यनुशासिताः, एवमसहना अपि शिष्या मार्दवसंपन्नमेकं शिष्यं निश्राभूतं कृत्वाऽनुशासनीयाः, उदाहरणदेशता चास्य लेशत एव तथानुशासनात्। एवं तावच्चरणक-

रणानुयोगमधिकृत्योक्तम् । द्रव्यानुयोगमधिकृत्य तु अन्यापदेशेन लोकायतो वक्तव्यः, अहो धिकष्टं नास्ति येषामात्मा तद्भावे दारादिक्रियावैफल्यात्, न च तद्वैफल्यम्, सत्त्ववैचित्र्यानुपपत्तेरित्यादि ॥ उक्तः सभेद उदाहरणदेशः तद्दोषश्च बहुव्रीह्याश्रयणाद्दुष्टमुदाहरणम् तच्चतुर्द्धा, अधर्मयुक्तप्रतिलोमात्मोपन्यासदुरुपनीतभेदात् । तत्राधर्मयुक्ते लोके नलदाम उदाहरणं, लोके लोकोत्तरेपि चरणकरणानुयोगमधिकृत्य तथाविधं निदर्शनमवधार्य नाधर्मयुक्तं भणितव्यम् । द्रव्यानुयोगमधिकृत्य च वादे रूपविद्याबलेन प्रवचनार्थं सावद्यमपि कुर्यात् यथा मयूरीनकुलीप्रभृतिविद्याभिः स परिव्राजको विलक्षीकृत इति, दोषत्वं चात्र सर्वथा स्वरूपतो वाऽधर्मयुक्तत्वादिति ध्येयम् । प्रतिलोमं प्रतिकूलं, तत्र कथानकं प्रद्योतेन हृतस्य पुनस्तमेव हृतवतोऽभयस्य द्रष्टव्यम्, इदं च लोके । लोकोत्तरे तु चरणकरणानुयोगमधिकृत्य "णो किंचिवि पडिकूलं कायव्वं भवभ[म]णमणे(ण्णे)सिं अविणीतसिक्खगाण उ भयणाइ जहोचितं कुज्जा" । द्रव्यानुयोगमधिकृत्य तु द्रव्यार्थिकपर्यायार्थिकयोरन्यतरेणान्यतरं चोदयेत्, दुर्वादिनां द्विराश्यादिप्रतिपादकानां निरासार्थं त्रिराश्यादिकं वा स्थापयेत्, अत्र चाद्ये पक्षे साध्यार्थासिद्धेः, द्वितीये तु विरुद्धभाषणादेव दुष्टत्वमित्यवसेयम् । आत्मोपन्यासश्चायं यत्रानुपन्यसनीय आत्मैवोपन्यस्यते, तत्र च लोके तटाकभेदे पिङ्गलस्थपतिरुदाहरणम्, अन्यत्रापि चरणकरणानुयोगे नैवं ब्रूयात् यदुत "भोतियधम्मातो वि हु, जे पब्भट्ठा नराधमा ते उ, कह दव्वसोयरहिया, धम्मस्साराहगा होंति त्ति ।" द्रव्यानुयोगेपि नैवं प्रयुञ्जीत एकेन्द्रिया जीवा व्यक्तोच्छ्वासादिलिप्तत्वाद् व्यतिरेके घटवदिति, अत्र च न च तथैतेष्वसद्भावस्तस्माज्जीवा एवैत इति, आत्मनोऽपि तद्रूपापत्त्यात्मोपन्यासत्वमुदाहरणदोषता चात्मोपघातजनकत्वेन तच्चासाधारण्यादित्यवसीयते । दुरुपनीतं च दुष्टनिगमनं, तत्र लोके मत्स्यग्रहणपरो भिक्षुरुदाहरणं 'कंथाचार्य श्लथा ते' इत्यादिकाव्यादवसेयम्, चरणकरणानुयोगे तु "इह सासणस्स वन्नो, जायइ जेणं ण तारिसं बूया, वाएवि उवहसिज्जइ, णिगमणतो जेण तं चेव त्ति" । द्रव्यानुयोगेपि "जीव-

भाषा रहस्यम्० ॥ १६ ॥

चिंताए वादिणा तहा भणितव्वं वादो(दे)जेण ण जिप्पइ परवाइणत्ति" उक्तं सभेदमुदाहरणम्। उपन्यासस्तथा–[विधप्रति-कूलाभि]–*प्रायपूर्व उदाहारः। स चतुर्द्धा तद्वस्तुतदन्यवस्तुप्रतिनिभहेतूपन्यासभेदात्। तत्र वाद्युक्तमेव वस्त्वा[दाय उ]पन्यासस्तद्वस्तूपन्यासः, तत्रोदाहरणमेकः कार्पटिको बहून् देशान् भ्रान्त्वा समागतः अन्यैः कार्पटिकैराश्चर्यं पृष्ट उक्तवान् समुद्रतीरे एकत्र मया महान्महीरुहो दृष्टस्तस्यैका शाखा समुद्रे प्रविष्टिताऽन्या च स्थले ततः समुद्रे पतितानि फलानि जल-चरा भवन्ति स्थले पतितानि च स्थलचरा इति तदिदमाकर्ण्य श्राद्धकार्पटिकेनोक्तं यान्यर्धमध्यपतितानि तानि किं भवन्तीति तूष्णीम्भूतः कार्पटिक इति लोके। चरणकरणानुयोगे तु यदि कश्चिद्विनेयः कश्चिदसद्ग्रहं गृहीत्वा न सम्यग् वर्त्तते स खलु तद्वस्तूपन्यासेनैव प्रज्ञापनीयः यथा कश्चिदाह "न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला" इदं किलैवमेव युज्यते प्रवृत्तिमन्तरेण निवृत्तेः फलाभावान्निर्विषयत्वेनासम्भवाच्च फलनिबन्धननिवृत्तिनिमित्तत्वेन प्रवृत्तिरप्यदुष्टैवेति, तत्रोच्यते इह निवृत्तेर्महाफलत्वं किं दुष्टप्रवृत्तिपरिहारात्मकत्वेन, आहोश्विददुष्टप्रवृत्तिपरिहारात्मकत्वेन, आद्ये कथं प्रवृत्तेरदुष्टत्वम्, अन्त्ये चादुष्टनिवृत्तिपरिहारात्मकप्रवृत्तेरपि महाफलत्वप्रसङ्गेन पूर्वापरविरोध इति न मांसभक्षणे-दोष इत्यत्र नञ्प्रश्लेषः कर्त्तव्यः यतः भूतानाम् जीवानाम् एषा प्रवृत्तिरुत्पतिस्थानं भूतानां पिशाचप्रायाणां वा एषा प्रवृ-त्तिर्न तु विवेकिनामिति व्याख्येयम्। द्रव्यानुयोगे त्वेकान्तनित्यो जीवः अमूर्त्तत्वादाकाशवदिति प्रयोगे कर्मवदमूर्त्तत्वेऽ-नित्यं स्यादिति। एवं व्यभिचारोदाहरणाच्च कर्मामूर्त्तमानित्यं चेत्ययं वृद्धदर्शनेनोदाहरणदोष एव यथाऽन्येषां साधर्म्यसमा जा-तिरिति ध्येयम्॥ तदन्यवस्तूपन्यासस्तुल्यवस्त्वन्तराश्रयणेन, यथा पूर्वोदाहरण एव यानि पुनः फलानि पातयित्वा कश्चिद्भक्षयति गृहे नयति वा तानि किं भवन्तीति लोके। चरणकरणानुयोगे तु न मांस इत्यादौ यथाश्रुत एव कुग्रहे "न

* अत्र पञ्चषाण्यक्षराणि त्रुटितानि

हिंस्यात् सर्वाभूतानीति" वचनान्तरोपन्यासेन परिहारः । द्रव्यानुयोगे तु कश्चिद्वदेत् यस्य वादिनोऽन्यो जीवोऽन्यच्च शरीरमिति तस्यान्यशब्दस्याविशिष्टत्वात्तयोरपि तद्वाच्यतयाऽविशेषादेकत्वप्रसङ्ग इति, तं प्रत्येवं तदन्यवस्तूपन्यासो विधेयः हन्त्वैवं परमाणुद्व्यणुकघटपटादीनामेकत्वप्रसङ्गः, अन्यशब्दवाच्यत्वाविशेषात्, तस्माज्जीवशरीरयोरन्यत्वाभिधानं शोभनमेवेति । प्रतिनिभस्तु छलनिपुणवादिनं प्रति प्रतिच्छलेनोपन्यासः, यथा एगंमि नयरे एगे परिव्वायगो सोवण्णेणं खोरएणं तहिं हिंडति सो भणाति जो ममं असुअं सुणावेति तस्सेतं देमि खोरयं, तत्थ एगो सावगो, तेण भणियं "तुज्झ पिआ मह पिउणो, धारेइ अणूणगं सयसहस्सं । जइ सुयपुव्वं दिज्जसु, अह न हु तं खोरगं देहित्ति" अयं च लोके । चरणकरणानुयोगे च येषां सर्वथा हिंसायामधर्मस्तेषामनशनविषयचित्तोद्रेकभङ्गादात्महिंसायामप्यधर्मएवेति तदकरणप्रसङ्गः । द्रव्यानुयोगे पुनरदूष्यं मद्वचनमिति मन्यमानो यः कश्चिदाह अस्ति जीव इत्यत्र वद किञ्चित् यद्यपि वावदूक इति स वक्तव्यो यद्यस्ति जीव एवं तर्हि घटादीनामप्यस्तित्वाज्जीवत्वप्रसङ्ग इति । हेतुरुपपादकस्तदुपन्यासो हेतूपन्यासो यथा किं नु यवाः क्रीयन्त इति प्रश्ने उत्तरं येन मुधा न लभ्यन्त इति लोके । चरणकरणानुयोगे तु यदि शिष्येण पृच्छ्यते किमितीयं भिक्षाटनाद्यतिकष्टा क्रिया (क्रिय)-त इति तदा स वक्तव्यो येन न कष्टतरा वेदना वेद्यते नरकादाविति । द्रव्यानुयोगे तु यद्याह कश्चित्किमित्यात्मा न चक्षुरादिभिरुपलभ्यते, स वक्तव्यो येनातीन्द्रिय इति । उक्तः सभेद उपन्यासस्तदेवं सुव्याख्यातं समासतो बहुभेदमिति पदम् ॥ ३४ ॥

एवं सप्रपञ्चमुपदर्शितमुपमानम् . अथास्योपमासत्याया लक्षणघटकतया साकल्यमाह ।

उवमासच्चा मा खलु- एएसु सदुवमाणघडिया जा ।

णासंभविधम्मग्गह,—दुट्ठा देसाइगहणाओ ॥ ३५ ॥

खल्विति निश्चये सा भाषा उपमासत्या या एतत्पूर्वदर्शितभेदेषु मध्ये सदुपमानघटिता, उदाहरणदोषघटितायाः सत्यत्ववारणायेदम् । इदमुत्सर्गतः, कारणतस्तूदाहरणदोषप्रतिपादनेऽपि नासत्यत्वमिति ध्येयम् । ननु सदुपमापि न सत्या चन्द्रमुखीत्यादौ मुखे यावच्चन्द्रधर्मबाधात्, न चोपमानगतयत्किञ्चिद्धर्मपुरस्कारेणोपमाप्रवृत्तिः, अत्यन्तविलक्षणानामप्यभिधेयत्वज्ञेयत्वादिना परस्परमुपमानोपमेयभावप्रसङ्गादित्यत आह न नैवाऽसम्भविनो मुखाद्युपमेयावृत्तयो ये धर्माश्चन्द्राद्युपमानगतकलङ्कितत्वादयः तद्ग्रहेण दुष्टाः। कुत इत्याह देशादिग्रहणेन चन्द्रमुखीत्यादौ देशोपमायां सम्भविनां प्रसन्नत्वादिधर्माणामेव ग्रहान्न दुष्टत्वं नियामकश्चात्र समभिव्याहारविशेषादिरिति द्रष्टव्यम् । अत्यन्तविलक्षणानां च नोपमानोपमेयभावोऽसाधारण धर्मघटितत्वादुपमाया इति ध्येयम् । ननु व्यतिरेकालङ्कारादिवचनानां क्वान्तर्भावो यदि व्यवहारसत्यादौ उपमाया अपि कथं न तत्र स इति चेन्न, एतद्भेदस्य तत्र प्रवेशादुपमाया एव व्यतिरेकाद्युपलक्षणत्वादिति दिग् ॥ ३५ ॥

उक्ता औपम्यसत्या तदेवं निरूपिता सत्या भाषेत्युपसंहारमसत्याभाषानिरूपणप्रतिज्ञाञ्चाह ।

एवं सच्चा भासा, सुआणुसारेण वन्निया चित्ता ।
भासाइ असच्चाए, सरूवमह कित्तइस्सामि ॥ ३६ ॥

एवमुक्तप्रकारेण सत्या भाषा श्रुतस्य प्रज्ञापनादेरनुसारेण तदभिप्रायापरित्यागेन वर्णिता लक्षणादिभिर्निरूपिता । कीदृशीत्याह—चित्रा बहुभेदप्रभेदघटितत्वात् विचित्रा, अथवा चित्तात् गम्ययपः प्रयोगे पञ्चम्याश्रयणात् चित्तमभिप्रायं प्र-

हीत्वेत्यर्थः, एतेन श्रुतस्य न यथाश्रुत एवार्थो व्याख्येयः किन्त्वाभिप्रायिकोऽप्यन्यथा कालिकानुयोगवैफल्यप्रसङ्गात् हेतुग्राह्याणामर्थानामाज्ञाग्राह्यतया पर्यवसाननिमित्तकाशातनाप्रसङ्गाच्चेति व्यज्यते, अथ सत्यभाषानिरूपणानन्तरमसत्याया भाषायाः स्वरूपं कीर्तयिष्यामि इत्थं चोद्देशक्रमानुरूपैव सङ्गतिरत्रेति सूचितम् ॥ ३६ ॥

तत्र पूर्वं लक्षणाभिधानपूर्वमसत्याया भेदानाह ।

सच्चाए विवरीया, होइ असच्चा विराहिणी तत्थ ।
दव्वाई चउभंगा, दसहा सा पुण सुए भणिआ ॥ ३७ ॥
कोहे माणे माया, लोभे पिज्जे तहेव दोसे अ ।
हासभए अक्खाइअ, उवघाए णिस्सिया दसमा ॥ ३८ ॥

सत्यातो विपरीताऽसत्या भवति अतस्मिंस्तद्वचनमिति यावत्, न च चरितोपनायनिव्याप्तिः यथार्थतात्पर्यविरहेण तद्वचनादिति गाथार्थात् । परिभाषानुरोधादाह, विराहिणित्ति विराधिकेत्यर्थः लक्षणान्तरं चेदम्, विराधकत्वं च सद्भूतप्रतिषेधत्वादिनेति नानुपपत्तिः । तत्र द्रव्यादयश्चत्वारो भङ्गा ज्ञातव्या इति शेषः, ते ह्येवं चतुर्धाऽसत्या भाषा प्रवर्तते द्रव्यतः क्षेत्रतः कालतो भावतश्चेति द्रव्यतः सर्वेषु द्रव्येषु क्षेत्रतो लोकेऽलोके वा लोकेऽ-(सङ्ख्य)नन्तप्रदेशमयो लोक इत्यादिरलोके न वसन्ति जीवाः पुद्गला वाऽलोक इत्यादिः । कालतो दिवा रात्रौ वा, भावतस्तु क्रोधाद्वा लोभाद्वा भयाद्वा हास्याद्वाऽत्रैकग्रहणे तज्जातीयानां ग्रहणमिति न्यायात् क्रोधग्रहणान्मानग्रहः लोभग्रहणाच्च मायाग्रहः भयहास्यग्रहणेन च प्रेमद्वेषकलहाभ्याख्यानादि-

भाषा रहस्यम्०
॥ १८ ॥

ग्रह इति वृद्धसम्प्रदायः । भाव(वा)सत्या भेदा एव च दशानन्तरं निर्युक्तिगाथया दर्शयिष्यन्त इतिध्येयम् । अत्र द्रव्यभाव-संयोगे विधिप्रतिषेधाभ्यामपि चतुर्भङ्गी भावनीया, तथाहि "दव्वओ णाम एगे मुसावाए णो भावओ, भावओ णाम एगे मुसावाए नो दव्वओ, एगे दव्वओ वि भावओ वि, एगे णो दव्वओ णो भावओ। तत्थ दव्वओ मुसावाओ णो भावओ जहा कोई भणिज्जा–अत्थि ते कहिं पसुमिगाइणो दिठा ताहे भणइ णत्थि एस दव्वओ मुसावाओ णो भावओ । भावओ णो दव्वओ जहा मुसं भणिहामित्ति तओ तस्स वंजणाणि सहसत्ति सच्चाणि विणिग्गयाणि एस भावओ णो दव्वओ । दव्वओ वि भावओ वि जहा मुसावायपरिणओ कोइ तमेव मुसावायं वदेज्जा । चउत्थो भंगो सुण्णोत्ति । सा पुनरुक्तलक्षणाऽसत्या दशधा तथा हि–कोहेत्ति अत्र सप्तमी पञ्चम्यर्थे तथा च क्रोधान्निःसृता निर्गतेत्यादि व्याख्येयम्, अथवा निश्रा जाताऽस्याः सा निश्रिता क्रोधे निश्रिता क्रोधनिश्रितेत्यादि यथाश्रुतमेव क्रोधेति शिष्टं स्पष्टम् ॥ ३८ ॥

अत्र पूर्वं क्रोधनिःसृतामेव निरूपयति ।

सा कोहणिस्सिया खलु, कोहाविट्ठो कहेइ जं भासं ।
जह ण तुमं मम पुत्तो, अहवा सव्वंपि तव्वयणं ॥ ३९ ॥

सा क्रोधनिःसृता खलु यां भाषां क्रोधाविष्टः कथयति यथा न त्वं मम पुत्र इति इदं हि कुपितस्य पितुः पुत्रं प्रति वचनम्, अथवा सर्वमपि तस्य क्रोधाविष्टस्य वचनम् । नन्विदमयुक्तं क्रोधाविष्टस्यापि गां गामेव वदतोऽसत्यत्वा-भावादिति चेन्न क्रोधाकुलचित्तत्वेन तस्य गवि गवाभिधानस्याप्यप्रमाणत्वादिति सम्प्रदायः । इदन्तु ध्येयं तत्र सम्मुग्ध-व्यवहारौपयिकसत्यत्वेऽपि फलौपयिकं न सत्यत्वम्, संक्लिष्टाचरणस्य निष्फलत्वादिति ॥ ३९ ॥

नतु कुपितस्य घुणाक्षरन्यायेनापि *सत्यभाषणेनाप्रशस्तक्रोधवशात्क्लिष्टकर्मबध्नतोऽपि सत्यभाषाप्रत्ययं शुभं कर्म किमिति न बद्ध्यत इति मुग्धाशङ्कायामाह ।

ठिइरसबन्धकराणं, हंदि कसायाण चेव अणुरूवं ।
पयडिप्पएसकम्मं, जोगा बज्झंति ण विरूवं ॥ ४० ॥

हंदीत्युपदर्शने योगाः स्थितिरसबन्धकराणां कषायाणामनुरूपमेव प्रकृतिप्रदेशकर्म बध्नन्ति न विरूपम्, एवं च व्यवहारतः सत्याया अपि कस्याश्चिद्भाषायाः क्लिष्टकर्मबन्धसामग्रीभूतकषायाद्यन्तर्गताया न स्वातन्त्र्येण शुभकर्मबन्धहेतुत्वेन फलवत्त्वं तथा च क्रोधाभिभूतस्य सर्वापि भाषाऽसत्यैवेति स्थितम् ॥ ४० ॥

न तावदस्याः शुभफलाहेतुत्वमेव प्रत्युताशुभफलजनकत्वमपीत्याह ।

दुट्ठयरा वा सच्चा, कोहाविट्ठाण जेण सप्पसरा ।
मिच्छाभिणिवेसकए, जीवाणं हंदि सा होइ ॥ ४१ ॥

क्रोधाविष्टानां वाऽथवा दुष्टतरा सत्यातिशयिता दुष्टा दुष्टतरा, कुत इत्याह, हंदीत्युपदर्शने, येन कारणेन सप्रसरा प्रसरणयुक्ता सा सत्या भाषा जीवानां मिथ्याभिनिवेशकृते भवति क्लिष्टाशयानां सत्यभाषणं सम्यगिदं मयोक्तमिति दुर्भाषितानुमोदनं जनयन् महाकर्मबन्धहेतुरिति परमार्थतोऽसत्यमित्यर्थ इति किमतिविस्तरेण ॥ ४१ ॥

उक्ता क्रोधनिःसृताऽथ माननिःसृतामाह ।

* सत्यं भाषमाणस्य नाप्रशस्तक्रोधवशात्क्लिष्टकर्मबन्धनमपि—पाठान्तरम्

सा माणणिस्सिया खलु, माणाविट्ठो कहेइ जं भासं ।
जह बहुधणवंतोऽहं, अहवा सव्वंपि तव्वयणं ॥ ४२ ॥

स्पष्टा नवरं यथा बहुधनवानहमिति वचनमल्पधनस्यापि मानिनः कचित्केनचित्पृष्टस्यैव च नावधेयं शेषं प्राग्वत् ॥ ४२ ॥

उक्ता माननिःसृताऽथ मायानिःसृतामाह ।

मायाइ णिस्सिया सा, मायाविट्ठो कहेइ जं भासं ।
जह एसो देविंदो, अहवा सव्वंपि तव्वयणं ॥ ४३ ॥

स्पष्टा नवरं यथा एष देवेंद्र इत्यैन्द्रजालिकस्यावास्तवशक्रप्रदर्शकस्य मायावचनं शेषं प्राग्वत् ॥ ४३ ॥

उक्ता मायानिःसृताऽथ लोभनिःसृतामाह ।

सा लोभणिस्सिया खलु, लोभाविट्ठो कहेइ जं भासं ।
जह पुण्णमिणं माणं, अहवा सव्वंपि तव्वयणं ॥ ४४ ॥

स्पष्टा नवरं पूर्णमिदं मानमिति कूटतुलादौ ग्राहकं प्रति लुब्धस्य वणिजो वचनं शेषं प्राग्वत् ॥ ४४ ॥

उक्ता लोभनिःसृताऽथ प्रेमनिःसृतामाह ।

सा पेम्मणिस्सिया खलु, पेम्माविट्ठो कहेइ जं भासं ।
जह तुज्झ अहं दासो, अहवा सव्वंपि तव्वयणं ॥ ४५ ॥

स्पष्टा नवरं तवाहं दास इति स्नेहाकुलस्य प्रियतमस्य प्रियतमां प्रति वचनं प्रेमवतीप्रबलमोहोदयजनितः परिणामविशेष इति ध्येयं शेषं स्पष्टम् ॥ ४५ ॥

उक्ता प्रेमनिःसृताऽथ द्वेषनिःसृतामाह ।

सा दोसणिस्सिया खलु, दोसाविट्ठो कहेइ जं भासं ।
जह न जिणो कयकिच्चो, अहवा सव्वंपि तव्वयणं ॥ ४६ ॥

स्पष्टा नवरं न जिनः कृतकृत्य इत्यभिनिविष्टपाखण्डिकस्यैन्द्रजालिकतया विद्यातिशयेनैव कार्य(चाय)मैश्वर्यं दर्शयति न तु कर्मक्षयेण कृतार्थोऽयमिति भगवद्गुणमत्सरिणो वचनं द्वेषश्चात्र परगुणासहनमात्सर्यं क्रोधस्तु तदतिरिक्तोऽ[प्रीतिरूपः] परिणाम इति भेदः शेषं प्राग्वत् ॥ ४६ ॥

उक्ता द्वेषनिःसृताऽथ हास्यनिःसृतामाह ।

सा हासणिस्सिया खलु, हासपरिणओ कहेइ जं भासं ।
अह पेच्छगाहासट्ठा, दिट्ठेवि न दिट्ठमिय वयणं ॥ ४७ ॥

खलु निश्चये सा हास्यनिःसृता हास्यं नाम हास्यमोहोदयजनितः परिणामविशेषस्तत्र परिणतो हास्यपरिणतो यन्मृषा बाधितार्थं कथयेत्, यथा प्रेक्षकहास्यार्थं विलोकमानस्त्रीजनमित्रादिहास्योत्पादनकृते कान्दर्पिकाणां दृष्टेपि वस्तुनि न दृष्टमिति वचनं तथा वचन एव परस्य प्रवृत्तिनिवृत्त्या हासोत्पत्तेः ॥ ४८ ॥

उक्ता हास्यनिःसृताऽथ भयनिःसृतामाह ।

सा य भयणिस्सिया खलु, जं भासइ भयवसेण विवरीयं ।
जह णिवगहिओ चोरो, नाहं चोरोत्ति भणइ नरो ॥ ४९ ॥

भाषामित्यस्यानिबद्धस्य ग्रहणात् यां भाषां भयवशेन विपरीतामसदर्थां भाषते सा च खलु भयनिःसृता यथा नृपगृहीतश्चौरो नरो नाहं चौर इति भणति ॥ ४९ ॥

उक्ता भयनिःसृताऽथाख्यायिकानिःसृतामाह ।

जा कूडकहाकेली, अक्खाइअणिस्सिया हवे एसा ।
जह भारहरामायण,—सत्थेऽसंबद्धवयणाणि ॥ ५० ॥

या कूटकथाकेलिरेषाख्यायिकानिःसृता भवेत् यथा भारतरामायणशास्त्रेऽसम्बद्धवचनानि वेदादौ विध्यादिवचनानि तु परप्रतारणार्थं कालासुरादिकृतत्वेन मायानिःसृतायामन्तर्भवन्तीत्यवधेयम् ॥ ५० ॥

उक्ताख्यायिकानिःसृताऽथोपघातनिःसृतामाह ।

जं उवघायपरिणओ, भासइ वयणं अलीअमिह जीवो ।
उवघायणिस्सिआ सा, जहा अचोरेवि चोरोत्ति ॥ ५१ ॥

उपघातपरिणतः पराशुभचिन्तनपरिणत इह जगति जीवो यदलीकमनृतं वचनं भाषते सा उपघातनिःसृता यथाऽचौरे चोर इति वचनमिति शेषः ॥ ५१ ॥

उक्तोपघातनिःसृता तदेवमुपदर्शिता दशाप्यसत्याभेदा इत्युपसंहरति ।

एवं दसहाऽसच्चा, भासा उवदंसिया जहासुत्तं ।
एसावि होइ सच्चा, पसत्थपरिणामजोगेणं ॥ ५२ ॥

एवमुक्तप्रकारेण दशधा दशभिः प्रकारैरसत्या भाषा उपदर्शिता, कथं यथासूत्रं समयपरिभाषामनुल्लङ्घ्येत्यर्थः । दर्शनीयशेषमाह । एषा उपदर्शिताऽसत्यापि प्रशस्तपरिणामयोगेन, तथाहि प्रवचनप्रद्विष्टनृपादिकं प्रति लब्धिमतो महर्षेर्न त्वं नृप इत्यादिक्रोधनिःसृतं वचनं सत्यमेव न चात्र नृपपदस्य प्रशस्तनृपे लक्षणाऽन्यत्रापि तत्प्रसक्तेरित्येवमन्यत्राप्यूह्यम् ॥ ५२ ॥

नन्वयं कारणभेदकृतः कार्यविभागः कारणानि च करणापाटवादीन्यतिरिच्यन्तेऽपि अन्तर्भवन्ति च रागद्वेषमोहेष्वपीत्यत आह ।

रागेण व दोषेण व, मोहेण व भासई मुसं भासं ।
तहवि दसहा विभागो, अणाइणिद्देससंसिद्धो ॥ ५३ ॥

रागेण वा द्वेषेण वा मोहेन वा भाषते मृषां भाषाम्, यदुक्तं "रागाद्वा द्वेषाद्वा मोहाद्वाऽवाच्यमुच्यते ह्यनृतम्। यस्य तु नैते दोषास्तस्यानृतकारणं किं स्यात्" इति। इदं चावधारणमितरासाधारणकारणनिषेधार्थम्, क्रोधभयादिकषायनोकषायाणां द्वेषे मायाहास्यादिकषायनोकषायाणां च राग एवान्तर्भावात्पराभिमतानां भ्रमप्रमादविप्रलिप्साकरणापाटवहेतूनामपि मध्येऽतस्मिंस्तदध्यवसायरूपस्य भ्रमस्य चित्तानवधानतारूपप्रमादस्येन्द्रियासामर्थ्यरूपकरणापाटवस्य च फलतो मोहे विप्रलिप्सायाश्च द्वेष एवान्तर्भावात्। यद्येवं तर्हि त्रिधैव विभागः क्रियतामत आह। तथापि दशधा विभागोऽनादिनिर्देशसंसिद्धः। अयं भावः सङ्ग्रहाभिप्रायेण त्रिधाविभागसङ्क्षेपेऽप्यनतिविस्तरं सङ्क्षेपरुचितयाभिप्रायसिद्धोऽनादिर्दशधा विभागो प्रयोगमेव प्रयोगार्हस्तथैव व्यवहारसिद्धेरिति ॥ ५३ ॥

भङ्ग्यन्तरेण चतुर्द्धापि मृषाभाषाविभागमाह।

सब्भावस्स णिसेहो, ऽसब्भुउब्भावणं च अत्थम्मि।
अत्थंतरं च गरहा, इय चउहा वा मुसा भासा ॥ ५४ ॥

सद्भावस्य निषेधो धर्मिमात्रे नास्तिप्रतिपादनं यथा नास्ति जीवो नास्ति पुण्यं नास्ति पापमित्यादि। असद्भूतोद्भावनम् अभ्युपगते धर्मिणि विरुद्धधर्मप्रतिपादनं धर्म्यभ्युपगमदर्शनायैवार्थ इति पदं यथास्ति जीवः परमणुपरिमाणो व्यापको वेत्यादिः। अर्थान्तरं नामान्यत्र वस्तुनि अन्यशब्दप्रयोगो यथा गव्यश्वशब्दाभिधानम्, च पुनः, गर्हा निन्दाभिप्रायेण नीचत्वव्यञ्जककाणाङ्गताद्यशोभनधर्माणामभिधानं यथा काणोऽयं बधिरोऽयमित्यादिः। इति अमुना प्रकारेण चतुर्द्धा वा मृषा भाषा इत्थं यथायोगं विभागान्तरमपि विभावनीयम् ॥ ५४ ॥

अथ मृषाभाषानिरूपणस्य सिद्धत्वं सत्यामृषानिरूपणप्रतिज्ञां चाह ।

एवमसच्चा भासा, निरूविया पवयणस्स नीईए ।
सच्चामोसं भासं, अओ परं कित्तइस्सामि ॥ ५५ ॥

स्पष्टा ॥ ५५ ॥

प्रतिज्ञातनिरूपणाया एव सत्यामृषाभाषाया लक्षणपूर्वं विभागमाह ।

अंसे जीसे अत्थो, विवरीओ होइ तह तहारूवो ।
सच्चामोसा मीसा, सुअंमि परिभासिआ दसहा ॥ ५६ ॥
उप्पन्नविगयमीसग, जीवमजीवे अ जीवअज्जीवे ।
तह णंतमीसिया खलु, परित्त अद्धा य अद्दद्धा ॥ ५७ ॥

यस्या भाषया अर्थो विषयोऽंशे देशे विपरीतो बाधितसंसर्गो भवति तथा पुनस्तथारूपोऽबाधितसंसर्गो भवति तच्छब्दस्य यच्छब्देनाक्षेपात् सा सत्यामृषा श्रुते मिश्रेति परिभाषिता, सत्यत्वेन स्वरूपत आराधकत्वादसत्यत्वेन च स्वरूपतो विराधकत्वात् युगपत् फलद्वयानुत्पत्तेस्तु कारणान्तरविरहप्रयोज्यत्वादिति दिग् । सा च दशधा उत्पन्नमिश्रिता विगतमिश्रिता उत्पन्नविगतमिश्रिता देशेषु जीवमिश्रिता अजीवमिश्रिता जीवाजीवमिश्रितानन्तमिश्रिता प्रत्येकमिश्रिताऽद्धामिश्रिताद्धाद्धामिश्रिता

चेति। ननु शतकेषु देशेषु पञ्चाशत्सु देशेषु शतं दत्ता इत्याद्यानां धवखदिराशोकद्रुमसमूहे वाऽशोकवनमित्याद्यानां भाषाणां क्वान्तर्भावः, उत्पत्तिजीवादिमिश्रिता निदर्शना स्यात् तत्त्वादितिचेत् सत्यं, उत्पत्तिजीवादीनां क्रियान्तरवस्त्वन्तराद्युपलक्षणत्वात्, विशेषस्यैव वा विभागाश्रयणाद् । एतेन ज्ञाने यथाऽतस्मिंस्तदवगाहित्वरूपं भ्रमत्वं तद्वति तदवगाहित्वरूपं प्रमात्वं चैकत्रैव इदं रजतमिति ज्ञानस्य धर्म्यंशे प्रमात्वाद्रजतांशे च भ्रमत्वात्, एवमघटवत्यपि भूतले भूतलं घटवदिति भाषाया भूतलांशे प्रमाजनकत्वात् घटांशे च भ्रमजनकत्वात्सत्यामृषात्वमित्युक्तावपि न क्षतिः । वस्तुतस्त्वेवं सत्ये मृषाभेदोच्छेदापत्तिः सर्वस्या अप्यसत्याया अंशे सत्यत्वात् । सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति न्यायात् धर्म्यंशे प्रमाजनकत्वात् । तस्माद्धर्म्यंशविनिर्मोकेन परिस्थूरभ्रमप्रमाजनकत्वमादायैवैतद्भेदातिरेक इति ध्येयम् । ननु तथापि मूले वृक्षः कपिसंयोगीत्यत्र मूलस्य कपिसंयोगावच्छेदकत्वांशेऽसत्यत्वेऽपि वृक्षस्य कपिसंयोगवत्त्वांशे सत्यत्वात्सत्यामृषात्वं स्यादितिचेन्न, मूलावच्छिन्नकपिसंयोगवत्त्वांशे मूलावच्छिन्नसमवायसम्बन्धेन वा तदंशेऽप्रमात्वादेवेति दिग् ॥ ५६–५७ ॥

तत्रादावुत्पन्नमिश्रितामेवाह ।

उप्पन्नमीसिया सा, उप्पन्ना जत्थ मीसिया हुंति ।
संखाइ पूरणत्थं, सद्धिमणुप्पन्नभावेहिं ॥ ५८ ॥

सा उत्पन्नमिश्रितेति विधेयनिर्देशः यत्रानुत्पन्नभावैः सार्द्धं संख्यायाः पूरणार्थं उत्पन्ना मिश्रिता भवन्तीत्यनूद्य निर्देशः, उदाहरणं तु कश्चिदुत्पन्नेषु पञ्चसु दारकेषु दशाभ्यधिकेषु वाऽद्य दश दारका जाता इति स्वयमेव द्रष्टव्यम्, अत्र च दशसङ्ख्यायाः पञ्चसङ्ख्याद्वयात्मिकाया अंशयोरेव बाधाबाधाभ्यां सत्यासत्यत्वं न तु कात्स्न्येनान्यतररूपानुप्रवेशः, अत एव

श्वस्ते शतं दास्यामीति प्रतिज्ञाय पञ्चाशद्ददानोऽपि नादात्तत्सर्वथा मृषाभाषित्वेन व्यवह्रियते इति प्रकृते तथाविधव्यवहारानुरोधाच्चानुपपत्तिः । ननु शतं दास्यामीति प्रतिज्ञाय पञ्चाशद्दानेऽमृषाभाषित्वं न वास्तवं व्यवह्रियते किन्तु तत्कार्यकारित्वादिरूपं भाक्तमेवात एव तस्य पञ्चाशद्दत्वा शतं दत्तमिति गिरा लोकान् साक्षीकुर्वतो मृषाभाषित्वेनैव निग्रह इति चेन्न तत्रांशिकमृषाभाषित्वस्याप्यदत्तापलापद्वारा निग्रहप्रयोजकत्वादन्यथा जाताजातविषयभेदेन प्रकृतप्रयोगोच्छेदप्रसङ्गात् न च दशसङ्ख्यापर्याप्तेरत्र जातेषु बाधात्सर्वथा मृषात्वमन्यथा एको न द्वाविति न स्यादिति वाच्यम्, दशस्वेतत्कालोत्पत्तिकाभेदस्यांशेन संवादादिति दिग् एवमन्यत्राप्यूह्यम् ॥ ५८ ॥

उक्ता उत्पन्नमिश्रिताऽथ विगतमिश्रितामाह ।

सा विगयमीसिया खलु, विगया मन्नंति मीसिया जत्थ ।
संखाइ पूरणत्थं, सद्धिमविगएहि अन्नेहिं ॥ ५९ ॥

खल्विति निश्चये सा भाषा विगतमिश्रिता भण्यते यत्र यस्यां विगताः प्रध्वस्ताः पदार्थाः सङ्ख्यायाः पूरणार्थमन्यैरविगतैरप्रध्वस्तैः सार्द्धं मिश्रिता भण्यन्ते, यथैकं ग्राममधिकृत्य यन्न्यूनाधिकेषु विगतेष्वद्य दश वृद्धा विगता इत्युदाहरणम् ॥ ५९ ॥

उक्ता विगतमिश्रिताऽथोत्पन्नविगतमिश्रितामाह ।

उप्पन्नविगयमीसिअ, मेयं पभणंति जत्थ खलु जुगवं ।

उप्पन्ना विगमा वि य, ऊणब्भहिया भणिज्जंति ॥ ६० ॥

एतां भाषामुत्पन्नविगतमिश्रितां प्रभणन्ति श्रुतधरा इतिशेषः यत्र यस्यां भाषायां खलु निश्चये उत्पन्ना विगता अपि च भावा ऊना अधिका युगपद्भण्यन्ते उदाहरणं चास्मिन् ग्रामे दश जाता दश च मृता इत्यवधारणानुपपत्तौ द्रष्टव्यम् ॥ ६० ॥

उक्ता उत्पन्नविगतमिश्रिताऽथ जीवमिश्रितामाह ।

सा जीवमिस्सिया खलु, जा भन्नइ उभयरासिविसया वि ।
वज्जित्तु विसयमन्नं, एसो बहुजीवरासित्ति ॥ ६१ ॥

सा खलु जीवमिश्रिता या उभयराशिविषयापि जीवाजीवसमूहविषयापि अन्यमजीवाख्यं विषयं वर्जयित्वा एष बहुजीवराशिरिति भण्यतेऽत्र हि जीवांशे सत्यत्वमजीवांशे चासत्यत्वम्, न च बहुषु जीवशङ्खादिष्वल्पेषु च मृतेषु महानयं जीवराशिरित्यभिधाने जीवप्राधान्यविवक्षणान्न दोषो बाहुल्येन प्रयोगोपलम्भादिति वाच्यम्, एवं हि प्रयोगसमर्थनेऽप्युभयीयसमूहे एकीयत्वासमर्थनादुभयीयस्यैकीयत्वनियमेऽपि प्रतिनियतैकत्वानियमात् । न च प्रतिनियतत्वस्याबोध एव बोधे वा मृषात्वमेव स्यादिति वाच्यम्, बोधसामग्रीमहिम्नैव तद्बोधात्, समूहस्य सामान्यत एकीकृतस्यापि विशेषार्पणया विभेदाच्च तन्मृषात्वमिति पर्यालोचनीयम् सूक्ष्मेक्षिकया नयनिपुणैरेवमन्यत्राप्यवसेयम् ॥ ६१ ॥

उक्ता जीवमिश्रिताऽथाजीवमिश्रितामाह ।

साऽजीवमीसिया वि य, जा भन्नइ उभयरासिविसया वि ।
वज्जित्तु विसयमन्नं, एस बहुअजीवरासित्ति ॥ ६२ ॥

स्पष्टा नवरं बहुषु मृतेषु स्तोकेषु च जीवत्सु शङ्खादिषु महानयमजीवराशिरित्यत्रोदाहरणम् ॥ ६२ ॥

उक्ताऽजीवमिश्रिताऽथ जीवाजीवमिश्रितामाह ।

सा उभयमिस्सिया वि य, जीवाजीवाण जत्थ रासिम्मि ।
किज्जइ फुडोपओगो, ऊणब्भहिआइ संखाए ॥ ६३ ॥

उभयमत्र जीवाजीवौ तन्मिश्रितोभयमिश्रितापि च सा भवति यत्र यस्यां जीवाजीवयोः राशौ ऊनाभ्यधिकायाः सङ्ख्यायाः स्फुटः प्रकटः प्रयोगः क्रियते यथा मृतेषु जीवत्सु च शङ्खादिषु एतावन्तोऽत्र मृता एतावन्तश्च जीवन्त्येवेति यथोक्तप्रमाणविसंवादे ॥ ६३ ॥

उक्ता जीवाजीवमिश्रिताऽथानन्तमिश्रितामाह ।

साऽणंतमीसिया वि य, परित्तपत्ताइजुत्तकंदम्मि ।
एसो अणंतकाओ, त्ति जत्थ सव्वत्थ वि पओगो ॥ ६४ ॥

अनंतमिश्रितापि च सा भवति यत्र यस्यां परित्तानि यानि पत्रादीनि तद्युक्ते कन्दे मूलकादौ सर्वत्रापि सर्वाव-

भाषा रहस्यम्०

॥ २४ ॥

च्छेदेनापि एषोऽनन्तकाय इति प्रयोगः । नन्वत्र मृषात्वमेवान्यथा घटपटयोर्द्वयोरिमौ घट इति वचो मृषा न स्यादिति चेन्न द्वित्वावच्छिन्नत्वस्याद्वित्वव्यापकत्वरूपस्यैकत्वव्यापकत्वद्वयरूपत्वेनोक्तवचसोऽप्यांशिकसत्यत्वात्समुदायावच्छिन्नत्वस्यापि प्रकृतेऽवयवावच्छिन्नत्वानतिरेकादिति दिग् ॥ ६४ ॥

उक्ताऽनन्तमिश्रिताऽथ परीतमिश्रितामाह ।

परमपुरिसेहि भणिया, एसा य परित्तमीसिया भासा ।
जाऽणंतजुअपरित्ते, भणई एसो परित्तो त्ति ॥ ६५ ॥

एषा च भाषा परमपुरुषैस्तीर्थकरगणधरप्रभृतिभिः परीतमिश्रिता भणिता, एषा केत्याह याऽनन्तेनानन्तकायलेशेन युते म्लानमूलादौ एष परीत इति भण्यते इयं हि परीतांशे सत्याऽनन्तांशे चासत्येति सत्यामृषा । स्यादेतत् परीतानन्तकायोभयसंवलिते एकत्रैतावन्तोऽनन्ता एतावन्तश्च परीता इति यथोक्तप्रमाणविसंवादे परीतानन्तमिश्रिताप्यतिरिच्येत । मैवम्, इयत्तायास्तत्राप्रयोगात् , उभयातिरेकनिमित्तस्य बुद्धिविशेषस्य वाऽभावात्प्रत्येकानन्तप्रयोगनिमित्तं तु वैलक्षण्यमस्त्येवात एवाह चूर्णिकारः—" अणंतमिस्सिया जहा कोई मूलछोढं दट्ठूणं अन्नं वा किंचि तारिसं भणिज्जा जहा एस अणंतकाओत्ति तस्स मूलपत्ताणि जिण्णतणेण परिभूआणि केवलं तु जलसिंचणगुणेण केइ तस्स किसलया पादुब्भूआ अओ अणंता परित्तेण मीसिया भन्नइ । परित्तमीसिया जहा अभिनवओक्खयं मूलगं कोइ परिमीलाणं ति काऊण भणेज्जा जहा सव्वो एस परित्तो तत्थ अंते परित्तीभूआ मज्झपएसे अणंता चेव एस परित्तमीसियत्ति " अत्रहि जीर्णपत्रत्वं म्लानकन्दत्वं च स्पष्टावेव विवक्षाहेतू उक्तौ । एवं च प्रायिकप्रयोगविवक्षाहेतुं विना यादृच्छिकदुष्टप्रयोगविवक्षाप्रसूतभाषाया मृषात्वमेवावसीयते । तत्त्वं

तु बहुलश्रुता विदन्ति ॥ ६५ ॥

सच्चामोसा भासा, सा अद्धामीसिया भवे जत्थ ।
भन्नइ पओअणवसा, दिवसनिसाणं विवज्जासो ॥ ६६ ॥

सा अद्धामिश्रिता सत्यामृषा भाषा भवेत् यत्र प्रयोजनादिवशादिवसनिशयोर्विपर्यासो भण्यते यथाऽपरिणत एव दिवसे कश्चित् सहायं त्वरयन् वदति उत्तिष्ठोत्तिष्ठ रजनी वर्त्तते इति । रात्रौ वा वर्त्तमानायां वदति उत्तिष्ठोद्गतः सूर्य इति । नन्वियं मृषैव दिवसे रजनीवर्त्तमानत्वस्य रजन्यां वा दिवससत्त्वस्य बाधात्, वर्त्तमानावदभिधायकवचनस्याव्यवहितोत्पत्तिकत्वे लक्षणायां च सत्यत्वमेवेति नातिरेक इति चेन्न, लक्ष्यतावच्छेदकघटकव्यवधानाभावकूटेंऽशतो बाधाबाधाभ्यामुभयरूपसमावेशादन्यथा प्रहरान्तरव्यवधानेपि तथाप्रयोगप्रसङ्गात् । पदान्तरे लक्षणा च नानुशासनस्वरससिद्धेत्याभाति ॥ ६६ ॥

उक्ताऽद्धामिश्रिताऽथाद्धाद्धामिश्रितामाह ।

रयणीए दिवसस्स च, देसो देसेण मीसिओ जत्थ ।
भन्नइ सच्चामोसा, अद्धद्धामीसिया एसा ॥ ६७ ॥

रजन्या दिवसस्य वा देशः प्रथमप्रहरादिलक्षणो देशेन द्वितीयप्रहरादिलक्षणेन यत्र मिश्रितो भण्यते एषा अद्धाद्धामिश्रिता सत्यामृषा यथा प्रथमपौरुष्यामेव वर्त्तमानायां कश्चित् कञ्चित् त्वरयन् वदति चल मध्यन्दिनो जात इत्यादि । उक्ताद्धाद्धामिश्रिता । तदेवमुपदर्शिताः सत्यामृषाभेदाः ॥ ६७ ॥

अथैतन्निरूपणसिद्धत्वमसत्यामृषानिरूपणप्रतिज्ञां चाह,

एवं सच्चामोसा,-भेया उवदंसिया समयसिद्धा ।
भासं असच्चमोसं, अओ परं कित्तइस्सामि ॥ ६८ ॥

स्पष्टा ॥ ६८ ॥

अथ प्रतिज्ञातनिरूपणाया एवासत्यामृषाया लक्षणाभिधानपूर्वं विभागमाह ।

अणहिगया जा तीसुवि, णय आराहणविराहणुवउत्ता ।
भासा असच्चमोसा, एसा भणिया दुवालसहा ॥ ६९ ॥
आमंतणि आणवणी, जायणि तह पुच्छणी य पन्नवणी ।
पच्चक्खाणी भासा, भासा इच्छाणुलोमा य ॥ ७० ॥
अणभिग्गहिआ भासा, भासा य अभिग्गहम्मि बोधव्वा ।
संसयकरणी भासा, वोयड अव्वोयडा चेव ॥ ७१ ॥

या तिसृष्वपि सत्यामृषासत्यामृषाभाषास्वनधिकृता एतेनोक्तभाषात्रयविलक्षणभाषात्वमेतल्लक्षणमुक्तं च पुनर्न आराधनविराधनोपयुक्ता एतेनापि परिभाषानियन्त्रितमनाराधकविराधकत्वं लक्षणान्तरमाक्षिप्तम् । एषाऽसत्यामृषाभाषा द्वाद-

यथा भणिता तथाहि–आमन्त्रणी, आज्ञापनी, याचनी, पृच्छनी, प्रज्ञापनी, प्रत्याख्यानी, इच्छानुलोमाऽनभिगृहीताऽभिगृहीता, संशयकरणी, व्याकृता, अव्याकृता, चेति ॥ ६९–७०–७१ ॥

तत्रादावामन्त्रणीमेवाह, ।

संबोहणजुत्ता जा, अवहाणं होइ जं च सोऊणं ।
आमंतणी य एसा, पण्णत्ता तत्तदंसीहिं ॥ ७२ ॥

या सम्बोधनैः हे–अये–भो–प्रभृतिपदैर्युक्ता सम्बद्धा यां च श्रुत्वा अवधानं श्रोतृणां श्रवणाभिमुख्यम्, सम्बोधनमात्रेणोपरमे क्रियामन्त्रयसीति प्रश्नहेतुजिज्ञासाफलकं भवति एषा तत्त्वदर्शिभिरामन्त्रणी प्रज्ञप्ता तदेवमत्र सम्बोधनपदघटितत्वमेकं लक्षणं श्रवणाभिमुख्यप्रयोजकभाषात्वं चापरं लक्षणं द्रष्टव्यम्, अस्याश्चासत्यामृषात्वे हेतुत्रयमुक्तम् एषा किलाप्रवर्त्तकत्वात्, सत्यादिभाषात्रयलक्षणवियोगतः, तथाविधदलोत्पत्तेरिति, तत्राद्यहेतौ प्रवृत्तिपदेन सत्यादिजन्यप्रवृत्तिविशेषो ग्राह्यो द्वितीयं तु प्रकृतलक्षणमेव तृतीये तु भाषावर्गणाविशेषजन्यत्वमेतल्लक्षणमभिप्रेतमिति द्रष्टव्यम् ॥ ७२ ॥

उक्तामन्त्रणी अथाज्ञापनीमाह ।

आणावयणेण जुआ, आणवणी पुव्वभणिअ भासाओ ।
करणाकरणाणियमा,–दुट्ठविवक्खाइ सा भिण्णा ॥ ७३ ॥

भाषा रहस्यम्० ॥ २६ ॥

आज्ञावचनम्, अकरणस्य बलवदनिष्टानुबन्धित्वाभिधायकं करणवचनं पञ्चम्यादिकं तेन युक्ता सहिताज्ञापनी यथेदं कुर्विति । नन्वस्याः कथं सत्यादि(तो)भेद इत्याचक्षत, आह पूर्वभणितभाषातः करणाकरणानियमाद्दुष्टविवक्षातः सा भिन्नेति । अयं भावः करणनियमे सत्यैवेयं स्यादकरणनियमे तु मृषैव स्यादित्युभयानियमादुभयातिरेको दुष्टविवक्षापूर्वकत्वाभावाच्च मृषातिरेकः सत्यामृषात्वप्रतिषेधस्त्वप्रसक्तत्वादेव न कृत इति । नन्वाज्ञाविषये आज्ञां ददतः कथं न सत्यवादित्वं श्रोतुः प्रवृत्त्य-भावस्य निमित्तान्तराधीनत्वादिति चेन्न, प्रवर्त्तकादप्रवृत्तौ परमार्थतोऽसत्यत्वादाज्ञाप्यस्य तथात्वानिर्णये भावभाषात्वनिया-मकसम्यगुपयोगानिर्वाहाच्चेति दिग् ॥ ७३ ॥

उक्ताज्ञापनी साम्प्रतं याचनीमाह ।

**सा जायणी य णेया, जं इच्छियपत्थणापरं वयणं ।**

यदीप्सितस्य स्वेच्छाविषयस्य प्रार्थनापरं याचनप्रवणं वचनं मम भिक्षां प्रदेहीत्यादिरूपं सा याचनी ज्ञेया चः समुच्चये तन्नियमाविषयेऽसत्यैव यथा अविनीताद्वाज्ञापनी । एवं च रागाद्यभावेन किञ्चिदपि कस्यचिददददतः तीर्थङ्करान् प्रति " आरुग्गबोहिलाभं समाहिवरमुत्तमं दिंतु " इति सूत्रस्थाऽसत्यामृषा याचनी कथं सत्यामृषा स्यादित्यत आह ।

**भत्तिपउत्ता एसा विणा वि विसयं गुणोवेया ॥ ७४ ॥**

भक्तिप्रयुक्ता एषा याचनी विषयं विनापि गुणेन सत्यामृषालक्षणेन निश्चयतस्तु सत्यात्मकेन लक्षणेनोपेता युक्ता

( १ श्रीसिद्धहैमे हि वर्त्तमानासप्तमीपञ्चमीत्यादीन्येवाभिधानानि विभक्तीनामारूप्यन्ते )

न तु तुष्टेति भावोऽत एवोक्तम्, "भासा असच्चमोसा णवरं भत्तीइ भासिआ एसा । णहु खीणपेम्मदोसा दिंति समाहिं च बोहिं च" परमार्थतो दातृत्वमपि तेष्वस्त्येवात एवोक्तम्, "जं तेहिं दायव्वं तं दिन्नं जिणवरेहिं सव्वेहिं । दंसणनाणचरित्तस्स मोक्खमग्गस्स उवएसो त्ति" न चेदं दातृत्वं गौणम्, दातृत्वान्तरस्य तथात्वे विनिगमकाभावात् प्रार्थितोपायप्राप्तावपि तदकरणे च प्रार्थना परमार्थतो मृषैव तदुक्तम्, "लद्धिल्लियं? च बोहिं अकरिंतोऽणागयं च पत्थंतो । अण्णं दाइं बोहिं लब्भिसि कयरेण मुल्लेण त्ति" एवं स्वधियाभ्यूह्यम् ॥ ७४ ॥

उक्ता याचनी अथ पृच्छनीमाह ।

जिन्नासियत्थकहणं, परूविया पुच्छणी जिणवरेहिं ।

जिज्ञासितस्य ज्ञातुमिष्टस्यार्थस्य कथनं तद्विदः पार्श्वे जिनवरैः पृच्छनी प्रज्ञप्ता । न च निग्रहार्थं विकल्पोक्तायाम् एगे भवं दुवे भवं इत्यादिसोमिलादिभाषायामव्याप्तिः, छलवाग्भूतायास्तस्या अलक्ष्यत्वात् । कुतः आगतः क्व गमिष्यसि कइविहा णं भंते जीवा पण्णत्ता इत्यादिभाषाणामेव लक्ष्यत्वात् ।

उक्ता पृच्छनी अथ प्रज्ञापनीमाह ।

पन्नवणी पन्नत्ता, विणीयविणयम्मि विहिवाओ ॥ ७५ ॥

विनीतः शिक्षितो विनयो येन एतादृशे शिष्ये यः विधिवादो विध्युपदेशः सा प्रज्ञापनी प्रज्ञप्ता कर्त्तव्यत्वप्रतिपादकः प्रत्ययस्तद्घटितं वाक्यं वा यथा च विधेः कृतिसाध्यत्वादिकमेवार्थो न त्वपूर्वादि तथा मत्कृतवादरहस्यादवसेयम् । इह

तु न प्रतन्यते ग्रन्थान्तरप्रसङ्गात् । यथा प्राणिवधान्निवृत्ता जीवा दीर्घायुषो भवन्तीति । इदमुपलक्षणं हिंसादिप्रवृत्तो जीवो दुःखितो भवतीत्यादिनिषेधोपदेशस्यापि, उक्तं च । " पाणिवहाउ णियत्ता हवंति दीहाउआ अरोगा य । एमाई पन्नत्ता पण्णवणी वीयराएहिं ति " । एवं च भयाप्रयोज्यप्रवृत्तिजनकेच्छाप्रयोजकभाषात्वमेतल्लक्षणम् । आज्ञापनीवारणाय भयाप्रयोज्येति । तादृशेच्छाप्रयोजकत्वं च विधेस्तज्जनकेष्टसाधनताज्ञानजनकतया वाक्यान्तरस्य च विध्युन्नायकतयाऽहिंसापरा दीर्घायुषः स्युरित्याद्युपदेशेषु उद्देश्यविधेयभावमहिम्नैवाहिंसादीर्घायुरादीनां हेतुहेतुमद्भावलाभस्तत एव चाहत्य विवेकिनां प्रवृत्तिरित्यपि वदन्ति ॥ ७८ ॥

उक्ता प्रज्ञापनी अथ प्रत्याख्यानीमाह ।

पत्थियणिसेहवयणं, पच्चक्खाणी जिणेहि पन्नत्ता ।

प्रार्थितस्य याचितवस्तुनो यन्निषेधवचनं सा जिनैः प्रत्याख्यानी प्रज्ञप्ता यथा इदं न ददामीत्यादि । प्रार्थितस्येत्युपलक्षणं दुराचरितनिषेधवचनस्यापि पापं न करिष्यामीत्याद्याकारस्य तथात्वात् । तस्मान्निषेधविषये निषेधप्रतिज्ञैव प्रत्याख्यानी ।

उक्ता प्रत्याख्यानी अथेच्छानुलोमामाह ।

णियइच्छियत्तकहणं, णेया इछाणुलोमाय ॥ ७६ ॥

निजेप्सितत्वं स्वेच्छाविषयत्वं तत्कथनं चेच्छानुलोमा ज्ञेया यथा कश्चित् किञ्चित्कार्यमारभमाणः कञ्चन पृच्छति

करोम्येतदिति । स प्राह करोतु भवान् ममाप्येतदभिप्रेतमिति । अत्र चाप्रेच्छाविषयत्वेन स्वेष्टसाधनत्वशङ्काप्रतिरोधेन तन्निश्चयात्स्वेच्छाया अविलम्बेन प्रादुर्भावादिच्छानुलोमत्वम् । यत्रापि शोभनमेतदित्येवोच्यते तत्रापि वक्त्रिच्छाविषयत्वमर्थात् प्रतीयत एव, अथ यत्र जातदीक्षेच्छस्यापि पित्राद्यनुमत्यर्थं गुरुं प्रति प्रश्नस्तत्र च यथासुखं मा प्रतिबन्धं कुर्या इत्युत्तरं तत्र कथमिच्छानुलोमत्वम् इच्छाया उत्पन्नत्वेन पुनरनुत्पादनादिति, मैवं, तत्रोपेयेच्छाया उत्पन्नत्वेऽप्यनुमतिरूपोपाये कालविलम्बरूपाऽनिष्टसाधनत्वशङ्कानिरासेनोपायेच्छोत्पादनेनेच्छानुलोमत्वनिर्वाहात् । विध्यादिभिन्नप्रवृत्त्यप्रतिबन्धकवचनत्वमेवेच्छानुलोमत्वमित्यपि कश्चित् ॥ ७६ ॥

उक्ता इच्छानुलोमाऽथानभिगृहीतामाह ।

सा होइ अणभिगहिया, जत्थ अणेगेसु पुट्ठकज्जेसु ।
एगयराणवहारण,-महवा डिच्छाइयं वयणं ॥ ७७ ॥

यत्र यस्याम् अनेकेषु पृष्टकार्येषु मध्य एकतरस्यानवधारणमनिश्चयो भवति एतावत्सु कार्येषु मध्ये किं करोमीति प्रश्नयेत् प्रतिभासते तत्कुर्वेति प्रतिवचने कस्यापि शृङ्गग्राहिकयाऽनिर्द्धारणात् साऽनभिगृहीता भवति । नन्वेकतरानवधारणं प्रतिषेधवचनेप्यस्तीत्यतिव्याप्तिरिति चेन्न, प्रकृतप्रवृत्त्यप्रतिबन्धकस्यानवधारणस्य विवक्षितत्वादस्याश्च फलं सर्वेषु कर्मसु तुल्यफलहेतुत्वप्रतिसन्धानेन प्रथमोपस्थित एव झटिति प्रवृत्तिर्न त्वधिकेच्छया कर्मान्तरसामग्रीविलम्बेन तद्विलम्ब इति ध्येयम् । आदेशान्तरमाह, अथवा डित्थादिकं यदृच्छामात्रमूलकं वचनमभिगृहीता । एतन्मते प्रागुक्तं वचनमाज्ञापनीविशेष एवेत्यवधेयम् ॥ ७७ ॥

भाषा रहस्यम्०
॥ २८

उक्ताऽनभिगृहीताऽथाभिगृहीतामाह ।

अभिगहिया पडिवक्खो,

अभिगृहीता प्रतिपक्षो विपरीता प्रस्तावादनभिगृहीताया इति लभ्यते तथा चानेकेषु कार्येषु पृष्टेषु यदेकतरस्यावधारणमिदमिदानीं कर्त्तव्यमिति साऽभिगृहीताऽथवा घट इत्यादिप्रसिद्धप्रवृत्तिनिमित्तकपदाभिधानं सेति द्रष्टव्यम् ।

उक्ताभिगृहीताऽथ संशयकरणीमाह ।

संसयकरणी य सा मुणेयव्वा ।
जत्थ अणेगत्थपयं, सोऊणं होइ संदेहो ॥ ७८ ॥

संशयकरणी च सा मुणितव्या ज्ञातव्या यत्र यस्याम् अनेकार्थं बह्वर्थाभिधायकं पदं श्रुत्वा श्रोतुः सन्देहो भवति । तथाहि–सैन्धवमानयेत्युक्ते सैन्धवपदस्य लवणघोटकादिष्वनेकेष्वर्थेषु शक्तिग्रहादनेकार्थपदजन्यशाब्दबोधे प्रकरणादीनां विशिष्यहेतुत्वेन तद्विरहे शाब्दबोधविरहेऽपि भवति वक्त्रभिप्रायसन्देहाल्लवणानयनं घोटकानयनं वा मम कर्त्तव्यमिति मानसः सन्देहः परोक्षसंशयाभ्युपगमे तात्पर्यनिश्चयस्य प्रतिनियतार्थनिश्चयहेतुत्वेन तत्संशये शाब्द एव वा स इतीयं संशयकरणी । अनेकार्थपदं श्रुत्वेति प्रायिकं संशयहेतुत्वमात्रमेव लक्षणम् अतः स्थाणुर्वा पुरुषो वेति भाषापि प्रतियोगिपदाभ्यां कोटिद्वयं वाकारेण च विरोधमुपस्थाप्य संशयं जनयन्ती तादृश्येवेति ध्येयम् ॥ ७८ ॥

उक्ता संशयकरणी अथ व्याकृतामाह ।

भासा असच्चमोसा, पयडत्था वोअडा मुणेयव्वा ।

व्याकृताऽसत्यामृषाभाषा प्रकटः सुज्ञानोऽर्थो यस्यास्तादृशी मुणिअव्वा (तव्या) यथा एष भ्राता देवदत्तस्येत्यादिः अर्थस्य सुज्ञानत्वं च तात्पर्यज्ञानादिबहुहेतुसम्पत्त्यविलम्बेनाचिरकालोत्पत्तिकप्रतिसन्धानविषयत्वं बोध्यम् ।

उक्ता व्याकृताऽथाव्याकृतामाह ।

अइगंभीरमहत्था, अवोअडा अहव अवत्ता ॥ ७९ ॥

अतिगम्भीरो दुर्ज्ञानतात्पर्यो महान् अर्थो यस्याः साऽव्याकृता भवति अथवा बालादीनामव्यक्ता भाषाऽव्याकृता भवति ॥ ७९ ॥

उक्ताऽव्याकृता तदभिधानाच्चाभिहिता द्वादशाप्यसत्यामृषाभेदाः । अथोपसंहरति ।

एवमसच्चामोसा, दुवालसविहा परूविआ सम्मं ।
दव्वम्मि भावभासा, तेण समत्ता समासेणं ॥ ८० ॥

स्पष्टा ॥ ८० ॥

अथैतासां भाषाणां मध्ये केषां काः सम्भवन्तीति प्रसङ्गादाह ।

सव्वावि हु सुरनारय,–नराण विगलिन्दियाण चरमा य ।
पंचिंदियतिरियाणवि, सा सिक्खालद्धिरहियाणं ॥ ८१ ॥

भाषा रहस्यम्० ॥ २९ ॥

सुरनारकनराणां सर्व्वा अपि हि सत्याद्या भाषाः सम्भवन्ति । विकलेन्द्रिया द्वित्रिचतुरिन्द्रियास्तेषां चतुर्णाम् च-रमाऽसत्यामृषा भाषा भवति तेषां सम्यक्परिज्ञानपरवञ्चनाद्यभिप्रायाभावेन सत्यादिभाषाऽसम्भवात् । शिक्षा संस्कारविशेष-जनकः पाठः, लब्धिश्च जातिस्मरणरूपा तथाविधव्यवहारकौशलजनकक्षयोपशमरूपा वा, ताभ्यां प्रहरहितानां पञ्चेन्द्रियति-रश्चामपि सा सत्यामृषा भवति, तेपि हि न सम्यग्यथास्थितवस्तुप्रतिपादनाभिप्रायेण भाषन्ते नापि परविप्रतारणबुद्ध्या किन्तु कुपिता अपि परं मारयितुकामा अप्येवमेव भाषन्त इति तेषामसत्यामृषैव भाषा, न च कुपितानां तेषां भाषा क्रोधनिः-सृताऽसत्यैव स्यादिति वाच्यम्, अव्यक्तत्वेनानवधारणीयत्वाद्विलक्षणदलजन्यत्वाच्चेत्यवधेयम् । शिक्षालब्धिसहितास्तु शुक-सारिकादयोऽन्ये च तिर्यञ्चो यथायोगं चतुर्विधामपि भाषां भाषन्ते शिक्षालब्धिभ्यां व्यक्तभाषोत्पत्तेरित्यवधेयम् ॥ ८१ ॥

उक्ता श्रव्यभावभाषाऽथ श्रुतभावभाषामाह ।

तिविहा सुअम्मि भासा, सच्चा मोसा असच्चमोसा य ।
सम्मं उवउत्तस्स उ, सच्चा सम्मत्तजुत्तस्स ॥ ८२ ॥

भाषापदस्य प्रकरणमहिम्ना भावभाषापरत्वात् श्रुते श्रुतविषया भावभाषा त्रिविधा त्रिप्रकारा भवति तद्यथा सत्या मृषाऽसत्यामृषा च । तत्र सम्यगुपयुक्तस्यागमानुसारेण यथावद्वदतः, तुर्विशेषणे किं विशिनष्टि बहुश्रुतत्वादिगुणं सत्या सत्यैव भवति विशुद्धाशयत्वादिति भावः ॥ ८२ ॥

अस्तु सम्यग्दृष्टेरुपयुक्तस्य सत्याऽसत्या तु कस्येत्याह ।

होइ असच्चा भासा, तस्सेव य अणुवउत्तभावेणं ।
मिच्छत्ताविट्ठस्स व, अवितहपरिणामरहिअस्स ॥ ८३ ॥

तस्यैव च सम्यग्दृष्टेरनुपयुक्तभावेन वदतः श्रुतविषयिणी असत्या भावमृषा भवति । अथोपयुक्तानां भाषा भावभाषेति पूर्वं प्रतिज्ञानादनुपयुक्तानां तदभिधाने कथं न पूर्वापरविरोध इति चेन्न, तत्राभिलापजनकविवक्षारूपोपयोगस्यैव ग्रहणादत्र च हेत्वाद्युपयोगाभावस्य ग्रहणेनाविरोधात् । सर्वथानुपयोगे तूष्णीम्भावप्रसङ्गात् । हेत्वाद्यननुयोगे कथमहेतुकं वदेदिति चेत्, विपरीतव्युत्पत्तेरिति गृहाण । वाऽथवाऽवितथपरिणामरहितस्य सम्यक्श्रुतपरिणामविकलस्य मिथ्यात्वाविष्टस्योपयुक्तस्यानुपयुक्तस्य वा सर्वापि श्रुतगोचरा भाषाऽसत्या । उन्मत्तवचनवत्तद्वचनस्य घुणाक्षरन्यायेनापाततः संवादेपि प्रमाणत्वेनाव्यवहारात् । कथं तर्हि श्रुते अवतरत्येषा, तज्ज्ञानस्य सदसदविशेषादिहेतुनाऽज्ञानत्वादिति, सत्यम्, अविशेषितश्रुतपदेनोभयोपग्रहात् विशेषितस्यैव प्रातिस्विकरूपानुप्रवेशेनाभिलापादिति दिग् । तदिदमाह भगवान् भद्रबाहुः "सम्मदिट्ठी उ सुअं,-मि अणुवउत्तो अहेउअं चेव । जं भासइ सा मोसा, मिच्छदिट्ठीवि य तहेवत्ति" । अहेतुकं तन्तुभ्यः पट एव भवतीत्यादि ॥ ८३ ॥

अथासत्यामृषा श्रुतभावभाषा कस्येत्याह ।

उवरिल्ले नाणतिगे, उवउत्तो जं च भासइ सुअंमि ।
सा खलु असच्चमोसा, जं बाहुल्लेण सा सुत्ते ॥ ८४ ॥

यत् श्रुते पतवर्त्तमादि कुर्वन्नुपयुक्तो भाषते एषाऽसत्यामृषा यद् यस्मात्कारणात् सूत्रे सिद्धान्ते बाहुल्येन प्रायः सा आमन्त्रण्यादिरूपाऽसत्यामृषैवास्तीति चः पुनः उपरितने ज्ञानत्रिकेऽवधिमनःपर्यायकेवलज्ञानलक्षणे प्रत्येकं प्रत्येकमुपयुक्तो भाषते सत्यासत्यामृषा, आमन्त्रण्यादिवचथाविधाध्यवसायप्रवृत्तेरिति सम्प्रदायः । ननु श्रुतभावभाषायां निरूपणीयायां न ज्ञानत्रिकस्यावसरः, केवलज्ञानस्य श्रुतज्ञाननाथं विनाऽनुत्पादादिति चेत्सत्यम्, द्रव्यश्रुतं प्रतीत्य भावभाषायाः केवलज्ञानेपि सम्भवात्युक्तं "केवलनाणेणत्थे, णाउं जे तत्थ पन्नवणजोग्गे । ते भासइ तित्थयरो, वयजोगसुअं हवइ सेसंति" प्रसङ्गादेतद्-भिधानमिति ध्येयम् ॥ ८४ ॥

उक्ता श्रुतभावभाषाऽथ चारित्रभावभाषामाह ।

चारित्तविसोहिकरी, सच्चा मोसा य अविसोहिकरी ।

दो एयाउ चरित्ते, भावं तु पडुच्च णेयाओ ॥ ८५ ॥

चारित्रविशोधिकरी यां भाषमाणस्य साधोश्चारित्रमुत्कृष्यत इत्यर्थः । सा सत्या मृषा च यां भाषमाणस्याचारित्रपरिणामो वर्द्धत इत्यर्थः । इदमुपलक्षणं यां भाषमाणस्य चारित्रं तिष्ठति सा सत्याऽसंक्लेशकरी यां भाषमाणस्य चारित्रं न तिष्ठति सा त्वसत्येत्यपि द्रष्टव्यम् । द्वे एते भाषे चारित्रे भावं प्रतीत्य ज्ञेये द्रव्यतस्त्वन्यासामपि भाषणसम्भवादित्य-भिप्रायः ॥ ८५ ॥

द्रव्यतोऽपि साधोः सत्यासत्यामृषे एव भाषे वक्तुमनुज्ञाते नान्ये इत्याह ।

दो चेव अणुमयाओ, वोत्तुं सच्चा अ सच्चमोसा य ।
दोन्नि य पडिसिद्धाओ, मोसा य असच्चमोसा य ॥ ८६ ॥

स्पष्टा । नवरं प्रतिषेधो विना कारणं कारणे तु तयोरप्यनुज्ञैवेति द्रष्टव्यम् ॥ ८६ ॥

अनुमतयोरपि द्वयोर्भाषयोर्विनयशिक्षामाह ।

कालाइसंकिया जा, जा वि य सवोवघाइणी होइ ।
आमंतणी य संगा,—इदूसिया जा ण तं भासे ॥ ८७ ॥

कालशङ्किता याऽनिर्णीतकालसम्बन्धविषया यथा गमिष्यामः स्थास्याम इत्याद्या अनागतकाले इदं करोमीत्याद्या वर्त्तमानकाले भवद्भिः सार्द्धमागतोऽहमिदं चाऽभ्यधामित्याद्या वा तां न भाषेत । तथा भावनिश्चयाभावेन व्यभिचारतो मृषात्वोपपत्तेर्विघ्नतोऽगमनादौ गृहस्थमध्ये लाघवादिप्रसङ्गाच्च । यदि पुनरुत्सर्गतो निषिद्धमपि नक्षत्रादियोगं गृहस्थानां पुरः कथयेत् तदा निमित्तादेष्यत्कालज्ञानेपि विध्याराधनार्थमेवं वदेत् यद्य यथेदं निमित्तं दृश्यते तथा वर्षेण भवितव्यममुको वागमिष्यतीति । पदनिश्रितापि च त्रिष्वपि कालेषु शङ्कितैव यथा देवदत्त इदं करिष्यतीत्याद्येति तामपि न वदेत् । कथं पुनः परनिश्रितां वदेदिति चेदित्थम् । अयमेवं भणत्यागमिष्यामीति न पुनर्ज्ञायते आगमिष्यत्येवेति । कालादीत्यादिना देशादिपरिग्रहो यथाऽत्रैव यास्याम इत्यादि । शङ्कितेत्युपलक्षणम् अनवधृतमप्यर्थं न वदेत् अवधृतं तु निमित्तादिना कथयेदनवधृते तु गन्धादौ परस्य तदनुभवप्रश्ने न विभावयामीत्युत्तरयेत् या च व्यवहारतः सत्यापि सती काणपण्डकव्याधितस्तेनादिषु काणादि-

भाषाऽप्रीतिलज्जानाशस्थिररोगिबुद्धिविराधनादिदोषजननेन कुलपुत्रत्वादिना प्रसिद्धे दासादिभाषा च परमाणसन्देहोत्पादकतयोपघातिनी भवति तामपि न भाषेत । तथा स्त्रियमधिकृत्य हे आर्यिके प्रार्जिके इत्याद्या तथा हे भट्टे स्वामिनीत्याद्या हे होडे इत्याद्या वा या सङ्गगर्हाप्रद्वेषप्रवचनलाघवादिदोषजननी पुरुषमधिकृत्यापि च पुल्लिङ्गाभिलापेनोक्तरूपा या आमन्त्रणी तामपि न भाषेत । कारणे उत्पन्ने स्त्रियं पुरुषं वा नामधेयेनामन्त्रयेत् तदस्मरणे च हे काश्यपगोत्रे हे काश्यपगोत्रेत्यादिगोत्राभिलापेन वामन्त्रयेत् ॥ ८७ ॥

अन्यच्च ।

पंचिंदियपाणाणं, थीपुरुसानिण्णए वए जाइं ।
इहरा उ विपरिणामो, जणवयववहारसच्चे वि ॥ ८८ ॥

नरनारीगतवाग्विधेरुक्तत्वात् पञ्चेन्द्रियप्राणानां गवादीनां स्त्रीपुरुषानिर्णय इति भावप्रधाननिर्देशात् विप्रकृष्टदेशावस्थितत्वेन मिथः स्त्रीत्वपुरुषत्वानिश्चये सति जातिं वदेत् । मार्गप्रश्नादौ प्रयोजने उत्पन्ने सत्यस्माद्गोरूपजातात्कियद्दूरे इदमित्येवमादिलिङ्गाविशिष्टमुभयसाधारणधर्म्मं प्रतिपादयेदन्यथा लिङ्गव्यत्ययेन मृषावादापत्तेः विना तु कारणमव्यापार एवोचितः साधूनामिति ध्येयम् । ननु यद्येवं लिङ्गव्यत्ययेन मृषावादस्तदा मस्तकमृत्तिकाकरकावश्यायादीनां नियमतो नपुंसकत्वे कथमन्यलिङ्गप्रयोगो, जनपदव्यवहारसत्याश्रयणादितिचेत्सत्यम्, किं प्रकृते पाणिपिहित इत्यत आह सत्यपि जनपदव्यवहारसत्ये इतरथा तु विशिष्यानिर्णये एकतरप्रयोगे तु विपरिणामः स्यादहो एते न मुदृष्टधर्माण इति विरुद्धः परिणामः स्यात्

गोपालादीनामपि । अतो व्यतिरेके उक्तदोषादन्वये च दृष्टानां साधुसमाचारीकथनेन गुणसम्भवात् यथोक्तमेव विधेय-मित्यवधेयम् ॥ ८८ ॥

किञ्च ।

थूलाइसु पुण भासे, परिवूढाईणि चेव वयणाणि ।
दोहाइसु य तयट्ठय,-मिद्धाणि विसेसणाणि वए ॥ ८९ ॥

स्थूलादिषु मनुष्यपशुपक्षिसरीसृपादिषु परिवृद्धादीन्येव वचनानि भाषेत कारणे उत्पन्नेपि । परिवृद्धं पलोपचितं सञ्जातं प्रीणितं महाकायं वा परिहरेदित्यादौ स्थूलादीन् परिवृद्धादिशब्देन ब्रूयात् तु स्थूलोऽयं प्रमेदुरोऽयं वध्योऽयं पाक्योऽयमिति वदेत् । पाक्यः पाकप्रयोग्यः कालप्राप्त इत्यन्ये । अप्रीतिव्यापत्त्यादिदोषप्रसङ्गाल्लोकविरुद्धत्वाच्च । तथा दोह्यादिष्व-प्यर्थेषु साध्यक्रियाभिधायीनि वचनानि न वदेत् यथा दोह्या गावः दम्या गोरथका वाह्या रथयोग्या वेति । आप्तवचनात्त-दानीं गोदोहादिकर्त्तव्यत्वनिश्चये श्रोतृप्रवृत्त्यादिनाऽधिकरणलाघवादिदोषप्रसङ्गात् । दिगुपलक्षणादौ प्रयोजने पुनस्तदर्थकानि दोह्याद्यर्थकानि सिद्धानि साध्यविलक्षणानि विशेषणानि वदेत् यथा रसदा धेनुर्युवा गौः ह्रस्वो महल्लकः संवहनो वेति । नैवमुक्तदोष इति भावः ॥ ८९ ॥

किञ्च ।

पासायखंभतोरण, गिहाइजोगा य णो वए रुक्खे ।
कारणजाए अ वए, ते जाइप्पभिइगुणजुत्ते ॥ ९० ॥

भाषा रहस्यम्० ॥ ३२ ॥

प्रासाद एकस्तम्भः स्तम्भस्तु स्तम्भ एव तोरणानि नगरतोरणादीनि गृहाणि कुडीरकादीनि आदिपदात् परिघार्गलानावुदकद्रोणीपीठकचङ्गेबरलाङ्गलमायिकयन्त्रयष्टीनाभिगण्डिकासनशयनयानद्वारपात्रादिपरिग्रहस्तद्योग्यान् वृक्षांश्च वदेत् । एतादृशं वदतो हि साधोस्तद्वनस्वामिव्यन्तरात् कोपादिः स्यात् सलक्षणो वा वृक्ष इति कश्चिदभिगृह्णीयादनियमितभाषिणो लाघवं वा स्यादिति । विश्रमणतदासन्नमार्गकथनादौ कारणजाते च सति तान् जातिप्रभृतिगुणयुक्तान् वदेत्, तथाहि—उत्तमजातय एते वृक्षा अशोकादयः दीर्घा वा नालिकेरीप्रभृतयो वृत्ता वा नन्दिवृक्षादयो महालया वा वटादयः । प्रजातशाखाः प्रशाखावन्तो दर्शनीया वेति ॥ ९० ॥

किञ्च ।

ण फलेसु ओसहीसु य, पक्काइवओ वए वयणकुसलो ।
असमत्थप्परूढाइ, पओअणे पुण वए वयणं ॥ ९१ ॥

फलेष्वौषधीषु वा वचनकुशलो वाग्विधिनिपुणः पक्कादिवचो न वदेत्, तथाहि—पक्कानि पाकप्राप्तान्येतानि फलानि तथा पाकखाद्यानि बद्धास्थीनीति गर्त्ताप्रक्षेपकोद्रवपलालादिना विपाच्य भक्षणयोग्यानीति यावत् । तथा वेलोचितानि पाकातिशयतः वा ग्रहणकालोचितान्यतः परं कालं न विषहन्त इति यावत् तथा टालानि अबद्धास्थीनि कोमलानीति यावत् तथा द्वैधिकानि पेसीसम्पादनेन द्वैधीभावकरणयोग्यानीति तथा पक्का एताः शाल्याद्या औषध्यस्तथा नीलाश्छविमत्यो वा लवनयोग्या वा भर्जनयोग्या वा पृथुकखाद्या वा इति । एतादृशाननुमतभाषाभाषणे फलादिनिश्रितदेवताकोप इत ऊर्द्ध्वमेतत्काल एव प्रकारान्तरेणैतद्भोगो न शोभन इत्यवधार्य गृहीतमहत्तावाधिकरणादिदोषोपपातश्चेति । प्रयोजने पुनर्मार्गदेशनादाव-

सस्यार्थमरूढादिवचनं वदेत्, तथाहि—असमर्था एते आम्राः फलान्यतिभारेण न शक्नुवन्ति धारयितुमित्यर्थः। पक्वपकार्थमधर्व-नमेतदप्राधान्येनेति द्रष्टव्यम्। तथा बहुनिर्वर्तितफला एते, अनेन प्राकरणाघ्रत्वार्थ उक्तः। तथा बहुसम्भूतफला एतेऽनेन वेलोचितार्थः प्रदर्शितः। तथाभूतरूपा एतेऽनेन टालार्थ उक्तः। न चैवमितोपि प्रागुक्तार्थप्रतीतिपूर्वकप्रवृत्त्यावधिकरणादिदोष-प्रसङ्ग इति वाच्यम्, साक्षादधिकरणत्वादिप्रवृत्तिजनकवचनस्यैव निषिद्धत्वात्। प्रकृते तु शुद्धाशयेन कारणतो भाषणे कथञ्चि-त्परकीयकुप्रवृत्त्या दोषाभावादन्यथातिप्रसङ्गादिति दिक्। औषधीनिर्देशेप्येवं वदेत् (एघ)यथा प्ररूढा एते बहुसंभूता वा निष्पन्नप्राया इत्यर्थः। स्थिरा वा निष्पन्ना इत्यर्थः। उत्सृता वा उपघातेभ्यो निर्गता इत्यर्थः। गर्भिता वा निर्गतशीर्षिका इत्यर्थः। ससारा वा सञ्जाततन्दुलादिसारा इत्यर्थः। इत्येवमादिविधिः पक्वाद्यर्थयोजना तदाक्षेपपरिहारास्तु प्राग्वत् ॥ ९१ ॥

किञ्च।

संखडितेण नईओ, संखडिपणियट्ठसुबहुसमतित्था।
भसिज्ज पओअणओ, ण कज्जहंतव्व सुहतित्था ॥ ९२ ॥

सङ्कुड्यन्ते प्राणिनामायूंषि यस्यां क्रियायां सा सङ्कडी पितृदेवताद्यर्थभोजनक्रिया तां प्रयोजने साधुकथनादौ सङ्कीर्णादौ सङ्कडीत्येव वदेत् नतु पित्राद्यर्थं कार्येयं क्रियेति वदेत् मिथ्यात्वोपबृंहणदोषप्रसङ्गात्। तच्छ्रावेनाप्रयोगेऽपि तदुप-बृंहकत्वेन तत्प्रयोगे निषिद्धाचरणात्। तथा स्तेनमपि वध्यस्थानं नीयमानं शिक्षकादिः कर्मविपाकदर्शनादौ प्रयोजने पणितार्थं वदेत् प्राणद्यूतप्रयोजनमित्यर्थः, नतु वध्योऽयमिति वदेत् तदनुमतत्वेन बहुपराधतया हन्तॄणां हननानिश्चयप्रसङ्गात्।

तथा साधुकथनादिविषये नद्यः सुखदुत्तमतीर्था इति वदेत्तु सुतीर्था उपलक्षणात् कुतीर्था इति वा न वदेत् । अधिकरणविघातादिदोषप्रसङ्गात् ॥ १२ ॥

किञ्च ।

पुन्ना उ कायतिज्जा, नई उ णावाहितारिमाओत्ति ।
णवए अ पाणिपिज्जा, वए पुणा सुद्धवयणेणं ॥ १३ ॥

नद्यः पूर्णा इति न वदेत् तथा श्रवणतः प्रवृत्तस्य निवृत्त्यादिदोषप्रसङ्गात् । तथा कायतीर्याः शरीरतरणीया इत्यपि न वदेत् साधुवचनतोऽविघ्नप्रवृत्तिधिया निवर्तितुमुद्यतानामप्यनिवृत्तिप्रसङ्गात् । कायपेया इति सूत्रपाठान्तरे तु प्राणिपेया इत्यर्थो-ऽऽतिविशेष इति ध्येयम् । तथा नौभिर्द्रोणीभिस्तरणीयास्तरणयोग्या इत्यपि न वदेत् अन्यथाऽविघ्नशङ्कया तत्प्रवृत्तिप्रसङ्गात् । तथा प्राणिपेयास्तटस्थजन्तुपानीयपानीया वा इत्यपि न वदेत् तथैव प्रवर्त्तनादिदोषात् । वदेत् पुनः साधुमार्गकथनादौ प्रयोजने शुद्धवचनेन तथाहि—बहुभृता एताः प्रायशो भृता इत्यर्थः । तथा बहुगाधाः प्रायोगम्भीरा इत्यर्थः । तथा बहुसलिलोत्पीडोद-काः प्रतिश्रोतोवाहितापरसरित इत्यर्थः । तथा बहुविस्तीर्णोदकाः स्वतीरप्लवनप्रवृत्तजला इत्यर्थः । अत्र यद्यप्येतादृशशुद्धव-चनार्थैदम्पर्यपरिज्ञाने श्रोतॄणां प्रवृत्तिनिवृत्त्यादिपूर्वोक्तदोषतादवस्थ्यं तदागतप्रश्नोपेक्षया तूष्णीम्भावे च प्रयोजनासिद्धेर्न वेद्म्यहमित्युत्तरप्रदाने च प्रत्यक्षमृषावादित्वेन प्रवचनोड्डाह(?)तत्प्रद्वेषादिदोषोपनिपातस्तथाप्येतादृशस्थले संमुग्धमेवोत्तरं देय-मित्यभिप्रायेणैतदभिधानं तदिदमाह भगवान् दशवैकालिकचूर्णिकारः “ तम्हा बहुवाहडाई अगेज्झा तमणि वइयाणवयंतो

भणेज्जा जहा ण विभावेइ किमवि एस भणतित्ति " तथा चैतादृशसंमुग्धवचनाद्रुत्पन्नानां प्रश्नोद्यतमुनीनां प्रयोजनसिद्धिरितरेषां त्वनुषङ्गतोऽपि नाधिकरणप्रवृत्तिरपरिज्ञानादिति सर्वमवदातम् ॥ ९३ ॥

किञ्च ।

सावज्जे सुकडाई, ण वए सुकए वए अ तं वयणं ।
अणवज्जं चिय भासे, सम्मं णाऊण विहिभेयं ॥ ९४ ॥

सावद्ये आरम्भमये कार्ये सुकृतादिवचनं न वदेत् । तथाहि सुकृतमेतत्सभादि, सुष्ठु पक्वमेतत् सहस्रपाकादि, सुष्ठुच्छिन्नमेतद्वनादि सुष्ठु हृतं क्षुद्रस्य वित्तं सुष्ठु मृतः प्रत्यनीकः सुष्ठु निष्ठितं वित्ताभिमानिनो वित्तं सुष्ठु सुन्दरा कन्या इत्यादि न भाषेत मुनिः, अनुमत्यादिदोषप्रसङ्गात् । सुकृते निरवद्ये तु तत्सुकृतादिवचनं वदेत् तथाहि—सुष्ठु कृतं वैयावृत्त्यमनेन सुष्ठु पक्वं ब्रह्मचर्यमस्य साधोः सुष्ठुच्छिन्नं स्नेहबन्धनमनेन सुष्ठु हृतं शिष्यकोपकरणमुपसर्गे सुष्ठु मृतः पण्डितमरणेन साधुः सुनिष्ठितं कर्म प्रमत्तसंयतस्य सुष्ठु सुन्दरा साधुक्रियेत्यादि । तथा कश्चिद्व्यवहारे प्रक्रान्ते पृष्टः साधुर्नैवं वदेत् यदुतैतत्सर्वोत्कृष्टं स्वभावेन सुन्दरमित्यर्थः । परार्थं च महार्घं क्रीतमिति भावः । अतुलं नास्तीदृशमन्यत्र क्वचिदित्यर्थः । असंस्कृतं सुलभमीदृशमन्यत्रापीत्यर्थः । अवक्तव्यं अनिर्वचनीयगुणोपेतमित्यर्थः अचिन्त्यमप्रीतिकरं वेत्यादि । एतादृशभाषणेऽधिकरणान्तरायादिदोषप्रसङ्गात् । तथा सुकृतमेतत् सुविक्रीतमेतत् अक्रयार्हमेवैतत् क्रयार्हमेवैतत् तथेदं समर्घं भविष्यति महार्घं वा भविष्यति इत्यादि न वदेत् अप्रीत्यधिकरणादिदोषप्रसङ्गात् । अभिधानप्रयोजने तूपस्थिते सम्यग् तात्पर्यशुद्ध्या विधिभेदं विधिविशेषं ज्ञात्वा निरवद्यमवभाषेत तथाहि—ग्लानप्रयोजने प्रयत्नपक्वमेतत् सहस्रपाकादीति वदेत् । प्रयत्नच्छिन्नमे-

तद्वनादीति साधुनिवेदनादौ वदेत् । तथा प्रयत्नसुन्दरा कन्येति दीक्षिता सती सम्यग् पालनीयेत्यर्थः । तथा सर्व्वमेव वा कृतादि कर्मनिमित्तमालपेत् गाढप्रहारं च कचित्प्रयोजने गाढप्रहारं ब्रूयादेवं हि तदप्रीत्यादयो दोषाः परिहृता भवन्तीति । व्यवहारं पृष्टश्च साधुरेवं भाषेत यदुत नाहं भाण्डमूल्यविशेषं जानामि न चात्र क्रयविक्रयार्हं वस्तु ददामि कस्यचित्किं वा विरतानामस्माकमीदृशेन व्यापारेणेति ॥ ९४ ॥

किञ्च ।

अब्भुचयं ण भासिज्जा, आणत्तिं अजयाण य ।
असाहुलोगं साहुत्ति, सदोसायंसणं तहा ॥ ९५ ॥

केनचित्कस्यचित्सर्वमेतत् त्वया वक्तव्यमिति सन्दिष्टे सर्वमेतद्वक्ष्यामीति सन्देशं प्रयच्छन् सर्वमेतदिति वाऽभ्युच्चयं न वदेत् सर्वस्य तथा स्वरव्यञ्जनाद्युपेतस्य वक्तुमशक्यत्वेनासम्भवाभिधाने द्वितीयव्रतविराधनप्रसङ्गात् । तथाच सर्वे साधवो गता न गता वेत्यादिस्थले सर्वथानुविचिन्त्यैव वदेत् यथासम्भवाभिधानं न भवतीति । ननु सर्वो ग्रामो भोक्तुमागत इत्यादिवत् सर्वमेतदित्यादिकं नासम्भवग्रस्तमिति चेन्न, समुच्चये तथाविधविवक्षाभावाच्चारित्रवतावस्थायामेतादृशाप्रयोगाच्च । तथाऽयतानामसंयतानामाज्ञप्तिम् आस्व एहि कुरु वेदं कार्यं शेष्व तिष्ठ व्रजेत्यादिरूपां न वदेत् भाषेतायतनाप्रवर्त्तनप्रयुक्तदोषप्रसङ्गात् । तथाऽसाधुलोकमाजीविकादिकं लोकैः साधुशब्देनाभिलप्यमानं साधुरयमिति न वदेत् मृषावादप्रसङ्गात् नचैतद्वचनस्य रूपसत्याद्यन्तर्गततया न मृषात्वमिति शङ्कनीयम्, गुणोपबृंहणप्रवणानामीदृशानामन्वर्थशब्दानामविषये मोहादेव प्रयुज्यमानत्वेन दोषानुबन्धितया च मृषात्वोपपत्तेः । अत एव स्वविषये एतत्प्रयोगस्य गुणानुबन्धितया ज्ञानदर्शनचारित्रसम्पन्ने भावसाधौ

साधुपदानभिलापेन उपबृंहणातिचारदोषप्रसङ्ग इति वदन्ति । ननु यद्येवं बोटिकनिह्नवादेरत्यर्थसाधुशब्दाभिधानं मृषा कथं तर्हि पाषाणमय्यां प्रतिमायामन्वर्थार्हदादिपदगर्भस्तुतिकरणं सार्थकमिति चेदाः पाप वृथा छिद्रान्वेषणमेतत् उक्तस्थलेऽसंयतोपबृंहणदोषाभावतः स्थापनासत्यस्यानिरुद्धप्रसरतया दोषाभावात् अन्यथा निःक्षेपनैः फल्यादिति दिग् । तथा सदोषाशंसनं न वदेत् तथाहि देवासुरनृतिरश्चां विग्रहे अमुकस्य जयो भवतु मा वामुकस्य भवत्विति नालपेदधिकरणतत्स्वामिद्वेषादिदोषप्रसङ्गात् । तथा वातवृष्टिशीतोष्णक्षेमसुभिक्षादिकमपि भवतु मा वेति च न वदेत् विनातिशयमात्मं वचनमात्रात् फलाभावेन मृषावादप्रसङ्गात् । तथाभवनेऽप्यार्त्तध्यानभावात्, अधिकरणादिदोषप्रसङ्गात्, वातादिषु सत्सु सत्त्वपीडापत्तेश्च कथं तर्हि "शिवमस्तु सर्वजगत" इति शिष्टेऽपि चौरादीनां चौर्याद्यन्तरायदोषादिति चेत्, सदाशयवशादेतादृशप्रार्थनाया असत्यामृषात्वतया श्रुतभावभाषायामधिकारेपि प्रकृतानुपयोगादिति दिग् ॥ ९५ ॥

किञ्च ।

मेहं णहं मणुस्सं वा, देवत्ति न लवे मुणी ।
उण्णए अंतलिक्खत्ति, इड्ढिमंतत्ति वा वए ॥ ९६ ॥

मेघं नभो मनुष्यं वा राजानं देव इति मुनिर्न लपेत् मिथ्यावादलाघवादिदोषप्रसङ्गात् । कथं तर्हि वदेदित्याह, मेघं दृष्ट्वा उन्नतोयं मेघ इति वदेत् । आकाशं पुनरिदमन्तरिक्षमिति राजानं च ऋद्धिमानयमिति । कारणे च राजस्तुत्यादौ देवादिपदैरपि राजाद्यालपनं न विरुद्ध्यत इति ध्येयम् ॥ ९६ ॥

तदेवमुक्तः कियाँश्चिदनुमतभाषाभाषणविधिः । अथ कियद्विस्तरतोऽनुशासितुं शक्यमिति सामान्यतो रहस्योपदेशमाह ।

दोसे गुणे य णाऊणं, जुत्तीए आगमेण य ।
गुणा जह ण हायंति, वत्तव्वं साहुणा तहा ॥ ९७ ॥

यथा गुणाश्चारित्रपरिणामवृद्धिहेतवो न हीयन्ते अपकर्षं नाशं वा न गच्छन्ति तथा साधुना वक्तव्यम् । किं कृत्वागमेन युक्त्या च दोषान् गुणांश्च ज्ञात्वा । एतश्च गुणदोषचिन्तया क्वचिद्विहितस्याकरणे विपर्यये वा न दोषः । पुष्टालम्बनाश्रयणेनाज्ञानतिक्रमादत एवोक्तं " तम्हा सव्वाणुन्ना सव्वणिसेहो य पवयणे नत्थि । आयं वयं तुलिज्जा लाहाकंखिव्व वाणियओत्ति " ॥ ९७ ॥

अथ कीदृशस्येयं भाषा चारित्रं विशोधयतीत्याह ।

महेसिणो धम्मपरायणस्स, अज्झप्पजोगे परिणिट्ठिअस्स ।
पभासमाणस्स हियं मियं च, करेइ भासा चरणं विसुद्धं ॥ ९८ ॥

धर्मे चारित्रधर्मे परायणस्य नित्यमुद्युक्तस्य तथाऽध्यात्मयोगे परद्रव्यप्रवृत्तिनिवृत्तिप्रादुर्भूतप्रभूतगुणग्रामरामणीयकमये स्वस्वभावसमवस्थाने परिनिष्ठितस्य प्राप्तनिष्ठस्य तथा हितमायाति गुणावहं मितं च स्तोकप्रकर्षेणावसरोचितत्वादिलक्षणेन भाषमाणस्य महर्षेर्भाषा चरणं चारित्रं विशुद्धं विपुलनिर्जराप्रवणं करोति ॥ ९८ ॥

ततः किमित्याह ।

चरित्तसोहीइ खवित्तु मोहं, लद्धुं तओ केवलनाणलच्छिं ।
सेलेसिजोगेण सुसंवुडप्पा, अणुत्तरं पावइ मुक्खसुक्खं ॥ ९९ ॥

चारित्रशुद्ध्या मोहमष्टाविंशतिप्रकृतिमयं कर्म क्षपयित्वा ततस्तदनन्तरं केवलज्ञानलक्ष्मीं लब्ध्वा सयोगिकेवलिभावमनुभूयोत्कर्षतः पूर्वकोटीं यावद्विहृत्य शैलेशीयोगेन योगत्रयनिरोधकरणेन सुसंवृतः सर्वसंवरभागात्मा यश्चैतादृशो महर्षिरनुत्तरं सकलसांसारिकसुखसमूहादनन्तगुणत्वेन दुःखलेशासंपृक्ततया चातिशयितं मोक्षसौख्यं प्राप्नोति ॥ ९९ ॥

तदेवं चरित्रशुद्धेर्मोक्षफलकत्वमुक्त्वा प्रकृतग्रन्थप्रयोगमाह ।

तम्हा बुहो भासरहस्समेयं, चरित्तसंसुद्धिकए समिक्ख ।
जहा विलिज्जंति हु रागदोसा, तहापवट्टिज्ज गुणेसु सम्मं ॥ १०० ॥

तस्मादुक्तहेतोर्बुधो विचक्षणः चारित्रशुद्धेः कृते एतद्भाषारहस्यं समीक्ष्य हृर्निश्चये यथा रागद्वेषौ विलीयेते तथा सम्यग्गुणेषु चारित्रपालनोपायेषु प्रवर्त्तेत नात्रोपायप्रवृत्तावेकान्तः किन्तु रागद्वेषपरित्यागलक्षणफल एव फलेच्छायाः फलसिद्धिं विनाऽपूर्णत्वादुपायेच्छापूर्तेस्त्वन्यतरसंपत्त्यापि निर्वाहात् । नच फलविशेषसम्पत्तये उपायविशेषे प्रवृत्तिनियमः फलविशेषस्यैवासिद्धेः । राजरङ्कमरणयोरविशेषदर्शनेनायुःकर्मण इव कर्मान्तरस्यापि क्षये विशेषाभावात् । नच प्रतियोगिविशेषकृतस्तद्विशेषः । प्रतियोगिविशेषस्यापि तथाविधस्यासिद्धेः, स्वरूपात्मकस्य च तस्य हेतुहेतुमद्भावभेदानियामकत्वात् । कथं तर्हि व्यभिचाराद्बहूनामुपायानामेकफलहेतुत्वमिति चेत्किं न दृष्टं तृणारणिमणीनामेकवह्निहेतुत्वं तृणादिजन्यवह्नौ जातिविशेषो-

ऽस्त्येवेति चेन्नानुपलम्भात् । जातित्रयकल्पनात एकशक्तिकल्पनाया एव लघुत्वाच्च । यथा तृणादीनामेकशक्त्या वह्निहेतुत्वं तथा बहूनामप्युपायानामेकयैव शक्त्या कर्मक्षयहेतुत्वं नानुपपन्नमिति सर्वमवदातम् ॥ १०० ॥

अथ ग्रन्थं सम्पूर्य तच्छोधनाय गीतार्थान् प्रार्थयति ।

एवं भासरहस्सं, रइयं भविआण तत्तबोहत्थं ।<br>
सोहिंतु पसायपरा, तं गीयत्था विसेसविऊ ॥ १०१ ॥

स्पष्टा ॥ १०१ ॥

सोम इव गोविलासैः, कुवलयबोधप्रसिद्धमहिमकलः ।<br>
श्रीहीरविजयसूरि,-स्तपगच्छव्योमतिलकमभूत् ॥ १ ॥

श्रीविजयसेनसूरि,-स्तत्पट्टोदयरविरिवाभूत् ।<br>
यस्य पुरो द्योतन्ते, शलभा इव भान्ति कुमतिगणाः ॥ २ ॥

तत्पट्टनन्दनवने, कल्पतरुर्विजयदेवसूरिवरः ।<br>
विबुधैरुपास्यमानो, जयति जगज्जन्तुवाञ्छितदः ॥ ३ ॥

तत्पट्टरोहणगिरौ, सुररत्नं विजयसिंहसूरिगुरुः ।<br>
भूपालभालतिलकी,-भूतक्रमनखरुचिर्जयति ॥ ४ ॥

राज्ये प्राज्ये विजयिनि, तस्य जनानन्दकन्दजलदस्य ।
ग्रन्थोऽयं निष्पन्नः, सन्नयभाजां प्रमोदाय ॥ ५ ॥

यस्यासन् गुरवोऽत्र जीतविजयप्राज्ञाः प्रकृष्टाशया,
भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः ।
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदरः,
सोयं न्यायविशारदः स्म तनुते भाषारहस्यं मुदा ॥ ६ ॥

कृत्वा प्रकरणमेतत, यदवापि शुभाशयान्मया कुशलम् ।
तेन मम जन्मबीजे, रागद्वेषौ विलीयेताम् ॥ ७ ॥

सूर्याचन्द्रमसौ यावदुदयेते नभस्थले ।
तावन्नन्दत्वयं ग्रन्थो, वाच्यमानो विचक्षणैः ॥ ८ ॥

असतां कर्णयोः शूलं, सता कर्णामृतच्छटा ।
विभाव्यमानो ग्रन्थोऽयं, यशोविजयसम्पदे ॥ ९ ॥

भाषा
रहस्यम्०
॥ १७ ॥

पद्वाक्यप्रमाणपारावारपारीणलोकानुग्रहकृतानेकग्रन्थमहामहोपाध्यायन्याय-
विशारदन्यायाचार्यश्रीयशोविजयगणिकृतं भाषारहस्यं प्रारभ्यते.